एव मौहूर्तिकः । ततो धारणा, [1]स्मृतिः कालान्तरेऽर्थस्मरणरूपा अर्थाविच्युतिर्वा, साऽपि षड्विधा, असंख्यकालिकी संख्येयकालिकी वा । एवं सर्वेऽपि मिलिताश्चतुर्विंशतिभेदा[2] व्यञ्जनावग्रहचतुर्भेदसहिता अष्टाविंशतिर्भेदा मतिज्ञानस्य जायन्ते । एतच्चाष्टाविंशतिभेदभिन्नं मतिज्ञानं येन कर्मणा छाद्यते स्वकार्यजननं प्रति अकिञ्चित्करं क्रियते तन्मतिज्ञानावरणम् । इति गाथाभावार्थः ॥१३॥

उक्तं मतिज्ञानावरणम् । श्रुतज्ञानावरणस्वरूपमाह—

(पारमा०) **'मन ज्ञाने'** मननं मतिः । यद्वा मन्यते इन्द्रियमनोद्वारेण नियतं वस्तु परिच्छिद्यतेऽनयेति मतिः, योग्यदेशावस्थितवस्तुविषय इन्द्रियमनोनिमित्तोऽवगमविशेषः । मतिश्चासौ ज्ञानं च मतिज्ञानम् । तच्चाष्टाविंशतिभेदम् **'अत्र'** जैने समये वर्णितम् । तद्यथा—अवग्रह-ईहाऽपायो धारणा च । तत्रावग्रहो द्विधा, व्यञ्जनावग्रहोऽर्थावग्रहश्च । तत्र व्यञ्जनावग्रहश्चक्षुर्मनोवर्जेन्द्रियाणां स्वविषयद्रव्यैः सह संबन्धः, ततश्चतुर्धा नयनमनसोरप्राप्यकारित्वेन विषयसंबन्धाभावादस्य चेन्द्रियविषययोः संबन्धग्राहकत्वादिति भावः । अर्थावग्रहः, किमपीदमित्यव्यक्तं ज्ञानम् । स च मनःसहितेन्द्रियपञ्चकजन्यत्वात्षोढा । अवगृहीतस्यैव वस्तुनोऽपि किमयं भवेत् ? स्थाणुः पुरुषो वा ?, इत्यादिवस्तुधर्मान्वेषणात्मको वितर्क ईहा । साऽपि मनःषष्ठेन्द्रियपञ्चकजन्या इत्यतः षोढैव वस्तुनः स्थाणुरेवायं न पुरुषः, इति निश्चयात्मको बोधोऽपायः । अयमपि पूर्ववत्षोढैव । निश्चितस्यैवाविच्युतवासनात्मकं स्मरणं धारणा । साऽप्युक्तरीत्या षोढैव । तदेवमर्थावग्रहादीनां चतुर्णां प्रत्येकं षड्विधत्वाच्चतुर्विंशतिः । ततश्च व्यञ्जनावग्रहभेदचतुष्टयेन सहाष्टाविंशतिविधं मतिज्ञानम् । तथा चागमः—**"पंचहि वि इंदिएहिं, मणसा अत्थोग्गहो मुणेयव्वो । चक्खिंदिय[3]मणरहियं, वंजणमीहाइयं छद्धा"** ॥१॥ इति तदेवमष्टाविंशतिभेदं मतिज्ञानमावृणोति यत्कर्म तदष्टाविंशतिभेदमपि सामान्येन मतिज्ञानावरणं भवति **'प्रथमं'** आद्यम् । इति गाथार्थः ॥१३॥

अधुना श्रुतज्ञानावरणमाह—

**चोद्दसभेएसु गयं, सुयनाणं इत्थ वण्णियं समए ।**
**तस्सावरणं जं पुण, सुयआवरणं हवइ बीयं ॥१४॥**

(पू०) व्याख्या—चतुर्भिरधिका दश चतुर्दश, ते च ते भेदाश्च चतुर्दशभेदाः, तेषु **'गत'** स्थितं **'श्रुतज्ञानं'** प्रतीतं **'अत्र'** कर्मव्याख्याप्रस्तावे **'वर्णितं'** प्रतिपादितम् **'समये'** सिद्धान्ते, **'तस्य'** श्रुतज्ञानस्य **'आवरणं'** छादनं यत्पुनः तच्छ्रुतावरणं भवति द्वितीयमिति गाथाक्षरार्थः । भावार्थस्त्वयम्—श्रुतज्ञानं चतुर्दशविधं प्रतिपादितं तद्यथा भवति तथा दर्श्यते श्रुतानुसारेण—अक्षररूपं श्रुतमक्षरश्रुतम् १ । तत्प्रतिपक्षोऽनक्षरश्रुतं उच्छ्वसितादि २ । संज्ञिनो

१ श्रुतिः जे० । २ तिभेदा जे० । ३ 'मणवज्जं' इत्यपि ।

(पू०) व्याख्या—यथा 'निर्मलाऽपि' काचकामलादिदोषरहिताऽपि 'चक्षुः' दृष्टिः 'पटेन' वस्त्रेण 'केनापि' अनिर्दिष्टनाम्ना 'छादिता' स्थगिता सती मन्दं मन्दतरं पश्यति आवारकविशेषात् । सा निर्मला यद्यपि स्वभावेन । इति गाथार्थः ॥ ११ ॥ उक्तो दृष्टान्तः, दार्ष्टान्तिकयोजनामाह—

तथा मतिश्रुतज्ञानावरणं अवधिमनःकेवलानामावरणं यत्तज्जीवं 'निर्मलरूपं' शुद्धस्वरूपम् 'आवृणोति' छादयति 'एभिर्भेदैः' वक्ष्यमाणलक्षणैः । इति गाथार्थः ॥ १२ ॥

मतिज्ञानभेदनिदर्शनद्वारेणावरणस्वरूपमाह—

(पारमा०) यथा निर्मलमपि चक्षुः पटेन 'केनापि' मसृणममृणतरादिना छादितं सत् मन्दं 'मन्दतरकं' मन्दतरमेव मन्दतरकं पश्यति 'तन्निर्मलं यद्यपि' चक्षुर्हि स्वभावनिर्मलमपि मसृणपटेनाच्छादितं मन्दं पश्यति मसृणतरेण तु मन्दतरमिति । चक्षुःशब्दस्य प्राकृतत्वात्स्त्रीत्वम् ॥ ११ ॥ तथा मतिश्रुतज्ञानयोर्द्विवचनस्य बहुवचनं प्राकृतत्वात् । अवधिमनःकेवलानां मनःशब्देन मनःपर्यवमुच्यते, सूचनात्सूत्रस्य, मतिश्रुतज्ञानयोरवधिमनःपर्यवकेवलानां चावरणं तथेति । कोऽर्थः ? यथा यथा मतिज्ञानावरणादीनां निचितत्वं तथा तथा पटावृतचक्षुष इवाल्पज्ञानं जीवस्य । एतदेवाह—जीवं 'निर्मलरूपं' अकलुषस्वभावमावृणोति 'एभिर्भेदैः' अभिधास्यमानैः । मत्यादिव्युत्पत्तिस्तु व्याख्यानावसरे निरूपयिष्यते । इति गाथाद्वयार्थः ॥ १२ ॥

सम्प्रति मतिज्ञानावरणं सप्रभेदमाह—

**अट्ठावीसइभेयं, मइनाणं इत्थ वण्णियं समए ।**
**तं आवरेइ जं तं, मइआवरणं हवइ पढमं ॥१३॥**

(पू०) व्याख्या—अष्टाविंशतिभेदं मतिज्ञानं संख्यया 'अत्र' लोके 'वर्णितं' कथितं 'समये' सिद्धान्ते तद् 'आवृणोति' छादयति यत्तन्मत्यावरणं भवति 'प्रथमं' आद्यम् । इति गाथासमासार्थः । भावार्थस्त्वयम्-यदुक्तमष्टाविंशतिभेदं मतिज्ञानं तत्कथं स्यात् ? उच्यते—आगमानुसारेण—व्यञ्जनावग्रहः, अर्थावग्रहश्च । तत्र व्यज्यन्ते व्यक्तीक्रियन्ते एभिरर्थाः व्यञ्जनानीन्द्रियाणि तैरवग्रहणमवग्रहः[1] सामयिकः, सामान्यार्थपरिच्छेदः व्यञ्जनावग्रहः । स च चतुर्विधो "नयनमनो[2]वर्ज्यम्" इति वचनात् । तथाहि—न चक्षुषाऽर्थो व्यज्यते=गम्यते=प्राप्यते, अप्राप्यकारित्वाच्चक्षुषः । किन्तु योग्यदेशस्थमेव चक्षुर्योग्यदेशस्थमर्थं गृह्णाति साक्षात्करोति, न पुनः [3]प्राप्य गृह्णाति । प्राप्यग्रहणे चक्षुषः स्फोटादिरनिन्द्रियं चाधिष्ठानं स्यात् । तथा मनोऽप्येवमेव द्रष्टव्यम् , तस्याप्यप्राप्यकारित्वात् । अर्थस्यावग्रहणमवग्रहोऽर्थपरिच्छेदः । सोऽपि सामयिक एव । स च षड्विधः, इन्द्रियपञ्चकेन मनसा चार्थग्रहणात् । तदुत्तरकालभाविनी ईहा, ईहनमीहा—चेष्टा कायवाङ्मनोलक्षणा । सा तु मौहूर्तिकी षड्विधा । तदनन्तरमपायो निश्चयः । सोऽपि षड्विध

१ ह्रः एकसामयिकः, जे० । २ ०वर्जम् । ३ प्राप्यं जे० । तस्याप्राप्या० जे० ।

(पू०) व्याख्या—अनुगमनशीलोऽनुगामी, वर्द्धनशीलो वर्द्धमानः, वर्द्धमान एव वर्द्धमानकः, स्वार्थे कः । अनुगामी च वर्द्धमानकश्चानुगामिवर्द्धमानकौ, तौ च तौ भेदौ चानुगामिवर्द्धमानकभेदौ, तौ आदिर्येषां भेदानां तेऽनुगामिवर्द्धमानकभेदादयः, तेषु 'वर्णितः' कथितः 'इह' प्रवचने व्याख्याप्रस्तावे वा । अनुस्वारः प्राकृतत्वात् । 'अवधिः' मर्यादापरिच्छेदलक्षणस्तं 'आवृणोति' छादयति यदपि च कर्म 'अवध्यावरणकं तदपि' अवध्याच्छादकं तदपि ज्ञातव्यमित्यध्याहारः । इति गाथार्थः ॥१५॥

उक्तमवधिज्ञानावरणम् । मनःपर्यवज्ञानावरणस्वरूपमाह—

(पारमा०) अवशब्दोऽधःशब्दार्थः । अव=अधोऽधो विस्तृतं वस्तु धीयते परिच्छिद्यतेऽनेनेत्यवधिः । यद्वाऽवधि=र्मर्यादा रूपिद्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा, तदुपलक्षितं ज्ञानमप्यवधिः । स च अनुगामिवर्द्धमानकभेदादिषु, इति तृतीयार्थे सप्तमी । ततश्चानुगामिवर्द्धमानकभेदादिभिः 'वर्णितः' प्रतिपादितः इहेति पूर्ववत् । तदावृणोति यत्कर्म तद् 'अवध्यावरणम्' अवधिज्ञानावरणमिति जानीहि । इति गाथार्थः ॥१७॥

मनःपर्यवज्ञानावरणमाह—

**रिउमइविउलमईहिं[1], मणपज्जवनाणवण्णणं[2] समए ।**
**तं आवरियं जेणं, [3]तंपि हु मणपज्जवावरणं ॥१६॥**

(पू०) व्याख्या—ऋज्वी मतिर्यस्मिन् तदृजुमति, विपुला मतिर्यस्मिन् तद्विपुलमति । ऋजुमति च विपुलमति च ऋजुमतिविपुलमतिनी ताभ्यां, 'मनःपर्यवज्ञानवर्णनं' मनोगतभावपरिच्छेदकथनं 'समये' सिद्धान्ते प्रतिपादितं 'तदावृतं येन' तदाच्छादितं येन तदपि 'हुः' पादपूरणे, [4]'मनःपर्यवावरणं' मनोगतभाव[5]परिच्छेदकाच्छादकं जानीहि [इति] क्रियाध्याहारः । इति गाथार्थः ॥१६॥

अभिहितं मनःपर्यवज्ञानावरणम् । केवलज्ञानावरणस्वरूपमाह—

(पारमा०) पर्यवति=समन्तादवगच्छतीति पर्यवम् । मनसः पर्यवं मनःपर्यवम्; तच्च तज्ज्ञानं च मनःपर्यवज्ञानम्, तस्य वर्णनं=प्रकाशकत्वादिगुणकथनं मनःपर्यवज्ञानवर्णनम्, ऋज्वी मतिरस्येति ऋजुमतिः, विपुला मतिरस्येति विपुलमतिः, ताभ्यां ऋजुमतिविपुलमतिभ्यां कृत्वा 'समये' सिद्धान्ते क्रियत इति शेषः । यत उक्तं मनःपर्यवज्ञानप्ररूपणायाम्—"तं दुविहं तंजहा—उज्जुमई विउलमई अ" इत्यादि । अशेषविशेषास्तु नन्दितः एवावसेयाः, संक्षेपमात्रत्वादस्येति । तदावृतं येन कर्मणा तज्जानीहि मनःपर्यवज्ञानावरणम् । इति गाथार्थः ॥१॥

१ "ईहि य" इत्यपि पाठः । २ "०वण्णियं" इत्यपि पाठः । ३ 'तं पुण' इत्यपि ४ नःपर्यवज्ञानावरणं- जे० ५ परिच्छेदाच्छादकं जे० ।

मनोयुक्तस्य श्रुतं संज्ञिश्रुतम् ३। तद्विपरीतमसंज्ञिश्रुतम् ४। सम्यग=ऽविपरीतं श्रुतं सम्यक्श्रुतम्, सम्यग्दृष्टेर्वा यच्छ्रुतं तत्सम्यक्श्रुतम् ५ । तद्विपरीतं मिथ्याश्रुतम् ६ । सादि, आदियुक्तं श्रुतं सादिश्रुतम्, । [1]अनादिश्रुतं, अविद्यमानादि श्रुतमनादिश्रुतम् ८ । सह पर्यवसानेन वर्तते यत्त-त्सपर्यवसितम् ९। तद्विपरीतं त्वपर्यवसितम् १० । गमाः सदृशपाठविशेषाः, ते विद्यन्ते यस्य तत्र वा भवं तद्गमिकम् ११ । तत्प्रतिपक्षस्त्वगमिकम् १२ । अङ्गप्रविष्टं अङ्गश्रुतम् १३ । तद्विपरीतं त्वनङ्गश्रुतम् १४ । एवंभूतमिदं श्रुतज्ञानमावृणोति=च्छादयति यज्ज्ञानं तच्छ्रुतज्ञानावरणम् । इति गाथाभावार्थः ॥१४॥

अवधिज्ञानावरणस्वरूपभेदानाह—

(पारमा०) श्रवणं श्रुतम्, अभिलापप्लावितार्थग्रहणहेतुरुपलब्धिविशेषः । एवमाकारं वस्तु घटशब्दाभिलाप्यं जलधारणाद्यर्थक्रियासमर्थम्, इत्यादिरूपतया प्रधानीकृतत्रिकालसाधारण-समानपरिणामः शब्दार्थपर्यालोचनानुसारी इन्द्रियमनोनिमित्तोऽवगमविशेष इत्यर्थः । श्रुतं च तज्ज्ञानं च श्रुतज्ञानं चतुर्दशभेदेषु गतम्, इति द्वितीयार्थे सप्तमी । ततश्चतुर्दशभेदान् प्राप्तं चतुर्दशभेदमिति यावत् । ते चामी–अक्षरश्रुतं, अक्षरश्रवणदर्शनादेरर्थप्रतीतिः १ । अनक्षरश्रुतं, सेण्टितादिश्रवणान्मामाह्वयतीत्यादिरूपाभिप्रायपरिज्ञानम् २ । समनस्कस्य मनोयुक्तेन्द्रिय-जमुक्तरूपं श्रुतं संज्ञिश्रुतम् ३ । तदेवामनस्कस्य मनोरहितेन्द्रियजमसंज्ञिश्रुतम् ४ । सम्यग्दृष्टे-र्जिनप्रणीतमितरद्वा श्रुतं यथास्वरूपागमात् सम्यक्श्रुतम् ५ । तदेव मिथ्यादृष्टेरन्यथावगमा-न्मिथ्याश्रुतम् ६ । सादिश्रुतं, ज्ञानात्मकं सम्यग्दृष्टेरज्ञानात्मकं वा सम्यक्त्वच्युतस्य मिथ्यादृष्टेः ७ पूर्वमलब्धसम्यक्त्वस्य तु तदेवानादिश्रुतम् । ८ सपर्यवसितं भव्यानां केवलोत्पत्तौ ध्रुवं पर्यवसा-नात् ९ । अपर्यवसितमभव्यानां केवलोत्पादाभावात् १० । अर्थभेदे सदृशालापकं गमिकम् ११ । इतरदगमिकम् १२ । अङ्गप्रविष्टमाचाराद्यङ्गानि १३ । अनङ्गप्रविष्टं, शेषं प्रकीर्णकादि १४ । एवं चतुर्दशभेदं श्रुतज्ञानम् 'अत्र' जैनसमये 'वर्णितं' कथितम् । स चायम्–"**अक्खरसन्नी सम्मं, साईयं खलु सपज्जवसियं च । गमियं अंगपविट्ठं, सत्तवि एए सपडिवक्खा ॥१॥**" इति । तस्यावरणं यत्पुनस्तत् '**श्रुतज्ञानावरणम्**' इति श्रुतज्ञानावरणं भवति द्वितीयम् । इति गाथार्थः ॥१४॥

इदानीमवधिज्ञानावरणमाह—

अणुगामिवड्ढमाणय-भेयाइसु वण्णिओ इहं ओही ।
तं आवरेइ [2]जं तं, अवहीआवरणयं जाण ॥१५॥

---

१ अनादि, अविद्य० जे० । २ "जं पि य ओहीआवरणयं तं पि" इत्येतत्पाठमनुसृत्य व्याख्याकारेण व्याख्यातम् ।

दंसणसीले जीवे, दंसणघायं करेइ जं कम्मं ।
तं पडिहारसमाणं दंसणवरणं भवे बीयं ॥१९॥

व्याख्या—[1]'दर्शनशीले' दर्शनस्वभावे 'जीवे' प्राणिनि 'दर्शनघातं' दर्शनहननं 'करोति' विदधाति 'यत्' कर्म तत् [2]'प्रतीहारसमानं' प्रतीहारतुल्यं [3]'दर्शनावरणं' दर्शनच्छादनं 'भवति' जायते जीवस्य । इति गाथार्थः ॥१९॥

[4]दृष्टान्तमाह—

(पारमा०) दर्शनं शीलं स्वभावो यस्य स तथा 'दर्शनशीले' इति षष्ठीसप्तम्योरर्थं प्रत्यभेदाद्दर्शनशीलस्य जीवस्येत्यर्थः । एवमन्यत्रापि भावनीयम् । दर्शनघातं करोति यत्कर्म तत्प्रतीहारसमानं दर्शनावरणं भवेद् द्वितीयम् । इति गाथार्थः ॥१९॥

प्रतीहारसाम्यं च तद्धर्मावगमे सुज्ञानम्, अतस्तत्स्वरूपं दृष्टान्तेनाह—

जह रण्णो पडिहारो अणभिप्पेयस्स सो उ लोयस्स ।
रण्णो तहि दरिसावं न देइ दट्ठु पि कामस्स ॥२०॥

व्याख्या—यथा 'राज्ञः' भूपतेः 'प्रतीहारः' राजदौवारिकः 'अनभिप्रेतस्य' अनभीष्टस्य 'स तु' स एव दौवारिको लोकस्य' प्राणिसमूहस्य 'राज्ञः' भूभृतः 'तत्र' तस्मिन् स्थाने 'दर्शनं' राज्ञो निरीक्षणं 'न ददाति' न प्रयच्छति 'द्रष्टुकामस्याऽपि' दर्शनाभिलाषिणोऽपि । राजा ह्येवं मन्यते यद्यह[5]मेतं लोकं पश्यामि, लोकोऽप्येवमिच्छति यदि राज्ञा सह दर्शनं भवति तदा शोभनं भवति, निषेधकेन तथाऽपि प्रतीहारवैगुण्येन तद्दर्शनं न सम्पद्यते । इति गाथार्थः ॥२०॥

दार्ष्टान्तिकयोजनामाह—

(पारमा०) यथेति दृष्टान्तोपन्यासे सशब्दोऽग्रेतनोऽत्र योज्यते । ततो यथा स प्रसिद्धो राज्ञः प्रतीहारोऽनभिप्रेतस्य लोकस्य 'तुः' एवकारार्थे भिन्नक्रमश्च योक्ष्यते 'राज्ञः' प्रतीतस्य 'तत्र' राजकुलादौ 'दर्शावं' दर्शनं दर्शः, अवनभावो दर्शे आवो दर्शावो दर्शनप्रतीतिः, तां न ददात्येव द्रष्टुकामस्यापि राज्ञः राजा ह्येवं चिन्तयति यद्यहमेनं जनं निरन्तरमेवावलोकये । प्रतीहारस्त्वभिमरादिभयमुत्प्रेक्ष्यान्तरायीभवति । इति गाथार्थः ॥२०॥

दार्ष्टान्तिकयोजनामाह—

---

१ "दर्शनशीलो दर्शनस्वभावो जीवः प्राणी" इत्यपि पाठः । २ "प्रतीहारो दौवारिकस्तस्य समानं दर्शनावरणं, द्वितीयं भवति" इत्येवंरूपोऽपि पाठो दृश्यते । ३ दर्शनवरणं दर्शनाच्छादनं जे० । ४ "अमुमेवार्थं भावयति—" इत्यपि ॥ ५ ०मेनं जे० ।

केवलज्ञानावरणमाह—

लोयालोयगएसुं, भावेसु जं गयं महाविमलं ।
तं आवरियं जेणं, केवलआवरणयं तं पि ॥१७॥

व्याख्या—लोकश्चतुर्दशरज्ज्वात्मको धर्मास्तिकायादियुक्तः, अलोकस्तु धर्मास्तिकायादिवियुक्तः लोकश्चालोकश्च लोकालोकौ, तयोर्गता लोकालोकगताः, तेषु 'भावेषु' पदार्थेषु 'यद्गतं' यदाश्रितं, महच्च तद्विमलं च '**महाविमलं**' बृहदमलं तद् 'आवृतं' स्थगितं '**येन**' कर्मणा [1]'**केवलावरणकं तदपि**' केवलाच्छादकं तदपि मन्तव्यमिति क्रियाध्याहारः । इति गाथार्थः ॥१७॥

मतिज्ञानाद्यावरणं निगमयन् दर्शनावरणस्वरूपमाह—

(पारमा०) लोकालोकगतेषु '**भावेषु**' जीवाजीवादिषु '**यद्गतं**' स्थितं अनन्तत्वात् । ननु चालोके किमनेन गतेन ? तत्र जीवाजीवादिपरिच्छेद्याभावात्, नैवम्, अजीवस्यालोकाकाशस्य विद्यमानत्वात् । तथा चोक्तम्—"**लोकालोकव्यापकमाकाशम्**" इति । "**महाविमलं**' अतिशुद्धं तदावरणमलकलङ्कापगमात्, तत्केवलज्ञानं '**आवृतं**' आच्छादितं '**येन**' कर्मणा तत्पुनः '**केवलावरणम्**' सूचकत्वात्सूत्रस्य केवलज्ञानावरणम् । इति गाथार्थः ॥१७॥

ज्ञानावरणं निगमयन् दर्शनावरणप्रस्तावनामाह—

एवं पंचवियप्पं, नाणावरणं समासओ भणियं ।
बीयं दंसणवरणं, नवभेयं भण्णए सुणह ॥१८॥

(पू०) व्याख्या—'एवं' उक्तप्रकारेण '**पञ्चविकल्पं**' पञ्चप्रकारं ज्ञानावरणं कर्म '**समासतः**' संक्षेपतो '**भणितं**' प्रतिपादितम् । द्वितीयं दर्शनावरणं कर्म, तच्च '**नवभेदं**' नवप्रकारं '**भण्यते**' उच्यते, '**शृणुत**' आकर्णयत यूयम् । इति गाथार्थः ॥१८॥

दर्शनावरणस्वरूपमाह—

(पारमा०) '**एवं**' उक्तप्रकारेण '**पञ्चविकल्पं**' पञ्चभेदं ज्ञानावरणं कर्म '**समासतः**' संक्षेपतो '**भणितं**' प्रतिपादितम् । द्वितीयं दर्शनावरणं '**नवभेदं**' नवप्रकारं भण्यते, शृणुत । इति गाथार्थः ॥१८॥

संप्रति दर्शनावरणस्य पूर्वोद्दिष्टं प्रतीहारसाम्यमाह—

---

[1] परमानन्दसूरीणा तु—'तं तु' इति पाठानुसारेण व्याख्यातम् ॥ २ केवलज्ञानावरणकं' जे० ।

**दंसणसीले जीवे, दंसणघायं करेइ जं कम्मं ।**
**तं पडिहारसमाणं, दंसणवरणं भवे बीयं ॥१९॥**

व्याख्या—[1]'**दर्शनशीले**' दर्शनस्वभावे '**जीवे**' प्राणिनि '**दर्शनघातं**' दर्शनहननं '**करोति**' विदधाति '**यत्**' कर्म तत् [2]'**प्रतीहारसमानं**' प्रतीहारतुल्यं [3]'**दर्शनावरणं**' दर्शनच्छादनं '**भवति**' जायते जीवस्य । इति गाथार्थः ॥१९॥

[4]दृष्टान्तमाह—

(पारमा०) दर्शनं शीलं स्वभावो यस्य स तथा '**दर्शनशील**' इति षष्ठीसप्तम्योरर्थं प्रत्यभेदाद्दर्शनशीलस्य जीवस्येत्यर्थः । एवमन्यत्रापि भावनीयम् । दर्शनघातं करोति यत्कर्म तत्प्रतीहारसमानं दर्शनावरणं भवेद् द्वितीयम् । इति गाथार्थः ॥१९॥

प्रतीहारसाम्यं च तद्धर्मावगमे सुज्ञानम्, अतस्तत्स्वरूपं दृष्टान्तेनाह—

**जह रण्णो पडिहारो, अणभिप्पेयस्स सो उ लोयस्स ।**
**रण्णो तहि दरिसावं, न देइ दट्ठुं पि कामस्स ॥२०॥**

व्याख्या—यथा '**राज्ञः**' भूपतेः '**प्रतीहारः**' राजदौवारिकः '**अनभिप्रेतस्य**' अनभीष्टस्य '**स तु**' स एव दौवारिको लोकस्य' प्राणिसमूहस्य '**राज्ञः**' भूभृतः '**तत्र**' तस्मिन् स्थाने '**दर्शनं**' राज्ञो निरीक्षणं '**न ददाति**' न प्रयच्छति '**द्रष्टुकामस्याऽपि**' दर्शनाभिलाषिणोऽपि । राजा ह्येवं मन्यते यद्यह[5]मेतं लोकं पश्यामि, लोकोऽप्येवमिच्छति यदि राज्ञा सह दर्शनं भवति तदा शोभनं भवति, निषेधकेन तथाऽपि प्रतीहारवैगुण्येन तद्दर्शनं न सम्पद्यते । इति गाथार्थः ॥२०॥

दार्ष्टान्तिकयोजनामाह—

(पारमा०) यथेति दृष्टान्तोपन्यासे सशब्दोऽग्रेतनोऽत्र योज्यते । ततो यथा स प्रसिद्धो राज्ञः प्रतीहारोऽनभिप्रेतस्य लोकस्य '**तुः**' एवकारार्थे भिन्नक्रमश्च योक्ष्यते '**राज्ञः**' प्रतीतस्य '**तत्र**' राजकुलादौ '**दर्शावं**' दर्शनं दर्शः, अवनमावो दर्शे आवो दर्शावो दर्शनप्रतीतिः, तां न ददात्येव द्रष्टुकामस्यापि राज्ञः राजा ह्येवं चिन्तयति यद्यहमेनं जनं निरन्तरमेवावलोकये । प्रतीहारस्त्वभिमरादिभयसम्भाव्यान्तरायीभवति । इति गाथार्थः ॥२०॥

दार्ष्टान्तिकयोजनामाह—

---

१ "दर्शनशीलो दर्शनस्वभावो जीवः प्राणी" इत्यपि पाठः । २ "प्रतीहारो दौवारिकस्तस्य समानं दर्शनावरणं, द्वितीय भवति" इत्येवंरूपोऽपि पाठो दृश्यते । ३ दर्शनवरणं दर्शनाच्छादनं जे० । ४ "अमुमेवार्थं भावयति—" इत्यपि ॥ ५ ०मेनं जे० ।

जह राया तह जीवो, पडिहारसमं तु दंसणावरणं ।
तेणिह विबंधएणं, न पिच्छए सो घडाईयं ॥२१॥

व्याख्या—यथा राजा तथा जीवः '**प्रतीहारसमं तु**' प्रतीहारतुल्यं तु दर्शनावरणं कर्म '**तेन**' दर्शनावरणेन '**इह**' लोके '**विबन्धकेन**' [प्रतिकूलेन] '**न प्रेक्षते**' न पश्यति स घटादिकं लोकरूपम् । आदिशब्दाज्जीवादितत्त्वम् । इति सूत्रार्थः ॥२१॥

दर्शनावरणीयस्य भेदानाह—

(पारमा०) यथा राजा तथा जीवः, राजस्थानीयो जीव इत्यर्थः । प्रतीहारसमं दर्शनावरणं कर्म तेन '**इह**' संसारे '**विबन्धकेन**' अननुकूलेन न प्रेक्षते '**सः**' जीवो घटादिकम् । अयमाशयः—यथा राजा प्रतीहारेणाऽननुकूलेन दिदृक्षितमपि लोकं न पश्यति, तथा राजस्थानीयो जीवः प्रतीहारस्थानीयेन दर्शनावरणेनाऽननुकूलेन लोकस्थानीयं घटपटादिवस्तु न पश्यति । इति गाथार्थः ॥२१॥

उक्तः पूर्वोद्दिष्टः प्रतीहारदृष्टान्तः, दर्शनावरणस्य सम्प्रति नवविधत्वं गाथापूर्वार्द्धेनाह—

निद्दापणगं तत्थ उ, चउ भेया दंसणस्स आवरणे ।

(पू०) व्याख्या—निद्रापञ्चकं, '**तत्र तु**' दर्शनावरणे चत्वारो भेदाः, दर्शनस्य संबन्धिनि '**आवरणे**' छादने ॥

दर्शनावरणभेदानभिधाय निद्रादिलक्षणमाह—

(पारमा०) '**निद्रापञ्चकम्**' निद्रा—निद्रानिद्रा-प्रचला-प्रचलाप्रचला-स्त्यानर्द्धिलक्षणम् । '**तत्र**' दर्शनावरणकर्मणि '**चत्वारो भेदाः**' चक्षुर्दर्शनावरण-अचक्षुर्दर्शनावरण-अवधिदर्शनावरणकेवलदर्शनावरणलक्षणाः, दृश्यतेऽनेनेति दर्शनं तस्य आवरण इति दर्शनावरणकर्मणो भेदानभिधाय सार्द्धगाथाद्वयेन निद्रापञ्चकं तावद्व्याचष्टे—

सुहपडिबोहो निद्दा, बीया पुण [1]निद्दनिद्दा य ॥२२॥
सा दुक्खबोहणीया, पयला पुण जा ठियस्स उद्धाइ ।
पयलापयल चउत्थी तीए उदओ उ चंकमणे ॥२३॥
थीणद्धी पुण दिणचिं-तियस्स अत्थस्स साहणी पायं ।
सा संकिलिट्ठकम्मस्स उदयओ होइ नियमेणं ॥२४॥

१ "निद्दनिद्दत्ति" इत्यपि पाठः ।

व्याख्या–'**सुखप्रतिबोधो निद्रा**' प्रसुप्तः सन् सुखेनैव यस्यां प्रबोधं गच्छति सा निद्रा। द्वितीया पुनर्निद्रानिद्रा च भवति ज्ञातव्या। इति गाथार्थः ॥२२॥ द्वितीयनिद्रालक्षणमाह–तस्या उदये दुःखेन बोध्यते प्रसुप्तः सन्। प्रकर्षेण चलनं यस्यां सा '**प्रचला**' सा पुनः का? या '**स्थितस्य**' अवस्थितस्यावस्थितवतः '**उद्भवति**' उद्गच्छति उत्पद्यते उद्भवतीत्यर्थः। प्रचलाप्रचला चतुर्थी निद्रा, तस्याश्चोदयः '**चङ्क्रमणे**' गमने भवति, यस्या [1]उदयेन पुनः पुनः प्रचलनं भवति, सा च प्रचलाप्रचलोच्यते। इति गाथार्थः ॥२३॥ स्त्यानर्द्धिस्वरूपमाह–[2]स्त्यानं कठिनीभूतमृद्धि चित्तं यस्यां सा '**स्त्यानर्द्धिः**' सा पुनः '**दिनचिन्तितस्य**' दिवसध्यातस्य '**अर्थस्य**' प्रयोजनस्य '**साधनी**' निष्पादनी '**प्रायः**' बाहुल्येन। अनुस्वारः प्राकृतत्वात्। सा संक्लिष्टस्याशुभस्य कर्मणः '**उदयतः**' प्रादुर्भावात् '**भवति**' जायते '**नियमेन**' अवश्यंतया। इति गाथार्थः ॥२४॥

निद्रापञ्चकं निगमयन् चक्षुर्दर्शनाद्यावरणस्वरूपमाह–

(पारमा०) सुखेन प्रतिबोधो जागरणं यस्मिन् स्वापे स सुखप्रतिबोधः=नखच्छोटिकामात्रेण जागरणं, स च निद्रा=नितरां द्राति=कुत्सितत्वं=अविस्पष्टत्वं गच्छति चैतन्यमनयेति। द्वितीया पुनर्निद्रा निद्रातोऽतिशायिनी निद्रा निद्रानिद्रा। मयूरव्यंसकादित्वान्मध्यपदलोपी समासः ॥२२॥ दुःखेन घोलनादिभिर्बोध्यते यस्यां सा दुःखबोधनीया। अत एव सुखप्रतिबोधनिद्रातोऽतिशायित्वम्। प्रचलति घूर्णतेऽस्यामिति '**प्रचला**' पुनर्या '**स्थितस्य**' उपविष्टस्य ऊर्द्ध्वस्थस्य वा '**उद्भवति**' प्राबल्येनायाति न तु गतिमतः। प्रचलातोऽतिशायिनी प्रचला प्रचलाप्रचला चतुर्थी, तस्या उदयश्चङ्क्रमणे। अत एव स्थानस्थितस्वप्तृभवप्रचलातोऽतिशायित्वम् ॥२३॥ स्त्याना पिण्डीभूता ऋद्धिः आत्मनः शक्तिरूपा यस्यां स्वापावस्थायां सा '**स्त्यानर्द्धिः**' सा च पुनर्दिनचिन्तितस्या-ऽर्थस्य साधनी प्रायः। श्रूयते च सिद्धान्ते–यथा कोऽपि क्षुल्लको दिवा द्विरदखलीकृतस्तस्मिन् बद्धाभिनिवेशो रजन्यां स्त्यानर्द्ध्युदयावेशादुत्थाय तद्दन्तमुशलयुगलमुत्पाट्योपाश्रयद्वारि विहाय पुनः सुप्त इत्यादि। सा संक्लिष्टकर्मण उदयाद्भवति '**नियमेन**' अवश्यं, ततो नरकगमनात्। इति सार्द्धगाथाद्वयार्थः ॥२४॥

निद्रापञ्चकं निगमयन् चक्षुर्दर्शनावरणमाह–

निद्दापणगं एयं, चक्खू आवरइ चक्खुआवरणं।
सेसिंदियआवरणं, होइ अचक्खुस्स आवरणं ॥२५॥

---

१ उदये पुनः। २ स्त्याना कठिनीभूतचैतन्यऋद्धिर्यस्यां सा जे०।

व्याख्या—निद्रापञ्चकमेतदुक्तस्वरूपम्। चक्षुष आवरणं चक्षुरावरणं, चक्षुर्दर्शनावरणमिति दर्शनशब्दोऽत्र द्रष्टव्यः, यत्कर्म चक्षुर्दर्शनं छादयति तच्चक्षुरावरणमुच्यते। शेषेन्द्रियाणामावरणं शेषेन्द्रियावरणम्, अतस्तेषां घ्राणरसनस्पर्शनश्रवणमनसामावरणं छादनं भवत्यचक्षुषः 'आवरणं' स्थगनम्। इति गाथार्थः ॥२५॥

उक्तं चक्षुरचक्षुर्दर्शनावरणम्। साम्प्रतमवधिदर्शनावरणस्वरूपमाह—

(पारमा०) निद्रापञ्चकमेतत् पूर्वोक्तम्। एतच्च सूत्रकृता क्रमेण नोक्तम्। क्रमश्चैवम्—निद्रा प्रचला निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिरिति। यथोत्तरं विपाकाधिक्यात्॥ तथा च सति स्त्यानर्द्धित्रिकमित्युरते स्त्यानर्द्धिमहचरितं निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिलक्षणं प्रबलविपाकं निद्रात्रिकं परिगृह्यते। आगमेऽप्येवमेवासां क्रमः। तथाहि—"**निद्दा तहेव पयला निद्दानिद्दा य पयलपयला य। तत्तो य थीणगिद्धी, उ पंचमा होइ नायव्वा ॥१॥**" अत्र तूत्क्रमाभिधानमनानुपूर्व्यपि व्याख्याङ्गमिति न दोषः। चक्षुरिति चक्षुर्दर्शनं, तद् 'आवृणोति' आच्छादयतीति चक्षुर्दर्शनावरणम्। शेषेन्द्रियमिति शेषेन्द्रियदर्शनम्। शेषाणि स्पर्शनरसनघ्राणश्रोत्रमनांसि तेषामावरणं भवति '**अचक्षुरावरणं**' अचक्षुर्दर्शनावरणम्। इति गाथार्थः ॥२५॥

अवधिदर्शनावरणकेवलदर्शनावरणे व्याचिख्यासुराह—

**सामन्नुवओगं जं, वरेइ तं ओहिदंसणावरणं।**
**केवलसामन्नं जं, वरेइ तं केवलस्स भवे ॥२६॥**

व्याख्या—उपयुज्यतेऽसावित्युपयोगः, सामान्यश्चासावुपयोगश्च सामान्योपयोगोऽवधेरिति गम्यते। तं '**सामान्योपयोगं**' सामान्यपरिच्छेदं यद् '**वृणोति**' छादयति कर्म तद् '**अवधिदर्शनावरणं**' अवधिसामान्यावबोधावरणं भवेदिति संबन्धः। '**केवलसामान्यं**' केवलदर्शनं '**वृणोति**' छादयति यत्कर्म तत् '**केवलस्य**' केवलदर्शनस्यावरणं '**भवेत्**' भवति जायते। इति गाथार्थः ॥२६॥

उक्तं द्वितीयकर्म, तृतीयमाह—

(पारमा०) सामान्यमविशेषग्राहि रूपिद्रव्याणामिति गम्यते, रूपिद्रव्यसामान्यमित्यर्थः। तस्योपयोगो रूपिद्रव्यसामान्यग्रहणमिति यावत्। तत् कर्मभूतं यदावृणोति तदवधिदर्शनावरणम्। केवलस्यक्तरूपस्यो सामान्यं सकलजगद्भाविवस्तुस्तोमग्रहणरूपं केवलदर्शनमित्यर्थः। यद् 'वृणोति' आच्छादयति तत् 'केवलस्य' इति केवलदर्शनस्य भवेदावरणमिति संबन्धः। इति गाथार्थः ॥२६॥

---

१ •सस्पर्शश्रव० जे०।

अवधि-केवलदर्शनावरणस्वरूपं वेदनीयद्वयस्वरूपञ्च ।

दर्शनावरणं निगमयन् वेदनीयप्रस्तावनायाह—



**भणियं दंसणवरणं, तइयं कम्मं तु होइ वेयणियं ।**
**तं असिधारासरिसं जह होइ तहा निसामेह ॥२७॥**

व्याख्या '**भणितं**' उक्तं '**दर्शनावरणं**' कर्म । तृतीयं कर्म '**तु**' पुनः '**भवति**' जायते वेदनीयं तत् '**असिधारासदृशं**' खड्गधारातुल्यं '**यथा**' येन प्रकारेण भवति '**तथा**' तेन प्रकारेण '**निशामयत**' आकर्णयत यूयम् । इति गाथार्थः ॥२७॥ दृष्टान्तेन स्वरूपं प्रकटयन्नाह-

(पारमा०) भणितं दर्शनावरणं द्वितीयं कर्मेत्यर्थाद्गम्यते । तृतीयं कर्म पुनर्भवति वेदनीयं तदसिधारासदृशं यथा भवति तथा निशमयत । इति गाथार्थः ॥२८॥

**महुलित्तनिसियकरवा-लधारजीहाइ [1]जारिसं लिहणं ।**
**तारिसयं वेयणियं सुहदुहउप्पायगं मुणह ॥२८॥**

व्याख्या—मधुना लिप्तं मधुलिप्तं, तच्चतन्नि[2]शितकरवालं च मधुलिप्तनिशितकरवालम्, तस्य धारा मधुलिप्तनिशितकरवालधारा तस्याः जिह्वया यादृशं [3]लेहनं, य इव दृश्यते [4]यादृशः श-भन्त उपमानभूतः, तल्लेहनमास्वादनं, स इव दृश्यते तादृशः, तादृश एव तादृशकः कभन्तः । अतस्तद् '**वेदनीय**' कर्म वेदनस्वरूपं सुखदुःखोत्पादकं[5] '**मुणह**' जानीत । '**लिप्तं**' दिग्धं '**निशितं**' तीक्ष्णम् । इति गाथार्थः ॥२८॥

वेदनीयस्य दृष्टान्तद्वारेण स्वरूपमाह—

(पारमा०) मधुना-क्षौद्रभ्रामरादिना लिप्तः=उपदिग्धो निशितः=तीक्ष्णः, स चासौ करवालश्च मधुलिप्तनिशितकरवालः, तद्धाराया जिह्वया यादृशं लेहनं तादृशं '**वेदनीयं**' सुख-दुःखोत्पादकं जानीत । '**ज्ञो जाणमुणौ**' (८-३-७) इति प्राकृते आदेशविधानात् '**मुणह**' इति सिद्ध्यति । इति गाथार्थः ॥२८॥

सुखदुःखोत्पादकत्वमेव भावयति—

**महुआसायणसरिसो, सायावेयस्स होइ हु विवागो ।**
**जं असिणा तहि छिज्जइ, सो उ विवागो असायस्स ॥२९॥**

व्याख्या—मधु भ्रमरीरसः शर्करादि वा, तस्यास्वादनं लेहनं, तेन सदृशस्तेन तुल्यः '**सायावेयस्स**' सातावेदनीयस्यैव सुखानुभवरूपस्य भवति '**विपाकः**' अनुभवः । हुशब्दस्यै-

---

१ व्याख्याकारेण-"जारिसयलिहणम्" इत्येतत्पाठानुसारेण व्याख्यातम् ॥ 'जारिसं लेहणं इत्यपि पाठो दृश्यते । २ "तेजितम्" जे० टिप्पणी । ३-६ लिहनं (?) जे० । ४ यादृशं तदुपमानभूतं तस्मि (तल्ले?) हनं जे० । ५ मन्यीत जा० जे० ।

चकारार्थत्वात् । उक्तं सातवेदनीयस्वरूपम् । असातवेदनीयस्वरूपमाह—यच्च 'असिना' खड्गेन 'छिद्यते' द्विधाक्रियते सः 'तु' पुनः 'विपाकः' अनुभवः [1]'असातवेदनीयस्यैव' असुखानुभवस्यैव । इति गाथार्थः ॥२६॥

निगमनपूर्वकं गतिचतुष्के सुखदुःखमतिदिशन्नाह—

(पारमा०) 'मध्वास्वादनसदृशः' मधुलिप्तनिशितनिस्त्रिंशधाराऽवलेहने यत् प्रथमतो मधुररससंवेदनं तत्सदृशः सातवेदनीयस्य भवति विपाकः । 'हुः' निश्चये । यदसिना तत्र छिद्यते स पुनर्विपाकः 'असातस्य' भीमो भीमसेन इतिवदसातवेदनीयस्य । इति गाथार्थः ॥२६॥

सम्प्रति चतुर्गतिविषयत्वं नियतगतिव्यवस्थया प्रस्तौति—

एयं सुहदुक्खकरं, चउगइमावन्नयाण जीवाणं ।
सामन्नेणं भणिमो, सुहदुक्खं दुसु दुसु गईसु ॥३०॥

व्याख्या—'एवं' उक्तनीत्या 'सुखदुःखकरं' सुखदुःखोत्पादकं, केषाम् ? इत्याह—'चतुर्गत्यापन्नानां' चतुर्गत्यवस्थितानां 'जीवानां' प्राणिनां सामान्येन 'भणिमो' भणामः । किं तत् ? इत्याह—सुखदुःखं द्वयोर्द्वयोर्गत्योः । इति गाथार्थः ॥३०॥

सातावेदनीयाद्यनुभवं गतिद्वये निदर्शयन्नाह—

(पारमा०) 'एतद्' वेदनीयं सुखदुःखकरं चतुर्गत्यापन्नानां 'जीवानां' नारकतिर्यङ्नगमरस्थानां सामान्येन भणामः 'सुखदुःखं द्वयोर्द्वयोर्गत्योः' सुखं द्वयोर्देवमनुजगत्योः, दुःखं द्वयोर्नरकतिर्यग्गत्योः । इति गाथार्थः ॥३०॥

एतदेवाह—

देवेसु य मणुएसु य, तत्थ विसिट्ठेसु कामभोगेसु ।
जं [2]उवभुंजइ जीवो, सो उ विवागो [3]उ सायस्स ॥३१॥

व्याख्या—'देवेषु च' अमरेषु 'मनुष्येषु च' पुरुषेषु च 'तत्र' तयोर्विशिष्टेषु 'कामभोगेषु' काम्यन्त इति कामा इच्छाकामा मदनकामाः, भुज्यन्त इति भोगा भवनविलयादयः यत्तत्सुखं 'भुनक्ति' अनुभवति 'जीवः' प्राणी, सः 'तु' पुनर्विपाकः 'सातस्य' सातवेदनीयस्य । ननु नरामरगत्योः किं सातोदय एव ? नारकतिर्यग्गत्योश्चासातोदय एव ? येन भवद्भिर्दर्श्यते गतिद्वये गतिद्वये सातासातोदयः पृथक् पृथक्, उच्यते—प्रायोवृत्तिमाश्रित्येदमुक्तम् । अन्यथा तु

---

१ असातवे० जे० । २ 'वं भु' इत्येतदनुसारेण व्याख्याकारेण व्याख्यातम् । 'तर्हि भु' इत्यपि पाठः, एवमग्रेतनगाथायामपि । ३ 'अ सा०' इत्यपि पाठः ॥

यथा नरामरगतौ सातोदयोऽस्ति तथा-ऽसातोदयोऽपीति प्राधान्यान्नोक्तस्तथा नारकतिर्यग्गतौ सातोदयः। इति गाथार्थः ॥३१॥

नारकतिर्यग्गत्योर्दुःखस्वरूपमाह—

(पारमा०) 'देवेषु मनुष्येषु च' इति देवमनुजगत्योः, 'तत्थ विसिट्ठेसु कामभोगेसु' इति अत्र द्वितीयार्थे सप्तमी। विशिष्टान् 'कामान्' शब्दरूपलक्षणान्, 'भोगान्' गन्धरसस्पर्शलक्षणान्. यदागमः—"कइविहा णं भंते! कामा पन्नत्ता? गोयमा! दुविहा कामा पन्नत्ता, सद्दा रूवा य। कइविहा णं भंते! भोगा पन्नत्ता? गोयमा! तिविहा भोगा पन्नता, तंजहा—गंधा रसा फासा य" इति। यदुपभुङ्क्ते जीवः, स तु विपाकः सातस्यैव। देवेषु च मनुजेषु च, इत्यत्र चकारावनुक्तसमुच्चये तेन नरकेष्वपि नारकाणां जिनजन्ममहादौ, तिर्यक्ष्वपि पट्टहस्त्यादीनां सुखसंवेदनं सातविपाकः। इति गाथार्थः ॥३१॥

नरकतिर्यग्गत्योरसातमाह—

[1]नरएसु य तिरिएसु य, तेसु य दुक्खाइं णेगरूवाइं।
जं उवभुंजइ जीवो, सो उ विवागो असायस्स ॥३२॥

व्याख्या—नरान् कायन्ति शब्दयन्ति नरकास्तेषु, तथा तिरश्चीनमञ्चन्ति गच्छन्ति=तिर्यञ्चस्तेषु च, 'दुःखानि' [2]असातवेदनीयानि 'अनेकरूपाणि' नानारूपाणि यत्तद्भुनक्ति जीवः, सः 'तु' पुनः 'विपाकः' अनुभवः 'असातस्य' दुःखस्य। इति गाथार्थः ॥३२॥

मोहनीययुक्तस्य जीवस्य विपरीतस्वरूपं दृष्टान्तेन प्रकटयन्नाह—

(पारमा०) 'नरकेषु' नरकगतौ 'तिर्यक्षु' तिर्यग्गतौ 'तेसु य' इति न केवलं नरकगतितिर्यग्गत्योः 'तयोश्च' देवमनुजगत्योर्दुःखान्यनेकरूपाणि यदुपभुङ्क्ते आभियोग्यदारिद्र्यादि जीवः, स तु विपाकोऽसातस्य। इति गाथार्थः, ॥३२॥

वेदनीयं निगमयन् मोहनीयप्रस्तावनामाह—

[3]एयमिह वेयणीयं, चउत्थकम्मं तु होइ मोहणियं।
तं मज्जपाणसरिसं, जह होइ तहा निसामेह ॥३३॥

व्याख्या—एतदस्मिन वेदनीयमुक्तम्। चतुर्थं कर्म पुनर्भवति मोहनीयं, तन्मद्यपानसदृशं यथा भवति तथा [4]निशमयत। इति गाथार्थः ॥३३॥

---

१ 'तिरिएसु य नरएसु य तेसिं दुक्खाइं' इत्यपि पाठो दृश्यते। २ असातावे० जे०। ३ एयमिह० सटीकेयं गाथा जे० प्रतौ नास्ति। ४ निशामयत जि० ॥

वक्रारार्थत्वात् । उक्तं सातवेदनीयस्वरूपम् । असातवेदनीयस्वरूपमाह—यच्च 'असिना' खड्गेन 'छिद्यते' द्विधाक्रियते सः 'तु' पुनः 'विपाकः' अनुभवः [1]'असातवेदनीयस्यैव' असुखानुभवस्यैव । इति गाथार्थः ॥२९॥

निगमनपूर्वकं गतिचतुष्के सुखदुःखमतिदिशन्नाह—

(पारमा०) '**मध्वास्वादनसदृशः**' मधुलिप्तनिशितनिस्त्रिंशधाराऽवलेहने यत् प्रथमतो मधुररससंवेदनं तत्सदृशः सातवेदनीयस्य भवति विपाकः । 'हु:' निश्चये । यदसिना तत्र छिद्यते स पुनर्विपाकः '**असातस्य**' भीमो भीमसेन इतिवदसातवेदनीयस्य । इति गाथार्थः ॥२९॥

सम्प्रति चतुर्गतिविषयत्वं नियतगतिव्यवस्थया प्रस्तौति—

**एयं सुहदुक्खकरं, चउगइमावन्नयाण जीवाणं ।**
**सामन्नेणं भणिमो, सुहदुक्खं दुसु दुसु गईसु ॥३०॥**

व्याख्या—'**एवं**' उक्तनीत्या '**सुखदुःखकरं**' सुखदुःखोत्पादकं, केषाम् ? इत्याह—'**चतुर्गत्यापन्नानां**' चतुर्गत्यवस्थितानां '**जीवानां**' प्राणिनां सामान्येन '**भणिमो**' भणामः । किं तत् ? इत्याह—सुखदुःखं द्वयोर्द्वयोर्गत्योः । इति गाथार्थः ॥३०॥

सातावेदनीयानुभवं गतिद्वये निदर्शयन्नाह—

(पारमा०) '**एतद्**' वेदनीयं सुखदुःखकरं चतुर्गत्यापन्नानां '**जीवानां**' नारकतिर्यङ्नरामरस्थानां सामान्येन भणामः '**सुखदुःखं द्वयोर्द्वयोर्गत्योः**' सुखं द्वयोर्देवमनुजगत्योः, दुःखं द्वयोर्नरकतिर्यग्गत्योः । इति गाथार्थः ॥३०॥

एतदेवाह—

**देवेसु य मणुएसु य, तत्थ विसिट्ठेसु कामभोगेसु ।**
**जं [2]उवभुंजइ जीवो, सो उ विवागो [3]उ सायस्स ॥३१॥**

व्याख्या—'**देवेषु च**' अमरेषु '**मनुष्येषु च**' पुरुषेषु च '**तत्र**' तयोर्विशिष्टेषु '**कामभोगेषु**' काम्यन्त इति कामा इच्छाकामा मदनकामाः, भुज्यन्त इति भोगा भवनविलयादयः यत्तत्सुखं '**भुनक्ति**' अनुभवति '**जीवः**' प्राणी, सः '**तु**' पुनर्विपाकः '**सातस्य**' सातवेदनीयस्य । ननु नरामरगत्योः किं सातोदय एव ? नारकतिर्यग्गत्योश्चासातोदय एव ? येन भवद्भिर्दर्श्यते गतिद्वये गतिद्वये सातासातोदयः पृथक् पृथक्, उच्यते—प्रायोवृत्तिमाश्रित्येदमुक्तम् । अन्यथा तु

१ असातावे० जे० । २ 'तं भुं' इत्येतदनुसारेण व्याख्याकारेण व्याख्यातम्, 'तहिं भुं' इत्यपि पाठः, एवमग्रेतनगाथायामपि । ३ 'अ सा०' इत्यपि पाठः ॥

यथा नरामरगतौ सातोदयोऽस्ति तथा-ऽसातोदयोऽपीति प्रधान्याच्चोक्तस्तथा नारकतिर्यग्गतौ सातोदयः। इति गाथार्थः ॥३१॥

नारकतिर्यग्गत्योर्दुःखस्वरूपमाह—

(पारमा०) 'देवेसु मनुष्येषु च' इति देवमनुजगत्योः, 'तत्थ विसिट्ठेसु काम-भोगेसु' इति अत्र द्वितीयार्थे सप्तमी। विशिष्टान् 'कामान्' शब्दरूपलक्षणान्, 'भोगान्' गन्धरसस्पर्शलक्षणान्, यदागमः—"कइविहा णं भंते! कामा पन्नत्ता? गोयमा! दुविहा कामा पन्नत्ता, सद्दा रूवा य। कइविहा णं भंते! भोगा पन्नत्ता? गोयमा! तिविहा भोगा पन्नता, तंजहा-गंधा रसा फासा य" इति। यदुपभुङ्क्ते जीवः, स तु विपाकः सातस्यैव। देवेषु च मनुजेषु च, इत्यत्र चकारावनुक्तसमुच्चये तेन नरकेष्वपि नारकाणां जिनजन्ममहादौ, तिर्यक्ष्वपि पट्टहस्त्यादीनां सुखसंवेदनं सातविपाकः। इति गाथार्थः ॥३१॥

नरकतिर्यग्गत्योरसातमाह—

[1]नरएसु य तिरिएसु य, तेसु य दुक्खाइं णेगरूवाइं।
जं उवभुंजइ जीवो, सो उ विवागो असायस्स ॥३२॥

व्याख्या—नरान् कायन्ति शब्दयन्ति नरकास्तेषु,तथा तिरश्चीनमञ्चन्ति गच्छन्ति=तिर्यञ्चस्तेषु च, 'दुःखानि' [2]असातवेदनीयानि 'अनेकरूपाणि' नानारूपाणि यत्तद्भुनक्ति जीवः, सः 'तु' पुनः 'विपाकः' अनुभवः 'असातस्य' दुःखस्य। इति गाथार्थः ॥३२॥

मोहनीययुक्तस्य जीवस्य विपरीतस्वरूपं दृष्टान्तेन प्रकटयन्नाह—

(पारमा०) 'नरकेषु' नरकगतौ 'तिर्यक्षु' तिर्यग्गतौ 'तेसु य' इति न केवलं नरकगति-तिर्यग्गत्योः 'तयोश्च' देवमनुजगत्योर्दुःखान्यनेकरूपाणि यदुपभुङ्क्ते आभियोग्यदारिद्र्यादि जीवः, स तु विपाकोऽसातस्य। इति गाथार्थः, ॥३२॥

वेदनीयं निगमयन् मोहनीयप्रस्तावनामाह—

[3]एयमिह वेयणीयं, चउत्थकम्मं तु होइ मोहणियं।
तं मज्जपाणसरिसं, जह होइ तहा निसामेह ॥३३॥

व्याख्या—एतदस्मिन वेदनीयमुक्तम्। चतुर्थं कर्म पुनर्भवति मोहनीयं, तन्मद्यपानसदृशं यथा भवति तथा [4]निशमयत। इति गाथार्थः ॥३३॥

---

१ 'तिरिएसुय नरएसु य तेसिं दुक्खाइं' इत्यपि पाठो दृश्यते। २ असाताथे० जे०। ३ एयमिह० सटीकेयं गाथा जे० प्रतौ नास्ति। ४ निशामयत जि० ॥

(पारमा०) **एतत्** सातासातरूपं '**इह**' प्रवचने वेदनीयमुच्यत इति गम्यते, चतुर्थकर्म भवति मोहनीयं तन्मद्यपानसदृशं यथा भवति तथा निशमयत । इति गाथार्थः ॥३३॥

जह मज्जपाणमूढो, लोए पुरिसो परव्वसो होइ ।
तह मोहेण वि मूढो, जीवो वि परव्वसो होइ ॥३४॥

व्याख्या—यथा '**मद्यपानमूढः**' मद्य=मासवविशेषः, तस्य पानं=[1]घुटनं तेन मूढो=मोहितो व्याप्तो '**लोके**' मनुष्यलोके '**पुरुषः**' मनुष्यः '**परवशः**' परायत्तो, वकारस्य प्राकृतत्वाद् रुत्वम्, '**भवति**' जायते '**तथा**' तेनैव प्रकारेण मोहेनापि '**मूढः**' छादितस्वरूपः '**जीवः**' प्राणी '**परवशः**' आत्मानायत्तः '**भवति**' संपद्यते । इति गाथार्थः ॥३४॥

मोहनीयस्वरूपं सभेदमाह—

(पारमा०) यथा '**मद्यपानमूढः**' मद्यपानेन नष्टचेतनो लोके पुरुषः '**परवशः**' परायत्तो भवति तथा मोहेनापि मूढो जीवोऽपि परवशो भवति इति गाथार्थः ॥३४॥

संप्रति शब्दार्थकथनपूर्वकं मोहनीयस्य द्वैविध्यं तावदाह—

मोहेइ मोहणीयं, तंपि समासेण भणए दुविहं ।
दंसणमोहं पढमं चरित्तमोहं भवे बीयं ॥३५॥

व्याख्या='**मुह वैचित्ये**' '**मोहयति**' वैचित्यमुत्पादयत्यात्मन इतिकृत्वा मोहनीयम् । तदपि '**समासेन**' संक्षेपेण भवति '**द्विविधं**' द्विप्रकारम् । द्वैविध्यमेवाह—दर्शनमोहं '**प्रथमं**' आद्यम्, चरित्रमोहं भवेत् '**द्वितीयं**' अप्रथमम् । इति गाथार्थः ॥३५॥

प्रथमस्वरूपमाह—

(पारमा०) '**मोहयति**' वैचित्यमापादयतीति मोहनीयम् । तदपि '**समासेन**' संक्षेपेण '**भण्यते**' प्रतिपाद्यते द्विविधम् । दृश्यते यथावदलोक्यते वस्त्वनेनेति दर्शनम्, तन्मोहयति मूढतां नयति यत्कर्म तद्दर्शनमोहं प्रथमम् । चर्यते तदिति चरित्रम्, तन्मोहयति यत्कर्म तच्चरित्रमोहं द्वितीयम् । इति गाथार्थः ॥३५॥

संक्षेपतो मोहनीयस्य द्वैविध्यमभिधाय प्रथमं दर्शनमोहनीयभेदानाह—

दंसणमोहं तिविहं, सम्मं मीसं च तह य मिच्छत्तं ।
सुद्धं अद्धविसुद्धं, अविसुद्धं तं जहाकमसो ॥३६॥

---

[1] घोट्टनं जे० घुण्टनं जि० । [2] व्याख्याकारेण तु "होइ दुविहं तु" इत्यपि पाठः, तदनुसारेण व्याख्यानम् ।

व्याख्या—'दृशिर् प्रेक्षणे' दृष्टिर्दर्शनं यथाऽवस्थितवस्तुपरिच्छेदः, तन्मोहयति यत्कर्म येन कर्मणाऽन्यथास्थितं वस्तु अन्यथा परिच्छिद्यते तद्दर्शनमोहम् । तच्च त्रिविधम्, '**सम्मं मीसं च तह य मिच्छत्तं**' सम्यक्त्वं सम्यग्मिथ्यात्वं तथा मिथ्यात्वं चेति । चस्य पदतः संबन्धः । शुद्धं अर्द्धविशुद्धं [1]अविशुद्धं चेति । तत्र मिथ्यात्वपुद्गला एव शोधिताः कारणाभावे विकाराजनकत्वेन शुद्धाः सम्यक्त्वमुच्यते १ । तथा त एवार्द्धविशुद्धाः स्वरूपतः किञ्चिद्विकारजनकत्वेन अर्द्धविशुद्धं सम्यग्मिथ्यात्वमुच्यते २ । त एव मिथ्यात्वपुद्गला अतत्त्वेषु तत्त्वाभिनिवेशरूपाः अविशुद्धं मिथ्यात्वमुच्यते, विषविकारतुल्यमिति तात्पर्यम् ३ '**यथाक्रमशो**' यथा परिपाट्या [2]वक्ष्यते । इति गाथार्थः ॥३६॥

हेतुद्वारेण सम्यक्त्वस्वरूपं समर्थयन्नाह—

(पारमा०) दर्शनमोहं त्रिविधम् । '**सम्यग्**' इति सम्यक्त्वम्, सम्यगित्येतस्य भावः सम्यक्त्वम्, इत्यतो '**मिश्रं**' सम्यग्मिथ्यात्वम् । तथा मिथ्यात्वं च, शुद्धं अर्द्धविशुद्धं अविशुद्धम्, '**तद्यथाक्रमशः**' इति सम्यक्त्वं शुद्धं, मिश्रमर्द्धविशुद्धं, मिथ्यात्वमविशुद्धम् । इति गाथार्थः ॥३६॥

सम्यक्त्वस्वरूपमाह—

केवलनाणुवलद्धे, जीवाइपयत्थ सद्दहे जेणं ।
तं सम्मत्तं कम्मं, सिवसुहसंपत्तिपरिणामं ॥३७॥

व्याख्या—केवलमसहायं ज्ञानं केवलज्ञानम्, तेनोपलब्धा ज्ञातास्तीर्थकृद्भिर्ये जीवादिपदार्थाः तानागमान्निसर्गाद्वा विज्ञाय '**श्रद्दधीत**' प्रतिपद्येत '**येन**' कर्मणा हेतुभूतेन तत्सम्यक्त्वं कर्म यथाऽवस्थितवस्तुपरिच्छेदात्मकं प्रतिपत्तिरूपं सम्यग्दर्शनमित्यर्थः । शिवं निरुपद्रवस्थानं मोक्षः तस्मिन् सुखं परमानन्दरूपं तस्य संप्राप्तिरवाप्तिः सा परिणामो यस्य तत् शिवसुखसंप्राप्तिपरिणामम् । इति गाथार्थः ॥३७॥

मिश्रस्वरूपमाह—

(पारमा०) केवलज्ञानेनोपलब्धानधिगतानर्थान् । केवलिभिर्जीवादिपदार्थान् जीवाजीवपुण्यपापास्रवसंवरनिर्जराबन्धमोक्षलक्षणान् श्रद्दधीत '**येन**' कर्मणा हेतुभूतेन तत्सम्यक्त्वं कर्म । विशेषणद्वारेणैतत्फलमाह—'**शिवसुखसंप्राप्तिपरिणामं**' शिवसुखसंप्राप्तिः परिणामः परिणतिर्यस्य । इति गाथार्थः ॥३७॥

मिश्रमाह—

---

१ अविशुद्धं मिथ्यात्वपुद्गला एव शो० जे० जि० । २ वक्ष्ये इति जे० ।

**रागं नवि जिणधम्मे [1]नवि दोसं जाइ जस्स उदएणं ।**
**सो मीसस्स विवागो, अंतमुहुत्तं [2]भवे कालं ॥३८॥**

व्याख्या—'**रागं**' प्रीतिलक्षणं '**नापि**' नैव, अपिशब्दस्यैवकारार्थत्वात्, '**जिनधर्मे**' तीर्थकृद्धर्मे '**न च**' नैव '**द्वेषं**' अप्रीतिलक्षणं '**याति**' गच्छति '**यस्य**' कर्मणः '**उदयेन**' प्रादुर्भावेन, स मिश्रस्य '**विपाकः**' अनुभव उदयो वा । स च भवन् कियन्तं कालं यावद्भवति ? अत आह—अन्तर्मुहूर्तमात्रं कालं मुहूर्तस्यान्तः=द्विघटिको मुहूर्तस्तस्य मध्यः । इति गाथार्थः ॥३८॥

मिथ्यात्वस्वरूपमाह—

(पादमा०) '**रागं**' नापि प्रीतिलक्षणं जिनधर्मे नापि '**द्वेषं**' अप्रीतिलक्षणं गच्छति, किन्तु मध्यस्थपरिणामः '**यस्य**' कर्मण उदयेन भवति स मिश्रस्य '**विपाकः**' उदयः '**अन्तर्मुहूर्तं भवेत्कालं**' किञ्चिन्न्यूनघटिकाद्वयलक्षणम्, तत ऊर्ध्वमवश्यं मिथ्यात्वे वा गमनात् । इति गाथार्थः ॥३८॥

मिथ्यात्वमाह—

**[3]जिणधम्मंमि पओसं, वहइ य हियएण जस्स उदएणं ।**
**तं मिच्छत्तं कम्मं, संकिट्ठो तस्स उ विवागो ॥३९॥**

व्याख्या—'**जिनधर्मस्य**' वीतरागधर्मस्य '**प्रद्वेषं**' मत्सरं '**वहति च**' याति च '**हृदयेन**' चेतसा, करोतीत्यर्थः '**यस्य**' कर्मणः 'उदये' विपाकानुभवे । चकाराच्च केवलं हृदि प्रद्वेषं वहति, तदुदयजनितं कार्यं चावर्णवादादि शासनस्य विधत्ते, '**तन्मिथ्यात्वं कर्म**' मिथ्याऽलीकं विपरीतं वा तत्त्वपरिज्ञानं यस्मिन् तन्मिथ्यात्वं, '**संक्लिष्टः**' अशुभतरः, तुशब्दस्य पुनःशब्दार्थत्वात्तस्य पुनः '**विपाकः**' अनुभव उदयो वा । तदुदयेऽवश्यमशुभरूपस्य कर्मणो बन्धो भवति । इति गाथार्थः ॥३९॥

उक्तं दर्शनमोहम्, साम्प्रतं चारित्रमोहमाह—

(पादमा०) जिनधर्मे प्रद्वेषं वहति हृदयेन '**यस्य**' कर्मणः '**उदयेन**' विपाकवेदनेन । चकाराच्च केवलं हृदि प्रद्वेषं धारयति तत्फलमपि चावर्णवादादि करोति, तन्मिथ्यात्वं कर्म, संक्लिष्टस्तस्य पुनर्विपाकः, नरकादिप्रापकत्वात् । इति गाथार्थः ॥३९॥

दर्शनमोहनीयं त्रिविधमप्युक्त्वा चारित्रमोहनीयं गाथाऽऽद्यदलेनाह—

---

१ व्याख्याकारेण तु—"न य" इति पाठानुसारेण व्याख्यातम् । २ 'हवइ कालं' इत्यपि पाठः । ३ 'जिणधम्मम्मि पओसं वहइ उदएण जस्स कम्मस्स' । इत्यपि पाठः ।

**जं पि य चरित्तमोहं, [1]तं पि हु दुविहं समासओ होइ ।**
**सोलस जाण कसाया, नव भेया नोकसायाणं ॥४०॥**

व्याख्या—यदपि च चरित्रमोहं यदिति प्रागभिहितं चरित्रमोहं, अपिशब्दः संभावने समुच्चये वा, 'चः' पादपूरणे, [2]चरेरित्रनप्रत्ययान्तस्य चरित्रमिति रूपम् । [3]निरुक्तं तु चितस्य कर्मणो रिक्तीकरणाच्चरित्रं व्रतं नियमो [4]वाऽर्थः, तदपि '**समासेन**' संक्षेपेण द्विविधं '**भणितं**' प्रतिपादितम् । तुशब्दान्न केवलं मोहनीयं, चरित्रमपि द्विप्रकारमेव । षोडश '**जानीहि**' विद्धि '**कषायान्**' क्रोधमानमायालोभान् प्रत्येकं चतुर्विकल्पान् । ते चामी—"**जलरेणुपुढविपव्वयराईसरिसो चउव्विहो कोहो । तिणिसलयाकट्ठट्ठियसेलत्थंभोवमो माणो ॥१॥ मायावलेहिगोमुत्तिमिंढसिंगघणवंसमूलसमा । [5]लोहो हलिद्दखंजणकद्दमकिमिराग सारिच्छो ॥२॥ पक्खचउमासवच्छरजावज्जीवाणुगामिणो कमसो । देवनरतिरियनारयगइसाहणहेयवो भणिया ॥३॥**" इति । षट् च दश च षोडश, षस्य उत्वं दस्य डत्वं निपातनात्, षडधिका दश षोडश, कषो=भवस्तस्यायो=लाभो येषु सत्सु तान् । तथा नव '**भेदाः**' विशेषा नोकषायाणाम् । कषाया [6]नो भवन्ति नोकषायाः, प्रतिषेधवाचको नोशब्दः, वेदत्रयहास्यादिरूपाः, तानिमान् स्त्रीपुंनपुंसकवेदहास्यरत्यरतिशोकभयजुगुप्सादीन् । इति गाथार्थः ॥४०॥

षोडशकषायभेदानाह—

(पारमा०) यदपि च चरित्रमोहं तदपि द्विविधं, न केवलं मोहनीयं दर्शनमोहनीयचरित्रमोहनीयभेदाद् द्विविधम् । चरित्रमोहनीयमपि हुशब्दस्यैवकारार्थत्वाद् द्विविधमेव समासतो भवति, कषायनोकषायभेदात् । तांश्चोत्तरार्द्धेनाह—'**षोडश**' षोडशसंख्यापरिच्छिन्नान् जानीहि, क्रोधमानमायालोभानां चतुर्णामपि प्रत्येकं चतुर्विधत्वात् । कृष्यन्ते=हिंस्यन्ते परस्परं प्राणिनोऽस्मिन्निति कषः=संसारः, तं अयन्ते=गच्छन्ति जन्तव एभिरिति कषायास्तान्, नव भेदान् नोकषायाणां वेदत्रयहास्यादिषट्कलक्षणान्, जानीहीति अत्रापि संबध्यते । इति गाथार्थः ॥४०॥

कषायाणामोद्देशेनाह—

**कोहो माणो माया, लोभो चउरोवि हुंति चउभेया ।**
**अणअप्पच्चक्खाणा, पच्चक्खाणा य संजलणा ॥४१॥**

---

१ "तंपि समासेण होइ दुविहं तु" इत्यपि पाठो दृश्यते, व्याख्याकारेण तु "तंपि समासेण दुविहं भणियं तु" इति पाठानुसारेण व्याख्यातम्, अत्र 'दुविह' इति पदं प्राकृतत्वाल्लुप्तविभक्तिकं ज्ञेयम् । २ चरेरित्रचप्रत्य० जे० । ३ "पदभञ्जकं" जे० टिप्पणी । ४ ० मो वेत्यर्थः, तदपि जे० । ५ लोभो जे० । ६ न जे० ।

व्याख्या–'क्रोधः' असहनरूपः, 'मानः' स्तम्भरूपः, 'माया' कुटिलस्वभावा, [1]'लोभः' सञ्चयशीलता, चत्वारोऽपि 'भवन्ति' जायन्ते 'चतुर्भेदाः' चतुर्विकल्पाः । 'अण' इति अनन्तानुबन्धिनश्चत्वारः, अनन्त=आसंसारं यावत् अनुबन्धः=प्रवाहो येषां तेऽनन्तानुबन्धिनः । अप्रत्याख्यानाश्चत्वारः–न विद्यते देशसर्वनिषेधरूपं प्रत्याख्यानं येषामुदये तेऽप्रत्याख्यानाः, प्रसज्यनञ्समासस्य निषेधमात्रत्वात् । प्रत्याख्यानाश्चेति प्रत्याख्यानावरणा गृह्यन्ते, यथा सत्यभामा भामेति, आङ्मर्यादायाम् । प्रत्याख्यानमा मर्यादया वृण्वन्ति=च्छादयन्ति येषामुदये सर्वप्रत्याख्यानं न भवति देशतस्तु भवति ते प्रत्याख्यानावरणाश्चत्वारः । [2]संज्वलयन्ति यत्किंचिदेव स्वल्पमपि दुर्वचनादिकमासाद्योदयं यान्ति [3]उपशाम्यन्ति च संज्वलनाश्चत्वारः । इति गाथार्थः ॥४१॥

अनन्तानुबन्ध्युदये फलाभावप्रदर्शनायाह—

(पारमा०) क्रोधो मानो माया लोभश्चत्वारोऽपि प्रत्येकं चतुर्भेदा भवन्ति । कथम् ? 'अण' इति अनन्तानुबन्धिनः, तत्रानन्तं संसारमनुबध्नन्तीत्येवंशीला अनन्तानुबन्धिनः । तथा 'अप्रत्याख्यानाः' प्रत्याख्यानं च द्विधा, देशविरतिसर्वविरतिभेदात् । तत्र देशविरतिः सर्वविरत्यपेक्षयाऽल्पं प्रत्याख्यानम् , ततश्च न विद्यतेऽल्पमपि प्रत्याख्यानं यदुदयात्ते तथा । यत उक्तम्–"नाल्पमप्युत्सहेद्येषां, प्रत्याख्यातुमिहोदयात् । अप्रत्याख्यानसंज्ञाऽतो द्वितीयेषु निवेशिता ॥१॥" अथवाऽल्पं प्रत्याख्यानमप्रत्याख्यानम् , तदप्यावृण्वन्तीत्यप्रत्याख्यानावरणा अप्येते तदाह–'आवृण्वन्ति प्रत्याख्यानं स्वल्पमपि येन जीवस्य । तेनाऽप्रत्याख्यानावरणास्ते नञिह सोऽल्पार्थः ॥१॥' 'प्रत्याख्यानाः' इति प्रत्याख्यानावरणाः, प्रत्याख्यानं सर्वविरतिरूपमावृण्वन्तीति, बहुलवचनात्कर्तर्यनट् । तथा 'संज्वलनाः' सं ईषत्परीषहोपसर्गसंसर्गे चारित्रिणमपि ज्वलयन्तीतिकृत्वा । इति गाथार्थः ॥४१॥

सम्प्रत्याद्यान् विशेषेणाह—

कोहो माणो माया लोभो पढमा[4] अणंतबंधीउ ।
एयाणुदए जीवो इह सम्मत्तं न पावेइ ॥४२॥

व्याख्या–क्रोधमानमायालोभा उक्तस्वरूपाः 'प्रथमास्तु' आद्यास्तु पर्वतराजिशैलस्तम्भघनवंशकुडङ्गिकृमिरागाः 'अनन्तानुबन्धिनः' अनन्तं=संसारं कर्म वा बध्नन्तीत्येवंशीला अनन्तबन्धिनः । 'अनन्तानुबन्धिनः' इति वा पाठो द्रष्टव्यो व्याख्यायाम् । सा चैवम्-अनन्तः=अनन्तकालं यावत् , अनुबन्धः=श्चित्तस्याशुभोऽनुशयः प्रवाहोऽनन्तकालेनापि पश्चान्निवृत्तिर्न भवति,

१ 'लोभः' अतिसञ्चय० जे० । २ सञ्ज्वलन्ति जे० । ३ उपशमन्ति जे० । ४ व्याख्याकारेण तु "पढमा अणंतबंधी उ" इति पाठानुसारेण व्याख्यातम् ॥

तमनुबन्धन्तीत्येवंशीला अन्तानुबन्धिनः । सूत्रे तु प्राकृतत्वाद्गाथाभङ्गभयाच्चैवं पाठः । तुशब्दस्तु प्रथमेत्यत्र पुनःशब्दार्थः । 'एयाणं' इत्यत्र चार्थात्संबन्धनीयः । अनन्तानुबन्धिनां क्रोधमानमायालोभानां 'उदये' अनुभवे 'इह' मनुष्यलोके सम्यक्त्वं 'न प्राप्नोति' नासादयति । इति गाथार्थः ॥४२॥

तेषां चोदयो गुणस्थानकेषु कियद्दूरं यावद्भवति ? इत्याह—

(पारमा०) क्रोधो मानो माया लोभः प्रथमाः, 'अणंतबंधोउ' इति, आर्षत्वादनन्तानुबन्धिनः । एतेषामुदये जीवः 'इह' संसारे 'सम्यक्त्वं' उक्तस्वरूपं न प्राप्नोति । इति गाथार्थः ॥४२॥

सम्प्रति येषु गुणस्थानेष्वेषामुदयो येषु च न इत्येतदाह—

**जं परिणामो किट्ठो मिच्छाओ जाव सासणो ताव ।**
**सम्मामिच्छाईसुं, एसिं उदओ [1]अओ नत्थि ॥४३॥**

व्याख्या–'यत्' यस्मात्कारणात् 'परिणामः' अध्यवसायः 'क्लिष्टः' अशुभतमः 'मिथ्यात्वात्' मिथ्यादृष्टिगुणस्थानकात्सकाशाद्यावत्सास्वादनः, सहास्वादनेन वर्तते सास्वादनः, सम्यक्त्व[2]मास्वाद्य पुनर्भवति अन्तर्मुहूर्तमात्रकालात् सास्वादनगुणस्थानकं यावत्ताव[3]त्क्लिष्टपरिणामोऽनुवर्तते। ननु 'मिथ्यात्वात्' इति पञ्चम्यैवावध्यर्थौ लभ्यते तत्किमर्थं यावत्तावच्छब्दयोर्द्वयोरुपादानमिति ?, उच्यते–[4]सापेक्षतया यावत्तावतोरुपादानमविरुद्धम्, अथवा मिथ्यादृष्टिगुणस्थानकमवधिमवधिमत्सास्वादनगुणस्थानकम्, अवधिमत एव यावच्छब्दोऽवधिमत्त्वाभिव्याप्तिप्रदर्शकः तावच्छन्दस्तु तस्यैवावधिमतः पर्यन्तप्रदर्शकः, [5]संबन्धशब्दो वा, मिथ्यादृष्टिगुणस्थानकात्सकाशात्सास्वादनगुणस्थानकं यावद्भवति, न परतो भवति क्लिष्टाध्यवसायः, तत एव निवर्तते इति तात्पर्यार्थः । ननु कथमिदमवसीयते ? इत्यत आह–'सम्यग्मिथ्यात्वादिषु' सम्यग्मिथ्यादृष्टिगुणस्थानकेषु, आदिशब्दादविरतादिगुणस्थानकेषु च 'एतेषां' अनन्तानुबन्धिनां उदयः, अनुभवः 'यतः' यस्मात्कारणात् 'नास्ति' न विद्यते इति युक्तिः । इति गाथार्थः ॥४३॥

द्वितीयकषायोदये विरत्यभावमाह—

(पारमा०) एतद्व्याख्या च गुणस्थानात्सुज्ञाना इति गुणस्थाननामस्वरूपप्ररूपणाय शास्त्रान्तरश्लोकाः । तथाहि–"मिथ्यादृष्टिः १ सास्वादन २–सम्यग्मिथ्यादृशावपि ३ । अविरतसम्यग्दृष्टिः ४, विरताविरतोऽपि च ५ ॥१॥ प्रमत्तश्चा ६ ऽप्रमत्तश्च ७, निवृत्ति-

१ व्याख्याकारेण तु "जओ" इत्येतत्पाठानुसारेण व्याख्यातम् जे० । २ "मासाद्य" जे० । ३ त्क्लिष्टः परि० जे० । ४ नोल्लिख्या यावत्ता० जे० । ५ सम्बन्धिशब्दो जे० ।

बादरस्ततः ८ । अनिवृत्तिबादर ९ श्चा-ऽथ सूक्ष्मसंपरायकः १० ॥२॥ ततः प्रशान्त-मोहश्च ११ क्षीणमोहश्च १२ योगवान् १३ । अयोगवानिति १४ गुण-स्थानानि स्युश्चतुर्दश ॥३॥ मिथ्यादृष्टिर्भवेन्मिथ्या-दर्शनस्योदये सति । गुणस्थानत्वमेतस्य, भद्रकत्वाद्यपेक्षया १ ॥४॥ मिथ्यात्वस्यानुदयेऽनन्तानुबन्ध्युदये सति । सास्वाद-नसम्यग्दृष्टिः, स्यादुत्कर्षात्षडावली २ ॥५॥ सम्यक्त्वमिथ्यात्वयोगात्, मुहूर्तं मिश्रदर्शनः ३ । अविरतसम्यग्दृष्टिरप्रत्याख्यानकोदये ४ ॥६॥ विरताविरतस्तु स्यात्, प्रत्याख्यानोदये सति ५ । प्रमत्तसंयतः प्राप्तसंयमो य प्रमाद्यति ६ ।७॥ सोऽप्रमत्तसंयतो यः, संयमे न प्रमाद्यति ७ । उभावपि परावृत्त्या, स्यातामान्त-र्मौहूर्तिकौ ॥८॥ कर्मणां स्थितिघातादो-नपूर्वान् कुरुते यतः । तस्मादपूर्वकरणः, क्षपकः शमकश्च सः ॥९॥ यद्बादरकषायाणां, प्रविष्टानामिमं मिथः । परिणामा निवर्तन्ते निवृत्तिबादरोऽपि तत् ८ ॥१०॥ परिणामा निवर्तन्ते, मिथो यत्र न यत्ततः । अनिवृत्तिबादरः स्यात्, क्षपकः शमकश्च सः ९ ॥११॥ लोभाभिधः संपरायः, सूक्ष्मकिट्टीकृतो यतः । स सूक्ष्मसंपरायः स्यात्, क्षपकः शमकोऽपि च १० ॥१२॥ अथोपशान्तमोहः स्यात्, मोहस्योपशमे सति ११ मोहस्य तु क्षये जाते, क्षीणमोहं प्रचक्षते १२ ॥१३॥ सयोगिकेवली घाति-क्षयादुत्पन्नकेवलः १३ । योगानां तु क्षये जाते, स एवायोगिकेवली १४ ॥१४॥" प्रतिपादितानि प्रस्तुतोपयोगीनि गुणस्थानानि । सम्प्रति सूत्रं व्याख्यायते—'यत्' यस्मात् परिणामः क्लिष्टो 'मिथ्यात्वात्' मिथ्यादृष्टिगुणस्थानाद्यावत्सास्वादनस्तावत् । अतः सास्वादनगुणस्थानेऽनन्तानुबन्धिनो व्यवच्छिन्नाः । सम्यग्मिथ्यादृष्ट्यादिष्वेषामुदयोऽतः क्लिष्टपरिणामाभावान्नास्ति । इति गाथार्थः ॥४३॥

द्वितीयकषायानाह—

कोहो माणो माया, लोभो बीया अपच्चखाणा उ ।
एयाणुदए जीवो, विरयाविरइं न पावेइ ॥४४॥

व्याख्या—क्रोधमानमायलोभा द्वितीयाः पृथ्वीराजिअस्थिमेषशृङ्गकर्दमतुल्याः 'अप्रत्याख्यानास्तु' सर्वथा विरत्यभावस्वरूपाः । तुशब्दः पुनःशब्दार्थः एतेषामित्यत्र संबन्धनीयः । एतेषां पुनः उदये विपाके 'जीवः' प्राणी 'विरताविरतिं' देशविरतिं न प्राप्नोति, सम्यक्त्वं तु प्राप्नोति योग्यतायाम् । इति गाथार्थः ॥४४॥

एतेषामुदये किमितिकृत्वा विरताविरतिं न प्राप्नोति ? इत्याह—

(पारमा०) क्रोधादयो द्वितीया अप्रत्याख्यानाः, उच्यन्ते इत्यध्याहारः । एषामुदये जीवो देशविरतिं न प्राप्नोति । इति गाथार्थः ॥४४॥

एषां च यत्पर्यन्तेषु गुणस्थानेषूदयस्तदाह—

एसिं [1]जाण विवागो, मिच्छाओ जाव अविरओ ताव ।
परओ देसजयाइसु, नत्थि विवागो चउण्हं पि ॥४५॥

व्याख्या—'एतेषां' अप्रत्याख्यानकषायाणां '**येन**' कारणेन '**विपाकः**' उदयः, '**मिच्छाओ जाव अविरओ ताव**' मिथ्यात्वात्सकाशाद्यावदविर[2]तगुणस्थानकं तावदुदय इति हृदयम् '**परओ देसजयाइसु**' परतो देशयत्यादिषु विरताविरतादिषु '**नास्ति विपाको**' न विद्यते अनुभवश्चतुर्णामपि द्वितीयाप्रत्याख्यानकषायाणां येन कारणेन । इति गाथार्थः ॥४५॥

तृतीयकषायोदये सर्वविरत्यभावमाह—

(पारमा०) '**एषां**' अप्रत्याख्यानानां विपाको '**मिथ्यात्वात्**' मिथ्यादृष्टिगुणस्थानकाद्यावत् '**अविरतः**' अविरतसम्यग्दृष्टिस्तावत्, इतेरध्याहारादिति जानीहि । परतो '**देशयतादिषु**' विरताविरतादिषु नास्ति विपाकश्चतुर्णामपि । इति गाथार्थः ॥४५॥

तृतीयानाह—

[3]कोहो माणो माया, लोभो तइया उ पच्चक्खाणा उ ।
एयाणुदए जीवो, पावेइ न सव्वविरइं तु ॥४६॥

व्याख्या—क्रोधमानमायालोभाः '**तृतीयास्तु**' तृतीयाः पुना रेणुरेखाकाष्ठगोमूत्रिकाखञ्जनसदृशाः '**प्रत्याख्यानास्तु**' प्रत्याख्यानावरणा एव, तुशब्दस्यैवकारार्थत्वात् । एतेषां '**उदये**' विपाके '**प्राप्नोति**' आसादयति, न '**सर्वविरतिं तु**' संयतत्वमेव, तुशब्दस्यैवकारार्थत्वात्, देशयतित्वं पुनः प्राप्नोति । इति गाथार्थः ॥४६॥

किमितिकृत्वा सर्वविरतिं न प्राप्नोति ? इत्याह—

(पारमा०) क्रोधादयस्तृतीयाः '**प्रत्याख्यानाः**' इति प्रत्याख्यानावरणाः, उच्यन्त इति शेषः । एतेषामुदये जीवः पुनः सर्वविरतिं न प्राप्नोति । इति गाथार्थः ॥४६॥

[3]एषामुदयावधिभूमिमाह—

---

१ व्याख्याकारेण तु "जेण" इति पाठानुसारेण व्याख्यातम् । एवमग्रेऽपि ज्ञेयम् ॥ २ तस्साव-द्ग्रन्थ जे० ३ "एषामुदयभूमिमाह" इत्यपि ॥

एसिं जाण विवागो, मिच्छाओ जाव विरयविरओ उ।
परओ पमत्तमाइसु, नत्थि विवागो चउण्हं पि ॥४७॥

व्याख्या–'एतेषां' प्रागुक्ततृतीयकषायाणां 'येन' कारणेन 'विपाकः' उदयोऽनुभवो मिथ्यात्वात्सकाशाद्यावद् 'विरताविरतस्तु' तुशब्दस्यैवकारार्थत्वाद्विरताविरतगुणस्थानकमेव यावदुदयः। 'परतः' अग्रतः प्रमत्तमादिर्येषां गुणस्थानकानां तानि प्रमत्तादीनि प्रमत्तसंयतगुणस्थानकम्, आदिशब्दादप्रमत्तादिसंयतगुणस्थानकानि गृह्यन्ते, [तेषु] नास्ति 'विपाकः' अनुभवश्चतुर्णामपि यावत्येव गुणस्थानके तेषामुदयस्तावत्येव ते सर्वविरतेर्निबन्धका नोत्तरत्र, भवत्येवात्र सर्वविरतिः, प्राक् पुनः कषायोदयो विबन्धकोऽस्तीत्यनेन कारणेन सर्वविरत्यभावः। इति गाथार्थः ॥४७॥

चरमकषायानाह—

(पारमा०) एषां प्रत्याख्यानरणानां विपाको मिथ्यात्वाद् यावद्विरताविरतस्तावदेवेति जानीहि, परतः प्रमत्तादिषु चतुर्णामपि नास्ति विपाकः। इति गाथार्थः ॥४७॥

चतुर्थकषायानाह—

कोहो माणो माया, लोभो चरिमा उ हुंति संजलणा।
एयाणुदए जीवो, न लहइ अहखायचारित्तं ॥४८॥

व्याख्या–क्रोधमानमायालोभाः 'चरमास्तु' पुनः पश्चिमाः 'भवन्ति' जायन्ते 'संज्वलनाः' प्रागभिहिताः। एतेषां 'उदये' विपाकानु[1]भवे 'जीवः' सत्त्वः 'न लभ्यते' न प्राप्नोति, यथैवाख्यातं कथितं यथाख्यातम्, तच्च तच्चारित्रं च। इति गाथार्थः ॥४८॥

किमितिकृत्वा न लभते ? इत्याह—

(पारमा०) क्रोधादयश्चरमाश्चत्वारो भवन्ति 'संज्वलनाः' संज्वलनाभिधानाः। एषामुदये जीवो न लभते यथाख्यातचारित्रम्। इति गाथार्थः ॥४८॥

एतदुदयावधिमाह—

एसिं जाण विवागो, मिच्छाओ जाव बायरो तिण्हं।
लोभस्स जाव सुहुमो, होइ विवागो न परओ उ ॥४९॥

व्याख्या–'एतेषां' उक्तस्वरूपकषायाणां 'येन' कारणेन 'विपाकः' उदयो मिथ्यात्वात्सकाशाद्बादरगुणस्थानकं 'तिण्हं' त्रयाणां जलरेखातिनिशवृक्षलताअवलेखिधनुर्लिखनरूपाणां,

---

[1] भवने जे.

'लोभाय' पुनर्हरिद्रारागतुल्यस्य यावत्सूक्ष्मःसंपरायो लोभो यस्मिन् गुणस्थानके तत्सूक्ष्मसंपरायं तस्मिन्, 'भवति' जायते 'विपाकः' उदयः, न परस्मिन्नुपशान्तमोहादौ। इति गाथार्थः ॥४९॥

साम्प्रतं नोकषायानाह—

(पारमा०) एषां संज्वलनानां 'त्रयाणां' क्रोधमानमायालक्षणानां विपाको मिथ्यात्वाद्यावद्बादरोऽनिवृत्तिबादर इति जानीहि, न परतः, इत्यत्रापि संबध्यते। 'लोभस्य' चतुर्थसंज्वलनस्य यावत्, 'सूक्ष्मः' सूक्ष्मसंपरायगुणस्थानं तावद्विपाको भवति, न परतः पुनः प्रशान्तमोहादिषु। इति गाथार्थः ॥४९॥

उक्ताः कषायाः। सम्प्रति नोकषायप्रतिपादनायाह—

नव नोकसाय भणिमो, वेया तिन्नेव हासछक्कं च।
इत्थीपुरिसनपुंसग, तेसि सरूवं इमं होइ ॥५०॥

व्याख्या—नव सङ्ख्यया नोकषायाः पूर्वोक्तस्वरूपाः तान्, 'भणिमो' इति प्रतिपादयामः। वेदास्त्रय उक्तलक्षणाः, हास्यषट्कं च। तत्र तावद् वेदाः स्त्रीपुंनपुंसकरूपाः, तेषां च स्वरूपं 'इमं' वक्ष्यमाणलक्षणं 'भवति' विज्ञेयम्। इति गाथार्थः ॥५०॥

'यथोद्देशस्तथा निर्देशः' इति न्यायात् स्त्रीवेदं लक्षणपूर्वकं दृष्टान्तपुरस्सरमाह—

(पारमा०) कषायसहचरिता नोकषायाः, नोशब्दोऽत्र सहचारवाची, कषायसहचरितत्वं च कषायैः सह सर्वदा वर्तमानत्वात्। ते च नव, तान् भणामः, वेदत्रयं हास्यादिषट्कं च। तत्र वेदत्रिकमाह-स्त्रीपुरुषनपुंसकेति स्त्रीवेदः पुरुषवेदो नपुंसकवेदश्च। तेषां स्वरूपमिदं वक्ष्यमाणं भवति। इति गाथार्थः ॥५०॥

तत्र स्त्रीवेदमाह—

पुरिसं पइ अहिलासो, उदएणं होइ जस्स कम्मस्स।
सो फुंफुमदाहसमो, इत्थीवेयस्स उ विवागो ॥५१॥

व्याख्या—'पुरुषं प्रति' पुरुषमङ्गीकृत्य 'अभिलाषः' इच्छाविशेषः, यथाहं पुरुषं सेवया-मीत्येवंरूपः, 'उदयेन' विपाकेन यस्य 'भवति' जायते 'कर्मणः' मोहनीयविशेषस्य, 'सः' अभिलाषः फुम्फुमाया दाहः फुम्फुमादाहः तेन समः-तेन तुल्यः कारीषदाहसदृशः, यथा यथा चाल्यते तथा तथा ज्वलति दहति च। एवमत्रापि यथा यथा संस्पृश्यते पुरुषेण तथा तथाऽस्या अधिकतरोऽभिलाषो जायते। अभुज्यमानायां तु छन्नकारीषदाहतुल्योऽभिलाषो मन्द इत्यर्थः। 'स्त्रीवेदस्य तु' योषिद्वेदस्यैवायं 'विपाकः' अनुभवः। इति गाथार्थः ॥५१॥ पुरुषवेदस्वरूपमाह—

एर्सिं जाण विवागो, मिच्छाओ जाव विरयविरओ उ।
परओ पमत्तमाइसु, नत्थि विवागो चउण्ह पि ॥४७॥

व्याख्या–'एतेषां' प्रागुक्ततृतीयकषायाणां 'येन' कारणेन 'विपाकः' उदयोऽनुभवो मिथ्यात्वात्सकाशाद्यावद् 'विरताविरतस्तु' तुशब्दस्यैवकारार्थत्वाद्विरताविरतगुणस्थानकमेव यावदुदयः । 'परतः' अग्रतः प्रमत्तमादिर्येषां गुणस्थानकानां तानि प्रमत्तादीनि प्रमत्तसंयतगुणस्थानकम् , आदिशब्दादप्रमत्तादिसंयतगुणस्थानकानि गृह्यन्ते, [तेषु] नास्ति 'विपाकः' अनुभवश्चतुर्णामपि यावत्येव गुणस्थानके तेषामुदयस्तावत्येव ते सर्वविरतेर्विबन्धका नोत्तरत्र, भवत्येवात्र सर्वविरतिः, प्राक् पुनः कषायोदयो विबन्धकोऽस्तीत्यनेन कारणेन सर्वविरत्यभावः । इति गाथार्थः ॥४७॥

चरमकषायानाह—

(पारमा०) एषां प्रत्याख्यानरणानां विपाको मिथ्यात्वाद् यावद्विरताविरतस्तावदेवेति जानीहि, परतः प्रमत्तादिषु चतुर्णामपि नास्ति विपाकः । इति गाथार्थः ॥४७॥

चतुर्थकषायानाह—

कोहो माणो माया, लोभो चरिमा उ हुंति संजलणा ।
एयाणुदए जीवो, न लहइ अहखायचारित्तं ॥४८॥

व्याख्या–क्रोधमानमायालोभाः 'चरमास्तु' पुनः पश्चिमाः'भवन्ति' जायन्ते 'संज्वलनाः' प्रागभिहिताः । एतेषां 'उदये' विपाकात्तु [1]भवे 'जीवः'सत्त्वः 'न लभ्यते' न प्राप्नोति, यथैवाख्यातं कथितं यथाख्यातम् , तच्च तच्चारित्रं च । इति गाथार्थः ॥४८॥

किमिनिकृत्वा न लभते ? इत्याह—

(पारमा०) क्रोधादयश्चरमाश्चत्वारो भवन्ति 'संज्वलनाः' संज्वलनाभिधानाः । एषामुदये जीवो न लभते यथाख्यातचारित्रम् । इति गाथार्थः ॥४८॥

एतदुदयावधिमाह—

एसिं जाण विवागो, मिच्छाओ जाव बायरो तिण्हं ।
लोभस्स जाव सुहुमो, होइ विवागो न परओ उ ॥४९॥

व्याख्या–'एतेषां' उक्तस्वरूपकषायाणां 'येन' कारणेन 'विपाकः' उदयो मिथ्यात्वात्सकाशाद्यावद्बादरगुणस्थानकं 'तिण्हं' त्रयाणां जलरेखातिनिशवृक्षलताअवलेहिघनुलिखनरूपाणां,

[1] भवने जे.

र्याप्तनाम किम् ? यस्योदये स्वपर्याप्तिभिरपरिपूर्णो भवति, न्यून एव कालं करोति, तदपर्याप्तनाम च ज्ञातव्यमत्रबोद्धव्यम् २६ । इति गाथार्थः ॥७३॥ एकं एकं प्रति प्रत्येकं, यस्योदये प्रत्येकजीवो भवति पृथग्जीवो भवति तत्प्रत्येकनाम, यथा वृक्षादीनां पत्रपुष्पादि २७ । साधारणं तुल्यं नाम साधारणनाम, [1]यद्वाशावनेकजीवानामेकं शरीरं यथाऽऽलक्षादेः शरीरम् २८ । स्थिरमचलं, स्थिरं च तन्नाम च स्थिरनाम, यस्योदये जीवानां दन्तादयोऽवयवाः स्थिरा भवन्ति तत्स्थिरनाम २९ । न स्थिरमस्थिरं, यदुदये जीवस्यास्थिरा ग्रीवादयो भवन्ति तदस्थिरनाम ३० । शुभं प्रशस्तं तल्लक्षणं नाम शुभनाम, यदुदये जीवस्य शुभाः शिरःप्रभृतयोऽवयवास्तच्छुभनाम ३१ । अशुभमप्रशस्तं, तदुदये जीवस्य पादादयोऽशुभावयवा भवन्तीति कृत्वाऽशुभनामोच्यते, **'ज्ञातव्य'** [2]मिदं बोद्धव्यमिति ३२ सुभगमिति सुभगस्य भावः सौभाग्यं, [3]यस्योदये सौभाग्ययुक्तो भवति सर्वजनमनोनयनानन्दकारी जीवस्तत्सौभाग्यनाम ३३ । **'दुभगमिति'** दुर्भगस्य भावो दौर्भाग्यं, यस्योदये जीवो दौर्भाग्ययुक्तो भवति सर्वजनमनोनयनोद्वेगकारी तद्दुर्भगनाम ३४ । [4]**'सूसरं'** इति शोभनः स्वरो यस्य तत्सुस्वरनाम, यदुदयाज्जीवस्य मधुरो गम्भीरः श्रव्यो ध्वनिर्भवति ३५ । **'दूसरं'** इति दुष्टः स्वरो ध्वनिर्य[5]स्मात्तद्दुःस्वरनाम, यदुदयाज्जीवः काकस्वरः श्रुत्यसुखदो भवति तच्च ज्ञातव्यम् ३६ । इति गाथार्थः ॥७४॥ आदेयनाम किम् ? यदुदयाज्जीवः सर्वस्यादेयो भवति ग्राह्यवाक्यो भवति तदादेयनाम ३७ । न आदेयमनादेयं, यदुदयाज्जीवोऽनादेयो भवति अग्राह्यवाक्यो भवति, सर्वोऽप्यवज्ञां विधत्ते तदनादेयनाम ३८ । यशश्च कीर्त्तिश्च यशःकीर्त्ती, तल्लक्षणं नाम यशःकीर्त्तिनाम, यशसा उपलक्षिता वा कीर्त्तिर्यशःकीर्त्तिः । **'दानपुण्यफला कीर्त्तिः,'** **'पराक्रमकृतं यशः'** इतिवचनात्, यदुदयाद्यशःकीर्त्तिर्भवति जीवस्य तद्यशःकीर्त्तिनाम ३९ । अयशःप्रधाना कीर्त्तिः, यदुदयाज्जीवस्य लोका अवर्णवादादीन् गृह्णन्ति तदयशःकीर्त्तिनाम ४० । **'निम्माणं'** इति निर्माणनाम, यदुदयाज्जीवः स्वाङ्गावयवानां नियमनं विधत्ते नासिकादयो नासिकादिस्थान एव, नान्यत्र, इत्येवंभूतव्यवस्थानिबन्धनं नाम तन्निर्माणनाम सूत्रधारसदृशम् ४१ । तीर्थकरणशीलं तीर्थकरं यदुदये सुरासुरनरेन्द्रनिवहैः पूज्यः सर्वविद्भवति, तीर्थं च भावरूपं यदुदयात्प्रवर्तयति जीवस्तत्तीर्थकरनाम ४२ । एते प्रथमा द्विचत्वारिंशतो **'भेदाः'** विशेषाः, **'भेदानामपि'** विशेषाणामपि **'भवन्ति'** जायन्ते **'इमे'** वक्ष्यमाणलक्षणा भेदाः इति गाथार्थः ॥७५॥

उक्ता द्विचत्वारिंशद्, इदानीं सप्तषष्टिमाह—

(पारमा०) प्रथमा द्विचत्वारिंशदियं भवतीति गम्यते । गति १ जाति २ शरीर ३ अङ्गोपाङ्गानि ४ च । बन्धन ५ सङ्घातन ६ संहनन ७ संस्थाननाम ८ चेति । नामशब्दस्य गत्या-

---

१ यदा व्याप्तौ जे० । २ "भवबोद्धव्य० जे० । ३ यदुदयात् सौ० जे० । ४ सूसरमिति शो० जे० । ५ येस्य तद्० जे० ।

दिभिः प्रत्येकं योगः ॥७१॥ तथा वर्ण ९ गन्ध १० रस ११ स्पर्शनाम १२, इत्यत्रापि वर्णादिभिर्योज्यम् । अगुरुलघुकं च बोद्धव्यम् १३ । उपघात १४ पराघात १५ आनुपूर्वी १६ उच्छ्वासनाम १७ च, इत्यगुरुलघ्वादिभिर्योज्यं आतपादिभिश्च ॥७२॥ आतप १८ उद्योत १९ विहायोगतयः २० त्रसं २१ स्थावरा २२ऽभिधानं च । त्रसं च स्थावरं च त्रसस्थावरम्, इत्यादौ द्वन्द्वनिर्देशः । त्रसस्थावरादीनां यशःकीर्त्त्ययशःकीर्त्तिपर्यन्तानां सेतरत्वं ज्ञापयति । ततश्चैते त्रसादयः सेतरत्वात्त्रसादिविंशतिरिति संज्ञां लभन्ते । इति तयोरभिधानं नाम त्रसनाम स्थावरनाम च । बादर २३ सूक्ष्म २४ पर्याप्ता २५ऽपर्याप्त २६ च ज्ञातव्यम् ॥७३॥ **'पत्तेयं साहरणत्ति'** प्रत्येकं २७ साधारणं २८ । **'थिरमथिरत्ति'** स्थिरा २९ऽस्थिरं ३० शुभा ३१ऽशुभं च ज्ञातव्यम् । सुभग ३३ दुर्भगनाम ३४ इति पूर्ववद्बादरादिभिर्योज्यम् । **'सूसर तह दूसरंति'** तथा सुस्वरं ३५ दुःस्वरं ३६ चैव ॥७४॥ **'आइज्जमणाइज्जंति'** आदेया ३७ ऽनादेयं ३८ **"जसकित्तीनाममजसकीत्तो यत्ति"** यशःकीर्त्तिनामा ३९ऽयशःकीर्त्तिनाम ४० चेति सुस्वरादिभिर्निर्माणादिभिर्योज्यम् । अनुस्वारलोपागमव्यत्ययादिकं प्राकृतत्वादवसेयम् । निर्माणं ४१ तीर्थकरम् ४२ । इति द्विचत्वारिंशद्भेदाः । उत्तरभेदप्रस्तावनामाह—भेदानामपि द्विचत्वारिंशद्रूपाणां भवन्तीमे भेदाः सप्तषष्टित्रिनवतिन्युत्तरशतलक्षणा इति गाथापञ्चकार्थः ॥७५॥

तत्र सप्तषष्टिमाह—

गइ होइ [1]चउब्भेया, जाईवि य पंचहा मुणेयव्वा ।
पंच य हुंति सरीरा, अंगोवंगाइं [2]तिन्नेव ॥७६॥

(पू०) व्याख्या—गतिः **'भवति'** जायते **'चतुर्भेदा'** चतुष्प्रकारा नारक १ तिर्यङ् २ नरा ३ऽमर ४ लक्षणा । जातिरपि च पञ्चधा **'मन्तव्या'** ज्ञातव्या एकेन्द्रिय १ द्वि २ त्रि ३ चतु ४ ष्पञ्चेन्द्रिय ५ रूपा । न केवलमेकविधा जातिः पञ्चविधाऽपि इत्यपिशब्दार्थः । **'चः'** पूर्वया गत्या सह समुच्चयार्थः । पञ्च च भवन्ति शरीराणि औदारिक १ वैक्रिया २ऽऽहारक ३ तैजस ४ कार्मण ५ लक्षणानि **'भवन्ति'** जायन्ते । अङ्गोपाङ्गानि त्रीण्येव भवन्ति औदारिक १ वैक्रिया २ऽऽहारका ३ऽङ्गोपाङ्गरूपाणि, तैजसकार्मणयोरङ्गोपाङ्गाभावादित्यवधारणम् । इति गाथार्थः ॥७६॥

उक्ता गतिजातिशरीराङ्गोपाङ्ग[3]विभागाः, साम्प्रतं संहननादिभेदानाह—

(पारमा०) गतिर्भवति चतुर्भेदा ४ नरकगत्यादिभेदात् । जातिरपि च पञ्चधा ९ एकेन्द्रियजात्यादिभेदाज् ज्ञातव्या । पञ्च च भवन्ति शरीराणि १४ औदारिकादिभेदात् । अङ्गोपाङ्गानि त्रीण्येव १७, न तु पञ्चाप्याद्यशरीरत्रय एव तद्भावात् ॥७६॥

---

१ "चउपयाग" इत्यपि पाठः २ "तिण्णेव" इत्यपि पाठ । ३ ०भेदाः साम्प्रतं संघयणादिभे० जे० ।

छस्संघयणा जाणसु, संठाणावि य [1]हवंति छच्चेव ।
वण्णाईण चउक्कं, अगुरुलहुवघायपरघायं ॥७७॥

(पू०) व्याख्या–षट् [2]संहननानि 'जानीहि' विद्धि वज्रर्षभनाराच १ ऋषभनाराच २ नाराचा ३ऽर्द्धनाराच ४ कीलिका ५ छेवट्ठ (सेवार्त्त) ६ रूपाणि । संस्थानान्यपि च तथैव षड्वेव यथा [3]संहननानि,–समचतुरस्र १ न्यग्रोधमण्ड[4]ल२ सादि ३ वामन ४ कुब्ज ५ हुण्ड ६ रूपाणि । वर्ण आदिर्येषां ते वर्णादयः तेषां, चतुष्कं वर्ण १ गन्ध २ रस ३ स्पर्श ४ लक्षणम् । [5]अगुरु च लघु च अगुरुलघुनाम भवति ज्ञातव्यम् । उपघातश्च पराघातश्चोपघातपराघातं भवति ज्ञातव्यम् । इति गाथार्थः ॥७७॥ उक्ताः संहननादयः आनुपूर्व्यादीनाह—

(पारमा०) षट् संहननानि २३ वज्रर्षभनाराचादीनि जानीहि । संस्थानान्यपि च २९ समचतुरस्रादीनि भवन्ति षड्वेव 'वर्णादीनां' वर्णगन्धरसस्पर्शानां चतुष्कं ३३, अवान्तरभेदाविवक्षणात् । अगुरुलघु ३४ उपघातं ३५ परघातम् ३६ ॥७७॥

अणुपुव्वी चउभेया, ऊसासं आयवं च उज्जोयं ।
सुहअसुहविहायगई, तसाइवीसं च निम्माणं ॥७८॥

(पू०) व्याख्या–'अणुपुव्वीति' आनुपूर्वी 'चतुर्भेदा' चतुष्प्रकारा नरकानुपूर्वी १ तिर्यगानुपूर्वी २ मनुष्यानुपूर्वी ३ देवानुपूर्वी ४ लक्षणा 'उच्छ्वासं' उच्छ्वासनाम, 'आतपं च' आतपनाम, 'उद्द्योतं' उद्द्योतनाम, शुभाशुभविहायोगती, शुभा=प्रशस्ता, अशुभा=अप्रशस्ता । त्रसनाम [6]आदौ येषां तत्त्रसादिविंशतिः, निर्माणमिति । आनुपूर्वीत्याकारो ह्रस्वः सूत्रे गाथाभङ्गभयात् प्राकृतत्वाच्च । इति गाथार्थः ॥७८॥

उक्ता आनुपूर्व्यादयः, तीर्थकरयुक्तां सप्तषष्टियोजनामाह—

(पारमा०) आनुपूर्वी ४० चतुर्भेदा, नरकानुपूर्व्यादिभेदात् । उच्छ्वासं ४१ आतपं ४२ उद्द्योतं ४३ शुभाशुभविहायोगतिः ४५ त्रसादिर्विंशतिश्च प्राङ् निरूपिता ६५ निर्माणम् ६६॥७८॥

[7]तित्थयरेण य सहिया, सत्तट्ठी एव हुंति पयडीओ ।
सम्मामीसेहि विणा, तेवन्ना सेसकम्माणं ॥७९॥

(पू०) व्याख्या–तीर्थकरणशीलं तीर्थकरं, तल्लक्षणं नाम तीर्थकरनाम, तेन सहिता सप्तभिरधिका षष्टिः सप्तषष्टिः ६७ । एवमुक्तनीत्या, एवेति लुप्तानुस्वारं पदं प्राकृतत्वात् ।

---

१ व्याख्याकारेण तु "तहेव" इति पाठानुसारेण व्याख्या कृता ॥ २-३ संघयनानि जे० । ४ ल शक्ति या ०। ५ अगुरुनाम भवति ज्ञा० (?) जे० । ६ आदौ यस्य तत् त्रसादिविंशतितमं निर्मा० जे० । ७ "...ण सहिया" इत्यपि पाठः ।

दिभिः प्रत्येकं योगः ॥७१॥ तथा वर्ण ९ गन्ध १० रस ११ स्पर्शनाम १२, इत्यत्रापि वर्णादिभिर्योज्यम् । अगुरुलघुकं च बोद्धव्यम् १३ । उपघात १४ पराघात १५ आनुपूर्वी १६ उच्छ्वासनाम १७ च, इत्यगुरुलघ्वादिभिर्योज्यं आतपादिभिश्च ॥७२॥ आतप १८ उद्योत १९ विहायोगतयः २० त्रसं २१ स्थावरा २२ऽभिधानं च । त्रसं च स्थावरं च त्रसस्थावरम्, इत्यादौ द्वन्द्वनिर्देशः । त्रसस्थावरादीनां यशःकीर्त्त्ययशःकीर्त्तिपर्यन्तानां सेतरत्वं ज्ञापयति । ततश्चैते त्रसादयः सेतरत्वात्त्रसादिविंशतिरिति संज्ञां लभन्ते । इति तयोरभिधानं नाम त्रसनाम स्थावरनाम च । बादर २३ सूक्ष्म २४ पर्याप्ता २५ऽपर्याप्तं २६ च ज्ञातव्यम् ॥७३॥ **'पत्तेयं साहरणत्ति'** प्रत्येकं २७ साधारणं २८ । **'थिरमथिरत्ति'** स्थिरा २९ऽस्थिरं ३० शुभा ३१ऽशुभं च ज्ञातव्यम् । सुभग ३३ दुर्भगनाम ३४ इति पूर्ववद्बादरादिभिर्योज्यम् । **'सूसर तह दूसरंति'** तथा सुस्वरं ३५ दुःस्वरं ३६ चैव ॥७४॥ **'आइज्जमणाइज्जंति'** आदेया ३७ ऽनादेयं ३८ **"जसकित्तीनाममजसकीत्तो यत्ति"** यशःकीर्त्तिनामा ३९ऽयशःकीर्त्तिनाम ४० चेति सुस्वरादिभिर्निर्माणादिभिर्योज्यम् । अनुस्वारलोपागमव्यत्ययादिकं प्राकृतत्वादवसेयम् । निर्माणं ४१ तीर्थकरम् ४२ । इति द्विचत्वारिंशद्भेदाः । उत्तरभेदप्रस्तावनामाह—भेदानामपि द्विचत्वारिंशद्रूपाणां भवन्तीमे भेदाः सप्तषष्टित्रिनवतित्र्युत्तरशतलक्षणा इति गाथापञ्चकार्थः ॥७५॥

तत्र सप्तषष्टिमाह—

गइ होइ [1]चउब्भेया, जाईवि य पंचहा मुणेयव्वा ।
पंच य हुंति सरीरा, अंगोवंगाइं [2]तिन्नेव ॥७६॥

(पू०) व्याख्या—गतिः **'भवति'** जायते **'चतुर्भेदा'** चतुष्प्रकारा नारक १ तिर्यङ् २ नरा ३ऽमर ४ लक्षणा । जातिरपि च पञ्चधा **'मन्तव्या'** ज्ञातव्या एकेन्द्रिय १ द्वि २ त्रि ३ चतु ४ प्पञ्चेन्द्रिय ५ रूपा । न केवलमेकविधा जातिः पञ्चविधाऽपि इत्यपिशब्दार्थः । **'च:'** पूर्वया गत्या सह समुच्चयार्थः । पञ्च च भवन्ति शरीराणि औदारिक १ वैक्रिया २ऽऽहारक ३ तैजस ४ कार्मण ५ लक्षणानि **'भवन्ति'** जायन्ते । अङ्गोपाङ्गानि त्रीण्येव भवन्ति औदारिक १ वैक्रिया २ऽऽहारका ३ऽङ्गोपाङ्गरूपाणि, तैजसकार्मणयोरङ्गोपाङ्गाभावादित्यवधारणम् । इति गाथार्थः ॥७६॥

उक्ता गतिजातिशरीराङ्गोपाङ्ग[3]विभागाः, साम्प्रतं संहननादिभेदानाह—

(पारमा०) गतिर्भवति चतुर्भेदा ४ नरकगत्यादिभेदात् । जातिरपि च पञ्चधा ९ एकेन्द्रियजात्यादिभेदाज् ज्ञातव्या । पञ्च च भवन्ति शरीराणि १४ औदारिकादिभेदात् । अङ्गोपाङ्गानि त्रीण्येव १७, न तु पञ्चाप्याद्यशरीरत्रय एव तद्भावात् ॥७६॥

---

१ "चउपयाग" इत्यपि पाठः २ "तिण्णेव" इत्यपि पाठ । ३ ०भेदाः साम्प्रतं । [illegible]मे० जे०

छस्संघयणा जाणसु, संठाणावि य [1]हवंति छच्चेव ।
वण्णाईण चउक्कं, अगुरुलहुवघायपरघायं ॥७७॥

(पू०) व्याख्या—षट् [2]संहननानि 'जानीहि' विद्धि वज्रर्षभनाराच १ ऋषभनाराच २ नाराचा ३ऽर्द्धनाराच ४ कीलिका ५ छेवट्ठ (सेवार्त्त) ६ रूपाणि । संस्थानान्यपि च तथैव षडेव यथा [3]संहननानि,—समचतुरस्र १ न्यग्रोधमण्ड[4]ल२ सादि ३ वामन ४ कुब्ज ५ हुण्ड ६ रूपाणि । वर्ण आदिर्येषां ते वर्णादयः तेषां, चतुष्कं वर्ण १ गन्ध २ रस ३ स्पर्श ४ लक्षणम् । [5]अगुरु च लघु च अगुरुलघुनाम भवति ज्ञातव्यम् । उपघातश्च पराघातश्चोपघातपराघातं भवति ज्ञातव्यम् । इति गाथार्थः ॥७७॥ उक्ताः संहननादयः आनुपूर्व्यादीनाह—

(पारमा०) षट् संहननानि २३ वज्रर्षभनाराचादीनि जानीहि । संस्थानान्यपि च २९ समचतुरस्रादीनि भवन्ति षडेव 'वर्णादीनां' वर्णगन्धरसस्पर्शानां चतुष्कं ३३, अवान्तरभेदाविवक्षणात् । अगुरुलघु ३४ उपघातं ३५ परघातम् ३६ ॥७७॥

अणुपुव्वी चउभेया, ऊसासं आयवं च उज्जोयं ।
सुहअसुहविहायगई, तसाइवीसं च निम्माणं ॥७८॥

(पू०) व्याख्या—'अणुपुव्वीति' आनुपूर्वी 'चतुर्भेदा' चतुष्प्रकारा नरकानुपूर्वी १ तिर्यगानुपूर्वी २ मनुष्यानुपूर्वी ३ देवानुपूर्वी ४ लक्षणा 'उच्छ्वासं' उच्छ्वासनाम, 'आतपं च' आतपनाम, 'उद्द्योतं' उद्द्योतनाम, शुभाशुभविहायोगती, शुभा=प्रशस्ता, अशुभा=अप्रशस्ता । त्रसनाम [6]आदौ येषां तत्त्रसादिर्विंशतिः, निर्माणमिति । आनुपूर्वीत्याकारो ह्रस्वः सूत्रे गाथाभङ्गभयात् प्राकृतत्वाच्च । इति गाथार्थः ॥७८॥

उक्ता आनुपूर्व्यादयः, तीर्थकरयुक्तां सप्तषष्टियोजनामाह—

(पारमा०) आनुपूर्वी ४० चतुर्भेदा, नरकानुपूर्व्यादिभेदात् । उच्छ्वासं ४१ आतपं ४२ उद्द्योतं ४३ शुभाशुभविहायोगतिः ४५ त्रसादिर्विंशतिश्च प्राक् निरूपिता ६५ निर्माणम् ६६॥७८॥

[7]तित्थयरेण य सहिया, सत्तट्ठी एव हुंति पयडीओ ।
सम्मामीसेहि विणा, तेवन्ना सेसकम्माणं ॥७९॥

(पू०) व्याख्या—तीर्थकरणशीलं तीर्थकरं, तल्लक्षणं नाम तीर्थकरनाम, तेन सहिता सप्तभिरधिका षष्टिः सप्तषष्टिः ६७ । एवमुक्तनीत्या, एवेति लुप्तानुस्वारं पदं प्राकृतत्वात् ।

---

[1] व्याख्याकारेण तु "तहेव" इति पाठानुसारेण व्याख्या कृता॥ २-३ संघयनानि जे०। ४ ल शक्ति वा (?) जे०। ५ अगुरुनाम भवति ज्ञा० (?) जे०। ६ आदौ यस्य तत् त्रसादिविंशतितमं निर्मा० जे०। ७ तित्थयरेणं सहिया" इत्यपि पाठः।

दिभिः प्रत्येकं योगः ॥७१॥ तथा वर्ण ९ गन्ध १० रस ११ स्पर्शनाम १२, इत्यत्रापि वर्णादिभिर्योज्यम् । अगुरुलघुकं च बोद्धव्यम् १३ । उपघात १४ पराघात १५ आनुपूर्वी १६ उच्छ्वासनाम १७ च, इत्यगुरुलघ्वादिभिर्योज्यं. आतपादिभिश्च ॥७२॥ आतप १८ उद्योत १९ विहायोगतयः २० त्रसं २१ स्थावरा २२ऽभिधानं च । त्रसं च स्थावरं च त्रसस्थावरम् , इत्यादौ द्वन्द्वनिर्देशः । त्रसस्थावरादीनां यशःकीर्त्ययशःकीर्त्तिपर्यन्तानां सेतरत्वं ज्ञापयति । ततश्चैते त्रसादयः सेतरत्वात्त्रसादिविंशतिरिति संज्ञां लभन्ते । इति तयोरभिधानं नाम त्रसनाम स्थावरनाम च । बादर २३ सूक्ष्म २४ पर्याप्ता २५ऽपर्याप्तं २६ च ज्ञातव्यम् ॥७३॥ **'पत्तेयं साहरणत्ति'** प्रत्येकं २७ साधारणं २८। **'थिरमथिरत्ति'** स्थिरा २९ऽस्थिरं ३० शुभा ३१ऽशुभं च ज्ञातव्यम् । सुभग ३३ दुर्भगनाम ३४ इति पूर्ववद्बादरादिभिर्योज्यम् । **'सूसर तह दूसरंति'** तथा सुस्वरं ३५ दुःस्वरं ३६ चैव ॥७४॥ **'आइज्जमणाइज्जंति'** आदेया ३७ ऽनादेयं ३८ **"जसकित्तीनाममजसकीत्ती यत्ति"** यशःकीर्त्तिनामा ३९ऽयशःकीर्त्तिनाम ४० चेति सुस्वरादिभिर्निर्माणादिभिर्योज्यम् । अनुस्वारलोपागमव्यत्ययादिकं प्राकृतत्वादवसेयम् । निर्माणं ४१ तीर्थंकरम् ४२ । इति द्विचत्वारिंशद्भेदाः । उत्तरभेदप्रस्तावनामाह—भेदानामपि द्विचत्वारिंशद्रूपाणां भवन्तीमे भेदाः सप्तषष्टित्रिनवतित्र्युत्तरशतलक्षणा इति गाथापञ्चकार्थः ॥७५॥

तत्र सप्तषष्टिमाह—

**गइ होइ [1]चउभेया, जाईवि य पंचहा मुणेयव्वा ।**
**पंच य हुंति सरीरा, अंगोवंगाइं [2]तिन्नेव ॥७६॥**

(पू०) व्याख्या—गतिः **'भवत्ति'** जायते **'चतुर्भेदा'** चतुष्प्रकारा नारक १ तिर्यङ् २ नरा ३ऽमर ४ लक्षणा । जातिरपि च पञ्चधा **'मन्तव्या'** ज्ञातव्या एकेन्द्रिय १ द्वि २ त्रि ३ चतु ४ प्पञ्चेन्द्रिय ५ रूपा । न केवलमेकविधा जातिः पञ्चविधाऽपि इत्यपिशब्दार्थः । **'चः'** पूर्वया गत्या सह समुच्चयार्थः । पञ्च च भवन्ति शरीराणि औदारिक १ वैक्रिया २ऽऽहारक ३ तैजस ४ कार्मण ५ लक्षणानि **'भवन्ति'** जायन्ते । अङ्गोपाङ्गानि त्रीण्येव भवन्ति औदारिक १ वैक्रिया २ऽऽहारका ३ऽङ्गोपाङ्गरूपाणि, तैजसकार्मणयोरङ्गोपाङ्गाभावादित्यवधारणम् । इति गाथार्थः ॥७६॥

उक्ता गतिजातिशरीराङ्गोपाङ्ग[3]विभागाः, साम्प्रतं संहननादिभेदानाह—

(पारमा०) गतिर्भवति चतुर्भेदा ४ नरकगत्यादिभेदात् । जातिरपि च पञ्चधा ९ एकेन्द्रियजात्यादिभेदाज् ज्ञातव्या । पञ्च च भवन्ति शरीराणि १४ औदारिकादिभेदात् । अङ्गोपाङ्गानि त्रीण्येव १७, न तु पञ्चाप्याद्यशरीरत्रय एव तद्भावात् ॥७६॥

---

१ "चउपयार" इत्यपि पाठः २ "तिण्णेव" इत्यपि पाठ । ३ ०भेदाः साम्प्रतं संघयणादिभे० जे० ।

छस्संघयणा जाणसु, संठाणावि य [1]हवंति छच्चेव ।
वण्णाईण चउक्कं, अगुरुलहुवघायपरघायं ॥७७॥

(पू०) व्याख्या—षट् [2]संहननानि 'जानीहि' विद्धि वज्रर्षभनाराच १ ऋषभनाराच २ नाराचा ३ऽर्द्धनाराच ४ कीलिका ५ छेवट्ठ (सेवार्त्त) ६ रूपाणि । संस्थानान्यपि च तथैव षडेव यथा [3]संहननानि,—समचतुरस्र १ न्यग्रोधमण्ड[4]ल२ सादि ३ वामन ४ कुब्ज ५ हुण्ड ६ रूपाणि । वर्ण आदिर्येषां ते वर्णादयः तेषां, चतुष्कं वर्ण १ गन्ध २ रस ३ स्पर्श ४ लक्षणम् । [5]अगुरु च लघु च अगुरुलघुनाम भवति ज्ञातव्यम् । उपघातश्च पराघातश्चोपघातपराघातं भवति ज्ञातव्यम् । इति गाथार्थः ॥७७॥ उक्ताः संहननादयः आनुपूर्व्यादीनाह—

(पारमा०) षट् संहननानि २३ वज्रर्षभनाराचादीनि जानीहि । संस्थानान्यपि च २९ समचतुरस्रादीनि भवन्ति षडेव 'वर्णादीनां' वर्णगन्धरसस्पर्शानां चतुष्कं ३३, अवान्तरभेदाविवक्षणात् । अगुरुलघु ३४ उपघातं ३५ परघातम् ३६ ॥७७॥

अणुपुव्वी चउभेया, ऊसासं आयवं च उज्जोयं ।
सुहअसुहविहायगई, तसाइवीसं च निम्माणं ॥७८॥

(पू०) व्याख्या—'अणुपुव्वीति' आनुपूर्वी 'चतुर्भेदा' चतुष्प्रकारा नरकानुपूर्वी १ तिर्यगानुपूर्वी २ मनुष्यानुपूर्वी ३ देवानुपूर्वी ४ लक्षणा 'उच्छ्वासं' उच्छ्वासनाम, 'आतपं च' आतपनाम, 'उद्द्योतं' उद्द्योतनाम, शुभाशुभविहायोगती, शुभा=प्रशस्ता, अशुभा=अप्रशस्ता । त्रसनाम [6]आदौ येषां तत्त्रसादिविंशतिः, निर्माणमिति । आनुपूर्वीत्याकारो ह्रस्वः सूत्रे गाथाभङ्गभयात् प्राकृतत्वाच्च । इति गाथार्थः ॥७८॥

उक्ता आनुपूर्व्यादयः, तीर्थकरयुक्तां सप्तषष्टियोजनामाह—

(पारमा०) आनुपूर्वी ४० चतुर्भेदा, नरकानुपूर्व्यादिभेदात् । उच्छ्वासं ४१ आतपं ४२ उद्द्योतं ४३ शुभाशुभविहायोगतिः ४५ त्रसादिविंशतिश्च प्राङ् निरूपिता ६५ निर्माणम् ६६॥७८॥

[7]तित्थयरेण य सहिया, सत्तट्ठी एव हुंति पयडीओ ।
सम्मामीसेहि विणा, तेवन्ना सेसकम्माणं ॥७९॥

(पू०) व्याख्या—तीर्थकरणशीलं तीर्थकरं, तल्लक्षणं नाम तीर्थकरनाम, तेन सहिता सप्तभिरधिका षष्टिः सप्तषष्टिः ६७ । एवमुक्तनीत्या, एवेति लुप्तानुस्वारं पदं प्राकृतत्वात् ।

---

१ व्याख्याकारेण तु "तहेव" इति पाठानुसारेण व्याख्या कृता॥ २-३ संघयनानि जे०। ४ ल शब्दिव षा (?) जे०। ५ अगुरुनाम भवति ज्ञा० (?) जे०। ६ आदौ यस्य तत् त्रसादिविंशतितमं निर्मा० जे०। ७ तित्थयरेणं सहिया" इत्यपि पाठः।

'भवन्ति' जायन्ते 'प्रकृतयः' उत्तरविशेषाः 'सम्यग्मिश्राभ्यां विना' सम्यक्त्वसम्यग्मिथ्यात्वाभ्यां विना त्रिभिरधिका पञ्चाशत्त्रिपञ्चाशत् 'शेषकर्मणां' ज्ञानावरणाद्यन्तरायपर्यन्तानाम् । इति गाथार्थः ॥७९॥

उक्ताः सप्तषष्टिभेदाः, इदानीमेककालं जीवस्य प्रकृतिबन्धसंख्यामाह—

(पारमा०) तीर्थकरेण च सहिता ६७ सप्तषष्टिः, एवं भवन्ति प्रकृतयः । सम्प्रति सप्तषष्टेर्बन्धोपयोगित्वं प्रतिपिपादयिषुर्बन्धप्रायोग्याः शेषकर्मप्रकृतीरपि प्रसङ्गत आह—सम्यग्मिश्राभ्यां विना त्रिपञ्चाशच्छेषकर्मणाम् । तथाहि—ज्ञानावरणपञ्चकदर्शनावरणनवकसंहतौ चतुर्दश वेदनीयद्विकसंकलने षोडश । सम्यक्त्वमिश्रे बन्धे नायात इति तद्वर्जितमोहनीयषड्विंशतिक्षेपे द्विचत्वारिंशत् । आयुष्कचतुष्टयमीलने षट्चत्वारिंशत् । गोत्रद्वयसंहतावष्टचत्वारिंशत् । अन्तरायपञ्चकयुक्तौ यथोक्ता त्रिपञ्चाशत् । इति सप्तषष्टिप्रतिपादकगाथाचतुष्टयस्यार्थः ॥७९॥

एतन्मीलने यद्भवति तदाह—

एवं विसुत्तरसयं, [1]बंधे पयडीण होइ नायव्वं ।
बंधणसंघाया वि य, सरीरगहणेण इह गहिया ॥८०॥

(पू०) व्याख्या 'एवं' उक्तनीत्या 'विंशत्युत्तरं शतं' विंशतिरुत्तरा यस्मिन् तद्विंशत्युत्तरं तच्च तत् शतं च विंशत्युत्तरशतं बन्धनरूपाः प्रकृतयो बन्धनप्रकृतयः तासां भवति ज्ञातव्यम् एकस्य जीवस्य सामान्ये नैकदा यद्युत्कृष्टो बन्धो भवति तदा विंशत्युत्तरशतिको भवति नाधिको बन्धः । ननु सप्तषष्टिभेदमध्ये बन्धनसंघातभेदौ नोक्तौ तयोर्ग्रहणम् ?, इत्याह-बन्धनसंघातावपि च शरीरग्रहणेन 'इह' पक्षान्तरगृहीतौ तदन्तर्गतत्वात्तयोः । इति गाथार्थः ॥८०॥ उक्ता सप्तषष्टिः, इदानीं त्रिनवतिमाह—

(पारमा०) एवं सप्तषष्टेस्त्रिपञ्चाशतश्च मीलने विंशत्युत्तरं शतं प्रकृतीनां बन्धे ज्ञातव्यं भवति । ननु सप्तषष्टिभेदमध्ये बन्धनसंघातौ नोक्तौ तत्कथं तयोर्ग्रहणम् ?, इत्याह—बन्धनसंघातावपि शरीरग्रहणेनेह सप्तषष्टिपक्षे गृहीतौ । औदारिकशरीरनामग्रहणेन औदारिकबन्धनसंघातनाम्नी, वैक्रियशरीरनामग्रहणेन वैक्रियबन्धनसंघातनाम्नी, इत्यादि । इति गाथार्थः ॥८०॥

उक्तं प्रसङ्गागतं बन्धोपयोगि विंशत्युत्तरं प्रकृतिशतं, सम्प्रति त्रिनवतिमाह—

बंधणभेया पंच उ, संघाया वि य हवंति पंचेव ।
पण वण्णा दो गंधा, पंच रसा अट्ठ फासा य ॥८१॥

---

१ व्याख्याकारेण तु "बन्धणपयडीण" इति पाठानुसारेण व्याख्यातम् ।

(पू०) व्याख्या—बन्धनं पूर्वोक्तं तस्य भेदा विशेषाः पञ्च, 'तु:' पुनः, संघाता अपि च 'भवन्ति' जायन्ते पञ्चैवोक्तलक्षणाः । पञ्च वर्णाः प्रतीताः । द्वौ गन्धौ सुगन्धदुर्गन्धौ । पञ्च रसा व्याख्यातार्थाः । अष्टौ स्पर्शा वक्ष्यमाणाः । इति गाथार्थः ॥८१॥

सर्वसंख्याप्रक्षेपार्थमाह—

(पारमा०) औदारिकादिभेदाद्बन्धनभेदाः पञ्च । संघाता अपि पञ्चैव भवन्ति, औदारिकादिभेदादेवेत्येताभ्यां दश । पञ्च वर्णाः, कृष्णादिभेदात् । द्वौ गन्धौ सुरभिदुरभिश्च । पञ्च रसास्तिक्ताद्याः । अष्ट स्पर्शा गुर्वाद्याः । एवमेता विंशतिः प्रकृतयः । एतासां च मध्याच्चतुष्कं वर्णगन्धरसस्पर्शानां चतुर्णां सप्तषष्टिपक्षे सामान्यतो गृहीतानामत्र विशेषोपादानादपगतानां स्थानपूरणे गतमिति शेषाः षोडश ॥८१॥

दस सोलस छव्वीसा, एया मेलेहिं सत्तसट्ठीए ।
तेणउई होइ तओ, बंधणभेया उ पन्नरस ॥८२॥

(पू०) व्याख्या—दश बन्धनसंघातभेदाः, षोडश वर्णगन्धरसस्पर्शाः, सर्वेऽपि मिलिताः षड्विंशतिः' षड्भिरधिका विंशतिः षड्विंशतिः । ननु कथमेते वर्णादयः षोडश भवन्ति गण्यमाना विंशतिः ? इति उच्यते—सप्तषष्टिभेदेषु 'वर्णादीनां चतुष्कं' अनेनावयवेन चत्वारो भेदाः प्रतिपादिताः, तेष्वपनीतेषु वर्णगन्धरसस्पर्शविंशतिभेदानां मध्यात्षोडश एव भवन्ति, अत एतान् 'मीलय' एकीकुरु सप्तषष्ट्यां, त्रिभिरधिका नवतिस्त्रिनवतिः 'भवति' जायते । तत उक्ता त्रिनवतिः, बन्धभेदास्तु पुनः पञ्चदश वक्ष्यमाणलक्षणाः । इति गाथार्थः ॥८२॥ ग्रं० ५३५॥

त्र्युत्तरशतमाह—

(पारमा०) तथा च दश पूर्वार्द्धोक्ताः, एताश्च षोडश, उभयमीलने च षड्विंशतिप्रकृतयः, एता मीलय सप्तषष्टौ, ततस्त्रिनवतिर्भवति । इति पादोनगाथाद्वयार्थः । सम्प्रति त्र्युत्तरशतमाह—बन्धनभेदाः पुनः पञ्चदश परस्परसंयोगाद्भवति ॥८२॥

सव्वेहि वि छूढेहिं, तिगअहिगसयं तु होइ नामस्स ।
एएसिं तु विवागं, वुच्छामि अहाणुपुव्वीए ॥८३॥

(पू०) व्याख्या—सर्वैरपि क्षिप्तैः सप्तषष्टिमध्ये षड्विंशतिभिस्त्रिनवतिमध्ये बन्धनभेदैर्दशभिः प्रवेशितैस्त्रिकेनाधिकं शतं त्रिकाधिकशतं, [1]न न्यूनाधिकमित्यर्थः, नाम्नः कर्मणः । ननु बन्धनभेदाः पञ्चदश, तत्प्रतिक्षेपे त्रिनवतौ कथं त्र्युत्तरशतम् ? इति, उच्यते—बन्धनभेदा दशैव,

१ न न्यूनाधिकं ० जे० ।

पञ्चानां सप्तषष्टिमध्ये प्रक्षेपात् । एतेषां तु पुनः सर्वेषां [1]चतुर्विध्योक्तानां 'विपाकं' अनुभवरूपं '[2]वुच्छामि' वक्ष्यामि, 'यथानुपूर्व्याः' यथापरिपाट्या । इति गाथार्थः ॥८३॥

नारकादिगतिसंख्या [3]यतश्चैवं भवति तदाह—

(पारमा०) सर्वैरपि क्षिप्तैर्बन्धनभेदैरिति. अयं भावः—एषां मध्यादौदारिकादिबन्धनपञ्चकस्य त्रिनवतिपक्षोपात्तस्य शेषैर्दशभिरपि क्षिप्तैस्त्र्युत्तरं शतं भवति नाम्नः प्रकृतीनामिति गम्यम् । विपाकभणनं प्रस्तौति-'एतेषां' द्विचत्वारिंशत्सप्तषष्टित्रिनवतित्र्युत्तरशतानां पुनर्विपाकं वक्ष्ये 'यथानुपूर्व्या' क्रमानतिक्रमेण । इति सपादगाथार्थः ॥८३॥

प्रतिज्ञातमाह—

नारयतिरियनरामर-गइभेया चउविहा गई होइ ।
एसा खलु ओदइए, होइ हु भावे जओ आह ॥८४॥

(पू०) व्याख्या—नारकतिर्यङ्नरामरगतिभेदाद्विशेषाच्चतुर्विधा गतिर्भवति । 'एषा' प्रागुक्ता 'खलु' निश्चयेन, कस्मिन् भावे भवति ?, इति आह-औदायिके भावे भवति, न क्षायिकादौ । हुशब्दस्यैवकारार्थत्वात् । यत आह सूत्रकार एव । इति गाथार्थः ॥८४॥

नरकगतिस्वरूपमाह—

(पारमा०) नारकतिर्यङ्नरामरगतिभेदाच्चतुर्विधा गम्यते=प्राप्यते तथाविधकर्मसचिवैरिति गतिर्भवति । एषा 'खलु' निश्चितमौदयिके भावे भवति । यत आहेतिपदमुदारोक्त्या कर्तृनिर्देशमन्तरेणोपात्तं यत्र कुत्रचिद्विश्रान्त्यभावात्तीर्थकृतमाक्षिपति । इति गाथार्थः ॥८४॥

किमाह ? इति चेदुच्यते—

जीए उदएण जीवो, नेरइओ होइ नरयपुढवीए ।
सा भणिया नरयगई, सेसगईओ वि एमेव ॥८५॥

(पू०) व्याख्या—'यस्याः' नरकगतेः 'उदयेन' प्रादुर्भावेन 'जीवः' प्राणी नारकिको 'भवति' संपद्यते, क्व ? 'नरक[4]पृथ्व्यां' प्रतीतायाम् । सा 'भणिता' प्रतिपादिता नरकगतिः शेषगतयोऽपि' तिर्यङ्नरामरलक्षणा अपि 'एवमेव' उक्तन्यायेन । इति गाथार्थः ॥८५॥ उक्ता गतिः, एकेन्द्रियादिजातिमाह—

(पारमा०) यस्या गतेरुदयेन जीवो नैरयिको भवति नरकपृथिव्यां, सा भणिता नरकगतिः शेषगतयोऽप्येवमेवेति । अयमाशयः—यस्या उदयेन तिर्यङ् भवति सा तिर्यग्गतिः ।

---

१ °यानुपूर्व्योक्तानां वि° जे० २ वोच्छामि जे० । ३ यतश्चेयं म० जे० । ४ °पृथिव्यां° जे० ।

यदुदयान्मनुष्यः सा मनुष्यगतिः । यदुदयाच्च देवः सा देवगतिरिति । ननु भवद्भिरित्युक्तं यदुताह तीर्थकृत्, इदं तु सूत्रकृता स्वयमेवोक्तमिति, नैवम्, तस्यायमाशयः-सर्वोऽपि जिनागमोऽर्थतो जिनप्रणीतः, ततस्तदागमोद्धृतत्वादिदमपि तदुक्तमेवेत्यदोषः । इति गाथार्थः ॥८५॥

जातिनामाह—

इगदुगतिगचउरिंदिय-जाई पंचिंदियाण पंचमिया ।
खयउवसमिए भावे, हुंति हु [1]एया जओ आह ॥८६॥

(पू०) व्याख्या-एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिः । जातिशब्दस्य प्रत्येकं संबन्धः । चतस्रो जातयः । पञ्चेन्द्रियाणां पञ्चमिका जातिरुक्तलक्षणा । पञ्चप्रकाराऽपीयं कस्मिन् भावे भवति?, इत्याह-क्षायोपशमिकभावे । क्षयश्च केषांचित्कर्मणाम्, उपशमश्च कर्मणामेव क्षयोपशमः, तेन निर्वृत्तः ठक् (**तेन निवृत्तं पा० ५-१-७१**) क्षायोपशमिकः, आदिवृद्धीकादेशौ, भावशब्दस्य विशेषणम् । क्षायोपशमिक एव भावे **'भवन्ति'** जायन्ते **'भेदाः'** विशेषाः । हुशब्दस्यैवकारार्थत्वात् । यत आह सूत्रकारः । इति गाथार्थः ॥८६॥

(पारमा०) एकेन्द्रियादीनामेकेन्द्रियत्वादिसमानपरिणतिलक्षणमेकेन्द्रियादिशब्दव्यपदेशभाक् यत् सामान्यं सा जातिः एकद्वित्रिचतुरिन्द्रियजातिः, एकेन्द्रियजातिः द्वीन्द्रियजातिः, त्रीन्द्रियजातिः, चतुरिन्द्रियजातिः । जातिरित्यस्यात्रापि योगात्पञ्चेन्द्रियाणां जातिः पञ्चमिका । क्षायोपशमिके भावे भवन्त्येताः । यत आह-**क्षायोपशमिकानीन्द्रियाणि तन्निमित्ता च जातिः** इति गाथार्थः ॥८६॥

एगिंदिएसु जीवो, जस्सिह उदएण [2]होइ कम्मस्स ।
सा एगिंदियजाई, [3]जाईओ एव [4]सेसा उ ॥८७॥

(पू०) व्याख्या-एकमिन्द्रियं स्पर्शनलक्षणं येषां ते एकेन्द्रियास्तेषु च, जीवतीति जीवो यस्य कर्मणाः "उदयेन" प्रादुर्भावेन **'याति'** गच्छति एकेन्द्रियेषु सा **'एकेन्द्रियजातिः'** एकेन्द्रियनाम तत् । "जातयः" द्वीन्द्रियादिजातयः एवेति लुप्तानुस्वारं पदं प्राकृतत्वात् । एवं शेषा अपि द्वित्रिचतुष्पञ्चेन्द्रियलक्षणा यदुदयेन द्वीन्द्रियादिषूत्पद्यते सा द्वीन्द्रियादिजातिरुच्यते । इति गाथार्थः ॥८७॥ उक्ता एकेन्द्रियादिजातिः, शरीराण्याह—

(पारमा०) **'एकेन्द्रियेषु'** पृथिव्यादिषु **'जीवः'** प्राणी **'यस्य'** एकेन्द्रियव्यपदेशहेतोः कर्मण इहोदयेन भवति, सा **एकेन्द्रियजातिः** । जातय एवं शेषा अपि । ननु इह यस्य कर्मण

---

१ विहा इत्यपि पाठः । २ "भेया इति व्याख्याकारः । ३ व्याख्याकारेण तु "जाइ" इति पाठानुसारेण व्याख्यातम् । ४ व्याख्याकारेण तु "सेसावि" इति पाठानुसारेण व्याख्यातम् ।

पञ्चानां सप्तषष्टिमध्ये प्रक्षेपात् । एतेषां तु पुनः सर्वेषां [1]चतुर्विध्योक्तानां 'विपाकं' अनुभवरूपं '[2]वुच्छामि' वक्ष्यामि, 'यथानुपूर्व्याः' यथापरिपाट्या । इति गाथार्थः ॥८३॥

नारकादिगतिसंख्या [3]यतश्चैवं भवति तदाह—

(पारमा०) सर्वैरपि क्षिप्तैर्बन्धनभेदैरिति. अयं भावः—एषां मध्यादौदारिकादिबन्धनपञ्च-कस्य त्रिनवतिपक्षोपात्तस्य शेषैर्दशभिरपि क्षिप्तैस्त्र्युत्तरं शतं भवति नाम्नः प्रकृतीनामिति गम्यम्। विपाकभणनं प्रस्तौति-'एतेषां' द्विचत्वारिंशत्सप्तषष्टित्रिनवतित्र्युत्तरशतानां पुनर्विपाकं वक्ष्ये 'यथानुपूर्व्या' क्रमानतिक्रमेण । इति सपादगाथार्थः ॥८३॥

प्रतिज्ञातमाह—

**नारयतिरियनरामर-गइभेया चउविहा गई होइ ।**
**एसा खलु ओदइए होइ हु भावे जओ आह ॥८४॥**

(पू०) व्याख्या—नारकतिर्यङ्नरामरगतिभेदाद्विशेषाच्चतुर्विधा गतिर्भवति । 'एषा' प्रागुक्ता 'खलु' निश्चयेन, कस्मिन् भावे भवति ?, इति आह-औदायिके भावे भवति, न क्षायिकादौ । हुशब्दस्यैवकारार्थत्वात् । यत आह सूत्रकार एव । इति गाथार्थः ॥८४॥

नरकगतिस्वरूपमाह—

(पारमा०) नारकतिर्यङ्नरामरगतिभेदाच्चतुर्विधा गम्यते=प्राप्यते तथाविधकर्मसचिवैरिति गतिर्भवति । एषा 'खलु' निश्चितमौदयिके भावे भवति । यत आहेतिपदमुदारोक्त्या कर्तृनिर्देश-मन्तरेणोपात्तं यत्र कुत्रचिद्विश्रान्त्यभावात्तीर्थकृतमाक्षिपति । इति गाथार्थः ॥८४॥

किमाह ? इति चेदुच्यते—

**जीए उदएण जीवो, नेरइओ होइ नरयपुढवीए ।**
**सा भणिया नरयगई, सेसगईओ वि एमेव ॥८५॥**

(पू०) व्याख्या—'यस्याः' नरकगतेः 'उदयेन' प्रादुर्भावेन 'जीवः' प्राणी नारकिको 'भवति' संपद्यते, क्व ? 'नरक[4]पृथ्व्यां' प्रतीतायाम् । सा 'भणिता' प्रतिपादिता नरकगतिः शेषगतयो-ऽपि' तिर्यङ्नरामरलक्षणा अपि 'एवमेव' उक्तन्यायेन । इति गाथार्थः ॥८५॥ उक्ता गतिः, एकेन्द्रियादिजातिमाह—

(पारमा०) यस्या गतेरुदयेन जीवो नैरयिको भवति नरकपृथिव्यां, सा भणिता नरक-गतिः शेषगतयोऽप्येवमेवेति । अयमाशयः—यस्या उदयेन तिर्यङ् भवति सा तिर्यग्गतिः ।

---

[1] °चानुपूर्व्योक्तानां वि० जे० । [2] वोच्छामि जे० । [3] यतश्चेयं म० जे० । [4] °पृथिव्यां° जे० ।

ओरालियं सरीरं उदएणं होइ जस्स कम्मस्स ।
तं ओरालियनामं, सेससरीरा वि एमेव ॥८९॥

(पू०) व्याख्या–औदारिकं शरीरं प्रतिपादितम्–'उदयेन' विपाकेन यस्य भवति कर्मणस्तदौदारिकशरीरनाम । 'शेषशरीराण्यपि' वैक्रियादिशरीराण्यप्येवमेव । यथौदारिकं शरीरमुदयेन यस्य कर्मणो भवति तदौदारिकनाम, तथा वैक्रियाशरीराद्यपि यस्य कर्मण उदयेन भवति तद्वैक्रियादिशरीरनाम । एवमेव शब्दार्थः । इति गाथार्थः ॥८९॥

उक्तानि शरीराणि, अङ्गोपाङ्गान्याह—

(पारमा०) औदारिकं शरीरं यस्य कर्मण उदयेन भवति तदौदारिकनाम । इदमुक्तं भवति–यदुदयवशादौदारिकशरीरप्रायोग्यान् पुद्गलानादाय औदारिकशरीररूपतया परिणमय्य च जीवः स्वप्रदेशैः सहान्योऽन्यानुगमरूपतया संबन्धयति तदौदारिकनाम । शेषशरीराण्यप्येवमेवेति शेषशरीरनामस्वपीयं भावना कार्या । इति गाथार्थः ॥८९॥

अङ्गोपाङ्गनामाह—

अंगोवंगविभागो, [1]उदएणं होइ जस्स कम्मस्स ।
तं अंगवंगनामं, तस्स विवागो इमो होइ ॥९०॥

(पू०) व्याख्या–अङ्गोपाङ्गविभागो विशेषः 'उदयेन' विपाकेन यस्य भवति कर्मणस्तदङ्गोपाङ्गनामोच्यते । 'तस्य' अङ्गोपाङ्गनाम्नः 'विपाकः' अनुभवः 'अयं' (एषः) वक्ष्यमाणलक्षणो भवति । इति गाथार्थः ॥९०॥

(पारमा०) अङ्गानि च उपाङ्गानि च अङ्गोपाङ्गानि, अङ्गोपाङ्गानि च अङ्गोपाङ्गानि च अङ्गोपाङ्गानि, 'स्यादावसंख्येयः' (सि० ३-१-११९) इत्येकशेषः, तेषां विभागः पृथक्त्वं यस्य कर्मण उदयेन भवति तदङ्गोपाङ्गनाम, तस्य विपाक एष पृथक्त्वभवनलक्षण उक्तरूपो भवति । इति गाथार्थः ॥९०॥

अधुनाऽङ्गानि उपाङ्गानि अङ्गोपाङ्गानि च यान्युच्यन्ते तान्याह—

सीसमुरोयरपिट्ठी, दो बाहू ऊरुआ य अट्ठंगा ।
अंगुलिमाइ उवंगाइं, अंगोवंगाइं सेसाइं ॥९१॥

---

१ "उदएणं जस्स होइ कम्मस्स" इत्यपि पाठः जे० ।

उदयादेकेन्द्रियो भवति सा एकेन्द्रियजातिरित्युक्तम्, पूर्वं तु एकद्वित्रिचतुष्पञ्चेन्द्रियजातयः क्षायोपशमिके भावे भवन्तीति तत्कथमेतत्? इति, उच्यते—कारणकारणस्यापि कारणत्वविवक्षया क्षायोपशमिकभावे जातीनां भणनम्। तथाहि—क्षायोपशमिकभावेनेन्द्रियं जन्यते, तन्निमित्ता च व्यपदेशहेतुरौदयिकी जातिरिति, तर्हि जातिनाम किमर्थम्, एकेन्द्रियाद्यावरणक्षयोपशमे एकेन्द्रियादिव्यपदेशं प्राप्स्यति? इति सत्यम्, एकेन्द्रियावरणक्षयोपशमे एकेन्द्रियोऽयमिति व्यपदेशः स्यात्, परं नियमो न स्यात्, यदुत स्पर्शनेन्द्रियावरणक्षयोपशम एवैकेन्द्रियः। स्पर्शनरसनावरणक्षयोपशम एव द्वीन्द्रियः। स्पर्शनरसनघ्राणावरणक्षयोपशम एव त्रीन्द्रियः। स्पर्शनरसनघ्राणचक्षुरावरणक्षयोपशम एव चतुरिन्द्रियः। स्पर्शनरसघ्राणचक्षुःश्रोत्रावरणक्षयोपशमे तु पञ्चेन्द्रियोऽयम्। इति गाथार्थः ॥८७॥ शरीराण्याह—

**ओरालियवेउव्विय—आहारगतेयकम्मए [1]चेव।**
**एवं पंच सरीरा, तेसि विवागो इमो होइ ॥८८॥**

(पू०) व्याख्या—औदारिकं च वैक्रियं चाहारकं च तैजसं च कार्मणं चेति द्वन्द्वः, औदारिकवैक्रियाहारकतैजसकार्मणानि च 'एवं' उक्तनीत्या पञ्चैव शरीराणि भवन्तीति शेषः। '**तेषां च**' शरीराणां च '[2]**विपाकं**' अनुभवं '**इमं**' वक्ष्यमाणलक्षणं '**शृणुत**' आकर्णयत यूयम्। इति गाथार्थः ॥८८॥

औदारिकस्वरूपमाह—

(पारमा०) औदारिकवैक्रियाहारकतैजसकार्मणानि चैव। तत्रोदारं प्रधानं, प्राधान्यं चास्य तीर्थकरगणधरापेक्षया। ततोऽन्यस्यानुत्तरसुरशरीरस्यापि अनन्तगुणहीनत्वात्। उदारमेवौदारिकं, विनयादित्वादिकणि। विविधा क्रिया विक्रिया, तस्यां भवं वैक्रियम्। तथाहि—तदेकं भूत्वाऽनेकं भवति। अणु भूत्वा महद्भवति। खचरं भूत्वा भूमिचरं भवति। अदृश्यं भूत्वा दृश्यं भवति। अनेकं भूत्वा एकम्, इत्यादि। आह्रियते निर्वर्त्यते चतुर्दशपूर्वविदा तीर्थकरऋद्धिस्फातिदर्शनादिकप्रयोजनोत्पत्तौ सत्यां विशिष्टलब्धिवशादित्याहारकम्, तच्च वैक्रियापेक्षयाऽत्यन्तशुभम्। तेजसा तेजःपुद्गलैर्निर्वृत्तं तैजसं यदाहारपरिणमनस्य तेजोलेश्यानिर्गमनस्य च हेतुः। कर्मणो विकारः कार्मणम्। कर्मपरमाणव आत्मप्रदेशैः सह क्षीरनीरवदन्योऽन्यानुगताः सन्तः कार्मणशरीरम्। इदं च जन्तोर्गत्यन्तरसंक्रान्तौ साधकतमं करणम्। 'एवं' उक्तप्रकारेण पञ्च शरीराणि, तेषां विपाक एव वक्ष्यमाणो भवति। इति गाथार्थः ॥८८॥

---

१ व्याख्याकारेण तु "चेवं। पंचेव सरीरा तेसिं च विवागं इमं सुणह" इति पाठानुसारेण व्याख्यातम्।
२ विपाकं अनुभवः अयं वक्ष्यमाणलक्षणः शृणुत जे०।

ओरालियं सरीरं, उदएणं होइ जस्स कम्मस्स ।
तं ओरालियनामं, सेससरीरा वि एमेव ॥८९॥

(पू०) व्याख्या–औदारिकं शरीरं प्रतिपादितम्–'**उदयेन**' विपाकेन यस्य भवति कर्मणस्तदौदारिकशरीरनाम । '**शेषशरीराण्यपि**' वैक्रियादिशरीराण्यप्येवमेव । यथौदारिकं शरीरमुदयेन यस्य कर्मणो भवति तदौदारिकनाम, तथा वैक्रियाशरीराद्यपि यस्य कर्मण उदयेन भवति तद्वैक्रियादिशरीरनाम । एवमेव शब्दार्थः । इति गाथार्थः ॥८९॥

उक्तानि शरीराणि, अङ्गोपाङ्गान्याह—

(पारमा०) औदारिकं शरीरं यस्य कर्मण उदयेन भवति तदौदारिकनाम । इदमुक्तं भवति–यदुदयवशादौदारिकशरीरप्रायोग्यान् पुद्गलानादाय औदारिकशरीररूपतया परिणमय्य च जीवः स्वप्रदेशैः सहान्योऽन्यानुगमरूपतया संबन्धयति तदौदारिकनाम । शेषशरीराण्यप्येवमेवेति शेषशरीरनामस्वपीयं भावना कार्या । इति गाथार्थः ॥८९॥

अङ्गोपाङ्गनामाह—

अंगोवंगविभागो, [1]उदएणं होइ जस्स कम्मस्स ।
तं अंगवंगनामं, तस्स विवागो इमो होइ ॥९०॥

(पू०) व्याख्या–अङ्गोपाङ्गविभागो विशेषः '**उदयेन**' विपाकेन यस्य भवति कर्मणस्तदङ्गोपाङ्गनामोच्यते । '**तस्य**' अङ्गोपाङ्गनाम्नः '**विपाकः**' अनुभवः '**अयं**' (एषः) वक्ष्यमाणलक्षणो भवति । इति गाथार्थः ॥९०॥

(पारमा०) अङ्गानि च उपाङ्गानि च अङ्गोपाङ्गानि, अङ्गोपाङ्गनि च अङ्गोपाङ्गानि च अङ्गोपाङ्गानि, '**स्यादावसंख्येयः**' (सि० ३-१-११९) इत्येकशेषः, तेषां विभागः पृथक्त्वं यस्य कर्मण उदयेन भवति तदङ्गोपाङ्गनाम, तस्य विपाक एष पृथक्त्वभवनलक्षण उक्तरूपो भवति । इति गाथार्थः ॥९०॥

अधुनाऽङ्गानि उपाङ्गानि अङ्गोपाङ्गानि च यान्युच्यन्ते तान्याह—

सीसमुरोयरपिट्ठी, दो बाहू ऊरुआ य अट्ठंगा ।
अंगुलिमाइ उवंगाइं, अंगोवंगाइं सेसाइं ॥९१॥

---

१ "उदएणं जस्स होइ कम्मस्स" इत्यपि पाठः जे० ।

(पू०) व्याख्या–शिरो=मस्तकमुरो=वक्षः, उदरं=पोट्टं, पृष्ठिः प्रतीता, द्वौ बाहू प्रतीतौ, 'ऊरू च' ऊरू=जङ्घे, अष्टावङ्गानि । अङ्गुलिरादिर्येषां तान्यङ्गुल्यादीन्युपाङ्गानि, अङ्गोपाङ्गानि, 'शेषाणि' उक्तव्यतिरिक्तानि । इति गाथार्थः ॥९१॥

यथा येषामङ्गोपाङ्गानि भवन्ति येषां च न भवन्ति तत्प्रदर्शयन्नाह—

(पारमा०) शीर्षं उरः उदरं पृष्ठिर्द्वौ बाहू ऊरुके च, अष्टावङ्गानि, 'अङ्गुल्यादीनि' अङ्गुलिभ्रू जिह्वादीन्युपाङ्गानि । 'शेषाणि' तत्प्रत्यवयवभूतानि अङ्गुलिपर्वरेखादीनि अङ्गोपाङ्गानि । इति गाथार्थः ॥९१॥

सम्प्रति त्रैविध्यमाह—

आइल्लाणं तिण्हं, हुंति सरीराण अंगुवंगाइं ।
णो तेयगकम्माणं, बंधणनामं इमं होइ ॥९२॥

(पू०) व्याख्या–'आद्यानां' औदारिकवैक्रियाहारकाणां 'तिण्हं' त्रयाणां 'भवन्ति' जायन्ते शरीराणामङ्गोपाङ्गानि । 'नो' नैव तैजसकार्मणयोः, तत्कारणाभावात् । बन्धननाम पुनः [1]'इदं' वक्ष्यमाणलक्षणं भवति । इति गाथार्थः ॥९२॥

उक्तमङ्गोपाङ्गनाम, बन्धननाम प्राह—

(पारमा०) 'आद्यानां' औदारिकवैक्रियाहारकाणां 'त्रयाणां' शरीरणामङ्गोपाङ्गानि भवन्ति । इदमुक्तं भवति-अङ्गोपाङ्गनाम त्रिधा, औदारिकाङ्गोपाङ्गनामवैक्रियाङ्गोपाङ्गनामआहारकाङ्गोपाङ्गनामभेदात् । तैजसकार्मणयोस्तु नाङ्गोपाङ्गनाम, जीवप्रदेशसंस्थानानुरोधित्वादिति । बन्धननाम प्रस्तौति-बन्धननाम 'इदं' वक्ष्यमाणं पञ्चदशप्रकारं भवति । इति गाथार्थः ॥९२॥

सम्प्रत्यौदारिकबन्धनचतुष्टयमाह—

ओरालियओरालिय, ओरालियतेयबंधणं बीयं ।
ओरालकम्मबंधण, तिण्हवि जोगे चउत्थं तु ॥९३॥

(पू०)व्याख्या–औदारिकौदारिकबन्धनं प्रथमम् । [2]औदारिकपुद्गलानामौदारिकपुद्गलैरेव संबन्धः प्रथमं बन्धनम् । औदारिकाणामेव पुद्गलानां तेजःपुद्गलैर्यः संबन्धो द्वितीयबन्धनमेतत् । औदारिकपुद्गलानामेव कार्मणपुद्गलैर्यत्संबन्धकरणं तत्तृतीयम्, त्रयाणामपि 'योगे' संबन्धे चतुर्थं तु बन्धनं, औदारिकतैजसकार्मणपुद्गलानां पुन[3]र्मीलने चतुर्थं बन्धनम् । इति गाथार्थः ॥९३॥

औदारिकादिबन्धनस्वरूपमाह—

(पारमा०) बध्यतेऽनेनेति बन्धनम् । औदारिकस्यौदारिकेन सह बन्धनं औदारिकौदारिकबन्धनम्, अर्थादाद्यम् । एवमौदारिकतैजसबन्धनं द्वितीयम् । औदारिककार्मणबन्धनमर्थात्तृतीयम् । त्रयाणामप्यौदारिकतैजसकार्मणानां योगे पुनश्चतुर्थम् ॥९३॥ एतदेव व्याचष्टे—

---

१ इमं जे० । २ औदारिकाणां पुद्ग० जे० । ३ र्मीलके जे० ।

ओरालपुग्गला इह, बद्धा जीवेण जे उरालत्ते ।
अन्ने [1]उ वज्झमाणा, ओरालियपुग्गला जे [2]य ॥९४॥

(पू०)व्याख्या–उदाराश्च ते पुद्गलाश्च ते उदारपुद्गलाः 'इह' अस्मिल्लोके 'बद्धाः' गृहीता 'जीवेन' प्राणिना, 'ये' पुद्गलाः क्व ? 'उदारत्वे' उदारभावे । किमुक्तं भवति-यैः पुद्गलैरुत्तरकालमौदारिकं शरीरं निर्वर्तयति जीवः ते जीवेनात्मसात्कृता 'अन्ये च बध्यमानाः' वर्त्तमानकालभाविन एष्यत्कालभाविनश्चौदारिकपुद्गला 'ये तु' य एव बद्धा बध्यमानाश्च त एवौदारिकबन्धनकारणम् । इति गाथार्थः ॥९४॥

औदारिकपुद्गलसंबन्धेन बन्धनमाह–

(पारमा०) औदारिकपुद्गला इह संसारे जीवेन ये औदारिकत्वेन बद्धाः, तथाऽन्ये पुनर्बध्यमाना औदारिकपुद्गला ये च ॥९४॥

तेसिं जं संबंधं [B] अवरोप्पपुरग्गलाणमिह कुणइ ।
तं जउसरिसं जाणसु, ओरालियबंधणं पढमं ॥९५॥

(पू०) व्याख्या–'तेषां' [3]प्राग्बद्धबध्यमानपुद्गलानां 'यत्' कर्म 'संबन्धं' घटनां 'परस्परं' अन्योऽन्यं 'पुद्गलानां' उक्तस्वरूपाणां 'इह' लोके 'करोति' निर्वर्तयति 'तत्' कर्म 'जतुसदृशं' लाक्षातुल्यम् । यथाहि–लाक्षया काष्ठलादिषु दण्डिकाद्यवयवानां पृथग्भूतानां संबन्धः=संयोगः क्रियते, एवमनेनापि कर्मणा पृथग्भूतानां बद्धबध्यमानपुद्गलानां संबन्धः=संयोगः क्रियते इति लाक्षयोपमीयते । 'जानीहि' विद्धि औदारिकबन्धनं 'प्रथमं' आद्यम् । इति गाथार्थः ॥९५॥

उक्तं प्रथमबन्धनम्, द्वितीयादीन्याह—

(पारमा) तेषां बद्धबध्यमानानां पुद्गलानां यत्कर्मान्योऽन्यं संबन्धं करोति तत् 'जतुसदृशं' लाक्षातुल्यमौदारिकबन्धनं प्रथमं जानीहि ॥९५॥

शेषत्रयातिदेशमाह—

एवोरालियतेयग, ओरालियकम्मबंधणं तह य ।
ओरालतेयकम्मग—बंधणनामंपि एमेव ॥ ९६ ॥

(पू०) व्याख्या–'एवं' उक्तप्रकारेण, मकारस्य प्राकृतत्वाल्लोपः, यथौदारिक[4]पुद्गलानां बद्धबध्यमानानां संयोजकं कर्म औदारिकबन्धनमुच्यते, तथौदारिकपुद्गलानां बद्धबध्यमानानां तैजसपुद्गलैर्यत्संबन्धकरणं तदौदारि[5]कतैजसबन्धनं द्वितीयम् । औदारिकपुद्गलानामेव बद्धबध्यमा-

---

[1] 'य" इत्यपि पाठः । [2] "उ" इत्यपि पाठः । एतत्पाठद्वयानुसारेण व्याख्याकारेण व्याख्यातम् । [B] अवरुपर "इत्यपि पाठः । [3] प्रागुक्तबध्यमान॰ जे० । [4] पुद्गलबद्धबध्यमानसंयो॰ जे० । [5] ०क तेजोबन्धनं जे० ।

नानां कार्मणपुद्गलैः यः संबन्धः, तथा च तत्तृतीयम् । उदारतेजःकर्मपुद्गलानां बन्धनं संयोजनं बन्धननाम एतदप्येवमेव. यथौदारिकपुद्गलानां द्विकसंयोगे तेजःप्रभृतिभिः संयोजकं कर्मौदारिकादिबन्धनं नाम. तथौदारिकतेजःकार्मणपुद्गलानां बद्धबध्यमानानामौदारिकतेजःकार्मणपुद्गलैर्यत्संयोजकं कर्म तद्बन्धनं नाम चतुर्थम् । इति गाथार्थः ॥९६॥

उक्तान्यौदारिकादिबन्धनानि. साम्प्रतं वैक्रियबन्धनान्याह—

(पारमा०) एवं ये औदारिकपुद्गला बद्धाः, ये च तैजसपुद्गला बध्यमानाः, तेषां यत्कर्म संबन्धं विदधाति तदौदारिकतैजसनाम । एवमौदारिकपुद्गला बद्धाः कार्मणपुद्गलाश्च बध्यमानाः, तेषां संबन्धविधायकं यत्कर्म तदौदारिककार्मणनाम । एवमौदारिकपुद्गला बद्धाः, तैजसकार्मणपुद्गलाश्च बध्यमानाः. तेषां संबन्धकारकं कर्म औदारिकतैजसकार्मणनाम । इति गाथाचतुष्टयार्थः ॥९६॥

वैक्रियबन्धनचतुष्टयमाह—

वेउव्वियवेउव्विय, वेउव्वियतेयवंधणं बीयं ।
वेउव्विकम्मवंधण. तिण्हवि जोए चउत्थं तु ॥९७॥

(पू०) व्याख्या—वैक्रियाणां पुद्गलानां वैक्रियैरेव संबन्धः प्रथमं बन्धनम् । वैक्रियपुद्गलानामेव तेजःपुद्गलैर्यत्संबन्धस्तद् द्वितीयं बन्धनम् । वैक्रियपुद्गलानामेव कार्मणपुद्गलैर्यत्संबन्धकं कर्म तत्तृतीयं बन्धनम् । त्रयाणामपि वैक्रियतेजःकार्मणपुद्गलानां 'योगे एव' संबन्धे एव चतुर्थम् । तुशब्दस्यैवकारार्थत्वात् । इति गाथार्थः ॥९७॥

उक्तवैक्रियबन्धनान्येव व्यक्तीकुर्वन्नाह—

वेउव्विपुग्गला इह, बद्धा जीवेण जे विउव्वित्ते ।
अन्ने य वज्झमाणा. वेउव्वियपुग्गला जे उ ॥९८॥

(पू०) व्याख्या—'वैक्रियपुद्गलाः' वैक्रियशरीरनिर्वर्तनप्रायोग्याः 'इह' लोके 'बद्धाः' गृहीताः 'जीवेन' प्राणिना 'ये' पुद्गलाः 'विउव्वित्ते' वैक्रियभावे, अन्ये च 'बध्यमानाः' आगामिकालभाविनो वैक्रियपुद्गला ये तु इति गाथार्थः ॥९८॥

वैक्रियपुद्गलबन्धनमभिधाय साम्प्रतं संबन्धद्वारेण बन्धनमाह—

तेसिं जं संबन्धं, [2]अवरोप्परपुग्गलाणमिह कुणइ ।
तं जउसरिसं जाणसु. वेउव्वियवंधणं पढमं ॥९९॥

---

१ नां कर्मपुद्गलैः जे० । २ अन्नुन्न इत्यपि पाठः ।

(पू०) व्याख्या–'तेषां' प्रागुक्तपुद्गलानां यत् 'संबन्धं' संयोगं 'परस्परं' अन्योऽन्यं पुद्गलानां 'इह' अस्मिन् संसारे 'करोति' निर्वर्तयति 'तत्' कर्म 'जतुसदृशं' लाक्षातुल्यं 'जानीहि' अवबुध्यस्व 'वेउव्वियबन्धणं' [वैक्रियबन्धनं] 'प्रथमं' आद्यम् । इति गाथार्थः ॥९९॥ ॥६०७॥

उक्तं वैक्रियबन्धनं, द्वितीयादीन्याह—

**एवं विउव्वितेयग. वेउव्वियकम्मबंधणं तह य ।**
**वेउव्वितेयकम्मग—बंधणनामंपि एमेव ॥ १०० ॥**

(पू०) व्याख्या–एवेति लुप्तानुस्वारं पदं प्राकृतत्वात् , उक्तनीत्या । उक्तनीतिश्चेयम्–यथा वैक्रियपुद्गलानां बद्धबध्यमानानां वैक्रियैरेव यत्संबन्धकरणं तद् वैक्रियवैक्रियबन्धनमुच्यते । तथा वैक्रियपुद्गलानामुक्तस्वरूपाणां तैजसैर्यत्संबन्धकरणं तद्द्वितीयं बन्धनं वैक्रियतेजोलक्षणम् । वैक्रियपुद्गलानामेव कार्मणपुद्गलैर्यद्बन्धनं तथा च तत्तृतीयं वैक्रियकार्मणलक्षणम् । वैक्रियतेजः-कार्मणबन्धननामाप्येवमेव । यथा प्रागुक्ते द्वे बन्धने द्विकसंयोगे तथेदमपि ज्ञातव्यम् । केवलं त्रिकसंयोगे चतुर्थम् इति गाथार्थः ॥१००॥

उक्तानि वैक्रियबन्धनानि, आहारकबन्धनान्याह—

(पारमा०) चतस्रोऽपि स्फुटार्थाः ॥९७॥ ॥९८॥ ॥९९॥ ॥१००॥

आहारकबन्धनचतुष्टयमाह—

**आहारगआहारग, [1]आहारगतेयबंधणं बीयं ।**
**आहारकम्मबंधण, तिण्हवि जोए चउत्थं तु ॥१०१॥**

(पू०) व्याख्या–आहारकपुद्गलानामाहारकपुद्गलैरेव यः संबन्धः स प्रथमं बन्धनम् । आहारकपुद्गलानामेव तैजसैर्बन्धनं संबन्धो द्वितीयम् । आहारकपुद्गलानामेव पुद्गलैर्बन्धनं संयोगस्तृतीयम् । त्रयाणामपि योगे आहारकतैजसकार्मणसंबन्धे चतुर्थम् । इति गाथार्थः १०१ ॥

आहारकबन्धनकारणमाह—

**आहारपुग्गला इह, आहारत्तेण जे निबद्धा उ ।**
**अन्ने य बज्झमाणा, आहारगपुग्गला जे उ ॥१०२॥**

(पू०) व्याख्या–'आहारपुद्गलाः' आहारकशरीरप्रायोग्याः 'इह' अस्मिन् संसारे 'आहारत्वेन ये निबद्धास्तु' आहारकभावेन ये, क्व ? प्राक् शरीरग्रहणकाले जीवेन गृहीता एव ।

---

[1] 'यद्वा जीवेण आहारतेज०" इत्यपि पाठः ।

नानां कार्मणपुद्गलैः यः संबन्धः, तथा च तत्तृतीयम् । उदारतेजःकर्मपुद्गलानां बन्धनं संयोजनं बन्धननाम एतदप्येवमेव, यथौदारिकपुद्गलानां द्विकसंयोगे तेजःप्रभृतिभिः संयोजकं कर्मौदारिकादिबन्धनं नाम, तथौदारिकतेजःकार्मणपुद्गलानां बद्धबध्यमानानामौदारिकतेजःकार्मणपुद्गलैर्यत्संयोजकं कर्म तद्बन्धनं नाम चतुर्थम् । इति गाथार्थः ॥९६॥

उक्तान्यौदारिकादिबन्धनानि, साम्प्रतं वैक्रियबन्धनान्याह—

(पारमा०) एवं ये औदारिकपुद्गला बद्धाः, ये च तैजसपुद्गला बध्यमानाः, तेषां यत्कर्म संबन्धं विदधाति तदौदारिकतैजसनाम । एवमौदारिकपुद्गला बद्धाः कार्मणपुद्गलाश्च बध्यमानाः, तेषां संबन्धविधायकं यत्कर्म तदौदारिककार्मणनाम । एवमौदारिकपुद्गला बद्धाः, तैजसकार्मणपुद्गलाश्च बध्यमानाः, तेषां संबन्धकारकं कर्म औदारिकतैजसकार्मणनाम । इति गाथाचतुष्टयार्थः ॥९६॥

वैक्रियबन्धनचतुष्टयमाह—

वेउव्वियवेउव्विय, वेउव्वियतेयबंधणं बीयं ।
वेउव्विकम्मबंधण, तिण्हवि जोए चउत्थं तु ॥९७॥

(पू०) व्याख्या—वैक्रियाणां पुद्गलानां वैक्रियैरेव संबन्धः प्रथमं बन्धनम् । वैक्रियपुद्गलानामेव तेजःपुद्गलैर्यत्संबन्धस्तद् द्वितीयं बन्धनम् । वैक्रियपुद्गलानामेव कार्मणपुद्गलैर्यत्संबन्धकं कर्म तत्तृतीयं बन्धनम् । त्रयाणामपि वैक्रियतेजःकार्मणपुद्गलानां 'योगे एव' संबन्धे एव चतुर्थम् । तुशब्दस्यैवकारार्थत्वात् । इति गाथार्थः ॥९७॥

उक्तवैक्रियबन्धनान्येव व्यक्तीकुर्वन्नाह—

वेउव्विपुग्गला इह, बद्धा जीवेण जे विउव्वित्ते ।
अन्ने य बज्झमाणा, वेउव्वियपुग्गला जे उ ॥९८॥

(पू०) व्याख्या—'वैक्रियपुद्गलाः' वैक्रियशरीरनिर्वर्तनप्रायोग्याः 'इह' लोके 'बद्धाः' गृहीताः 'जीवेन' प्राणिना 'ये' पुद्गलाः 'विउव्वित्ते' वैक्रियभावे, अन्ये च 'बध्यमानाः' आगामिकालभाविनो वैक्रियपुद्गला ये तु इति गाथार्थः ॥९८॥

वैक्रियपुद्गलबन्धनमभिधाय साम्प्रतं संबन्धद्वारेण बन्धनमाह—

तेसिं जं संबन्धं, [2]अवरोप्परपुग्गलाणमिह कुणइ ।
तं जउसरिसं जाणसु, वेउव्वियबंधणं पढमं ॥९९॥

---

१ नां कर्मपुद्गलैः जे० । २ अवरुपर इत्यपि पाठः ।

(पू०) व्याख्या–'तेषां' प्रागुक्तपुद्गलानां यत् 'संबन्धं' संयोगं 'परस्परं' अन्योऽन्यं पुद्गलानां 'इह' अस्मिन् संसारे 'करोति' निर्वर्तयति 'तत्' कर्म 'जतुसदृशं' लाक्षातुल्यं 'जानीहि' अवबुध्यस्व 'वेउव्वियबन्धणं' [वैक्रियबन्धनं] 'प्रथमं' आद्यम् । इति गाथार्थः ॥९९॥ ॥६०७॥

उक्तं वैक्रियबन्धनं, द्वितीयादीन्याह—

एवं विउव्वितेयग. वेउव्वियकम्मबंधणं तह य ।
वेउव्वितेयकम्मग—बंधणनामंपि एमेव ॥ १०० ॥

(पू०) व्याख्या–एवेति लुप्तानुस्वारं पदं प्राकृतत्वात्, उक्तनीत्या। उक्तनीतिश्चेयम्–यथा वैक्रियपुद्गलानां बद्धबध्यमानानां वैक्रियैरेव यत्संबन्धकरणं तद् वैक्रियवैक्रियबन्धनमुच्यते । तथा वैक्रियपुद्गलानामुक्तस्वरूपाणां तैजसैर्यत्संबन्धकरणं तद्द्वितीयं बन्धनं वैक्रियतेजोलक्षणम्। वैक्रियपुद्गलानामेव कार्मणपुद्गलैर्यद्बन्धनं तथा च तत्तृतीयं वैक्रियकार्मणलक्षणम् । वैक्रियतेजः-कार्मणबन्धननामाप्येवमेव । यथा प्रागुक्ते द्वे बन्धने द्विकसंयोगे तथेदमपि ज्ञातव्यम् । केवलं त्रिकसंयोगे चतुर्थम् इति गाथार्थः ॥१००॥

उक्तानि वैक्रियबन्धनानि, आहारकबन्धनान्याह—

(पारमा०) चतस्रोऽपि स्फुटार्थाः ॥९७॥ ॥९८॥ ॥९९॥ ॥१००॥

आहारकबन्धनचतुष्टयमाह—

आहारगआहारग. [1]आहारगतेयबंधणं बीयं ।
आहारकम्मबंधण, तिण्हवि जोए चउत्थं तु ॥१०१॥

(पू०) व्याख्या–आहारकपुद्गलानामाहारकपुद्गलैरेव यः संबन्धः स प्रथमं बन्धनम् । आहारकपुद्गलानामेव तैजसैर्बन्धनं संबन्धो द्वितीयम् । आहारकपुद्गलानामेव पुद्गलैर्बन्धनं संयोगस्तृतीयम् । त्रयाणामपि योगे आहारकतैजसकार्मणसंबन्धे चतुर्थम् । इति गाथार्थः १०१ ॥

आहारकबन्धनकारणमाह—

आहारपुग्गला इह, आहारत्तेण जे निबद्धा उ ।
अन्ने य बज्झमाणा, आहारगपुग्गला जे उ ॥१०२॥

(पू०) व्याख्या–'आहारपुद्गलाः' आहारकशरीरप्रायोग्याः 'इह' अस्मिन् संसारे 'आहारत्वेन ये निबद्धास्तु' आहारकभावेन ये, क्व ? प्राक् शरीरग्रहणकाले जीवेन गृहीता एव ।

१ 'वद्धा जीवेण आहारतेज०' इत्यपि पाठः ।

'अन्ये च' उत्तरकालभाविनो 'बध्यमानाः' गृह्यमाणा एवाहारकपुद्गलाः, 'ये तु' य एवा-ऽऽहारकशरीरनिर्वर्तनक्षमाः । इति गाथार्थः ॥१०२॥

आहारकपुद्गलसंबन्धद्वारेण बन्धनमाह—

तेसिं जं संबंधं, 'अवरोप्पर पुग्गलाणमिह कुणइ ।
तं जउसरिसं जाणसु, आहारगबंधणं पढमं ॥१०३॥

(पू०) व्याख्या– तेषां' उक्तस्वरूपाहारकपुद्गलानां 'यत्' कर्म संबन्ध'योग्यं 'परस्परं' अन्योऽन्यं बद्धबध्यमानानां 'इह' अस्मिल्लोके 'करोति' निर्वर्तयति 'तत्' 'जतुसदृशं' लाक्षातुल्यमुक्तन्यायेन 'जानीहि' विद्धि आहारकबन्धनं 'प्रथमं' आद्यम् । इति गाथार्थः ॥१०३॥

उक्तमाहारकबन्धनं प्रथमम्, द्वितीयादीन्याह—

एवाहारगतेयग, आहारगकम्मबंधणं तह य ।
आहारतेयकम्मग—बंधणनामंपि एमेव ॥१०४॥

(पू०) व्याख्या—एवशब्दव्याख्या प्राग्वत् । यथाऽऽहारकपुद्गलानामाहारकपुद्गलैरेवाहारका-हारकबन्धनम्, तथाऽऽहारकतेजःपुद्गलैरेवाहारकतेजोबन्धनं द्रष्टव्यं द्वितीयम् । तथाऽऽहारक-कार्मणबन्धनं च तृतीयम् । आहारक³तैजसकार्मणबन्धननामा-ऽप्येवमेव । यथा-ऽऽहारक⁴बन्धने व्याख्यातं तथा-ऽत्रा-ऽपि द्रष्टव्यम् । इति गाथार्थः ॥१०४॥

उक्तान्याहारकबन्धनानि, तेजोबन्धनान्याह—

(पारमा०) पाठसिद्धा एव ॥१०१॥ १०२॥ १०३॥ १०४॥

सम्प्रति तैजसतैजस-तैजसकार्मण-कार्मणकार्मणबन्धनान्याह—

एवं तेयगतेयग, तेयग ⁵कम्मे य बंधणं तह य ।
⁶कम्मइगंकम्मइगं, बंधणनामं पि ⁷पनरसमं ॥१०५॥

(पू०) व्याख्या—तैजसपुद्गलानां बद्धानां प्राग्बध्यमानानामेष्यत्काले तेजःपुद्गलैरेव यः संबन्धः क्रियते तत्तैजसतैजोबन्धनं प्रथमम् । तेजःपुद्गलानां बद्धबध्यमानानां कार्मणपुद्गलैश्च बन्धनं संबन्धस्तथा च तद्द्वितीयं तेजःकार्मणसंज्ञकं बन्धनम् । कार्मणपुद्गलानामतीतकालबद्धानां भवि-ष्यत्काले च बध्यमानानां कार्मणपुद्गलैरेव यः संबन्धस्तत्कार्मणबन्धनं पञ्च⁸दशम् । औदारिका-

१ "अवरुप्पर पोग्गलाण" इत्यपि पाठः । २ योगं जे० । ३ ०कतेजःकार्मण जे० । ४ बन्धनव्याख्यानं तथाऽत्रापि जे० । ५ "कम्मयगबंधणं" इत्यपि पाठः । ६ "कम्मइयंकम्मइयं" इत्यपि पाठः । ७ "तु पन्नरसं" इत्यपि पाठः । ८ ० दशमम् जे० ।

दिद्विकादिसंयोगे चत्वारि, वैक्रियसंयोगे चत्वारि, तथाऽऽहारकसंयोगे चत्वारि, तैजससंयोगे द्वे, कार्मणसंयोगे चैकम्, सर्वाण्यपि मिलितानि पञ्चदश। इति गाथार्थः ॥१०५॥

उक्तानि बन्धनानि, तदुक्तेर्बन्धननामा [1]प्युक्तमेव, साम्प्रतं संघातनामाह—

(पारमा०) तैजसपुद्गलानां बद्धानां बध्यमानानां च तैजसपुद्गलैः सह संबन्धकारि तैजसतैजसबन्धनम्। तैजसपुद्गलानां बद्धानां बध्यमानकार्मणपुद्गलैः सह संबन्धकारि तैजसकार्मणबन्धनम्। कार्मणपुद्गलानां बद्धानां बध्यमानानां च संबन्धहेतुः कार्मणकार्मणबन्धनं पञ्चदशमिति। एवं चत्वार्यौदारिकबन्धनानि, चत्वारि वैक्रियबन्धनानि, चत्वार्याहारकबन्धनानि, इत्येतानि द्वादश, तैजसतैजस-तैजसकार्मण-कार्मणकार्मणबन्धनत्रयसमन्वितानि पञ्चदशेति। ननु यत्र बन्धनपञ्चकमेवोपादीयते तत्र कथमेतावतां ग्रहः?, उच्यते—तदेवमवगन्तव्यम्, गृहीतगृह्यमाणानामौदारिकपुद्गलानां तैजसकार्मणपुद्गलैश्च सह संबन्धकारि औदारिकबन्धनम्। एवं वैक्रियपुद्गलानां बद्धबध्यमानानां तैजसकार्मणपुद्गलैश्च सह संबन्धकारि वैक्रियबन्धनम्। एवमाहारकपुद्गलानां बद्धबध्यमानानां तैजसकार्मणपुद्गलैश्च सह संबन्धाधायकमाहारकबन्धनम्। एवं त्रिभिर्द्वादश संगृहीतानि। तथा तैजसपुद्गलानां बद्धबध्यमानानां कार्मणपुद्गलैश्च। सह संबन्धहेतुस्तैजसबन्धनम्। एवमनेन चतुर्थेन द्वयसंग्रहः। यदुक्तं शतकबृहच्चूर्णौ बन्धनपञ्चकमणनप्रस्तावे—"**गहियघिप्पमाणाणं पुग्गलाणं अन्नसरीरपुग्गलेहिं वा समं बंधो जस्स उदएणं भवइ तं बंधणनामं**" इति। पञ्चमं तु कार्मणबन्धनमिति बन्धनपञ्चकपक्षेऽपि पञ्चदशसंग्रहः। इति गाथार्थः ॥१०५॥

उक्तं सप्रभेदं बन्धननाम, अधुना संघातनामाह—

संघायनाम[2]महुणा, संघायइ जेण तेण संघायं।
ओरालियसंघायं, वेउव्विय जाव [3]कम्मइगं ॥१०६॥

(पू०) व्याख्या—'**संघायनामं**' इत्यनुस्वारोऽलाक्षणिकः प्राकृतत्वात्, '**अधुना**' साम्प्रतमुच्यते-'**संघातयति**' इति मीलयति वियुतानि द्रव्याण्येकीकरोतीत्यर्थः, '**येन**' कारणेन '**तेन**' कारणेन संघातनाम भण्यते। तत्रौदारिकस्य संघात औदारिकसंघातः तं, जानीहीति क्रिया सर्वत्र। वैक्रियसंघातं, आहारकसंघातं, तैजससंघातं यावत्कार्मणसंघातम्, इति पञ्च संघातनामानि। इति गाथार्थः ॥१०६॥

औदारिकादिसंघातस्वरूपमाह—

---

१. प्युक्तम् सा० जे०। २ "अहुणा" इत्यपि पाठः ३ "कम्मइयं" इत्यपि पाठः।

(पारमा०) संघातनाम 'अधुना' बन्धननामानन्तरं भण्यत इत्यध्याहारः। व्युत्पत्तिमाह- 'संघातयति' पिण्डीकरोति औदारिकादिपुद्गलान् येन तेन हेतुना संघातमुच्यते। तच्च पञ्च-धेत्याह-औदारिकसंघातं, वैक्रियसंघातं, यत्वल्करणादाहारकसंघातं, तैजससंघातं, कार्मणसंघा-तम्। इति गाथार्थः ॥१०६॥ एतद्व्याचष्टे—

ओरालाई जे देहपुग्गला [1]होंति जम्मि ठाणम्मि।
ते [2]ठंति तम्मि ठाणे संघायण[3]कम्मणो उदए ॥१०७॥

(पू०) व्याख्या-औदारिकमादिर्येषां ते औदारिकादयः, आदिशब्दाद्वैक्रियाहारकतैजसकार्म-णपुद्गलपरिग्रहः। ये देहे पुद्गला देहपुद्गलाः 'भवन्ति' जायन्ते यस्मिन् स्थाने ते औदा-रिकादयः पुद्गलास्तस्मिन्नेव स्थाने भवन्ति नापरत्र, संघातनकर्मणः 'उदये' प्रादुर्भावे। अयमत्र भावार्थः-ये औदारिकादिषु शरीरेषु शिरःप्रभृत्यवयवानां निर्वर्तका औदारिकादिपुद्गला ये यस्य स्थानस्य योग्यास्ते तस्मिन्नेव शिरःप्रभृतिस्थानके भवन्ति। न विपर्ययेण यस्य कर्मणः प्रभा-वात्तत्संघातननामकर्मोच्यते। इति गाथार्थः ॥१०७॥

उक्तं संघातनाम, अधुना संहननान्याह—

(पारमा०) औदारिकादयो ये देहपुद्गला यस्मिन् स्थाने भवन्ति ते संघातकर्मण उदयेन तस्मिन् स्थाने तिष्ठन्ति। अयमभिप्रायः-ये औदारिकपुद्गला यत्र योग्यास्तान् तत्र संघातयति यत्कर्म निजोदयात्। यथा शिरोयोग्यान् शिरसि, पादयोग्यान् पादयोः शेषाङ्गयोग्यान् शेषाङ्गेषु, तदौदारिकसंघातनाम। एवं वैक्रियाहारकतैजसकार्मणेष्वपि वाच्यम्, इति गाथार्थः ॥१०७॥

सम्प्रत्यस्थिरचनात्मकस्य संहननस्यावसरः, तच्चौदारिकशरीर एव नान्येषु, तेषामस्थिर-हितत्वात्, तच्च षोढेत्याह—

[4]वज्जरिसहनारायं रिसहं नारायमद्धनारायं।
कीलिय तह छेवट्ठं, तेसि सरूवं इमं होइ ॥१०८॥

(पू०) व्याख्या-वज्रऋषभनाराचं प्रथममाद्यं, द्वितीयं च ऋषभनाराचं, नाराचं तृतीयं, अर्द्ध-नाराचं चतुर्थं, कीलिका पञ्चमं, तथा षष्ठं पुनश्छेवट्ठं (सेवार्त्त) संहननं भवतीति ज्ञातव्यम्। इति गाथार्थः ॥१०८॥

ऋषभादीन् व्याख्यानयन्नाह—

(पारमा०) वज्रऋषभनाराचं ऋषभं इत्युक्ते ऋषभनाराचमिति द्रष्टव्यम्। नाराचं, अर्द्धनाराचं, कीलिका, तथा सेवार्तम्। तेषां स्वरूपमिदं भवति ॥१०८॥

---

१ "हुंति" इत्यपि पाठः। २ "हुंति" इत्यपि पाठस्तदनुसारेण व्याख्याकारैर्व्याख्यातम्। ३ "कम्मुणो" इत्यपि पाठः। ४ "वज्जरिसहनारायं पढमं बीअं च रिसहनारायं। नारायमद्धनारायकीलिया तह य छेवट्ठं ॥१०८॥ इत्यपि पाठः, एतत्पाठानुसारेण व्याख्याकारैर्व्याख्यातम्।

तथाहि—

रिसहो [1]य होइ पट्टो, वज्जं पुण कीलिया मुणेयव्वा ।
उभओ [2]मक्कडबंधं, नारायं तं वियाणाहि ॥१०९॥

(पू०) व्याख्या—ऋषभस्त्वागमभाषया दीर्घोऽल्पबाहल्यः, पृथुत्वयुक्तः कपाटादिषु लोहपट्टकाकारः पट्टोऽभिधीयते । वज्रं पुनः कीलिका मन्तव्या, सा च प्रतीता । उभयतो द्वयोरपि पार्श्वयोर्मर्कटबन्धः प्रतीतः, स विद्यते यस्मिन् संहनने तन्नाराचसंहननं 'विजानीहि' अवबुध्यस्व । अयमत्र भावार्थः—यथा हस्तयोरुभयतो मर्कटबन्धेन कलाचीग्रहणे मध्यदेशे लोहपट्टकेन वेष्टयित्वा पट्टबन्धनमध्यदेशे वेधं दत्त्वा कीलिका प्रक्षिप्यते, तस्यां प्रक्षिप्तायां यादृशः सञ्चयो भवत्यचलः कालान्तरस्थायी बलवांस्तथाऽस्थिसञ्चयो यस्मिन् संहनने सति भवति तत्संहननं वज्रऋषभनाराचं भवति । इति गाथार्थः ॥१०९॥

संहननोदयद्वारेण वज्रऋषभनाराचसंज्ञामाह—

(पारमा०) —ऋषभः परिवेष्टनपट्टो भवति । वज्रं कीलिका ज्ञातव्या । उभयतो मर्कटबन्धं नाराचं तद्विजानीहि । अयमर्थः—द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकापरपर्यायं वज्रनामकमस्थि यत्र भवति तद्वज्रर्षभनाराचम् । यत्पुनः कीलिकारहितं तद् ऋषभनाराचम् । यत्र पुनः कीलिकया ऋषभसंज्ञपट्टेन च रहितो मर्कटबन्धो भवति तन्नाराचम् । यत्र त्वेकपार्श्वे मर्कटबन्धो द्वितीयपार्श्वे च कीलिका भवति तदर्द्धनाराचम् । यत्र त्वस्थीनि कीलिकामात्रबद्धान्येव भवन्ति तत्कीलिका । यत्र तु परस्परं पर्यन्तसंस्पर्शलक्षणां सेवामाश्रितान्यागतान्यस्थीनि भवन्ति स्नेहाभ्यवहारतैलाभ्यङ्गविश्रामणादिरूपां च परिशीलनां नित्यमपेक्षते तत्सेवार्तम् । इति गाथाद्वयभावार्थः ॥१०९॥

एतद्विपाकदर्शनायाह—

जस्सुदएणं जीवे, संघयणं होइ वज्जरिसहं तु ।
तं वज्जरिसहनामं, सेसावि हु एव संघयणा ॥११०॥

(पू०) व्याख्या—'यस्य' कर्मणः 'उदयेन' अनुभवेन 'जीवे' प्राणिनि 'संहननं' उक्तलक्षणं 'भवति' जायते वज्रऋषभनाराचं' उक्तस्वरूपं, 'तुः' एवकारार्थः, स च व्यवहितः प्राक्संबध्यत उदयेनैवेत्यत्र, तद्वज्रऋषभनाराचनामोच्यते । शेषाण्यपि न केवलमिदं प्रागुक्तम्, 'हुः' पादपूरणे, ऋषभनाराचादीन्यपि इत्यपिशब्दार्थः । 'एवं' उक्तनीत्या, लुप्तानुस्वारः

१ "अ" इत्यपि पाठः । २ "मक्कडबंधो" इत्यपि पाठस्तत्पाठानुसर्त्तारो व्याख्याकाराः ॥

प्राकृतत्वात्, 'संघयणा' [संहननानि] । उक्तनीतिश्चेयम्—वज्रऋषभनाराचसंहननं यस्य कर्मण [1]उदयेन प्रादुर्भवति तद्वज्रऋषभनाराचसंहननं यथोच्यते, तथा ऋषभनाराचनाराचार्द्ध-नाराचकीलिकाछेवट्ठानि यस्य कर्मण उदये भवन्ति तान्यपि तथा ऋषभनाराचनाराचार्द्धनाराचकीलिकाछेवट्ठनामान्यन्वर्थत उच्यन्ते इत्येवशब्दार्थः । इति गाथार्थः ॥११०॥

उक्तानि संहननानि, अधुना संस्थानान्याह—

(पारमा०) 'यस्य' कर्मण उदयेन 'जीवे' इति जीवस्य संहननं भवति, 'वज्रर्षभं तु' इति सूचनात् वज्रर्षभनाराचं तद् वज्रर्षभनाराचनाम । शेषाण्यपि संहननानि एवमेव । तुशब्द-स्यैवकारार्थस्यात्र योगात् । इति गाथार्थः ॥११०॥

संस्थाननामाह—

समचउरंसे नग्गोहमंडले साइवामणे खुज्जे ।
हुंडेवि य [2]संठाणे, तेसि सरूवं इमं होइ ॥१११॥
तुल्लं वित्थडबहुलं, उस्सेहबहुं च मडह[3]कोट्ठं च ।
हिट्ठिल्लकायमडहं, सव्वत्थासंठियं हुंडं ॥११२॥

(पू०) व्याख्या—समचतुरस्रं यस्मिन् तत्समचतुरस्रं संस्थानमिति सर्वत्र संबन्धनीयम्, मन्तव्यमिति क्रिया । न्यग्रोधस्येव मण्डलं यस्मिन् तन्न्यग्रोधमण्डलम् । सातिः शक्तिः । तथा वामनकुब्जे प्रतीते । हुण्डमपि च संस्थानं मन्तव्यमिति । तेषां च स्वरूपं 'इमं' वक्ष्यमाणलक्षणम् ॥१११॥

लक्षणमाह—

तुल्यं समपादाङ्गुष्ठाग्रादारभ्य केशान्तं यावत्स्थितमूर्द्ध्वं यत्सूत्रं तावन्मात्रमेव तिर्यक्प्रसारितयोर्भुजयोः प्रमाणसूत्रमेवंभूतं तुल्यं समचतुरस्रसंस्थानमुच्यते । [4]विस्तारो बहुर्यस्मिन् तद्विस्तरबहु, प्राकृतत्वाद्बह्वर्थे लच् । यस्मिन् विस्तारो वटस्येव बहु दैर्घ्ये पुनः स्तोकं [5]तद्विस्तरबहुलं न्यग्रोधमण्डलं संस्थानमुच्यते द्वितीयम् । उत्सेधो बहुर्यस्मिन् तदुत्सेधबहु उच्चैस्त्वयुक्तं च । सातिसंस्थानेनोपमीयते सातिः शक्तिरुच्यते, शक्तिवद्यस्मिन् पुरुषस्य शिरोऽधोबाहुविस्तरस्तोकस्तत्सातिसंस्थानं तृतीयम् । मडहं कोष्ठं यस्मिन् तन्मडहकोष्ठम्, कोष्ठमुदरं तच्च वामनसंस्थानं चतुर्थम् । हेठिल्लकायोऽधःकायः स मडहो यत्र तद् हेठिल्लकायमडहं [6]कुब्जसंस्थानं पञ्चमम् । सर्वत्र शिरःप्रभृत्यङ्गावयवेषु न विद्यते संस्थितिर्यस्मिन्नो[7]लङ्ककव[8]त्सर्वावयवन्यूनं तद् हुण्डसंस्थानं षष्ठम् । इति गाथार्थः ॥११२॥

---

१ उदये भवति त० जे० । २ "संठाणा जीवाणं छ मुणेयव्वा ॥१११॥" इत्यपि पाठः ३ "कुट्ठं" इत्यपि पाठः । ४ विस्तरो जे० । ५ तद्विस्तार० जे० । ६ कुब्जं सं० । ७ लोलल्लुकवत् जे० टिप्पणी । तत्सर्वावयवानां वद् हुण्डमंसं संस्थानं प० जे० ।

कर्मण उदयद्वारेण समचतुरस्रस्वरूपमाह—

(पारमा) तत्र समास्तुल्या यथोक्तप्रमाणाश्चतस्रोऽस्रयश्चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यस्य तत्समचतुरस्रम्। समासान्तोऽत्प्रत्ययः। न्यग्रोधवत्परिमण्डलं विस्तरभृरि न्यग्रोधपरिमण्डलम्। यथा न्यग्रोध उपरि संपूर्णावयवोऽधस्तु हीनः, तथा यत्संस्थानं नाभेरुपरि संपूर्णप्रमाणं, अधस्तु न तथा तन्न्यग्रोधपरिमण्डलम्। यत्र नाभेरधः सर्वावयवाः समचतुरस्रलक्षणाऽविसंवादिनः, उपरि तु न तदनुरूपास्तत् [1]सादि उत्सेधवहुसंस्थानं, [2]सादीति शाल्मलीतरुमाचक्षते प्रावचनिकाः। तस्य हि स्कन्धो द्राधीयान्, उपरि तु न तदनुरूपा विशालतेति। तथा यत्र शिरो ग्रीवं हस्तपादादिकं च यथोक्तप्रमाणोपपन्नं कोष्ठं उरउदारादि मडहं लघु तद्वामनसंस्थानम्, कुब्जमित्यन्ये। यत्र तु उरउदरादि यथोक्तप्रमाणोपेतं, अधस्तनकायस्तु पादादिः, उपलक्षणत्वात् शिरोग्रीवादिकं च मडहं लघु भवति तत्कुब्जम्, वामनमित्यन्ये। यत्र सर्वेऽप्यवयवा असंस्थिता यथोक्तप्रमाणहीनास्तत् हुण्डसंस्थानम्। तेषां स्वरूपमिदं तुन्यादिकं भवति। इति गाथार्थः ॥१११॥ ११२॥

एतदुदयमादर्शयति—

जस्सुदएणं जीवे, चउरंसं नाम होइ संठाणं।
तं चउरंसं नामं सेसावि हु एव संठाणा ॥११३॥

(पू०) व्याख्या—'यस्य' कर्मणः 'उदयेन' अनुभवेन 'जीवे' जीवस्य 'चतुरस्रं' ऊर्द्ध्वाधोवस्थितसूत्रसमं [3]तिर्यक्प्रमाणं चतुरस्रमुच्यते संस्थानं 'भवति' जायते 'नाम' संज्ञा स्फुटं वा 'संस्थानम्' आकारविशेषस्तच्चतुरस्रं नाम। 'शेषाण्यपि' न्यग्रोधमण्डलादीन्यप्येवमेव संस्थानानि द्रष्टव्यानि। 'अपि' समुच्चये, 'हुः' पादपूरणे, समचतुरस्रसंस्थानोक्तन्यायेनेति भावः। इति गाथार्थः ॥११३॥

उक्तं संस्थाननाम, वर्णनामाह—

(पारमा०) 'यस्य' कर्मण उदयाच्चतुरस्रं नाम संस्थानं भवति जीवस्य तच्चतुरस्रनाम समचतुरस्रसंस्थाननाम। शेषाण्यपि संस्थानान्येवमेव। इति गाथार्थः ॥११३॥

उक्तं संस्थानम्, सम्प्रति वर्णनाम, तच्च पञ्चधा, तदुदयाच्च यद्भवति तदाह—

[4]किण्हानीलालोहिय, हालिद्दा तह य हुंति [5]सुक्किलया।
जियदेहाणं वण्णा उदएणं वन्नन्नामस्स ॥११४॥

---

१-२ साचि इत्यपि पाठः। ३ तिर्यक् समानं चतु० जे०। ४ व्याख्याकारेण व्यस्ततया व्याख्यातम्, एवमग्रेऽपि॥ ५ "सुक्का य" इति वृत्त्योः॥

प्राकृतत्वात्, 'संघयणा' [संहननानि] । उक्तनीतिश्चेयम्—वज्रऋषभनाराचसंहननं यस्य कर्मण [1]उदयेन प्रादुर्भवति तद्वज्रऋषभनाराचसंहननं यथोच्यते, तथा ऋषभनाराचनाराचार्द्धनाराचकीलिकाछेवट्ठानि यस्य कर्मण उदये भवन्ति तान्यपि तथा ऋषभनाराचनाराचार्द्धनाराचकीलिकाछेवट्ठनामान्यन्वर्थत उच्यन्ते इत्येवशब्दार्थः । इति गाथार्थः ॥११०॥

उक्तानि संहननानि, अधुना संस्थानान्याह—

(पारमा०) 'यस्य' कर्मण उदयेन 'जीवे' इति जीवस्य संहननं भवति, 'वज्रर्षभं तु' इति सूचनात् वज्रर्षभनाराचं तद् वज्रर्षभनाराचनाम । शेषाण्यपि संहननानि एवमेव । तुशब्दस्यैवकारार्थस्यात्र योगात् । इति गाथार्थः ॥११०॥

संस्थाननामाह—

समचउरंसे नग्गोहमंडले साइवामणे खुज्जे ।
हुंडेवि य [2]संठाणे, तेसि सरूवं इमं होइ ॥१११॥
तुल्लं वित्थडबहुलं, उस्सेहबहुं च मडह[3]कोट्ठं च ।
हिट्ठिल्लकायमडहं, सव्वत्थासंठियं हुंडं ॥११२॥

(पू०) व्याख्या—समचतुरस्रं यस्मिन् तत्समचतुरस्रं संस्थानमिति सर्वत्र संबन्धनीयम्, मन्तव्यमिति क्रिया । न्यग्रोधस्येव मण्डलं यस्मिन् तन्न्यग्रोधमण्डलम् । सातिः शक्तिः । तथा वामनकुब्जे प्रतीते । हुण्डमपि च संस्थानं मन्तव्यमिति । तेषां च स्वरूपं 'इमं' वक्ष्यमाणलक्षणम् ॥१११॥

लक्षणमाह—

तुल्यं समपादाङ्गुष्ठाग्रादारभ्य केशान्तं यावत्स्थितमूर्द्ध्वं यत्सूत्रं तावन्मात्रमेव तिर्यक्प्रसारितयोर्भुजयोः प्रमाणसूत्रमेवंभूतं तुल्यं समचतुरस्रसंस्थानमुच्यते । [4]विस्तारो बहुर्यस्मिन् तद्विस्तरबहु, प्राकृतत्वाद्बह्वर्थे लच् । यस्मिन् विस्तारो वटस्येव बहु दैर्घ्ये पुनः स्तोकं [5]तद्विस्तरबहुलं न्यग्रोधमण्डलं संस्थानमुच्यते द्वितीयम् । उत्सेधो बहुर्यस्मिन् तदुत्सेधबहु उच्चैस्त्वयुक्तं च । सातिसंस्थानेनोपमीयते सातिः शक्तिरुच्यते, शक्तिवद्यस्मिन् पुरुषस्य शिरोऽधोबाहुविस्तरस्तोकस्तत्सातिसंस्थानं तृतीयम् । मडहं कोष्ठं यस्मिन् तन्मडहकोष्ठम्, कोष्ठमुदरं तच्च वामनसंस्थानं चतुर्थम् । हेठिल्लकायोऽधःकायः स मडहो यत्र तद् हेठिल्लकायमडहं [6]कुब्जसंस्थानं पञ्चमम् । सर्वत्र शिरःप्रभृत्यङ्गावयवेषु न विद्यते संस्थितिर्यस्मिन्नो[7]लक्कव[?]त्सर्वावयवन्यूनं तद् हुण्डसंस्थानं षष्ठम् । इति गाथार्थः ॥११२॥

१ उदये भवति त० जे० । २ "संठाणा जीवाणं छ कुणेयव्वा ॥१११॥" इत्यपि पाठः ३ "कुट्ठं" इत्यपि पाठः । ४ विस्तरो जे० । ५ तद्विस्तार० जे० । ६ कुब्जं सं० । ७ लोटलक्कुकवत् जे० टिप्पणी । तत्सर्वावयवानां तद् हुण्डसंज्ञं संस्थानं ष० जे० ।

कर्मण उदयद्वारेण समचतुरस्रस्वरूपमाह—

(पारमा) तत्र समास्तुल्या यथोक्तप्रमाणाश्चतस्रोऽस्रयश्चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यस्य तत्समचतुरस्रम् । समासान्तोऽत्प्रत्ययः । न्यग्रोधवत्परिमण्डलं विस्तरभूरि न्यग्रोधपरिमण्डलम् । यथा न्यग्रोध उपरि संपूर्णावयवोऽधस्तु हीनः, तथा यत्संस्थानं नाभेरुपरि संपूर्णप्रमाणं, अधस्तु न तथा तन्न्यग्रोधपरिमण्डलम् । यत्र नाभेरधः सर्वावयवाः समचतुरस्रलक्षणाऽविसंवादिनः, उपरि तु न तदनुरूपास्तत् [1]सादि उत्सेधबहुसंस्थानं, [2]सादीति शाल्मलीतरुमाचक्षते प्रावचनिकाः । तस्य हि स्कन्धो द्राघीयान् , उपरि तु न तदनुरूपा विशालतेति । तथा यत्र शिरो ग्रीवं हस्तपादादिकं च यथोक्तप्रमाणोपपन्नं कोष्ठं उरउदारादि मडहं लघु तद्वामनसंस्थानम् , कुब्जमित्यन्ये । यत्र तु उरउदरादि यथोक्तप्रमाणोपेतं, अधस्तनकायस्तु पादादिः, उपलक्षणत्वात् शिरोग्रीवादिकं च मडहं लघु भवति तत्कुब्जम् , वामनमित्यन्ये । यत्र सर्वेऽप्यवयवा असंस्थिता यथोक्तप्रमाणहीनास्तत् हुण्डसंस्थानम् । तेषां स्वरूपमिदं तुल्यादिकं भवति । इति गाथार्थः ॥१११॥ ११२॥

एतदुदयमादर्शयति—

जस्सुदएणं जीवे, चउरंसं नाम होइ संठाणं ।
तं चउरंसं नामं सेसावि हु एव संठाणा ॥११३॥

(पू०) व्याख्या—'यस्य' कर्मणः 'उदयेन' अनुभवेन 'जीवे' जीवस्य 'चतुरस्रं' ऊर्द्ध्वावस्थितस्त्रसमं [3]तिर्यक्प्रमाणं चतुरस्रमुच्यते संस्थानं 'भवति' जायते 'नाम' संज्ञा स्फुटं वा 'संस्थानम्' आकारविशेषस्तच्चतुरस्रं नाम । 'शेषाण्यपि' न्यग्रोधमण्डलादीन्यप्येवमेव संस्थानानि द्रष्टव्यानि । 'अपि' समुच्चये, 'हुः' पादपूरणे, समचतुरस्रसंस्थानोक्तन्यायेनेति भावः । इति गाथार्थः ॥११३॥

उक्तं संस्थाननाम, वर्णनामाह—

(पारमा०) 'यस्य' कर्मण उदयाच्चतुरस्रं नाम संस्थानं भवति जीवस्य तच्चतुरस्रनाम समचतुरस्रसंस्थाननाम । शेषाण्यपि संस्थानान्येवमेव । इति गाथार्थः ॥११३॥

उक्तं संस्थानम् , सम्प्रति वर्णनाम, तच्च पञ्चधा, तदुदयाच्च यद्भवति तदाह—

[4]किण्हानीलालोहिय, हालिद्दा तह य हुंति [5]सुक्किलया ।
जियदेहाणं वण्णा उदएणं वन्ननामस्स ॥११४॥

---

१-२ साचि इत्यपि पाठः । ३ तिर्यक् समानं चतु० जे० । ४ व्याख्याकारेण व्यस्ततया व्याख्यातम् , गाथायां ऽपि ॥ ५ "सुक्का य" इति वृत्त्योः ॥

(पू०) व्याख्या—कृष्णा नीला लोहिता हारिद्रा तथा भवन्ति शुक्लाश्च **जीवदेहानां** प्राणिशरीराणां '**वर्णाः**' प्रतीताः '**उदयेन**' अनुभवेन '**वर्णनाम्नः**' कर्मणः । इति गाथार्थः ॥११४॥

उक्तं वर्णनाम, गन्धनामाह—

(पारमा०) वर्ण्यतेऽलंक्रियते शरीरमनेनेति वर्णः । तत्र कृष्णनीललोहितहारिद्रशुक्ला जीवदेहानां वर्णा वर्णनाम्न उदयेन भवन्ति । इदमुक्तं भवति—कृष्णवर्णनाम्न उदयात्कृष्णदेहो भवतीति । नीलवर्णनाम्न उदयान्नीलदेह इत्यादि । इति गाथार्थः ॥११४॥ गन्धनाम्नो द्विविधस्यापि विपाकमाह—

गंधेण सुरभिगंधं, अहवा गंधेण दुरभिगंधं तु ।
होइ जियाणं देहं उदएणं गंधनामस्स ॥११५॥

(पू०) व्याख्या—घ्राणेन्द्रियास्वाद्येन '**सुरभिगन्ध**' शोभनगन्धम् । अथवा गन्धेन '**दुरभिगन्धं तु**' दुष्टगन्धमेव '**भवति**' जायते '**जीवानां**' प्राणिनां '**देहः**' शरीरं '**उदयेन**' अनुभवेन '**गन्धनाम्नः**' कर्मणः । इति गाथार्थः ॥११५॥

उक्तं गन्धनाम, रसनाम प्राह—

(पारमा०) गन्ध्यते आघ्रायते इति गन्धः, तन्निबन्धनं नाम गन्धनाम । सुष्ठु रमते सुरभिः, ततश्च गन्धेन सुरभिगन्धम् । अथवा गन्धेन दुरभिगन्धं तु दुष्टं अभि आभिमुख्यं यत्र एवंभूतं जीवानां देहं, सुरभिदुरभिभेदभिन्नस्य गन्धनाम्न उदयेन भवति इति गाथार्थः ॥११५॥

रसनाम प्रतिपादयति—

[3]तित्तकडुया कसाया, अंबिलमहुरा[4] रसावि पंच भवे ।
तेवि हु जियदेहाणं, रसनामुदएण खज्जंता ॥११६॥

(पू०) व्याख्या—तिक्ताश्च कटुकाश्च तिक्तकटुकाः तिक्ताः कटुकाद्याः, कटुकाः शुण्ठ्यादयः, कषाया हरीतक्याद्याः, अम्ला बीजपूरादयः, मधुरा इक्ष्वादयः रसास्तु पञ्चैव भवन्ति, लवणरसः सर्वानुयायित्वान्न पृथगुक्तो ज्ञा(ज्ञा)यते न केवलं [5]रसादयः, तेऽपि '**जीवदेहानामेव**' प्राणिशरीराणामेव '**रसनाम्नः**' कर्मणः '**उदयेन**' अनुभवेन '**स्वाद्यमानाः**' भक्ष्यमाणाः । हुशब्दस्यैवकारार्थत्वात् । इति गाथार्थः ॥११६॥

उक्तं रसनाम, साम्प्रतं स्पर्शनामाह—

(पारमा०) तिक्तककटुककषायअम्लमधुरा रसा अपि पञ्च, न केवलं वर्णाः, किं तु रसा अपि पञ्च जीवदेहानां खाद्यमाना रसनाम्नः पञ्चप्रकारस्योदयेन भवेयुः । लवणस्य तु एतदनु-

---

१ "०ण शरीरं" इत्यपि पाठः । २ ०नां शरीरं देहं उ० जे० । ३ "तित्तगकडुयकसाया" इत्यपि पाठः । ४ 'रसा उ' इति व्याख्याकाराः । ५ वर्णादयः जे० ।

यायित्वात् केवलस्यानुपयोगाच्च पृथगुपादानं न कृतम् । इति गाथार्थः ॥११६॥

स्पर्शनाम प्राह—

**गुरुलहुमिउकढिणावि य, निद्धा लुक्खा य होंति सीउण्हा ।**
**जियदेहाणं फासा, उदएणं फासनामस्स ॥११७॥**

(पू०) व्याख्या—गुरुश्च लघुश्च मृदुश्च कठिनश्च गुरुलघुमृदुकठिनाः, तेऽपि च, अपिशब्दः समुच्चये 'च' स्वगतानेकभेदसंसूचनार्थः स्निग्धा रूक्षाश्च भवन्तीति प्रत्येकमभिसंबध्यते । शीताश्च उष्णाश्च शीतोष्णाः' [1]**'जीवदेहानां'** प्राणिशरीराणां **'स्पर्शाः'** स्पर्शनेन्द्रियग्राह्या जायन्ते **'उदयेन'** विपाकेन **'स्पर्शनाम्नः'** कर्मणः । तत्र गुरुर्महान् वज्रसीसकादिवत् । लघु अल्पतरं शाल्मलीतूलवत् । मृदुः सुकुमारः पद्मस्पर्शवत् । कठिनो निर्वरः अन्धपाषाणवत् । स्निग्धः सस्नेहो [2]घृतपूरमिन्द्रिकापत्रयोरिव । रूक्षः स्नेहरहितः सुधावत् । शीतः प्रतीत उदकस्येव । उष्णस्त-द्विपरीतोऽग्नेरिव । स्पर्शशब्दः सर्वत्र संबन्धनीयः । इति गाथार्थः ॥११७॥

उक्तं स्पर्शनाम, अगुरुलघुनामाह—

(पारमा०) तत्र गुरुलघ्वादयः प्रायः स्पर्शत्वेन जने न प्रसिद्धा इति तत्स्वरूपनिरूपणा क्रियते । तत्र यतः स्पर्शाद्वस्तूनामधोगमनक्रिया भवति स स्पर्शो गुरुः, यदाह—**'अधोगते-र्गुरुः'** १ । यतो वस्तूनां प्रायः तिर्यगूर्ध्वं च गमनं स स्पर्शो लघुः, यदाह—**''तिर्यगूर्ध्वगते-र्लघुः'** २ । यतो वस्तूनां नमनक्रिया स स्पर्शो मृदुः, यदाह—**'सन्नतेर्मृदुः ३'** । यतो वस्तूनां नमनक्रियाऽभावः स स्पर्शः कठिनः, यदाह—**''प्रायोऽनमनस्य हेतुः कठिनः ४ ।''** चिक्कणत्वपरिणामः स्निग्धः ५ । अचिक्कणत्वपरिणामस्तु रूक्षः ६, यदाह—**''चिक्कणत्वाचिक्क-णत्वे स्निग्धरूक्षौ ५-६ ।''** यतो वस्तूनां काठिन्यापाकौ भवतः स स्पर्शः शीतः, यदाह—**''काठि-न्यापाकयोःशीतः, ७ ।''** यतो वस्तूनां मार्दवविक्लित्ती भवतः स स्पर्श उष्णः, यदाह—**मार्दव-पाकयोरुष्णः ८** । इत्यष्टावपि स्पर्शा जीवदेहानां स्पर्शनाम्नोऽष्टविधस्योदयाद्भवन्ति इति गाथार्थः ॥११७॥

अगुरुलघुनामाह—

**गरुयं न होइ देहं, न य लहुयं होइ सव्वजीवाणं ।**
**होइ हु अगुरुयलहुयं, अगुरुलहुयनामउदएणं ॥११८॥**

(पू०) व्याख्या—'गुरुकं' भारयुक्तं **'न भवति'** शिशपादिसारवत् न जायते **'देहं'** शरीरम् । **'न च'** नैव लघुरेव लघुकमेरण्डकाष्ठवद् भवति **'सर्वजीवानां'** सर्वप्राणिनां देहमिति वर्तते,

१ जियदेहानां जे० । २ घृतपूरामण्डिकाप० जे० ।

हुशब्दस्यैवकारार्थत्वात् , भवत्येवागुरुलघुकं शरीरम् । केन ? इत्याह—'अगुरुलघुनाम्नः' कर्मणः 'उदयेन' अनुभवेन । इति गाथार्थः ॥११८॥

उक्तमगुरुलघुनाम, साम्प्रतमुपघातनामाह—

(पारमा०) आत्मापेक्षया सर्वजीवानां देहं न गुरुकं भवति, नापि लघुकं भवति, उपलक्षणत्वान्नापि गुरुलघुकं, किन्तु अगुरुलघुकं भवति । अन्यापेक्षया तु गुरुकं लघुकं गुरुलघुकं वा भवति । यदाह—"अन्नन्नविवक्खाए तिन्निवि संभवंति" इति अगुरुलघुनाम्न उदयात् । इति गाथार्थः ॥११८॥

उपघातनामाह—

अंगावयवो पडिजिब्भिया'इ जो अप्पणो उवग्घायं ।
कुणइ हु देहम्मि ठिओ सो उवघायस्स उ विवागो॥११९॥

(पू०) व्याख्या—अङ्गं शिरःप्रभृति, तस्यावयवो नासिकादि प्रतिजिह्विका च । जिह्वाया उपरि लघ्वी जिह्वा प्रतिजिह्विका । योऽवयवः 'आत्मनस्तु' शरीरस्यैव 'उपघातं' विनाशं करोत्येव, हुशब्दस्यैवकारार्थत्वात् । 'देहे स्थितः' [2]शरीरावस्थितः स उपघातनाम्न एव कर्मणो 'विपाकः' अनुभवः, तुशब्दस्यैवकारार्थत्वात् । इति गाथार्थः ॥११९॥ व्याख्यातमुपघातनाम, अधुना पराघातनामाह—

(पारमा०) यः प्रतिजिह्वागलवृन्दाद्यङ्गावयवो 'देहे स्थितः' इति शरीरान्तः पीडाकारित्वेन स्थित आत्मन उपघातं करोति स उपघातस्य विपाक उपघातनामकर्मोदयात् स उपघातकारीति भावः । इति गाथार्थः ॥११९॥

पराघातमाह—

तयविसदंतविसाई, अंगावयवो [3]'य जो उ अन्नेसिं ।
जीवाण कुणइ घायं, सो परघायस्स उ विवागो ॥१२०॥

(पू०) व्याख्या—त्वक् [4]शरीरांशो विषं यस्मिन्नङ्गावयवे स त्वग्विषः, दन्ता विषं यस्यावयवस्यासौ दन्तविषः, त्वग्विषश्च दन्तविषश्च त्वग्विषदन्तविषौ तौ आदिर्यस्यावयवस्य स त्वग्विषदन्तविषादिः, आदिशब्दान्नखविषादिपरिग्रहः । अङ्गस्यावयवोऽङ्गावयवः, 'तु' पुनः 'यस्तु' य एव 'अन्येषां' आत्मव्यतिरिक्तानां 'जीवानां' प्राणिनां 'करोति' विधत्ते 'विघातं' विनाशं सः 'परघातनाम्न एव' कर्मणः 'विपाकः' अनुभवः । इति गाथार्थः ॥१२०॥ उक्तं पराघातनाम, साम्प्रतमानुपूर्व्या विषयमाह—

---

१ "०य जो अत्तणो उवघायं" इत्यपि पाठः । २ शरीरे अव० जे० ३ 'उ' इत्यपि पाठस्तदनुसारेण व्याख्याकारैर्व्याख्यातम ॥ ४ शरीरं मविषं य० जे० ।

(पारमा०) त्वग्विषदन्तविषाद्यङ्गावयवश्च यः पुनरन्येषां जीवानां घातं करोति, चकारादधृष्यमोजो वाक्सौष्ठवं वा नृपसभादिगतस्य सभ्यादीनामपि क्षोभकृत्, प्रतिपक्षप्रतिभाप्रतिघातं च यत्करोति स पराघातस्य विपाकः। इति गाथार्थः ॥१२०॥

द्वित्रिचतुःसामयिकेन विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिगमननिमित्तमानुपूर्वीनामाह—

नारयतिरियनरामर-भवेसु जंतस्स अंतरगईए।
अणुपुव्वीए उदओ, सा चउहा [१]सुणसु जह होइ ॥१२१॥

(पू०) व्याख्या-'नारकतिर्यङ्नरामरभवेषु' प्रतीतेषु 'जंतस्स' गच्छतः सतः 'अन्तरगतौ' अपान्तरालगतौ 'आनुपूर्व्याः' नामकर्मविशेषस्य 'उदयः' विपाकः । सा चानुपूर्वी कियत्प्रकाराः भवन्ति ? इत्येतदाह-'चतुर्द्धा' चतुर्भेदा 'शृणुत' आकर्णयत 'यथा' येन प्रकारेण 'भवति' जायते। इति गाथार्थः ॥१२१॥

नरकानुपूर्व्या विषयमाह—

(पारमा०) नारकतिर्यङ्नरामरभवेषु गच्छतो जीवस्य 'अन्तरगत्या' अपान्तरालगत्या वक्रगमनरूपयाऽऽनुपूर्व्या उदयः सा चतुर्द्धा शृणु यथा भवति। इति गाथार्थः ॥१२१॥

नरयाउअस्स उदए नरए वक्केण गच्छमाणस्स ।
नरयाणुपुव्वियाए [२]तहिँ उदओ अन्नहिं नत्थि ॥१२२॥

(पू०) व्याख्या-'नरकायुषः' नरकेऽवस्थितिकारकस्य 'उदये' प्रादुर्भावे 'नरके' प्रतीते 'वक्रेण' कुटिलेन 'गच्छमाणस्स' इति गच्छतः सतः 'नरकानुपूर्व्याः' नरकप्रापणे रज्जुकल्पाया वृषभस्येवाभिमतदेशनयने 'उदयः' अनुभवः 'तत्र' वक्रे। 'अन्यत्र' ऋजुगतौ 'नास्ति' न विद्यते। इति गाथार्थः ॥१२२॥

उक्तो नरकानुपूर्वीविषयः, अधुना तिर्यगाद्यानुपूर्वीविषयमाह—

(पारमा०) नरकायुष उदये 'वक्रेण' कूर्परलाङ्गलगोमूत्रिकाकाररूपेण 'यथाक्रमं' द्वित्रिचतुःसमयप्रमाणेन नरके गच्छतो नरकानुपूर्व्यास्तत्रोदयः । 'अन्यत्र' ऋजुगतौ नास्ति । इति गाथार्थः ॥१२२॥

एवं तिरिमणुदेवे, तेसुवि वक्केण गच्छमाणस्स ।
तेसिमणुपुव्वियाणं, [३]तहिँ उदओ अन्नहिं नत्थि ॥१२३॥

---

१ "सुणह" इत्यपि पाठस्तत्पाठानुगन्तारो व्याख्याकाराः। २ ति, मत आह जे०। ३-४ "उदओ तहिँ" इत्यपि पाठः।

हुशब्दस्यैवकारार्थत्वात् , भवत्येवागुरुलघुकं शरीरम् । केन ? इत्याह–'**अगुरुलघुनाम्नः**' कर्मणः '**उदयेन**' अनुभवेन । इति गाथार्थः ॥११८॥

उक्तमगुरुलघुनाम, साम्प्रतमुपघातनामाह—

(पारमा०) आत्मापेक्षया सर्वजीवानां देहं न गुरुकं भवति, नापि लघुकं भवति, उपलक्षणत्वान्नापि गुरुलघुकं, किन्तु अगुरुलघुकं भवति । अन्यापेक्षया तु गुरुकं लघुकं गुरुलघुकं वा भवति । यदाह–"**अन्नइ।विक्खाए तिन्निवि संभवंति**" इति अगुरुलघुनाम्न उदयात् । इति गाथार्थः ॥११८॥

उपघातनामाह—

**अंगावयवो पडिजिब्भियाइ जो अप्पणो उवग्घायं ।**
**कुणइ हु देहम्मि ठिओ सो उवघायस्स उ विवागो॥११९॥**

(पू०) व्याख्या–अङ्गं शिरःप्रभृति, तस्यावयवो नासिकादि प्रतिजिह्विका च । जिह्वाया उपरि लघ्वी जिह्वा प्रतिजिह्विका । योऽवयवः '**आत्मनस्तु**' शरीरस्यैव '**उपघातं**' विनाशं करोत्येव, हुशब्दस्यैवकारार्थत्वात् । '**देहे स्थितः**' [2]शरीरावस्थितः स उपघातनाम्न एव कर्मणो '**विपाकः**' अनुभवः, तुशब्दस्यैवकारार्थत्वात् । इति गाथार्थः ॥११९॥ व्याख्यातमुपघातनाम, अधुना पराघातनामाह––

(पारमा०) यः प्रतिजिह्वागलवृन्दाद्यङ्गावयवो '**देहे स्थितः**' इति शरीरान्तः पीडाकारित्वेन स्थित आत्मन उपघातं करोति स उपघातस्य विपाक उपघातनामकर्मोदयात् स उपघातकारीति भावः । इति गाथार्थः ॥११६॥

पराघातमाह—

**तयविसदंतविसाई, अंगावयवो [3]य जो उ अन्नेसिं ।**
**जीवाण कुणइ घायं, सो परघायस्स उ विवागो ॥१२०॥**

(पू०) व्याख्या–त्वक् [4]शरीरांशो विषं यस्मिन्नङ्गावयवे स त्वग्विषः, दन्ता विषं यस्यावयवस्यासौ दन्तविषः, त्वग्विषश्च दन्तविषश्च त्वग्विषदन्तविषौ तौ आदिर्यस्यावयवस्य स त्वग्विषदन्तविषादिः, आदिशब्दान्नखविषादिपरिग्रहः । अङ्गस्यावयवोऽङ्गावयवः, '**तु**' पुनः '**यस्तु**' य एव '**अन्येषां**' आत्मव्यतिरिक्तानां '**जीवानां**' प्राणिनां '**करोति**' विधत्ते '**घातं**' विनाशं सः '**परघातनाम्न एव**' कर्मणः '**विपाकः**' अनुभवः । इति गाथार्थः ॥१२०॥ उक्तं पराघातनाम, साम्प्रतमानुपूर्व्या विषयमाह—

---

१ "०य जो अत्तणो उवघायं" इत्यपि पाठः । २ शरीरे अव० जे० ३ 'उ' इत्यपि पाठस्तदनुसारेण व्याख्याकारैर्व्याख्यातम् ॥ ४ शरीरं सविषं य० जे० ।

(पारमा०) त्वग्विषदन्तविषाद्यङ्गावयवश्च यः पुनरन्येषां जीवानां घातं करोति, चकारादधृष्यमोजो वाक्सौष्ठवं वा नृपसभादिगतस्य सभ्यादीनामपि क्षोभकृत्, प्रतिपक्षप्रतिभाप्रतिघातं च यत्करोति स पराघातस्य विपाकः । इति गाथार्थः ॥१२०॥

द्वित्रिचतुःसामयिकेन विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिगमननिमित्तमानुपूर्वीनामाह—

**नारयतिरियनरामर-भवेसु जंतस्स अंतरगईए ।**
**अणुपुव्वीए उदओ, सा चउहा [1]सुणसु जह होइ ॥१२१॥**

(पू०) व्याख्या-'नारकतिर्यङ्नरामरभवेषु' प्रतीतेषु 'जंतस्स' गच्छतः सतः 'अन्तरगतौ' अपान्तरालगतौ 'आनुपूर्व्याः' नामकर्मविशेषस्य 'उदयः' विपाकः । सा चानुपूर्वी कियत्प्रकाराः भवति ? इत्येतदाह-'चतुर्द्धा' चतुर्भेदा 'शृणुत' आकर्णयत 'यथा' येन प्रकारेण 'भवति' जायते । इति गाथार्थः ॥१२१॥

नरकानुपूर्व्या विषयमाह—

(पारमा०) नारकतिर्यङ्नरामरभवेषु गच्छतो जीवस्य 'अन्तरगत्या' अपान्तरालगत्या वक्रगमनरूपयाऽऽनुपूर्व्या उदयः सा चतुर्द्धा शृणु यथा भवति । इति गाथार्थः ॥१२१॥

**नरयाउअस्स उदए नरए वक्केण गच्छमाणस्स ।**
**नरयाणुपुव्वियाए [2]तहिँ उदओ अन्नहिं नत्थि ॥१२२॥**

(पू०) व्याख्या-'नरकायुषः' नरकेऽवस्थितिकारकस्य 'उदये' प्रादुर्भावे 'नरके' प्रतीते 'वक्रेण' कुटिलेन 'गच्छमाणस्स' इति गच्छतः सतः 'नरकानुपूर्व्याः' नरकप्रापणे रज्जुकल्पाया वृषभस्येवाभिमतदेशनयने 'उदयः' अनुभवः 'तत्र' वक्रे । 'अन्यत्र' ऋजुगतौ 'नास्ति' न विद्यते । इति गाथार्थः ॥१२२॥

उक्तो नरकानुपूर्वीविषयः, अधुना तिर्यगाद्यानुपूर्वीविषयमाह—

(पारमा०) नरकायुष उदये 'वक्रेण' कूर्परलाङ्गलगोमूत्रिकाकाररूपेण 'यथाक्रमं' द्वित्रिचतुःसमयप्रमाणेन नरके गच्छतो नरकानुपूर्व्यास्तत्रोदयः । 'अन्यत्र' ऋजुगतौ नास्ति । इति गाथार्थः ॥१२२॥

**एवं तिरिमणुदेवे, तेसुवि वक्केण गच्छमाणस्स ।**
**तेसिमणुपुव्वियाणं, [3]तहिँ उदओ अन्नहिं नत्थि ॥१२३॥**

---

१ "सुणह" इत्यपि पाठस्तत्पाठानुगन्तारो व्याख्याकाराः । २ ति, अत आह जे० । ३-४ "उदओ तहिँ" इत्यपि पाठः ।

हुशब्दस्यैवकारार्थत्वात् , भवत्येवागुरुलघुकं शरीरम् । केन ? इत्याह–'अगुरुलघुनाम्नः' कर्मणः 'उदयेन' अनुभवेन । इति गाथार्थः ॥११८॥

उक्तमगुरुलघुनाम, साम्प्रतमुपघातनामाह—

(पारमा०) आत्मापेक्षया सर्वजीवानां देहं न गुरुकं भवति, नापि लघुकं भवति, उपलक्षणत्वान्नापि गुरुलघुकं, किन्तु अगुरुलघुकं भवति । अन्यापेक्षया तु गुरुकं लघुकं गुरुलघुकं वा भवति । यदाह–"अन्नन्नविक्खाए तिन्निवि संभवंति" इति अगुरुलघुनाम्न उदयात् । इति गाथार्थः ॥११८॥

उपघातनामाह––

अंगावयवो पडिजिब्भिया'इ जो अप्पणो उवग्घायं ।
कुणइ हु देहम्मि ठिओ सो उवघायस्स उ विवागो॥११९॥

(पू०) व्याख्या–अङ्गं शिरःप्रभृति, तस्यावयवो नासिकादि प्रतिजिह्विका च । जिह्वाया उपरि लघ्वी जिह्वा प्रतिजिह्विका । योऽवयवः 'आत्मनस्तु' शरीरस्यैव 'उपघातं' विनाशं करोत्येव, हुशब्दस्यैवकारार्थत्वात् । 'देहे स्थितः' ²शरीरावस्थितः स उपघातनाम्न एव कर्मणो 'विपाकः' अनुभवः, तुशब्दस्यैवकारार्थत्वात् । इति गाथार्थः ॥११९॥ व्याख्यातमुपघातनाम, अधुना पराघातनामाह––

(पारमा०) यः प्रतिजिह्वागलवृन्दाद्यङ्गावयवो 'देहे स्थितः' इति शरीरान्तः पीडाकारित्वेन स्थित आत्मन उपघातं करोति स उपघातस्य विपाक उपघातनामकर्मोदयात् स उपघातकारीति भावः । इति गाथार्थः ॥११६॥

पराघातमाह—

तयविसदंतविसाई, अंगावयवो ³य जो उ अन्नेसिं ।
जीवाण कुणइ घायं, सो परघायस्स उ विवागो ॥१२०॥

(पू०) व्याख्या–त्वक् ⁴शरीरांशो विषं यस्मिन्नङ्गावयवे स त्वग्विषः, दन्ता विषं यस्यावयवस्यासौ दन्तविषः, त्वग्विषश्च दन्तविषश्च त्वग्विषदन्तविषौ तौ आदिर्यस्यावयवस्य स त्वग्विषदन्तविषादिः, आदिशब्दान्नखविषादिपरिग्रहः । अङ्गस्यावयवोऽङ्गावयवः, 'तु' पुनः 'यस्तु' य एव 'अन्येषां' आत्मव्यतिरिक्तानां 'जीवानां' प्राणिनां 'करोति' विधत्ते 'विघातं' विनाशं सः 'परघातनाम्न एव' कर्मणः 'विपाकः' अनुभवः । इति गाथार्थः ॥१२०॥ उक्तं पराघातनाम, साम्प्रतमानुपूर्व्या विषयमाह—

---

१ "०य जो अत्तणो उवघायं" इत्यपि पाठः । २ शरीरे अव० जे० ३ 'उ' इत्यपि पाठस्तदनुसारेण व्याख्याकारैर्व्याख्यातम् ॥ ४ शरीरं सविषं य० जे० ।

(पारमा०) त्वग्विषदन्तविषाद्यङ्गावयवश्च यः पुनरन्येषां जीवानां घातं करोति, चकारादधृष्यमोजो वाक्सौष्ठवं वा नृपसभादिगतस्य सभ्यादीनामपि क्षोभकृत्, प्रतिपक्षप्रतिभाप्रतिघातं च यत्करोति स पराघातस्य विपाकः। इति गाथार्थः ॥१२०॥

द्वित्रिचतुःसामयिकेन विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिगमननिमित्तमानुपूर्वीनामाह—

नारयतिरियनरामर-भवेसु जंतस्स अंतरगईए।
अणुपुव्वीए उदओ, सा चउहा [1]सुणसु जह होइ ॥१२१॥

(पू०) व्याख्या—'नारकतिर्यङ्नरामरभवेषु' प्रतीतेषु 'जंतस्स' गच्छतः सतः 'अन्तरगतौ' अपान्तरालगतौ 'आनुपूर्व्याः' नामकर्मविशेषस्य 'उदयः' विपाकः। सा चानुपूर्वी कियत्प्रकाराः भवति? इत्येतदाह—'चतुर्द्धा' चतुर्भेदा 'शृणुत' आकर्णयत 'यथा' येन प्रकारेण 'भवति' जायते। इति गाथार्थः ॥१२१॥

नरकानुपूर्व्या विषयमाह—

(पारमा०) नारकतिर्यङ्नरामरभवेषु गच्छतो जीवस्य 'अन्तरगत्या' अपान्तरालगत्या वक्रगमनरूपयाऽऽनुपूर्व्या उदयः सा चतुर्द्धा शृणु यथा भवति। इति गाथार्थः ॥१२१॥

नरयाउअस्स उदए नरए वक्केण गच्छमाणस्स।
नरयाणुपुव्वियाए [2]तहिँ उदओ अन्नहिं नत्थि ॥१२२॥

(पू०) व्याख्या-'नरकायुषः' नरकेऽवस्थितिकारकस्य 'उदये' प्रादुर्भावे 'नरके' प्रतीते 'वक्रेण' कुटिलेन 'गच्छमाणस्स' इति गच्छतः सतः 'नरकानुपूर्व्याः' नरकप्रापणे रज्जुकल्पाया वृषभस्येवाभिमतदेशनयने 'उदयः' अनुभवः 'तत्र' वक्रे। 'अन्यत्र' ऋजुगतौ 'नास्ति' न विद्यते। इति गाथार्थः ॥१२२॥

उक्तो नरकानुपूर्वीविषयः, अधुना तिर्यगाद्यानुपूर्वीविषयमाह—

(पारमा०) नरकायुष उदये 'वक्रेण' कूर्परलाङ्गलगोमूत्रिकाकाररूपेण 'यथाक्रमं' द्वित्रिचतुःसमयप्रमाणेन नरके गच्छतो नरकानुपूर्व्यास्तत्रोदयः। 'अन्यत्र' ऋजुगतौ नास्ति। इति गाथार्थः ॥१२२॥

एवं तिरिमणुदेवे, तेसुवि वक्केण गच्छमाणस्स।
तेसिमणुपुव्वियाणं, [3]तहिँ उदओ अन्नहिं नत्थि ॥१२३॥

---

१ "सुणह" इत्यपि पाठस्तत्पाठानुगन्तारो व्याख्याकाराः। २ ति, अत आह जे०। ३-४ "उदओ तहिँ" इत्यपि पाठः।

(पू०) व्याख्या–(एवं) उक्तनरकानुपूर्वीन्यायेन तिर्यङ्मनुजदेवान् प्रतीत्यानुपूर्व्या उदयो ज्ञातव्यः, न केवलं नरके, 'तेष्वपि' तिर्यङ्मनुजदेवेष्वपि 'वक्रेण' [1]कौटिल्येन 'गच्छमाणस्स' गच्छतः सतः 'तासामानुपूर्वीणां' तिर्यङ्मनुजदेवानुपूर्वीणां 'तत्र' तिर्यङ्मनुजदेवगतिषु वक्ररूपासु 'उदयः' विपाकः । 'अन्यत्र:' वक्रादन्यत्र 'नास्ति' न विद्यते । इति गाथार्थः ॥१२३॥

उक्तमानुपूर्वीनाम, साम्प्रतमुच्छ्वासनामाह—

(पारमा०) 'एवं तिरिमणुदेवे' इति तिर्यङ्मनुष्यदेवानामेवं नरकानुपूर्वीवदानुपूर्व्यो वाच्याः, न केवलं नरके, 'तेष्वपि' तिर्यङ्मनुष्यदेवेष्वपि वक्रेण गच्छतः, 'तेषामानुपूर्वीणामुदयः' तिर्यग्मनुष्यदेवानुपूर्वीणामुदयः 'तत्र' वक्रगतौ । 'अन्यत्र' ऋजुगतौ नास्ति । इति गाथार्थः ॥१२३॥

उच्छ्वासनामाह—

जस्सुदएणं जीवे, निष्फत्ती होइ आणपाणूणं ।
तं ऊसासं नामं, तस्स विवागो सरीरम्मि ॥१२४॥

(पू०) व्याख्या–'यस्य' कर्मणः 'उदयेन' विपाकेन 'जीवे' जीवस्य 'निष्पत्तिः' निर्वृत्तिर्भवति 'आनप्राणयोः' उच्छ्वासनिःश्वासयोः, तदुच्छ्वासनाम, उच्यत इति क्रिया । 'तस्य' चोच्छ्वासनाम्नः कर्मणो 'विपाकः' उदयः 'शरीरे' औदारिकादिलक्षणे । इति गाथार्थः ॥१२४॥

उक्तमुच्छ्वासनाम, अधुनाऽऽतपनामाह—

(पारमा०) यस्य कर्मण उदयेन जीवस्य 'आनपाननिष्पत्तिः' उच्छ्वासनिःश्वासलब्धिरुपजायते तदुच्छ्वासनाम । तस्य विपाकः शरीर इति । अयमभिप्रायः–जीवविपाकित्वेऽप्युच्छ्वासनाम्नो विशिष्ट एव शरीरे उदयः, नापान्तरालगत्यादौ । इति गाथार्थः ॥१२४॥

आतपनामाह—

जस्सुदएणं जीवे, होइ सरीरं तु ताविलं इत्थ ।
सो आयवे विवागो, जह रविबिंबे तहा जाण ॥१२५॥

(पू०) व्याख्या–'यस्य' कर्मणः 'उदयेन' विपाकेन 'जीवे' जीवस्य, षष्ठ्यर्थे सप्तमी सर्वत्र द्रष्टव्या, अकारान्तं वा पदं प्राकृतत्वादेकारान्तम् , 'भवति' जायते 'शरीरं' प्रतीतं, तुशब्दस्यैवकारार्थत्वात् , 'ताविलमेव' तापयुक्तमेव 'अत्र' अस्मिन् लोके, स आपतनाम्नः कर्मणः 'विपाकः' उदयः, क इव ? इत्याह–यथा रविबिम्बे आतपनामोदयस्तथा विवक्षितशरीरे 'जानीहि' अवबुध्यस्व । इति गाथार्थः ॥१२५॥

---

१ कुटिलेन गच्छमानस्य जे०

ननु यथा रवेः संतापकत्वेनातपनामोदयः प्रतिपाद्यते तथा तेजःकायिकस्यापि संतापकत्वेनातपनामोदयः स्यात् ? [1]इत्याशङ्क्य परिहारार्थमाह—

(पारमा०) यस्य कर्मण उदयाज्जीवस्य शरीरं तापवदुष्णप्रकाशकारि भवति स आतपस्य विपाकः । यथा 'रविबिम्बे' आदित्यमण्डले पृथ्वीकायिकेषु तथा जानीहि, अन्यत्र तु न भवति । यदयमेवाह शतकबृहच्चूर्णौ–"आयवनामं आइच्चमंडलपुढविकाइएसु चेव" । इति गाथार्थः ॥१२५॥

आतपनामोदयश्च तेजःकायिकेषु न भवति इत्याह—

[2]न भवइ तेयसरीरे, जेण उ तेयस्स उसिणफासस्स ।
होइ हु उदओ नियमा, तह लोहियवण्णनामस्स ॥१२६॥

(पू०) व्याख्या–'किं नवि' इति [3]पोल्लिकया किमिति कृत्वा 'तेजःशरीरे' तेजस्कायिकदेहे आतपनामोदयो नोच्यते ?, इत्याह–'भण्यते' उच्यते 'तेजसः' अग्नेः 'उष्णस्पर्शस्यैव' अशीतस्पर्शस्यैव स्पर्शनाम्नः कर्मण उदयो 'भवति' संपद्यते, हुशब्दस्यैवकारार्थत्वात् 'उदयः' विपाकः 'नियमात्' अवश्यंतया न आतपनाम्नः । तथेति समुच्चयार्थः । न केवलमुष्णस्पर्शनाम्न उदयः 'लोहितवर्णनाम्नश्च' रक्तवर्णनाम्नश्चोदयः । इति गाथार्थः ॥१२६॥

उक्तमातपनाम, साम्प्रतमुद्द्योतनामाह—

(पारमा०) न भवति तेजःशरीरे आतपनामकर्मोदय इति संबन्धनीयम् । कथं तर्हि तेषूष्णत्वम् ? [4]इति चेदत्राह–'येन' हेतुना तेजसो नियमादुष्णस्पर्शस्योदय इति, तर्हि प्रकाशकत्वं कथम् ? इत्याह–तथा लोहितवर्णनाम्नश्चोदयो भवति उष्णस्पर्शादुष्णत्वम्, उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वम् । इति गाथार्थः ॥१२६॥ उद्द्योतनामाह—

जस्सुदएणं जीवो, अणुसिणदेहेण कुणइ उज्जोयं ।
तं उज्जोयं नामं, जाणसु खज्जोयमाईणं ॥१२७॥

(पू०) व्याख्या–'यस्य' कर्मणः 'उदयेन' विपाकेन 'जीवः' प्राणी 'अनुष्णदेहेन' उष्णरहितशरीरेण 'करोति' विधत्ते 'उद्द्योतं' प्रकाशं तत्कर्म उद्द्योतनामकर्म 'जानीहि' अवबुध्यस्व तदुद्द्योतनाम । यथा खद्योतादीनां, आदिशब्दादौषध्यादीनामुद्द्योतनाम । इति गाथार्थः ॥१२७॥

उक्तमुद्द्योतनाम, साम्प्रतं शुभाशुभभेदाद् विहायोगतिमभिधातुकाम आद्यभेदमाह—

---

१ इत्याशङ्कापरि० जे० । २ "किन्न हु" इत्यपि पाठः, व्याख्याकारेण तु "किं नवि तेयसरीरे भण्णइ तेयस्स" इति पाठानुसारेण व्याख्यातमस्ति ३ पोलिकया जे० ४ "इत्यावेदयन्नाह" इत्यपि ।

(पू०) व्याख्या–(एवं) उक्तनरकानुपूर्वीन्यायेन तिर्यङ्मनुजदेवान् प्रतीत्यानुपूर्व्या उदयो ज्ञातव्यः, न केवलं नरके, '**तेष्वपि**' तिर्यङ्मनुजदेवेष्वपि '**वक्रेण**' [1]कौटिल्येन '**गच्छमाणस्स**' गच्छतः सतः '**तासामानुपूर्वीणां**' तिर्यङ्मनुजदेवानुपूर्वीणां '**तत्र**' तिर्यङ्मनुजदेवगतिषु वक्ररूपासु '**उदयः**' विपाकः । '**अन्यत्रः**' वक्रादन्यत्र '**नास्ति**' न विद्यते । इति गाथार्थः ॥१२३॥

उक्तमानुपूर्वीनाम, साम्प्रतमुच्छ्वासनामाह—

(पारमा०) '**एवं तिरिमणुदेवे**' इति तिर्यङ्मनुष्यदेवानामेवं नरकानुपूर्वीवदानुपूर्व्यो वाच्याः, न केवलं नरके, '**तेष्वपि**' तिर्यङ्मनुष्यदेवेष्वपि वक्रेण गच्छतः, '**तेषामानुपूर्वीणामुदयः**' तिर्यग्मनुष्यदेवानुपूर्वीणामुदयः '**तत्र**' वक्रगतौ । '**अन्यत्र**' ऋजुगतौ नास्ति । इति गाथार्थः ॥१२३॥

उच्छ्वासनामाह—

**जस्सुदएणं जीवे, निप्फत्ती होइ आणपाणूणं ।**
**तं ऊसासं नामं, तस्स विवागो सरीरम्मि ॥१२४॥**

(पू०) व्याख्या–'**यस्य**' कर्मणः '**उदयेन**' विपाकेन '**जीवे**' जीवस्य '**निष्पत्तिः**' निर्वृत्तिर्भवति '**आनप्राणयोः**' उच्छ्वासनिःश्वासयोः, तदुच्छ्वासनाम, उच्यत इति क्रिया । '**तस्य**' चोच्छ्वासनाम्नः कर्मणो '**विपाकः**' उदयः '**शरीरे**' औदारिकादिलक्षणे । इति गाथार्थः ॥१२४॥

उक्तमुच्छ्वासनाम, अधुनाऽऽतपनामाह—

(पारमा०) यस्य कर्मण उदयेन जीवस्य '**आनपाननिष्पत्तिः**' उच्छ्वासनिःश्वासलब्धिरुपजायते तदुच्छ्वासनाम । तस्य विपाकः शरीर इति । अयमभिप्रायः—जीवविपाकित्वेऽप्युच्छ्वासनाम्नो विशिष्ट एव शरीरे उदयः, नापान्तरालगत्यादौ । इति गाथार्थः ॥१२४॥

आतपनामाह—

**जस्सुदएणं जीवे, होइ सरीरं तु ताविलं इत्थ ।**
**सो आयवे विवागो, जह रविबिंबे तहा जाण ॥१२५॥**

(पू०) व्याख्या–'**यस्य**' कर्मणः '**उदयेन**' विपाकेन '**जीवे**' जीवस्य, षष्ठ्यर्थे सप्तमी सर्वत्र द्रष्टव्या, अकारान्तं वा पदं प्राकृतत्वादेकारान्तम् , '**भवति**' जायते '**शरीरं**' प्रतीतं, तुशब्दस्यैवकारार्थत्वात् , '**ताविलमेव**' तापयुक्तमेव '**अत्र**' अस्मिन् लोके, स आपतनाम्नः कर्मणः '**विपाकः**' उदयः, क इव ? इत्याह–यथा रविबिम्बे आतपनामोदयस्तथा विवक्षितशरीरे '**जानीहि**' अवबुध्यस्व । इति गाथार्थः ॥१२५॥

---

१ कुटिलेन गच्छमानस्य जे०

ननु यथा रवेः संतापकत्वेनातपनामोदयः प्रतिपाद्यते तथा तेजःकायिकस्यापि संतापकत्वेनातपनामोदयः स्यात् ? [1]इत्याशङ्क्य परिहारार्थमाह—

(पारमा०) यस्य कर्मण उदयाज्जीवस्य शरीरं तापवदुष्णप्रकाशकारि भवति स आतपस्य विपाकः। यथा 'रविबिम्बे' आदित्यमण्डले पृथ्वीकायिकेषु तथा जानीहि, अन्यत्र तु न भवति। यदयमेवाह शतकबृहच्चूर्णौ–"आयवनामं आइच्चमंडलपुढविकाइएसु च्चेव"। इति गाथार्थः ॥१२५॥

आतपनामोदयश्च तेजःकायिकेषु न भवति इत्याह—

[2]न भवइ तेयसरीरे, जेण उ तेयस्स उसिणफासस्स।
होइ हु उदओ नियमा, तह लोहियवण्णनामस्स ॥१२६॥

(पू०) व्याख्या–'किं नवि' इति [3]पोल्लिकया किमिति कृत्वा 'तेजःशरीरे' तेजस्कायिकदेहे आतपनामोदयो नोच्यते ?, इत्याह–'भण्यते' उच्यते 'तेजसः' अग्नेः 'उष्णस्पर्शस्यैव' अशीतस्पर्शस्यैव स्पर्शनाम्नः कर्मण उदयो 'भवति' संपद्यते, हुशब्दस्यैवकारार्थत्वात् 'उदयः' विपाकः 'नियमात्' अवश्यंतया न आतपनाम्नः। तथेति समुच्चयार्थः। न केवलमुष्णस्पर्शनाम्न उदयः 'लोहितवर्णनाम्नश्च' रक्तवर्णनाम्नश्चोदयः। इति गाथार्थः ॥१२६॥

उक्तमातपनाम, साम्प्रतमुद्द्योतनामाह—

(पारमा०) न भवति तेजःशरीरे आतपनामकर्मोदय इति संबन्धनीयम्। कथं तर्हि तेपूष्णत्वम् ? [4]इति चेदत्राह–'येन' हेतुना तेजसो नियमादुष्णस्पर्शस्योदय इति, तर्हि प्रकाशकत्वं कथम् ? इत्याह–तथा लोहितवर्णनाम्नश्चोदयो भवति उष्णस्पर्शादुष्णत्वम्, उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वम्। इति गाथार्थः ॥१२६॥ उद्द्योतनामाह—

जस्सुदएणं जीवो, अणुसिणदेहेण कुणइ उज्जोयं।
तं उज्जोयं नामं, जाणसु खज्जोयमाईणं ॥१२७॥

(पू०) व्याख्या–'यस्य' कर्मणः 'उदयेन' विपाकेन 'जीवः' प्राणी 'अनुष्णदेहेन' उष्णरहितशरीरेण 'करोति' विधत्ते 'उद्द्योतं' प्रकाशं तत्कर्म उद्द्योतनामकर्म 'जानीहि' अवबुध्यस्व तदुद्द्योतनाम। यथा खद्योतादीनां, आदिशब्दादौषध्यादीनामुद्द्योतनाम। इति गाथार्थः ॥१२७॥

उक्तमुद्द्योतनाम, साम्प्रतं शुभाशुभभेदाद् विहायोगतिमभिधातुकाम आद्यभेदमाह—

---

१ इत्याशङ्कापरि० जे०। २ "किन्न हु" इत्यपि पाठः, व्याख्याकारेण तु "किं नवि तेयसरीरे भण्णइ" इति पाठानुसारेण व्याख्यातमस्ति ३ बोल्लिकया जे० ४ "इत्यावेदयन्नाह" इत्यपि।

(पारमा०) यस्योदयाज्जीवः 'अणुसिण' इति लुप्तविभक्तित्वादनुष्णं देहे नोद्द्योतं करोति। यदाह अयमेव शतकवृहच्चूर्णौ-"अणुसिणो पगासो जस्सोदयाओ भवइ तं उज्जोयनामं" इति। तदुद्द्योतनाम जानीहि खद्योतादीनाम्. आदिशब्दाच्चन्द्रग्रहनक्षत्रग्लादीनां परिग्रहः। इति गाथार्थः ॥१२७॥ विहायोगतिमाह—

जस्सुदएणं जीवो, वर[1]वसहगईए गच्छइ गईए।
[2]सा सुहिया विहगगई, हंसाईणं भवे सा उ ॥१२८॥

(पू०) व्याख्या-'यस्याः' शुभविहायोगतेः 'उदयेन' विपाकेन 'जीवः' सामान्येन प्राणी 'गच्छति' याति गत्या। किंविशिष्टया? इत्याह-'वरवृषभगत्या' वृषभो=बलीवर्दः, वरः=प्रधानः, वरश्चासौ वृषभश्च वरवृषभः तस्य गतिस्तया, वरवृषभस्येव गतिः पुरुषस्य यत्र इत्यभिप्रायः। सा च 'शुभा' प्रशस्ता शुभैव, चशब्दस्यैवकारार्थत्वात्, विहायोगतिरिति वक्तव्या। [3]'विहाय(ो)गतिनामकर्म' इति पाठः प्राकृत[4]त्वाद्ध(ढ)कारस्याकारलोपे ओलोपे च। सा च केषां भवति? इत्याह-हंसादीनां, आदिशब्दान्मतङ्गजादिपरिग्रहः, 'भवेत्' जायेत। तुशब्दस्यैवकारार्थत्वात्। इति गाथार्थः ॥१२८॥

उक्ता प्रशस्ता गतिः, अप्रशस्तगतिमाह—

(पारमा०) विहायसाऽऽकाशेन गतिर्विहायोगतिः। ननु विहायसः सर्वगतत्वात्तदन्यत्र गतिसंभवाभावाद्विहायोविशेषणमनर्थकम्, नैवम्, विहायोग्रहणं नाम्नः प्रथमप्रकृतिगतितोऽस्या विशेषणार्थम्। ततो यस्य कर्मण उदयाज्जीवो वरवृषभगत्या गच्छति सा शुभैव शुभिका विहायोगतिः। सा तु हंसादीनां आदिशब्दाद्गजवृषभादीनां भवेत्। इति गाथार्थः ॥१२८॥

अशुभविहायोगतिमाह—

जस्सुदएणं जीवो, अमणिट्ठाए [5]उ गच्छइ गईए।
सा असुभा विहगगई, उट्टाईणं भवे सा उ ॥१२९॥

(पू०) व्याख्या-'यस्य' कर्मण 'उदयेन' विपाकेन 'जीवः' प्राणी 'अमणिट्ठाए उ' अमनोज्ञयैव 'गच्छति' याति 'गत्या' पादविहरणादिलक्षणया, सा 'अशुभा' अशोभना विहायोगतिर्नामकर्म, सा च केषां भवति? इत्याह-उष्ट्रादीनां, आदिशब्दाद्रासभादीनां 'भवेत्' जायेत। 'सा तु' सा पुनरुष्ट्रादीनामेव, नान्येषाम्। इति गाथार्थः।

---

१ "०वसभ०" इत्यपि पाठः। २ "सा सुहया" इत्यपि पाठः। "सा य सुहा" इति व्याख्याकाराः। ३ "विहगगतिर्ना०" जे० ।४ ०त्वात् हस्याकारलोपे ढलोपे च। सा जे० । ५ "य" इत्यपि पाठः।

उक्ता द्विधाऽपि विहायोगतिः साम्प्रतं त्रसादिदशकसंज्ञामाह—

(पारमा०) यस्य कर्मण उदयाज्जीवो, मनस इष्टा-मनइष्टा, न मनइष्टा अमनइष्टा अशुभेत्यर्थः, तया गत्या गच्छति साऽशुभा विहायोगतिः, सा तृष्ट्रादीनां आदिशब्दात्खगदीनां भवेत् । इति गाथार्थः ॥१२९॥

सम्प्रति त्रसादिदशकमाह—

तसबायरपज्जत्तं, पत्तेयथिरं सुभं च सुभगं च ।
सूसरआइज्जजसं, तसाइदसगं इमं होइ ॥१३०॥

(पू०) व्याख्या—त्रसनाम, नामशब्दस्य प्रत्येकं संबन्धः, बादरं पर्याप्तं प्रत्येकं स्थिरं शुभं च सुभगं च सुस्वरआदेययशः । त्रसादिदशकं 'इदं' उक्तलक्षणं 'भवति' ज्ञातव्यम् । इति गाथार्थः ॥१३०॥

त्रसादिदशक एवापान्तरसंज्ञाद्वयमाह—

(पारमा०) त्रसं १ बादरं २ पर्याप्तं ३ प्रत्येकं ४ स्थिरं ५ शुभं च ६ सुभगं च ७ सुस्वरं ८ आदेयं ९ 'जसं' इति यशःकीर्त्तिः १० । त्रसादिदशकमिदं नामग्रहोपदर्शितं भवति । इति गाथार्थः ॥१३०॥

त्रसादिदशकस्यैव संज्ञाद्वयविभागमाह—

आइम्मि तसचउक्कं, थिराइछक्कं तु उवरिमं होइ ।
थावरदसगं अहुणा, [1]थावरसुहुमं अपज्जत्तं ॥१३१॥
होइ तहा साहारं, अथिरं असुभं च दूभगं चेव ।
दूसरणाइज्जेहिं य अजसेहिं य बीयदसगं तु ॥१३२॥

(पू०) व्याख्या—'आदौ' प्रथमं त्रसचतुष्कं भवति ज्ञातव्यम् । त्रसबादरपर्याप्तप्रत्येकनामानि । स्थिरादिषट्कं तु स्थिरशुभसुभगसुस्वरआदेययशांसि, पुनरुपरिमं षट्कं स्थिरादिषट्कसंज्ञं भवति विज्ञेयम् । उक्तं त्रसादिदशकं संज्ञात्रयं, स्थावरदशकसंज्ञाचतुष्कमधुनोच्यते—इति वाक्यशेषः । स्थावरसूक्ष्मं च साधारणमिति स्थावरनाम सूक्ष्मनाम च साधारणनाम स्थावरदशकान्तर्वर्त्ति विज्ञेयम् । इति गाथार्थः ॥१३१॥ तथा भवत्यपर्याप्तं नाम 'अस्थिरं' अस्थिरनाम 'अशुभं च' अशुभनाम 'दुर्भगं चैव' दुर्भगनामैव, दुःस्वरानादेयनामभ्यामयशःकीर्त्या च सह

१ "थावरसुहुमं च साहारं ॥१३१॥ तह होइ अपज्जत्त" इत्यपि पाठस्तदनुसारेण व्याख्याकारैर्व्याख्यातम् । पश्चमेनं पाठं परमानन्दसूरयस्तु अपपाठतया व्याख्यान्ति ॥

(पारमा०) यस्योदयाज्जीवः 'अणुसिण' इति लुप्तविभक्तित्वादनुष्णं देहेनोद्द्योतं करोति । यदाह अयमेव शतकबृहच्चूर्णौ-"अणुसिणा पगासो जस्सोदयाओ भवइ तं उज्जोयनामं" इति । तदुद्द्योतनाम जानीहि खद्योतादीनाम् . आदिशब्दाच्चन्द्रग्रहनक्षत्रग्ला-दीनां परिग्रहः । इति गाथार्थः ॥१२७॥ विहायोगतिमाह—

**जस्सुदएणं जीवो, वर[1]वसहगईए गच्छइ गईए ।**
**[2]सा सुहिया विहगगई, हंसाईणं भवे सा उ ॥१२८॥**

(पू०) व्याख्या-'**यस्याः**' शुभविहायोगतेः '**उदयेन**' विपाकेन '**जीवः**' सामान्येन प्राणी '**गच्छति**' याति गत्या । किंविशिष्टया ? इत्याह-'**वरवृषभगत्या**' वृषभो=बलीवर्दः, वरः= प्रधानः, वरश्चासौ वृषभश्च वरवृषभः तस्य गतिस्तया, वरवृषभस्येव गतिः पुरुषस्य यत्र इत्यभि-प्रायः । सा च '**शुभा**' प्रशस्ता शुभैव, चशब्दस्यैवकारार्थत्वात्, विहायोगतिरिति वक्तव्या । [3]'**विहाय(ो)गतिनामकर्म**' इति पाठः प्राकृत[4]त्वाद्व(द्व)कारस्याकारलोपे ओलोपे च । सा च केषां भवति ? इत्याह-हंसादीनां, आदिशब्दान्मतङ्गजादिपरिग्रहः, '**भवेत्**' जायेत । तुशब्दस्यै-वकारार्थत्वात् । इति गाथार्थः ॥१२८॥

उक्ता प्रशस्ता गतिः, अप्रशस्तगतिमाह—

(पारमा०) विहायसाऽऽकाशेन गतिर्विहायोगतिः । ननु विहायसः सर्वगतत्वात्तदन्यत्र गतिसंभवाभावाद्विहायोविशेषणमनर्थकम्, नैवम्, विहायोग्रहणं नाम्नः प्रथमप्रकृतिगतितोऽस्या विशेषणार्थम् । ततो यस्य कर्मण उदयाज्जीवो वरवृषभगत्या गच्छति सा शुभैव शुभिका विहा-योगतिः । सा तु हंसादीनां आदिशब्दाद्गजवृषभादीनां भवेत् । इति गाथार्थः ॥१२८॥

अशुभविहायोगतिमाह—

**जस्सुदएणं जीवो, अमणिट्ठाए [5]उ गच्छइ गईए ।**
**सा असुभा विहगगई, उट्टाईणं भवे सा उ ॥१२९॥**

(पू०) व्याख्या-'**यस्य**' कर्मण '**उदयेन**' विपाकेन '**जीवः**' प्राणी '**अमणिट्ठाए उ**' अमनोज्ञयैव '**गच्छति**' याति '**गत्या**' पादविहरणादिलक्षणया, सा '**अशुभा**' अशोभना विहायोगतिर्नामकर्म, सा च केषां भवति ? इत्याह-उष्ट्रादीनां, आदिशब्दाद्रासभादीनां '**भवेत्**' जायेत । '**सा तु**' सा पुनरुष्ट्रादीनामेव, नान्येषाम् । इति गाथार्थः ।

---

१ "०वसभ०" इत्यपि पाठः । २ "सा सुहया" इत्यपि पाठः । "सा य सुहा" इति व्याख्याकाराः । ३ "विहगगतिर्ना०" जे० ।४ ०त्वात् हस्याकारलोपे रलोपे च । सा जे० । ५ "य" इत्यपि पाठः ।

उक्ता द्विधाऽपि विहायोगतिः साम्प्रतं त्रसादिदशकसंज्ञामाह—

(पारमा०) यस्य कर्मण उदयाज्जीवो, मनस इष्टा मनइष्टा, न मनइष्टा अमनइष्टा अशुभेत्यर्थः, तया गत्या गच्छति साऽशुभा विहायोगतिः, सा तूष्ट्रादीनां आदिशब्दात्खरादीनां भवेत् । इति गाथार्थः ॥१२९॥

सम्प्रति त्रसादिदशकमाह—

तसबायरपज्जत्तं, पत्तेयथिरं सुभं च सुभगं च ।
सूसरआइज्जजसं, तसाइदसगं इमं होइ ॥१३०॥

(पू०) व्याख्या—त्रसनाम, नामशब्दस्य प्रत्येकं संबन्धः, बादरं पर्याप्तं प्रत्येकं स्थिरं शुभं च सुभगं च सुस्वरआदेययशः । त्रसादिदशकं 'इदं' उक्तलक्षणं 'भवति' ज्ञातव्यम् । इति गाथार्थः ॥१३०॥

त्रसादिदशक एवापान्तरसंज्ञाद्वयमाह—

(पारमा०) त्रसं १ बादरं २ पर्याप्तं ३ प्रत्येकं ४ स्थिरं ५ शुभं च ६ सुभगं च ७ सुस्वरं ८ आदेयं ९ 'जसं' इति यशःकीर्त्तिः १० । त्रसादिदशकमिदं नामग्रहोपदर्शितं भवति । इति गाथार्थः ॥१३०॥

त्रसादिदशकस्यैव संज्ञाद्वयविभागमाह—

आइम्मि तसचउक्कं, थिराइछक्कं तु उवरिमं होइ ।
थावरदसगं अहुणा, [1]थावरसुहुमं अपज्जत्तं ॥१३१॥
होइ तहा साहारं, अथिरं असुभं च दूभगं चेव ।
दूसरणाइज्जेहिं य अजसेहिं य बीयदसगं तु ॥१३२॥

(पू०) व्याख्या—'आदौ' प्रथमं त्रसचतुष्कं भवति ज्ञातव्यम् । त्रसबादरपर्याप्तप्रत्येकनामानि । स्थिरादिषट्कं तु स्थिरशुभसुभगसुस्वरआदेययशांसि, पुनरुपरिमं षट्कं स्थिरादिषट्कसंज्ञं भवति विज्ञेयम् । उक्तं त्रसादिदशकं संज्ञात्रयं, स्थावरदशकसंज्ञाचतुष्कमधुनोच्यते—इति वाक्यशेषः । स्थावरसूक्ष्मं च साधारणमिति स्थावरनाम सूक्ष्मनाम च साधारणनाम स्थावरदशकान्तर्वर्त्ति विज्ञेयम् । इति गाथार्थः ॥१३१॥ तथा भवत्यपर्याप्तं नाम 'अस्थिरं' अस्थिरनाम 'अशुभं च' अशुभनाम 'दुर्भगं चैव' दुर्भगनामैव, दुःस्वरानादेयनामभ्यामयशःकीर्त्या च सह

१ "थावरसुहुमं च साहारं ॥१३१॥ तह होइ अपज्जत्त" इत्यपि पाठस्तदनुसारेण व्याख्याकारैर्व्याख्यातम्, परमेनं पाठं परमानन्दसूरयस्तु अपपाठतया व्याख्यान्ति ॥

द्वितीयदशकं तु पुनरेतैर्नामभेदैर्भवति । दुःस्वरानादेयैः, बहुवचनं प्राकृतत्वात् **"बहुवयणेण दुवयणं"** इत्याद्युक्तेः । **'अजसेहिं य'** अत्र बहुवचनमयशःकीर्त्तेरनेकधा ख्यापनार्थम् । इति गाथार्थः ॥१३२॥

अस्यैव स्थावरदशकस्यान्तर्वर्त्तिसंज्ञात्रयमाह—

(पारमा०) **'आद्ये'** प्रकृतिपिण्डे त्रसचतुष्कमिति संज्ञा भवति **'स्थिरादिषट्कं तु'** स्थिरादिषट्कसंज्ञं तु **'उपरिमं'** प्रकृतिपिण्डरूपं भवति इत्युक्तं प्रकृतिदशकस्य समस्तव्यस्तस्य त्रसदशकत्रसचतुष्कस्थिरादिषट्कलक्षणं संज्ञात्रयम् । द्वितीयं दशकं प्रस्तावनापूर्वमाह—स्थावरदशकमधुनोच्यत इति शेषः । स्थावरं १ सूक्ष्मं २ अपर्याप्तम् ३ ॥१३१॥ **'होइ तहा साहारं'** इति, भवतीत्यग्रे योक्ष्यते । साधारणं साधारणनाम ४ । **"थावरसुहुमं च साहारं ॥ तह होइ अपजत्तं"** इति त्वपपाठः पर्याप्तप्रत्येकयोः सेतरत्वस्योच्छृङ्खलतापत्तेः । अस्थिरं ५ अशुभं ६ च दुर्भगं चैव ७ **'दूसरणाइज्जेहि य'** इति दुःस्वरा ८ नादेयाभ्यां ९, **'अजसेहिं'** य इति अयशःकीर्त्तिनाम १० च द्वितीयदशकं भवति । इति गाथाद्वयार्थः ॥१३२॥

स्थावरदशकस्यापान्तरालसंज्ञात्रयमाह—

आइम्मि थावरचऊ, सुहुमतिगं उवरिमं भवे इत्थ ।
अथिराइछक्कमुवरिं, [1]विवागभेयं अओ भणिमो ॥१३३॥

(पू०) व्याख्या—**'आदौ'** प्रथमं **'स्थावरचतुः'** स्थावरसूक्ष्मसाधारणापर्याप्तनामानि स्थावरचतुष्कसंज्ञं भवति विज्ञेयमिति शेषः । **'सूक्ष्मत्रिकं'** सूक्ष्मत्रिकसंज्ञं **'उपरिमं'** स्थावरनाम्न ऊर्ध्वं सूक्ष्मसाधारणापर्याप्तनामानि सूक्ष्मत्रिकसंज्ञं भवेत् **'अत्र'** शासने अस्थिरादिषट्कमुपरि तस्यैव स्थावरदशकस्याद्यं स्थावरचतुष्कं विहाय । अस्थिर १ अशुभ २ दुर्भग ३ दुःस्वर ४ अनादेय ५ अयशांसि ६ षट् अस्थिरादिषट्कमुच्यते । **'विपाक[2]भेदः'** अनुभवभेदः **'एतासां'** नामप्रकृतीनां **'अयं'** वक्ष्यमाणलक्षणो **'भणितः'** प्रतिपादितः । ननु किमर्थमिदं संज्ञाकरणम् ?, उच्यते—शास्त्रे व्यवहारार्थम् । इति गाथार्थः ॥१३३॥

त्रसनाम्न उदयमाह—

(पारमा०) **'आद्ये'** प्रकृतिपिण्डे **'थावरचऊ'** इति स्थावरेणोपलक्षितं चतुष्कं स्थावरसूक्ष्मापर्याप्तकसाधारणलक्षणं स्थावरचतुष्कसंज्ञमिति गम्यम् । **'सूक्ष्मत्रिकं'** सूक्ष्मत्रिकसंज्ञं **'उपरिमं'** स्थावरस्य सूक्ष्मअपर्याप्तकसाधारणलक्षणं भवेत् **'अत्र'** स्थावरदशके च **'अस्थिरा-**

---

१ "विवागभेओ इमो होइ" इत्यपि पाठः । व्याख्याकारेण तु "विवागभेओ इमो भणिओ" इति पाठानुसारेण व्याख्यातमस्ति २ ०भेदश्चानुभवभेदश्चैतासां जे० ।

**विषट्कं** अस्थिरादिषट्कसंज्ञं उपरि सूक्ष्मत्रिकस्य अस्थिरअशुभदुर्भगदुःस्वरअनादेयअयशःकीर्ति-लक्षणं विपाकभेदम्, अतः संज्ञाचतुष्टयभणनानन्तरं भणामः इति गाथार्थः ॥१३३॥

सम्प्रति सेतरत्वक्रमेण त्रसस्थावरयोर्विपाकमाह—

**तसनामुदए जीवो, बेइंदियमाइ जाइ [1]जीवेसु ।**
**थावरनामुदए [2]पुण पुढवीमाईसु सो जाइ ॥१३४॥**

(पू०) व्याख्या–'**त्रसनाम्नः**' कर्मणः '**उदये**' विपाके '**जीवः**' प्राणी '**द्वीन्द्रियादिः** आदिशब्दात्त्रीन्द्रियादयः पञ्चेन्द्रियावसाना गृह्यन्ते, मकारोऽलाक्षणिकः प्राकृतत्वात्, तेषु '**याति**' गच्छति, जीवेषूत्पद्यत इत्यभिप्रायः । '**स्थावरनाम्नः**' कर्मणः '**उदये**' विपाके पुनः '**पृथिव्यादिषु**' आदिशब्दादप्तेजोवायुवनस्पतिषु मकारोऽत्राप्यलाक्षणिकः '**सः**' जीवो '**याति**' उत्पद्यते । इति गाथार्थः ॥१३४॥

उक्तस्त्रसस्थावरनामोदयः, साम्प्रतं बादरसूक्ष्मोदयस्वरूपमाह—

(पारमा०) त्रस्यन्ति उष्णाद्यभितप्ताश्छायाद्यासेवनार्थं स्थानान्तरमिति त्रसाः. तद्विपाकवेद्यं नाम त्रसनाम, तस्योदये जीवो '**द्वीन्द्रियादिजीवेषु**' द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियेषु '**याति**' गच्छति । तद्विपरीतं स्थावरनाम तस्योदये पुनरुष्णाद्यभितापेऽपि तत्स्थानपरिहारा-समर्थेषु '**पृथिव्यादिषु**' पृथिव्यप्तेजोवायुवनस्पतिषु स जीवो याति । ननु अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमिति कथमनयोः स्थावरत्वमिति ?, सत्यम्, ऊर्ध्वज्वलनं तिर्यक्पवनं चैतयोः स्वाभाविकमेव न तूष्णाद्यभितापे द्वीन्द्रियादीनामिव । तथाहि–अग्नेर्विध्यापकजलधारास्वपि न परिहारबुद्धिर्वायोर्वा विनाशकाभावपीति, तस्मात्स्वाभाविकगमने बुद्धिपूर्वकत्वाभावात्स्थावरत्वं न विरुद्धम् । इति गाथार्थः ॥१३४॥

अधुना बादरसूक्ष्मे आह—

**बायरनामुदएणं. बायरकाओ [3]उ होइ सो नियमा ।**
**सुहुमेण सुहुमकाओ. अंतमुहुत्ताउओ होइ ॥१३५॥**

(पू०) व्याख्या–'**बादरनाम्नः**' कर्मणः '**उदयेन**' विपाकेन '**बादरकाय एव**' स्थूलकाय एव '**भवति**' जायते, '**सः**' जीवः '**नियमात्**' अवश्यंतया '**सूक्ष्मेण**' सूक्ष्मनामकर्मोदयेन '**सूक्ष्मकायः**' श्लक्ष्णकायो भवति । स च भवन् कियत्कालायुर्भवति ? इत्याह–'**अन्तर्मुहूर्तायुर्भवति**' मुहूर्तमध्ये कालं करोतीत्यर्थः । इति गाथार्थः ॥१३५॥

---

१ "जाईसु" इत्यपि पाठः । २ "णं" इत्यपि पाठ । ३ "य" इत्यपि पाठः ।

द्वितीयदशकं तु पुनरेतैर्नामभेदैर्भवति । दुःस्वरानादेयैः, बहुवचनं प्राकृतत्वात् **"बहुवयणेण दुवयणं"** इत्याद्युक्तेः । **'अजसेहिं य'** अत्र बहुवचनमयशःकीर्त्तेरनेकधा ख्यापनार्थम् । इति गाथार्थः ॥१३२॥

अस्यैव स्थावरदशकस्यान्तर्वर्त्तिसंज्ञात्रयमाह—

(पारमा०) **'आद्ये'** प्रकृतिपिण्डे त्रसचतुष्कमिति संज्ञा भवति **'स्थिरादिषट्कं तु'** स्थिरादिषट्कसंज्ञं तु **'उपरिमं'** प्रकृतिपिण्डरूपं भवति इत्युक्तं प्रकृतिदशकस्य समस्तव्यस्तस्य त्रसदशकत्रसचतुष्कस्थिरादिषट्कलक्षणं संज्ञात्रयम् । द्वितीयं दशकं प्रस्तावनापूर्वमाह—स्थावरदशकमधुनोच्यत इति शेषः । स्थावरं १ सूक्ष्मं २ अपर्याप्तम् ३ ॥१३१॥ **'होइ तहा साहारं'** इति, भवतीत्यग्रे योक्ष्यते । साधारणं साधारणनाम ४ । **"थावरसुहुमं च साहारं ॥ तह होइ अपजत्तं"** इति त्वपपाठः पर्याप्तप्रत्येकयोः सेतरत्वस्योच्छृङ्खलतापत्तेः । अस्थिरं ५ अशुभं ६ च दुर्भगं चैव ७ **'दूसरणाइज्जेहि य'** इति दुःस्वरा ८ नादेयाभ्यां ९, **'अजसेहिं'** य इति अयशःकीर्त्तिनाम १० च द्वितीयदशकं भवति । इति गाथाद्वयार्थः ॥१३२॥

स्थावरदशकस्यापान्तरालसंज्ञात्रयमाह—

**आइम्मि थावरचऊ, सुहुमतिगं उवरिमं भवे इत्थ ।**
**अथिराइछक्कमुवरिं, [1]विवागभेयं अओ भणिमो ॥१३३॥**

(पू०) व्याख्या—**'आदौ'** प्रथमं **'स्थावरचतुः'** स्थावरसूक्ष्मसाधारणापर्याप्तनामानि स्थावरचतुष्कसंज्ञं भवति विज्ञेयमिति शेषः । **'सूक्ष्मत्रिकं'** सूक्ष्मत्रिकसंज्ञं **'उपरिमं'** स्थावरनाम्न ऊर्ध्वं सूक्ष्मसाधारणापर्याप्तनामानि सूक्ष्मत्रिकसंज्ञं भवेत् **'अत्र'** शासने अस्थिरादिषट्कमुपरि तस्यैव स्थावरदशकस्याद्यं स्थावरचतुष्कं विहाय । अस्थिर १ अशुभ २ दुर्भग ३ दुःस्वर ४ अनादेय ५ अयशांसि ६ षट् अस्थिरादिषट्कमुच्यते । **'विपाक[2]भेदः'** अनुभवभेदः **'एतासां'** नामप्रकृतीनां **'अयं'** वक्ष्यमाणलक्षणो **'भणितः'** प्रतिपादितः । ननु किमर्थमिदं संज्ञाकरणम् ?, उच्यते—शास्त्रे व्यवहारार्थम् । इति गाथार्थः ॥१३३॥

त्रसनाम्न उदयमाह—

(पारमा०) **'आद्ये'** प्रकृतिपिण्डे **'थावरचऊ'** इति स्थावरेणोपलक्षितं चतुष्कं स्थावरसूक्ष्मापर्याप्तकसाधारणलक्षणं स्थावरचतुष्कसंज्ञमिति गम्यम् । **'सूक्ष्मत्रिकं'** सूक्ष्मत्रिकसंज्ञं **'उपरिमं'** स्थावरस्य सूक्ष्मअपर्याप्तकसाधारणलक्षणं भवेत् **'अत्र'** स्थावरदशके च **'अस्थिरा-**

---

१ "विवागभेओ इमो होइ" इत्यपि पाठः । व्याख्याकारेण तु "विवागभेओ इमो भणिओ" इति पाठानुसारेण व्याख्यातमस्ति २ ०भेदश्चानुभवभेदश्चैतासां जे० ।

त्रिषट्कं' अस्थिरादिषट्कसंज्ञं उपरि सूक्ष्मत्रिकस्य अस्थिरअशुभदुर्भगदुःस्वरअनादेयअयशःकीर्तिलक्षणं विपाकभेदम्, अतः संज्ञाचतुष्टयभणनानन्तरं भणामः इति गाथार्थः ॥१३३॥

सम्प्रति सेतरत्वक्रमेण त्रसस्थावरयोर्विपाकमाह—

तसनामुदए जीवो, बेइंदियमाइ जाइ [1]जीवेसु ।
थावरनामुदए [2]पुण पुढवीमाईसु सो जाइ ॥१३४॥

(पू०) व्याख्या–'**त्रसनाम्नः**' कर्मणः '**उदये**' विपाके '**जीवः**' प्राणी '**द्वीन्द्रियादिः** आदिशब्दात्त्रीन्द्रियादयः पञ्चेन्द्रियावसाना गृह्यन्ते, मकारोऽलाक्षणिकः प्राकृतत्वात्, तेषु '**याति**' गच्छति, जीवेषूत्पद्यत इत्यभिप्रायः। '**स्थावरनाम्नः**' कर्मणः '**उदये**' विपाके पुनः '**पृथिव्यादिषु**' आदिशब्दादप्तेजोवायुवनस्पतिषु मकारोऽत्राप्यलाक्षणिकः '**सः**' जीवो '**याति**' उत्पद्यते। इति गाथार्थः ॥१३४॥

उक्तस्त्रसस्थावरनामोदयः, साम्प्रतं बादरसूक्ष्मोदयस्वरूपमाह—

(पारमा०) त्रस्यन्ति उष्णाद्यभितप्ताश्छायाद्यासेवनार्थं स्थानान्तरमिति त्रसाः तद्विपाकवेद्यं नाम त्रसनाम, तस्योदये जीवो '**द्वीन्द्रियादिजीवेषु**' द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियेषु '**याति**' गच्छति। तद्विपरीतं स्थावरनाम तस्योदये पुनरुष्णाद्यभितापेऽपि तत्स्थानपरिहारासमर्थेषु '**पृथिव्यादिषु**' पृथिव्यप्तेजोवायुवनस्पतिषु स जीवो याति। ननु अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमिति कथमनयोः स्थावरत्वमिति ?, सत्यम्, ऊर्ध्वज्वलनं तिर्यक्पवनं चैतयोः स्वाभाविकमेव न तूष्णाद्यभितापे द्वीन्द्रियादीनामिव। तथाहि–अग्नेर्विध्यापकजलधारास्वपि न परिहारबुद्धिर्वायोर्वा विनाशकाभ्रावपीति, तस्मात्स्वाभाविकगमने बुद्धिपूर्वकत्वाभावात्स्थावरत्वं न विरुद्धम्। इति गाथार्थः ॥१३४॥

अधुना बादरसूक्ष्मे आह—

बायरनामुदएणं, बायरकाओ [3]उ होइ सो नियमा ।
सुहुमेण सुहुमकाओ, अंतमुहुत्ताउओ होइ ॥१३५॥

(पू०) व्याख्या–'**बादरनाम्नः**' कर्मणः '**उदयेन**' विपाकेन '**बादरकाय एव**' स्थूलकाय एव '**भवति**' जायते, '**सः**' जीवः '**नियमात्**' अवश्यंतया '**सूक्ष्मेण**' सूक्ष्मनामकर्मोदयेन '**सूक्ष्मकायः**' श्लक्ष्णकायो भवति। स च भवन् कियत्कालायुर्भवति ? इत्याह–'**अन्तर्मुहूर्तायुर्भवति**' मुहूर्तमध्ये कालं करोतीत्यर्थः। इति गाथार्थः ॥१३५॥

---

१ "जाईसु" इत्यपि पाठः। २ "णं" इत्यपि पाठ। ३ "य" इत्यपि पाठः।

पर्याप्तिसंख्याद्वारेण येषां प्राणिनां यत्परिमाणाः पर्याप्तयो भवन्ति तद्दर्शयितुमाह—

(पारमा०) बादरत्वं यद्वशात्पृथिव्याद्येकैकस्य जन्तुशरीरस्य चक्षुर्ग्राह्यताया अभावेऽपि बहूनां समुदायस्य चक्षुर्ग्राह्यता भवति स परिणामविशेषः, तन्निबन्धनं नाम बादरनाम, तस्योदयाद्बादरकायः स प्राणी नियमेन भवति। तद्विपरीतं सूक्ष्मनाम, यदुदयान्न कदाचिदपि देहिदेहस्य चक्षुर्ग्राह्यता भवति तेन सूक्ष्मकायः, स चान्तर्मुहूर्तायुर्भववर्तीनि प्रसङ्गतोऽभिहितम्। इति गाथार्थः॥

इदानीं पर्याप्तापर्याप्तयोरवसरः, तत्र पर्याप्तनाम यदुदयात्स्वयोग्यपर्याप्तिनिर्वर्तनसमर्थो भवति, अतः पर्याप्तिनिरूपणपूर्वकं तदाह—

**आहारसरीरिंदिय-पज्जत्ती आणपाणभासमणे।**
**चत्तारि पंच छप्पिय, एगिंदियविगलसन्नीणं ॥१३६॥**

(पू०) व्याख्या-आहारशरीरइन्द्रियआनप्राणभाषामनःपर्याप्तयः षड् भवन्ति। ताश्च चतस्रः पञ्च षडपि [1]चैकेन्द्रियविकलसंज्ञिनां यथासंख्येन भवन्ति अपिशब्दान्न भवन्ति च, केषांचिदपर्याप्तानामेव कालकरणात्। नन्वेकेन्द्रियादीनां पर्याप्तिसंख्योक्ता, असंज्ञिनां तु पञ्चेन्द्रियसम्मूर्छजानां नोक्ता, तत्कथं तेषां संख्याऽवसीयते? इत्याह-तेषामपि पञ्चैव पर्याप्तयो मनोरहितत्वात्। एतदपि कुतः?, संज्ञिविशेषणान्यथानुपपत्त्या, तदेव सार्थकं भवेत् संज्ञिविशेषणं यदेव संज्ञिन एव षट् पर्याप्तयो नासंज्ञिनः। अन्यथा व्यवच्छेद्याभावात्संज्ञिग्रहणं निरर्थकं स्यात्, तस्मात्संज्ञिग्रहणसामर्थ्यात्पारिशेष्यन्यायाच्चासंज्ञिनां पञ्चेन्द्रियाणां पञ्चैव पर्याप्तयो भवन्तीति कृतं प्रसङ्गेन। प्रकृतं प्रस्तुमः। इति गाथार्थः ॥१३६॥

उक्ता पर्याप्तिसंख्या, साम्प्रतं सहेतुकं पर्याप्तिस्वरूपमाह—

(पारमा०) **'आहारसरीरिंदियपज्जत्ति'** आहारपर्याप्तिः शरीरपर्याप्तिरिन्द्रियपर्याप्तिरिति पर्याप्तिशब्दः प्रत्येकं योज्यते। **'आणपाणभासमणे'** इत्यत्रापि तेनानपानपर्याप्तिर्भाषापर्याप्तिर्मनःपर्याप्तिरिति। तत्र यया बाह्यमाहारमादाय खलरसरूपतया परिणमयति साहारपर्याप्तिः। यया रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्तिः। यया धातुरूपतया परिणमितमाहारमिन्द्रियरूपतया परिणमयति सा इन्द्रियपर्याप्तिः। यया पुनरुच्छ्वासप्रायोग्यवर्गणादलिकमादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुञ्चति सा उच्छ्वासपर्याप्तिः। यया तु भाषाप्रायोग्यवर्गणादलिकं गृहित्वा भाषात्वेन परिणमय्यालम्ब्य च मुञ्चति सा भाषापर्याप्तिः। यया पुनर्मनोयोग्यवर्गणादलिकमादाय मनस्त्वेन परिणमय्यालम्ब्य च मुञ्चति सा मनःपर्याप्तिः। एताश्च यथाक्रमं चतस्रः पञ्च षट् च एकेन्द्रियविक-

१ एके० जे०।

लेन्द्रियसंज्ञिनां भवन्ति । यत्तु तत्त्वार्थे पर्याप्तीनां पञ्चसंख्यात्वमुक्तं तदिन्द्रियपर्याप्तौ मनःपर्याप्ते-रन्तर्भावात् । यत्पुनरागमे तदेवं, यथा भगवत्याम्–"तए णं से ईसाणे देविंदे देवराया पंचविहाए पज्जत्तीए पज्जत्तिभावं गच्छइ, तंजहा–आहारपज्जत्तीए १ सरीरपज्ज-त्तीए २ इंदियपज्जत्तीए ३ आणपाणपज्जत्तीए ४ भासामणपज्जत्तीए ५ ।" इति॥१३६॥

पयासि निप्फत्ती, उदएणं जस्स होइ कम्मस्स ।
तं पज्जत्तं नामं, इयरुदए नत्थि निप्फत्ती ॥१३७॥

(पू०) व्याख्या–'एतासां' पूर्वोक्तपर्याप्तीनां 'निष्पत्तिः' निर्वृत्तिः 'उदयेन' विपाकेन यस्य भवति कर्मणस्तत् 'पर्याप्तं नाम' पर्याप्तिसंज्ञकमुच्यत इति शेषः । 'इतरस्य' अपर्याप्त-नाम्नः 'उदये' विपाके 'नास्ति' न विद्यते 'निष्पत्तिः' निर्वृत्तिः पर्याप्तेरिति गम्यते । इति गाथार्थः ॥१३७॥ उक्तं पर्याप्ति(प्त)नाम, साम्प्रतं प्रत्येकनामाह—

(पारमा०) 'एतासां' प्ररूपितस्वरूपाणां 'निष्पत्तिः' परिसमाप्तिः 'यस्य' कर्मण उद-येन भवति तत्पर्याप्तकनाम । अपर्याप्तकमाह–इतरत् अपर्याप्तकनाम तस्योदये–नास्ति निष्पत्ति-रेतासामित्यत्रापि योज्यम् । इति गाथाद्वयार्थः ॥१३७॥

उक्ते पर्याप्तापर्याप्तकनाम्नी, सम्प्रति प्रत्येकनामाह—

एक्किक्कयम्मि जीवे, इक्किक्कं जस्स होइ उदएणं ।
[1]ओरालाइसरीरं, तं नामं होइ पत्तेयं ॥१३८॥

(पू०) व्याख्या–एकैकस्मिन् 'जीवे' प्राणिनि 'एकैकं' शरीरं भवति, [2]यथा वृक्षादीनां पत्रादिषु जायते 'यस्य' कर्मणः 'उदयेन' विपाकेन, किम्? इत्याह–औदारिकं शरीरं तन्नाम कर्म भवति प्रत्येकसंज्ञकं नाम । इति गाथार्थः ॥१३८॥

उक्तं प्रत्येकनाम, अधुना साधारणनामाह—

(पारमा०) एकैकस्य जीवस्य 'यस्य' कर्मण उदयादेकैकं औदारिकादि, आदिशब्दाद्वै-क्रियमाहारकं वा शरीरं भवति तत्प्रत्येकनाम भवति । इति गाथार्थः ॥१३८॥

साधारणमाह—

जीवाणमणंताणं, इक्कं ओरालियं इह सरीरं ।
हवइ [3]हु, जस्सुदएणं, तं साहारं [4]हवइ नामं ॥१३९॥

---

१ व्याख्याकारेण तु "ओरालियं सरीरं" इति पाठानुसारेण व्याख्यातमस्ति । २ "यथा शालिमु-द्गयवादिषु" जायते जे० । ३ "य" इत्यनुसारेण व्याख्याकारेण व्याख्यातं । ४ "भवे" इत्यपि पाठः, तथैव व्याख्याकाराः॥

(पू०) व्याख्या–'जीवानां' प्राणिनां 'अनन्तानां' अपरिमितानां 'एकं' सर्वेषामेव प्राणिनां यथा सूरणादीनामनेकप्राणिनामेकं शरीरं, किम्? 'औदारिकं' प्रतीतं 'इह' अस्मिन् लोके शीर्यत इति शरीरं भवति च यस्योदयेन तत्साधारणं भवेन्नाम नामैव, चशब्दस्यैवकारार्थत्वात्। इति गाथार्थः ॥१३९॥

उक्तं साधारणनाम, अधुना स्थिरनामाह––

(पारमा०) अनन्तानां जीवानामेकमौदारिकं शरीरं 'इह' संसारे देशीकुव्याद्येकनिवासवद्गतानां निश्चितं यस्य कर्मण उदयाद्भवति तत् 'साहारं' साधारणनाम भवति। इति गाथार्थः ॥१३९॥

स्थिरनामाह––

दंतट्ठाइथिराणं, अंगावयवाण जस्स उदएणं।
निप्फत्ती उ सरीरे, [1]जायइ तं होइ थिरनामं ॥१४०॥

(पू०) व्याख्या–'दन्तास्थ्यादिस्थिराणां' दन्तास्थिनी प्रतीते, आदिशब्दाच्छिरोनासिकादिपरिग्रहः, स्थिराणामचलानां 'अङ्गावयवानां' शरीरावयवानां 'यस्य' नाम्नः कर्मणः 'उदयेन' विपाकेन 'निष्पत्तिस्तु शरीरे' निर्वृत्तिस्त्वङ्गे 'जायते' निष्पद्यते तद्भवति स्थिरनाम। इति गाथार्थः ॥१४०॥

उक्तं स्थिरनाम, साम्प्रतमस्थिरनामाह––

(पारमा०) दन्तास्थिप्रभृतिस्थिराणां अङ्गावयवानां 'यस्य' कर्मण उदयान्निष्पत्तिः पुनः शरीरे जायते तत् स्थिरनाम भवति। इति गाथार्थः ॥१४०॥

अस्थिरमाह––

जीहाभमुहाईणं, अंगावयवाण जस्स उदएणं।
निप्फत्ती उ सरीरे, जायइ तं अथिरनामं तु ॥१४१॥

(पू०) व्याख्या–जिह्वाभ्रूप्रभृतीनां भ्रूजिह्वे प्रतीते, आदिशब्दान्नेत्रकर्णादिपरिग्रहः, 'अङ्गावयवानां' शरीरदेशानां 'यस्य' कर्मणः 'उदयेन' विपाकेन 'निष्पत्तिस्तु' निर्वृत्तिः पुनः 'शरीरे' देहे 'जायते' निष्पद्यते 'तदस्थिरनाम तु' तदस्थिरनामैव कर्म इति गाथार्थः ॥१४१॥

उक्तमस्थिरनाम, साम्प्रतं शुभनामाह––

(पारमा०) जिह्वाभ्रूप्रभृतीनामङ्गावयवानां 'यस्य' कर्मण उदयान्निष्पत्तिः (पुनः) शरीरे जायते तत् 'अस्थिरनाम तु' तदस्थिरनामकर्मैव। इति गाथार्थः ॥१४१॥

---

१ "जायं" इत्यपि पाठः।

शुभमाह—

सिरमाईण सुहाणं अंगावयवाण जस्स उदएणं।
निप्फत्ती उ सरीरे जायइ तं होइ सुभनामं ॥१४२॥

(पू०) व्याख्या—'शिरःप्रभृतीनां' आदिशब्दाद्वक्षःस्थलादिपरिग्रहः, 'शुभानां' प्रशस्तानां, अङ्गस्यावयवा अङ्गावयवाः, अङ्गशब्देन चात्र शरीरमुच्यते नोदरादि, अस्यामेव गाथायामादौ शिरसोऽङ्गावयवत्वेनाभिधानात् तेषां 'यस्य' नामकर्मण उदयेन 'निष्पत्तिस्तु' निर्वृत्तिरेव 'शरीरे' देहे 'जायते' निष्पद्यते तद्भवति 'शुभनाम' शुभनामसंज्ञकं कर्म । इति गाथार्थः ॥१४२॥

उक्तं शुभनाम, अधुनाऽशुभनामाह—

(पारमा०) शिर आदिर्येषां ते शिरआदयो नाभेरुपर्यवयवास्तेषां शुभानामङ्गावयवानां 'यस्य' कर्मण उदयान्निष्पत्तिः पुनः (शरीरे) जायते तत् शुभनाम भवति । शिरसा हि स्पृष्टस्तुष्यति इति गाथार्थः ॥१४२॥

अशुभमाह—

पायाईअसुहाणं, अंगावयवाण जस्स उदएणं ।
निप्फत्ती उ शरीरे, जायइ तं असुभनामं तु ॥१४३॥

(पू०) व्याख्या—पादावादिर्येषामवयवानां पादादिः, आदिशब्दात्पुतादिपरिग्रहः, तेषां "अशुभानां' अशोभनानां 'अङ्गावयवानां' देहदेशानां 'यस्य' पुनः कर्मणः 'उदयेन' विपाकेन 'निष्पत्तिस्तु' निर्वृत्तिः तुशब्दः पुनःशब्दार्थः, 'शरीरे' देहे 'जायते' निष्पद्यते 'तदशुभनाम तु' अशुभनामैव । इति गाथार्थः ॥१४३॥

उक्तमशुभनाम, साम्प्रतं सुभगदुर्भगमाह—

(पारमा०) पादावादिर्येषां ते पादादयो नाभेरधोऽवयवाः, तेषामशुभानां 'यस्य' कर्मण उदयान्निष्पत्तिः पुनः शरीरे जायते तदशुभनामैव । पादेन हि स्पृष्टो रुष्यति । ननु प्रणयप्रकुपितप्रणयिनीपादप्रहारेऽपि प्रणयिनस्तोष एवेति कथं न व्यभिचारः ?, उच्यते, तत्तोषस्य मोहनीयनिबन्धनत्वाद्वस्तुस्थितेश्चात्र विचार्यमाणत्वाददोषः । इति गाथार्थः ॥१४३॥

सम्प्रति सुभगदुर्भगनाम्नी आह—

(पू०) व्याख्या–'**जीवानां**' प्राणिनां '**अनन्तानां**' अपरिमितानां '**एकं**' सर्वेषामेव प्राणिनां यथा सूरणादीनामनेकप्राणिनामेकं शरीरं, किम् ? '**औदारिकं**' प्रतीतं '**इह**' अस्मिन् लोके शीर्यत इति शरीरं भवति च यस्योदयेन तत्साधारणं भवेन्नाम नामैव, चशब्दस्यैत्रकारार्थत्वात् । इति गाथार्थः ॥१३९॥

उक्तं साधारणनाम, अधुना स्थिरनामाह––

(पारमा०) अनन्तानां जीवानामेकमौदारिकं शरीरं '**इह**' संसारे देशीकुव्याद्येकनिवासवद्गतानां निश्चितं यस्य कर्मण उदयाद्भवति तत् '**साहारं**' साधारणनाम भवति । इति गाथार्थः ॥१३९॥

स्थिरनामाह––

**दंतट्ठाइथिराणं, अंगावयवाण जस्स उदएणं ।**
**निप्फत्ती उ सरीरे, 'जायइ तं होइ थिरनामं ॥१४०॥**

(पू०) व्याख्या–'**दन्तास्थ्यादिस्थिराणां**' दन्तास्थिनी प्रतीते, आदिशब्दाच्छिरोनासिकादिपरिग्रहः, स्थिराणामचलानां '**अङ्गावयवानां**' शरीरावयवानां '**यस्य**' नाम्नः कर्मणः '**उदयेन**' विपाकेन '**निष्पत्तिस्तु शरीरे**' निर्वृत्तिस्त्वङ्गे '**जायते**' निष्पद्यते तद्भवति स्थिरनाम । इति गाथार्थः ॥१४०॥

उक्तं स्थिरनाम, साम्प्रतमस्थिरनामाह––

(पारमा०) दन्तास्थिप्रभृतिस्थिराणां अङ्गावयवानां '**यस्य**' कर्मण उदयान्निष्पत्तिः पुनः शरीरे जायते तत् स्थिरनाम भवति । इति गाथार्थः ॥१४०॥

अस्थिरमाह––

**जीहाभमुहाईणं, अंगावयवाण जस्स उदएणं ।**
**निप्फत्ती उ सरीरे, जायइ तं अथिरनामं तु ॥१४१॥**

(पू०) व्याख्या–जिह्वाभ्रूप्रसृतीनां भ्रूजिह्वे प्रतीते, आदिशब्दान्नेत्रकर्णादिपरिग्रहः, '**अङ्गावयवानां**' शरीरदेशानां '**यस्य**' कर्मणः '**उदयेन**' विपाकेन '**निष्पत्तिस्तु**' निर्वृत्तिः पुनः '**शरीरे**' देहे '**जायते**' निष्पद्यते '**तदस्थिरनाम तु**' तदस्थिरनामैव कर्म इति गाथार्थः ॥१४१॥

उक्तमस्थिरनाम, साम्प्रतं शुभनामाह––

(पारमा०) जिह्वाभ्रूप्रसृतीनामङ्गावयवानां '**यस्य**' कर्मण उदयान्निष्पत्तिः (पुनः) शरीरे जायते तत् '**अस्थिरनाम तु**' तदस्थिरनामकर्मैव । इति गाथार्थः ॥१४१॥

---

१ "जायं" इत्यपि पाठः ।

शुभमाह—

सिरमाईण सुहाणं अंगावयवाण जस्स उदएणं ।
निप्फत्ती उ सरीरे जायइ तं होइ सुभनामं ॥१४२॥

(पू०) व्याख्या–'**शिरःप्रभृतीनां**' आदिशब्दाद्वक्षःस्थलादिपरिग्रहः, '**शुभानां**' प्रशस्तानां, अङ्गस्यावयवा अङ्गावयवाः, अङ्गशब्देन चात्र शरीरमुच्यते नोदरादि, अस्यामेव गाथायामादौ शिरसोऽङ्गावयवत्वेनाभिधानात् तेषां '**यस्य**' नामकर्मण उदयेन '**निष्पत्तिस्तु**' निर्वृत्तिरेव '**शरीरे**' देहे '**जायते**' निष्पद्यते तद्भवति '**शुभनाम**' शुभनामसंज्ञकं कर्म । इति गाथार्थः ॥१४२॥

उक्तं शुभनाम, अधुनाऽशुभनामाह—

(पारमा०) शिर आदिर्येषां ते शिरआदयो नामेरुपर्यवयवास्तेषां शुभानामङ्गावयवानां '**यस्य**' कर्मण उदयान्निष्पत्तिः पुनः (शरीरे) जायते तत् शुभनाम भवति । शिरसा हि स्पृष्टस्तुष्यति इति गाथार्थः ॥१४२॥

अशुभमाह—

पायाईअसुहाणं, अंगावयवाण जस्स उदएणं ।
निप्फत्ती उ शरीरे, जायइ तं असुभनामं तु ॥१४३॥

(पू०) व्याख्या–पादावादिर्येषामवयवानां पादादिः, आदिशब्दात्पुतादिपरिग्रहः, तेषां ''**अशु-भानां**' अशोभनानां '**अङ्गावयवानां**' देहदेशानां '**यस्य**' पुनः कर्मणः '**उदयेन**' विपाकेन '**निष्पत्तिस्तु**' निर्वृत्तिः तुशब्दः पुनःशब्दार्थः, '**शरीरे**' देहे '**जायते**' निष्पद्यते '**तद-शुभनाम तु**' अशुभनामैव । इति गाथार्थः ॥१४३॥

उक्तमशुभनाम, साम्प्रतं सुभगदुर्भगमाह—

(पारमा०) पादावादिर्येषां ते पादादयो नामेरधोऽवयवाः, तेषामशुभानां '**यस्य**' कर्मण उदयान्निष्पत्तिः पुनः शरीरे जायते तदशुभनामैव । पादेन हि स्पृष्टो रुष्यति । ननु प्रणयप्रकुपि-तप्रणयिनीपादप्रहारेऽपि प्रणयिनस्तोष एवेति कथं न व्यभिचारः ?, उच्यते, तत्तोषस्य मोहनी-यनिबन्धनत्वाद्वस्तुस्थितेश्चात्र विचार्यमाणत्वाददोषः । इति गाथार्थः ॥१४३॥

सम्प्रति सुभगदुर्भगनाम्नी आह—

सूभगकम्मुदएणं, [1]हवइ हु जीवो उ सव्वजणइट्ठो ।
[2]दूहगकम्मुदए पुण, दुहओ सो [3]सयललोयस्स ॥१४४॥

(पू०) व्याख्या–सुभगस्य भावः सौभाग्यं तस्य कर्मण उदयेन विपाकेन 'भवत्येव' जायत एव, हुशब्दस्यैवकारार्थत्वात् 'जीवस्तु' प्राणी सर्वजनइष्ट एव, तुशब्दस्यैवकारार्थत्वात्, अन्यथा सौभाग्याभावः । 'दूहगकम्मुदएणं' इति दौर्भाग्यकर्मोदयेन विपाकेन 'दुर्भगः' नयनमनसोरुद्वेगकारी 'सकललोकस्य' सर्वप्राणिसमूहस्य । 'दुभगो सो सयललोयस्स' इति पाठान्तरं वा । तत्रापि स एवार्थः । केवलं स दौर्भाग्ययुक्तस्य परामर्शः । इति गाथार्थः ॥१४४॥

उक्तं सुभगदुर्भगनाम, अधुना सुस्वरदुःस्वरनामोच्यते—

(पारमा०) सुभगकर्मोदयाद्भवति निश्चितं जीवः, तुशब्दस्य विशेषणार्थत्वात्, अनुपकारकृदपि सर्वजनस्येष्टो मनःप्रियः । दुर्भगकर्मोदये पुनःशब्दस्य विशेषणार्थत्वात्, उपकारकृदपि 'दुःस्वरः' मनोनयनानामप्रियप्रतिमः स सकललोकस्य भवतीत्यत्रापि योज्यम् । यदाह– "अणुवकएवि बहूणं, होइ पिओ तस्स सुभगनामुदओ । उवगारकारगोवि हु न रुचई दूभगस्सुदए ॥१॥ सुभगुदएवि हु कोई कंची आसज्ज दूभगो जइवि । जायइ तद्दोसाओ, जहा अभव्वाण तित्थयरो ॥२॥" इति गाथार्थः ॥१४४॥

सुस्वरदुस्वरे आह—

सूसरकम्मुदएणं, सूसरसद्दो [4]य होइ इह जीवो ।
दूसरउदए [5]विसरो, जंपंतो होइ जणवेसो ॥१४५॥

(पू०) व्याख्या–सुस्वरं शोभनस्वरं तच तत्कर्म च सुस्वरकर्म तस्योदयेन विपाकेन 'सुस्वरशब्दस्तु" शोभनध्वनिरेव 'भवति' जायते 'इह' अस्मिन् लोके 'जीवः' प्राणी । दुःस्वरनाम्नः पुनरुदये विपाके 'विरसः' इतिविशेषेण गतो रसो माधुर्यलक्षणो यस्य स विरसः श्रुत्यसुखदः 'जल्पन्' वदन् 'भवति' जायते 'जनद्वेष्यः' लोकाप्रीत्युत्पादकः । इति गाथार्थः ॥१४५॥

उक्तं सुस्वरदुःस्वरनाम, साम्प्रतमादेयानादेयनामाह—

(पारमा०) सुस्वरकर्मोदयाद् द्वीन्द्रियादीनां शब्दः स्वरः शोभनः स्वरः सुस्वरः श्रोत्रप्रीतिहेतुः, एवंभूतश्च 'इह' संसारे जीवो भवति । दुःस्वरोदये विस्वरः खरभिन्नहीनदीनस्वरो जल्पन् 'जनद्वेष्यः' अप्रीतिपदं भवति । इति गाथार्थः ॥१४५॥

आदेयानादेये आह—

---

१ "होइ" इत्यपि पाठः । २ दुभगकम्मुदएणं दुभगो सो सव्वलोगस्स इत्यपि पाठः । व्याख्याकारेण तु "दुभगकम्मुदएणं दुब्भगओ सयल०" इति पाठानुसारेण व्याख्यातमस्ति । ३ "सव्वलोयस्स" इत्यपि पाठः, तथैव जे० । ४ 'च' इति व्याख्याकारः । ५ "विरसो" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातमस्ति ।

आएज्जकम्मउदए, चिट्ठा जीवाण भासणं जं च ।
तं बहु मन्नइ लोओ, [1]अबहुमयं इयरउदएणं ॥१४६॥

(पू०) व्याख्या–आदेयनाम्नः कर्मणः 'उदये' विपाके 'चेष्टा' शरीरव्यापारलक्षणा जीवानां 'भाषणं यच्च' जल्पनं यच्च 'तत्' सर्वं 'बहु मन्यते' अन्तःप्रीतियुक्तस्तत्तथैव प्रतिपद्यते 'लोकः' जनः । अबहुमतं' अनभिप्रेतं चेष्टाजल्पादिकमितरस्य पुनरनादेयनाम्नः कर्मण उदयेन विपाकेन । इति गाथार्थः ॥१४६॥

उक्तमादेयानादेयनाम, साम्प्रतं यशःकीर्त्ययशःकीर्त्तिनामाह–

(पारमा०) आदेयकर्मण उदये 'चेष्टा' उच्छृङ्खलरूपा जीवानां यत् 'भाषणं' असमञ्जसप्रलपनं यच्च तद्बहुमन्यते लोकः इतरदनादेयं, तस्योदये चेष्टा हसितललितादिका भाषणं युक्तियुक्तस्यापि अबहुमतम् । इति गाथार्थः ।

यशःकीर्त्त्ययशःकीर्ती आह—

जस्सुदएणं जीवो, लहइ हु [2]कित्तिं जसं च लोगम्मि ।
तं जसनामं कम्मं, अजसुदए लहइ विवरीयं ॥१४७॥

(पू०) व्याख्या–'यस्य' कर्मणः 'उदयेन' विपाकेन 'जीवः' प्राणी 'लभते तु' प्राप्नोत्येव कीर्त्तियशस्तु, एकदिग्गामिनी कीर्त्तिः, सर्वदिग्गामि यशः, अथवा–"दानपुण्यफला कीर्त्तिः, पराक्रमकृतं यशः" । अथवा एकमेवेदं नाम, यशसोपलक्षिता कीर्त्तिर्यशःकीर्त्तिः, कीर्त्तिशब्दस्य पूर्वनिपातः प्राकृतत्वात्, 'लोके' जने तद्यशोनामकर्म यशःकीर्त्तिकर्मेत्यर्थः । अयशःकीर्त्युदये पुनः प्राणी 'लभते' प्राप्नोति, 'विपरीतं' अयशःकीर्त्तिमासादयति । इति गाथार्थः ॥१४७॥

उक्तं यशःकीर्त्त्ययशःकीर्त्तिनाम, अधुना निर्माणनामाह—

(पारमा०) 'यस्य' कर्मण उदयाज्जीवो लभते कीर्तिं परलोकगतस्यापि श्लाघनीयतारूपां, यशश्च जीवतः श्लाघतारूपं लोके तद्यशःकीर्त्तिनाम । अथवा यशसा शौण्डीर्यक्रियानुष्ठानस्वाध्यायध्यानादिशोभनार्थालम्बनेन कीर्तनं संशब्दनं यशःकीर्त्तिः । 'अजसुदए' इति अयशःकीर्त्युदये लभते 'विपरीतं' अश्लाघनीयतारूपम् । इति गाथार्थः ॥१४७॥

निर्माणमाह—

देहंगावयवाणं, लिंगागिइ जाइ नियमणं जं च ।
तहिँ सुत्तहारसरिसो, निम्माणे होइ हु विवागो ॥१४८॥

---

१ अवमअइ इयरउदएणं इत्यपि पाठः । २ "कित्तीजसं" इत्यपि पाठः ।

सूभगकम्मुदएणं, [1]हवइ हु जीवो उ सव्वजणइट्ठो ।
[2]दूहगकम्मुदए पुण, दुहओ सो [3]सयललोयस्स ॥१४४॥

(पू०) व्याख्या–सुभगस्य भावः सौभाग्यं तस्य कर्मण उदयेन विपाकेन 'भवत्येव' जायत एव, हुशब्दस्यैवकारार्थत्वात् 'जीवस्तु' प्राणी सर्वजन इष्ट एव, तुशब्दस्यैवकारार्थत्वात्, अन्यथा सौभाग्याभावः । 'दूहगकम्मुदएणं' इति दौर्भाग्यकर्मोदयेन विपाकेन 'दुर्भगः' नयनमनसोरुद्वेगकारी 'सकललोकस्य' सर्वप्राणिसमूहस्य । 'दुभगो सो सयललोयस्स' इति पाठान्तरं वा । तत्रापि स एवार्थः । केवलं स दौर्भाग्ययुक्तस्य परामर्शः । इति गाथार्थः ॥१४४॥

उक्तं सुभगदुर्भगनाम, अधुना सुस्वरदुःस्वरनामोच्यते—

(पारमा०) सुभगकर्मोदयाद्भवति निश्चितं जीवः, तुशब्दस्य विशेषणार्थत्वात्, अनुपकारकृदपि सर्वजनस्येष्टो मनःप्रियः । दुर्भगकर्मोदये पुनःशब्दस्य विशेषणार्थत्वात्, उपकारकृदपि 'दुःखदः' मनोनयनानामप्रियप्रतिमः स सकललोकस्य भवतीत्यत्रापि योज्यम् । यदाह–
"अणुवकएवि बहूणं, होइ पिओ तस्स सुभगनामुदओ । उवगारकारगोवि हु न रुचई दूभगस्सुदए ॥१॥ सुभगुदएवि हु कोई कंचो आसज्ज दूभगो जइवि । जायइ तद्दोसाओ, जहा अभव्वाण तित्थयरो ॥२॥" इति गाथार्थः ॥१४४॥

सुस्वरदुस्वरे आह—

सूसरकम्मुदएणं, सूसरसद्दो [4]य होइ इह जीवो ।
दूसरउदए [5]विसरो, जंपंतो होइ जणवेसो ॥१४५॥

(पू०) व्याख्या–सुस्वरं शोभनस्वरं तच्च तत्कर्म च सुस्वरकर्म तस्योदयेन विपाकेन 'सुस्वरशब्दस्तु' शोभनध्वनिरेव 'भवति' जायते 'इह' अस्मिन् लोके 'जीवः' प्राणी । दुःस्वरनाम्नः पुनरुदये विपाके 'विरसः' इतिविशेषेण गतो रसो माधुर्यलक्षणो यस्य स विरसः श्रुत्यसुखदः 'जल्पन्' वदन् 'भवति' जायते 'जनद्वेष्यः' लोकाप्रीत्युत्पादकः । इति गाथार्थः ॥१४५॥

उक्तं सुस्वरदुःस्वरनाम, साम्प्रतमादेयानादेयनामाह—

(पारमा०) सुस्वरकर्मोदयाद् द्वीन्द्रियादीनां शब्दः स्वरः शोभनः स्वरः सुस्वरः श्रोत्रप्रीतिहेतुः, एवंभूतश्च 'इह' संसारे जीवो भवति । दुःस्वरोदये विस्वरः खरभिन्नहीनदीनस्वरो जल्पन् 'जनद्वेष्यः' अप्रीतिपदं भवति । इति गाथार्थः ॥१४५॥

आदेयानादेये आह—

---

१ "होइ" इत्यपि पाठः । २ दुभगकम्मुदएणं दुभगो सो सव्वलोगस्स इत्यपि पाठः । व्याख्याकारेण तु "दुभगकम्मुदएणं दुब्भगओ सयल०" इति पाठानुसारेण व्याख्यातमस्ति । ३ "सव्वलोयस्स" इत्यपि पाठः, तथैव जे० । ४ 'उ' इति व्याख्याकार । ५ "विरसो" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातमस्ति ।

आएज्जकम्मउदए, चिट्ठा जीवाण भासणं जं च ।
तं बहु मन्नइ लोओ, [1]अबहुमयं इयरउदएणं ॥१४६॥

(पू०) व्याख्या—आदेयनाम्नः कर्मणः 'उदये' विपाके 'चेष्टा' शरीरव्यापारलक्षणा जीवानां 'भाषणं यच्च' जल्पनं यच्च 'तत्' सर्वं 'बहु मन्यते' अन्तःप्रीतियुक्तस्तत्तथैव प्रतिपद्यते 'लोकः' जनः । अबहुमतं' अनभिप्रेतं चेष्टाजल्पादिकमितरस्य पुनरनादेयनाम्नः कर्मण उदयेन विपाकेन । इति गाथार्थः ॥१४६॥

उक्तमादेयानादेयनाम, साम्प्रतं यशःकीर्त्ययशःकीर्त्तिनामाह—

(पारमा०) आदेयकर्मण उदये 'चेष्टा' उच्छृङ्खलरूपा जीवानां या 'भाषणं' असमञ्जसप्रलपनं यच्च तद्बहुमन्यते लोकः इतरदनादेयं, तस्योदये चेष्टा हसितललितादिका भाषणं युक्तियुक्त-स्यापि अबहुमतम् । इति गाथार्थः ।

यशःकीर्त्ययशःकीर्ती आह—

जस्सुदएणं जीवो, लहइ हु [2]कित्तिं जसं च लोगम्मि ।
तं जसनामं कम्मं, अजसुदए लहइ विवरीयं ॥१४७॥

(पू०) व्याख्या—'यस्य' कर्मणः 'उदयेन' विपाकेन 'जीवः' प्राणी 'लभते तु' प्राप्नोत्येव कीर्त्तियशस्तु, एकदिग्गामिनी कीर्त्तिः, सर्वदिग्गामि यशः, अथवा—"दानपुण्यफला कीर्तिः, पराक्रमकृतं यशः" । अथवा एकमेवेदं नाम, यशसोपलक्षिता कीर्त्तिर्यशःकीर्त्तिः, कीर्त्ति-शब्दस्य पूर्वनिपातः प्राकृतत्वात्, 'लोके' जने तद्यशोनामकर्म यशःकीर्त्तिकर्मेत्यर्थः । अयशः-कीर्त्त्युदये पुनः प्राणी 'लभते' प्राप्नोति, 'विपरीतं' अयशःकीर्त्तिमासादयति । इति गाथार्थः ॥१४७॥

उक्तं यशःकीर्त्ययशःकीर्त्तिनाम, अधुना निर्माणनामाह—

(पारमा०) 'यस्य' कर्मण उदयाज्जीवो लभते कीर्तिं परलोकगतस्यापि श्लाघनीयतारूपां, यशश्च जीवतः श्लाघतारूपं लोके तद्यशःकीर्त्तिनाम । अथवा यशसा शौण्डीर्यक्रियानुष्ठानस्वा-ध्यायध्यानादिशोभनार्थालम्बनेन कीर्तनं संशब्दनं यशःकीर्त्तिः । 'अजसुदए' इति अयशः कीर्त्त्युदये लभते 'विपरीतं' अश्लाघनीयतारूपम् । इति गाथार्थः ॥१४७॥

निर्माणमाह—

देहंगावयवाणं, लिंगागिइ जाइ नियमणं जं च ।
तहिँ सुत्तहारसरिसो, निम्माणे होइ हु विवागो ॥१४८॥

---

१ अबहुमअं इयरउदएणं इत्यपि पाठः । २ "कित्तीजसं" इत्यपि पाठः ।

(पू०) व्याख्या- देहं शरीरं तस्याङ्गानि शिरःप्रभृतीनि देहाङ्गानि, देहाङ्गानामवयवाः कर्णनासिकादयस्तेषां 'यन्नियमनं' यो नियमोऽवश्यम्भावो यस्य देहाङ्गस्य येऽवयवास्तैस्तत्र भवितव्यम् । निजाङ्गादीनां नियमनं यच्चेति, निजमात्मीयं, अङ्गमुदरप्रभृति, निजं च तदङ्गं च निजाङ्गं, निजाङ्गमादिर्येषामङ्गानां तानि निजाङ्गादीनि, यच्च तेषां नियमनम् । यस्य मनुष्यशरीरादेर्यानि शिरःप्रभृत्यङ्गानि तैस्तत्रैव भवितव्यम् न पुनर्मनुष्यशरीराङ्गावयवैर्देवादिशरीरादिषु भवितव्यम् । यस्य वा मनुष्यादेर्यच्छरीरं तस्य येऽवयवास्ते तस्मिन्नेव शरीरे भवन्त्यवयवाः । येन शरीराङ्गादिना योऽवयवो जन्यः स तदेवाङ्गं जनयति, नान्यदिति । अयमत्र भावार्थः—देहाङ्गावयवानां इत्यनेनावयवनियम उक्तः, यस्य शिरःप्रभृत्यङ्गस्य योऽवयवो नासिकाकर्णादिः, तेनावयवेन तस्मिन्नेव शिरःप्रभृत्यङ्गे भवितव्यम् । तस्मिन्नप्यङ्गे भवता नासिकादिना नासिकादिस्थान एव भवितव्यम् । निजाङ्गादीनां इत्यनेन [1]त्वङ्गनियम उक्तः, यस्य देहस्य पुरुषादेः संबन्धिनो यच्छिरः-प्रभृत्यङ्गं तेनाङ्गेन तत्रैव देहे भवितव्यम्, नान्यस्मिन्, अथवा यस्याङ्गस्य यो निजोऽवयवः स तेनैव शिरःप्रभृतिनोत्पादयितव्यः, नान्येनोरःप्रभृतिना । अथवाऽन्यथा व्याख्यायते—देहाङ्गावयवानां निजाङ्गादिषु नियमनं यत्, चकाराद्विधानं च, इत्यत्र सप्तम्यर्थे षष्ठी । तेनायमर्थः—देहाङ्गावयवैर्नासिकादिभिर्निजाङ्गादिष्वेव शिरःप्रभृतिषु भवितव्यं स्वस्थान एवेति । कस्यायं विपाकः ? इत्याह—निर्माणनाम्न एवायं 'विपाकः' उदयः 'भवति' जायते हुशब्दस्यावधारणार्थत्वात् । किंभूतोऽसौ विपाकः ? इत्याह—'तहिं सुत्तहारसरिसो' 'तत्र' निर्माणे यो विपाकः स सूत्रधारसदृशः सूत्रधारो=विज्ञानिकः, तेन तुल्यः । यथा सूत्रधारो देवकुलादौ क्रियमाणे स्तम्भादावङ्गे भद्रकोणरङ्[2]प्रतिहारकादौ च यः कुम्भिकाकलशकादिरवयवो यस्मिन्नेव स्थाने युज्यते (युज्यते) कर्तुं तस्मिन्नेव प्रदेशे विज्ञानिकैः कारयत्यात्मव्यापारेण । इति गाथार्थः ॥१४८॥

उक्तं निर्माणनाम, अधुना तीर्थकरनामाह—

(पारमा०) देहं शरीरं, अङ्गानि शिरउरःप्रभृतीनि, अवयवा अङ्गुल्यादय उपाङ्गादिरूपाः, तेषां नियमनम् । यथा मनुष्यस्य द्वौ हस्तौ द्वौ पादौ इत्यादिनियमः । 'लिङ्गाकृतिजातिनियमनं' लिङ्गाकृत्योर्जातौ जन्मनि नियमनं यच्च । यथा पुरुषस्य श्मश्रुप्रमृतिलिङ्गं, अधृष्यत्वादिका चाकृतिः । स्त्रियश्च स्तनादिकं चिह्नं, अभिगम्यत्वादिका चाकृतिः । तत्र सूत्रधारतुल्यो निर्माणस्य भवति निश्चितं विपाकः । यथा सूत्रधारः शिलाकुट्टकैः कृतानि खरशिलादीनि देवकुलाङ्गानि यथास्थानं निवेशयति । तथा निर्माणमपि अङ्गोपाङ्गनाम्ना निर्मितानि शरीराङ्गादीनि । इति गाथार्थः ॥१४८॥

तीर्थकरनामाह—

---

१ त्ववयवनियम जे० । २ °प्रतिरङ्गकादौ जे० ।

उदए जस्स सुरासुर–नरवइनिवहेहिँ [1]पूइओ होइ ।
तं तित्थयरं नामं, तस्स विवागो उ केवलिणो ॥१४९॥

(पू०) व्याख्या–'उदये' विपाके 'यस्य' कर्मणः सुरा ज्योतिष्कवैमानिकाः, असुरा भवनवासिनः, नरपतयो राजानः, सुराश्चासुराश्च नरपतयश्च सुरासुरनरपतयः तेषां निवहाः संघाताः तैः, 'पूजितः' अर्चितः 'भवति, जायते तदेवंभूतं 'तीर्थकरं' तीर्थकरणशीलं, ताच्छीलि[2]कष्टः, 'नाम' नामकर्म, 'तस्य' तीर्थकरकर्मणो 'विपाकश्च' अनुभवश्च तात्त्विकः केवलिन एव तीर्थकरस्य; नाकेवलिनः तस्य समस्तैः पूजनासंभवात् । इति गाथार्थः ॥१४९॥

व्याख्यातं तीर्थकरनाम, तद्व्याख्यानात्सप्रपञ्चं नामकर्मापि व्याख्यातम् । साम्प्रतं सूत्रकार एव गोत्रप्रतिपादनायाह—

(पारमा०) 'उदये' विपाकानुभवे 'यस्य' कर्मणः, सुरा वैमानिकादयः, असुरा भवनपतिविशेषाः, नरा मनुष्यास्तेषां पतयः सौधर्मेन्द्रचमरसम्राड्राजादयः, तेषां निवहैः पूजितो भवति तत्तीर्थकरनाम, तस्य विपाकः पुनः केवलिनः । तथाहि–भगवन्तस्तीर्थकरास्तीर्थकरनामकर्मोदयाद्देवादिभिरष्टमहाप्रातिहार्यादिविरचनतः पूज्यन्ते, जघन्यतोऽपि कोटिसंख्यैः सेव्यन्ते च । गृहस्थाद्यवस्थायामपि जन्ममहादौ पूज्यन्त एव परं तस्यासन्ततत्वात् केवलोत्पादे च निरन्तरत्वात्तस्य विपाकः केवलिन इत्युक्तम् । इति गाथार्थः ॥१४९॥

अधुना नाम निगमयन् गोत्रप्रस्तावनामाह—

भणियं नामं कम्मं अहुणा गोयं तु सत्तमं भणिमो ।
तंपि कुलालसमाणं, दुविहं जह होइ [3]तह भणिमो ॥१५०॥

(पू०) व्याख्या– 'भणितं' प्रतिपादितं नामकर्म सविस्तरम् । 'अधुना' साम्प्रतं पुनर्गोत्रं तु, तुशब्दः पुनःशब्दार्थ एवशब्दार्थो वा । यदा एवकारार्थस्तदा गोत्रमेव सप्तमं संख्यया 'भणिमो' प्रतिपादयामः । पुनःशब्दार्थ उक्त एव । तदपि कुलालसमानं, तच्छब्दो गोत्रपरामर्शकः, अपिशब्दः संभावने । किं संभावयति ? तदेतद्गोत्रं कुम्भकारतुल्यं वर्तते । किंभूतं तत् ? 'द्विविधं' द्विप्रकारं 'यथा' येन प्रकारेण 'भवति' जायते 'तथा' तेन प्रकारेण 'भणामः' प्रतिपादयामः । इति गाथार्थः ॥१५०॥

अभिहितगोत्रद्वैविध्ये आद्यभेदे दृष्टान्तमाह—

१ "पूइओ लोए" इत्यपि पाठः । २ ०को-ऽस्पू जे० । ३ "तं" इत्यपि पाठः ।

(पारमा०)–'भणितं' अशेषविशेषाख्यानतः प्रतिपादितं नामकर्म षष्ठम् । 'अधुना तु' सम्प्रति पुनः 'गोत्रं' सप्तमं कर्म भणामः । तदपि गोत्रं कुलालसमानं सत् द्विविधं शुभाशुभकरणतो यथा भवति तथा भणामः । इति गाथार्थः ॥१५०॥

सम्प्रति कुलालदृष्टान्तं स्पष्टमाचष्टे—

जह इत्थ कुंभकारो, पुढवीए कुणइ एरिसं रूवं ।
जं लोयाओ पूयं, पावइ [1]इह पुण्णकलसाई ॥१५१॥

(पू०) व्याख्या–'यथा' येन प्रकारेण 'अत्र' अस्मिन् लोके 'कुम्भकारः' घटकारः 'पृथिव्यां' मृत्तिकायां 'करोति' विधत्ते ईदृशं रूपमतिशयवत् । 'यद्' रूपं 'लोकात्' जनात् पूजां पुष्पचन्दनदध्यक्षतादिभिः 'प्राप्नोति' आसादयति 'इह' 'अस्मिँल्लोके' किं तत् ? इत्याह–पूर्णकलशादि, आदिशब्दादर्घपात्रादि । इति गाथार्थः ॥१५१॥

उक्त उच्चैर्गोत्रदृष्टान्तः, अधुना नीचैर्गोत्रदृष्टान्तमाह—

(पारमा०) यथाऽत्र कुम्भकारः 'पृथिव्याः' मृत्तिकाया ईदृशं रूपं करोति, यत्पूर्णकलशादि मसृणत्वादिगुणरहितमपि लोकात् पूजां प्राप्नोति । लोको हि पूर्णकलशाद्यभिमुखमायान्तमालोक्य शोभनः शकुन इति स्तुवन्नक्षतादिना पूजयतीति ॥१५१॥

भुंभुलमाई अन्नं सो च्चिय पुढवीएँ कुणइ रूवं तु ।
जं लोयाओ निंदं पावइ अकएवि मज्जम्मि ॥१५२॥

(पू०) व्याख्या–भुम्भुलो मद्यस्थानं, आदिशब्दात्कोशकादिपरिग्रहः, मकारोऽलाक्षणिकः प्राकृतत्वात् । भुम्भुला[2]द्यन्यं रूपं स एव कुम्भकारः 'पृथिव्यां' मृत्तिकायां 'करोत्येव' विधत्त एव, 'रूपं तु' उक्तलक्षणम् । यत् 'लोकात्' जनात् 'निन्दां' जुगुप्सां 'प्राप्नोति' आसादयति 'अकृतेऽपि' अस्थापितेऽपि 'मद्ये' आसवे, आस्तां तावत्कृते, कृते तु सुरां निन्दां प्राप्नोति । इति गाथार्थः ॥१५२॥

उक्तो दृष्टान्तः, अधुना दार्ष्टान्तिकमाह—

(पारमा०) 'भुम्भुलं' मद्यभाजनं, 'अन्यत्' पूर्णकलशादिव्यतिरिक्तं स एव कुम्भकारः पृथिव्या रूपं करोति । यन्मसृणत्वादिगुणवदपि लोकान्निन्दां प्राप्नोति, 'अकृतेऽपि' अस्थापितेऽपि मद्ये । तथाहि–शिष्टजनो भुम्भुलादिकं तत्कालनिष्पन्नमपि इतरभाण्डालाभेऽपि महत्यपि प्रयोजने निन्द्यत्वान्न गृह्णात्येव । इति गाथाद्वयार्थः ॥१५२॥

दार्ष्टान्तिकेन योजयति—

---

१ "जह" इत्यपि पाठः । २ ०द्यन्यत् रूपं जे० ।

एव कुलालसमाणं गोयं कम्मं तु [1]होइ जीवस्स ।
उच्चानीयविवागो, जह होइ तहा निसामेह॥१५३॥

(पू०) व्याख्या-'एव' उक्तनीत्या 'कुलालसमानं' कुम्भकारतुल्यं, किम् ? 'गोत्रमेव कर्म' कुलप्रसूतिलक्षणं 'अत्र' प्रक्रमे 'जीवस्य' प्राणिनः। तस्य च गोत्रस्योच्चैर्वर्णकारणं नीचैर्निम्नता विपाकोऽनुभवो 'यथा' येन प्रकारेण 'भवति' जायते 'तथा' तेन प्रकारेण दर्शनायाह-'निशमयत' आकर्णयत यूयम्। इति गाथार्थः ॥१५३॥

उक्तमेवोच्चैर्गोत्रविपाकं प्रदर्शयन्नाह—

(पारमा०)-'एवं' शुभाशुभवस्तुविधानात् कुम्भकारतुल्यं गोत्रं कर्म पुनर्भवति जीवस्योच्चैर्नीचैर्विपाको यथा भवति तथा निशमयत। इति गाथार्थः ॥१५३॥

तत्रोच्चैर्गोत्रविपाकमाह—

[2]अधणी बुद्धिविउत्तो रूवविहूणोवि जस्स उदएणं ।
[3]लोयम्मि लहइ पूयं, उच्चागोयं तयं होइ ॥१५४॥

(पू०) व्याख्या-'अधनः' अविद्यमानधनो बुद्धया वियुक्तो बुद्धिवियुक्तो बुद्धिरहितो, रूपेण विहीनः रूपविहीनः, सोऽपि आस्तां रूपयुक्तो 'यस्य' कर्मणः 'उदयेन' विपाकेन 'लोके' जने 'लभते' प्राप्नोति 'पूजां' अभ्यर्चनं वस्त्रालङ्कारस्रगादिभिरुच्चैर्गोत्रनामकर्म तद्भवति विज्ञेयम्। इति गाथार्थः ॥१५४॥

उक्त उच्चैर्गोत्रविपाकः, अधुना नीचैर्गोत्रविपाकमाह—

(पारमा०) 'अधनो' धनहीनः 'बुद्धिवियुक्तः' मतिनिर्मुक्तः 'रूपविहीनः' रूपरहितोऽपि 'यस्य' कर्मण उदयेन लोके जातिमात्रादेव पूजां लभते, तदुच्चैर्गोत्रं पूर्णकलशकारिकुम्भकारतुल्यम्। इति गाथार्थः ॥१५४॥

नीचैर्गोत्रविपाकमाह—

[4]सघणो रूवेण जुओ, बुद्धीनिउणोवि जस्स उदएणं ।
[5]लोयम्मि लहइ निन्दं, एयं पुण होइ नीयं तु ॥१५५॥

व्याख्या-'सधनो' विद्यमानधनः 'रूपेण युक्तः' रूपसहितः, बुद्धया निपुणो मतिनि-

---

१ 'इत्थ' इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातमस्ति। २ व्याख्याकारेण "अधणो" इति पाठानुसारेण व्याख्यातमस्ति। ३-५ "लोगम्मि" इत्यपि पाठः॥ ४ "संघणी" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातमस्ति।

पुणः, सोऽप्येवंविधो 'यस्य' कर्मणः 'उदयेन' विपाकेन 'लोके' जने 'लभते' प्राप्नोति 'निन्दां' जुगुप्सां, अकुलीनोऽयं किमस्य गुणैः ? एतत्पुनः कर्म नीचैर्गोत्रं निकृष्टगोत्रं विज्ञेयम् । इति गाथार्थः ॥१५५॥

प्रतिपादितं गोत्रकर्म, अधुना गोत्रनिगमनपूर्वकमन्तरायमाह—

(पारमा०) सधनो रूपेण युक्तो बुद्धिनिपुणोऽपि 'यस्य' कर्मण उदयेन लोके धृतिकापुत्रोऽयमित्यादिनिन्दां लभते । एतत्पुनर्भवति 'नोयं तु' इति नीचैर्गोत्रं क्षुम्भुलककारिकुम्भकारप्रतिमम् । इति गाथार्थः ॥१५५॥

गोत्रं निगमयन्नन्तरायकप्रस्तावनामाह—

**'गोयं' भणियं अहुणा, अट्ठमयं 'अंतरायय' होइ ।**
**तं भंडारियसरिसं, जह होइ तहा निसामेह ॥१५६॥**

(पू०) व्याख्या-'गोत्रं' सप्तमं कर्म 'भणितं' प्रतिपादितम् । 'अधुना' साम्प्रतं अष्टममेवाष्टमकं, अन्तराये भवमान्तरायिकं कर्म 'भणामः' पतिपादयामः, तत्किंभूतम् ? इत्याह—'भाण्डारिकसदृशं' भाण्डागारनियुक्तपुरुषतुल्यं (यथा भवति) तथैव 'निशमयत' आकर्णयत यूयं कथ्यमानमिति शेषः । इति गाथार्थः ॥१५६॥

अत्रैवार्थे दृष्टान्तमाह अन्वयव्यतिरेकाभ्याम्—

(पारमा०) गोत्रं भणितम्, अधुनाऽष्टमकं अन्तरायकं भवति तद्भाण्डागारिकसदृशं यथा भवति तथा 'निशमयत' शृणुत । इति गाथार्थः ॥१५६॥

प्रतिज्ञातमाह—

**जइ राया इह भंडारिएण विणिएण कुणइ [3]दाणाई ।**
**तेण उ पडिकूलेणं, न कुणइ सो [4]दाणमाईणि ॥१५७॥**

(पू०) व्याख्या—यथेति दृष्टान्तार्थः । यथा 'राजा' नरपतिः 'इह' अस्मिँल्लोके 'भाण्डारिकेण' स्वनियोगिकेन 'विनीतेन' स्वायत्तेन 'करोति' विधत्ते दानमादौ येषां तानि दानादीनि, आदिशब्दाद्भोगोपभोगपरिग्रहः 'तेन तु प्रतिकूलेन' तेन पुनर्विबन्धकेन निषेधकेन 'न करोत्येव' न वितरत्येव 'स' राजा दानादि तु, आदिशब्दाद्भोगोपभोगादिपरिग्रहः । तुशब्दस्यैवकारार्थत्वात् । इति गाथार्थः ॥१५७॥

---

१ "गुत्तं" इत्यपि पाठः । २ "अंतराइयं भणिमो" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातम् । ३ "दाणाइं" इत्यपि पाठः । ४ "दाणमाई उ" इति व्याख्यातारः ।

अभिहितो दृष्टान्तः, अधुना दार्ष्टान्तिकयोजनामाह—

(पारमा०) यथा राजा 'इह' लोके भाण्डागारिकेण विनीतेन दानादीनि करोति । तेन तु प्रतिकूलेन कुतोऽपि वैगुण्यादविधेयेन न करोति स राजा दानादीनि । इति गाथार्थः ॥१५७॥

**जह राया तह जीवो, भंडारी जह 'तहंतराय' [2]च ।**
**तेण उ विबंधएणं न कुणइ सो [3]दाणमाईणि ॥१५८॥**

(पू०) व्याख्या—यथा राजा तथा जीवः तत्तुल्यो भाण्डारिको यथा तथाऽन्तरायिकं कर्म भवति भाण्डागारिकसदृशं जायते । अयमत्र भावार्थः—यदा तदन्तरायं क्षयोपशमादनुकूलं भवति जीवस्य तदाऽसौ दानादीनि करोति । 'तेन तु' पुनरन्तरायकर्मणा 'विबन्धकेन' प्रतिकूलेन न करोति स जीवो दानभोगादि आदिशब्दादुपभोगादिपरिग्रहः । इति गाथार्थः ॥१५८॥

तदेवान्तरायं संख्याभेदेन दर्शयति—

(पारमा०) यथा राजा तथा जीवः, यथा भाण्डागारिकस्तथाऽन्तरायं पुनः । 'तेन' त्वन्तरायेण 'विबन्धकेन' प्रतिकूलेन न करोति स जीवो दानादीनि । इति गाथार्थः ॥१५८॥

सम्प्रति पञ्चप्रकारत्वमाह—

**तं दाणलाभभोगो—वभोगविरियंतराय [4]पंचमयं ।**
**एएसिं तु विवागं [5]वोच्छामि अहाणुपुव्वीए ॥१५९॥**

(पू०) व्याख्या—तद् दानं च लाभश्च भोगश्च उपभोगश्च वीर्यं चेति द्वन्द्वः, एतेषामन्तरायं विघ्नः लुप्तानुस्वारमन्तरायपदं प्राकृतत्वात्, 'पञ्चमयं' पञ्चभेदः । दानं त्रिविधम्, ज्ञानदानम्, अभयदानम्, धर्मोपग्रहदानम् । लाभोऽनेकप्रकारः, दायकादादेयप्राप्तिः । भुज्यत इति भोग आहारपुष्पादिः, उप सामीप्येन पुनः पुनर्वा भुज्यते उपभोगः । वीर्यमान्तरः शक्तिविशेषः । अन्तरायशब्दो विघातकः, स च प्रत्येकं संबध्यते । एतेषां पुनः 'विपाकं' अनुभवं 'वोच्छामि' वक्ष्ये 'यथाऽऽनुपूर्व्या' यथापरिपाट्या । इति गाथार्थः ॥१५९॥

दानान्तरायस्य विषयमाह—

(पारमा०) 'तत्' अन्तरायं दानलाभभोगोपभोगवीर्यान्तरायाः पञ्च प्रकृता अस्मिन् दानलाभभोगोपभोगवीर्यान्तरायपञ्चमयम् । एतेषां तु दानादीनां विपाकं भणामि 'यथानुपूर्व्या' आनुपूर्व्यनतिक्रमेण । इति गाथार्थः ॥१५६॥

---

१ व्याख्याकारेण तु "तहंतराईय" इति पाठानुसारेण व्याख्यातम् । २ "तु" इत्यपि पाठः । ३ व्याख्याकारेण तु "दाणभोगाई" इति पाठानुसारेण व्याख्यातम् । ४ "पंचविहं" इत्यपि पाठः । ५ "वुच्छामि" इत्यपि पाठः, "भणामि य" इति पाठानुसारेण परमानन्दसूरीभिर्व्याख्यातम् ॥

पुणः, सोऽप्येवंविधो 'यस्य' कर्मणः 'उदयन' विपाकेन 'लोके' जने 'लभते' प्राप्नोति 'निन्दां' जुगुप्सां, अकुलीनोऽयं किमस्य गुणैः? एतत्पुनः कर्म नीचैर्गोत्रं निकृष्टगोत्रं विज्ञेयम्। इति गाथार्थः ॥१५५॥

प्रतिपादितं गोत्रकर्म, अधुना गोत्रनिगमनपूर्वकमन्तरायमाह—

(पारमा०) सधनो रूपेण युक्तो बुद्धिनिपुणोऽपि 'यस्य' कर्मण उदयेन लोके धृतिका-पुत्रोऽयमित्यादिनिन्दां लभते। एतत्पुनर्भवति 'नीयं तु' इति नीचैर्गोत्रं सुम्भुलककारिकुम्भ-कारप्रतिमम्। इति गाथार्थः ॥१५५॥

गोत्रं निगमयन्नन्तरायकप्रस्तावनामाह—

[1]गोयं भणियं अहुणा, अट्ठमयं [2]अंतराययं होइ।
तं भंडारियसरिसं, जह होइ तहा निसामेह ॥१५६॥

(पू०) व्याख्या–'गोत्रं' सप्तमं कर्म 'भणितं' प्रतिपादितम्। 'अधुना' साम्प्रतं अष्टम-मेवाष्टमकं, अन्तराये भवमान्तरायिकं कर्म 'भणामः' पतिपादयामः, तत्किंभूतम्? इत्याह– 'भाण्डारिकसदृशं' भाण्डागारनियुक्तपुरुषतुल्यं (यथा भवति) तथैव 'निशमयत' आक-र्णयत यूयं कथ्यमानमिति शेषः। इति गाथार्थः ॥१५६॥

अत्रैवार्थे दृष्टान्तमाह अन्वयव्यतिरेकाभ्याम्—

(पारमा०) गोत्रं भणितम्, अधुनाऽष्टमकं अन्तरायकं भवति तद्भाण्डागारिकसदृशं यथा भवति तथा 'निशमयत' शृणुत। इति गाथार्थः ॥१५६॥

प्रतिज्ञातमाह—

जइ राया इह भंडारिएण विणिएण कुणइ [3]दाणाई।
तेण उ पडिकूलेणं, न कुणइ सो [4]दाणमाईणि ॥१५७॥

(पू०) व्याख्या–यथेति दृष्टान्तार्थः। यथा 'राजा' नरपतिः 'इह' अस्मिँल्लोके 'भाण्डा-रिकेण' स्वनियोगिकेन 'विनीतेन' स्वायत्तेन 'करोति' विधत्ते दानमादौ येषां तानि दाना-दीनि, आदिशब्दाद्भोगोपभोगपरिग्रहः 'तेन तु प्रतिकूलेन' तेन पुनर्विबन्धकेन निषेधकेन 'न करोत्येव' न वितरत्येव 'स' राजा दानादि तु, आदिशब्दाद्भोगोपभोगादिपरिग्रहः। तुशब्दस्यै-वकारार्थत्वात्। इति गाथार्थः ॥१५७॥

---

१ "गुत्तं" इत्यपि पाठः। २ "अंतराइयं भणिमो" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्या-नम्। ३ "दाणाइं" इत्यपि पाठः। ४ "दाणमाई उ" इति व्याख्यावारः।

अभिहितो दृष्टान्तः, अधुना दार्ष्टान्तिकयोजनामाह—

(पारमा०) यथा राजा 'इह' लोके भाण्डागारिकेण विनीतेन दानादीनि करोति। तेन तु प्रतिकूलेन कुतोऽपि वैगुण्यादविधेयेन न करोति स राजा दानादीनि। इति गाथार्थः ॥१५७॥

**जह राया तह जीवो, भंडारी जह [1]तहंतराय [2]च।**
**तेण उ विबंधएणं न कुणइ सो [3]दाणमाईणि ॥१५८॥**

(पू०) व्याख्या—यथा राजा तथा जीवः तत्तुल्यो भाण्डारिको यथा तथाऽन्तरायिकं कर्म भवति भाण्डागारिकसदृशं जायते। अयमत्र भावार्थः—यदा तदन्तरायं क्षयोपशमादनुकूलं भवति जीवस्य तदाऽसौ दानादीनि करोति। 'तेन तु' पुनरन्तरायकर्मणा 'विघ्नचकेन' प्रतिकूलेन न करोति स जीवो दानभोगादि आदिशब्दादुपभोगादिपरिग्रहः। इति गाथार्थः ॥१५८॥

तदेवान्तरायं संख्याभेदेन दर्शयति—

(पारमा०) यथा राजा तथा जीवः, यथा भाण्डागारिकस्तथाऽन्तरायं पुनः। 'तेन' तन्तरायेण 'विघ्नचकेन' प्रतिकूलेन न करोति स जीवो दानादीनि। इति गाथार्थः ॥१५८॥

सम्प्रति पञ्चप्रकारत्वमाह—

**तं दाणलाभभोगो-वभोगविरियंतराय [4]पंचमयं।**
**एएसिं तु विवागं [5]वोच्छामि अहाणुपुव्वीए ॥१५९॥**

(पू०) व्याख्या—तद् दानं च लाभश्च भोगश्च उपभोगश्च वीर्यं चेति द्वन्द्वः, एतेषामन्तरायं विघ्नः लुप्तानुस्वारमन्तरायपदं प्राकृतत्वात्, 'पञ्चमयं' पञ्चभेदः। दानं त्रिविधम्, ज्ञानदानम्, अभयदानम्, धर्मोपग्रहदानम्। लाभोऽनेकप्रकारः, दायकाददेयप्राप्तिः। भुज्यत इति भोग आहारपुष्पादिः, उप सामीप्येन पुनः पुनर्वा भुज्यते उपभोगः। वीर्यमान्तरः शक्तिविशेषः। अन्तरायशब्दो विघातकः, स च प्रत्येकं संबध्यते। एतेषां पुनः 'विपाकं' अनुभवं 'वोच्छामि' वक्ष्ये 'यथाऽऽनुपूर्व्या' यथापरिपाट्या। इति गाथार्थः ॥१५९॥

दानान्तरायस्य विषयमाह—

(पारमा०) 'तत्' अन्तरायं दानलाभभोगोपभोगवीर्यान्तरायाः पञ्च प्रकृता अस्मिन् दानलाभभोगोपभोगवीर्यान्तरायपञ्चमयम्। एतेषां तु दानादीनां विपाकं भणामि 'यथानुपूर्व्या' आनुपूर्व्यनतिक्रमेण। इति गाथार्थः ॥१५९॥

---

१ व्याख्याकारेण तु "तहंतराइयं" इति पाठानुसारेण व्याख्यातम्। २ "तु" इत्यपि पाठः। ३ व्याख्याकारेण तु "दाणभोगाई" इति पाठानुसारेण व्याख्यातम्। ४ "पंचविहं" इत्यपि पाठः। ५ "वुच्छामि" इत्यपि पाठः, "भणामि य" इति पाठानुसारेण परमानन्दसूरीभिर्व्याख्यातम्॥

तत्र दानान्तरायमाह—

सइ फासुयंमि दाणे, दाणफलं तह य बुज्झई विउलं ।
बंभञ्चेराइजुयं, पत्तंपि य विज्जए तत्थ ॥१६०॥

(पू०) व्याख्या–'सति' विद्यमाने 'प्रासुके' निर्जीवे 'दाने' देयवस्तुनि, तथा न केवलं देयमस्ति, दानस्य यत् फलं स्वर्गापवर्गलक्षणं, तच्च बुध्यते 'अतुलं' अनन्यसाधारणं, न केवलं फलं वेत्ति, ब्रह्मचर्यादियुक्तम्, आदिशब्दादहिंसादिपरिग्रहः । पात्रमपि च देययोग्यं साधुरूपमपि च 'विद्यते' अस्ति 'अत्र' लोके दान[2]प्रस्तावे । इति गाथार्थः ॥१६०॥

उक्तं दानकारणम्, सत्यपि तस्मिन् दानान्तरायमाह—

(पारमा०) 'सति' विद्यमाने 'प्रासुके' यतिजनग्रहणोचिते 'दाने' देयवस्तुनि न केवलं देयमस्ति । तथा दानफलं च 'अतुल्यं' असाधारणं स्वर्गापवर्गादि 'बुध्यते' जानाति दान-सामग्रीपतितो जीव इति गम्यम् । न केवलं फलं वेत्ति, ब्रह्मचर्यादीति ब्रह्मचर्यज्ञानतपोयुक्तं पात्रमपि च विद्यते तत्रेति दानप्रस्तावे ॥१६०॥

दाउं नवरि न सक्कइ, दाणविघायस्स [3]कम्मणो उदए ।
दाणंतरायमेयं, लाभेवि य भण्णए विग्घं ॥१६१॥

(पू०) व्याख्या–दानसामग्र्यां सत्यामपि 'दातुं' प्रयच्छयितुं (वितरीतुं) 'नवरं' केवलं 'न शक्नोति' न शक्तो भवति, क्व सति ? इत्याह–'दानविघातस्य कर्मण उदये' वितरण-विघ्नकरस्य कर्मणो विपाके दानान्तरायं 'एतत्' कर्म । यदस्मिन् सति दानसामग्रीसद्भावेऽपि दानं न करोति । दानान्तरायमिदं प्रत्यक्षोक्तं । लाभेऽपि च, न केवलं दाने 'भण्यते' प्रति-पाद्यते 'विघ्न[1]' अन्तरायम् । इति गाथार्थः ॥१६१॥

तदेवाह—

(पारमा०) केवलमेवंविधायामपि सामग्र्यां 'दानविघातस्य' दानविघ्नकरस्य कर्मण उदयाद्दातुं न शक्नोति, एतद्दानान्तरायम् । लाभान्तरायं प्रस्तौति–लाभेऽपि च भण्यते 'विघ्न' अन्तरायम् । इति गाथाद्वयार्थः ॥१६१॥

प्रतिज्ञातमाह—

---

१ व्याख्याकारेण तु "इत्य" इति पाठ आहतः । २ ०प्रस्तावे च । जे० । ३ कम्मुणो इत्यपि पाठः ।

जइवि पसिद्धो दाया, जायणनिउणोवि जायगो [1]जइवि ।
[2]न लहइ जस्सुदएणं, एयं पुण लाभविग्घं तु ॥१६२॥

(पू०) व्याख्या—यद्यपि प्रसिद्धो भवति दाता, सर्वजनदायकत्वेन प्रसिद्धिं गतः, एकः कश्चित्कस्यचिद्ददाति कस्यचिन्न स न प्रसिद्धः । यस्तु सार्वजनिकः स प्रसिद्धो भवति दाता । यद्यपि दाता प्रसिद्धो भवति तथाऽपि याचको न निपुणः ततो दानं न प्रवर्तते इत्याह—याचना=मार्गणा तत्र निपुणो विज्ञानवान्, तथा [3]याचते यथाऽदातापि ददाति, किं पुनर्दाता ? । याचको [4]यद्यप्येवंभूतस्तथाऽपि नापि(?) 'नैव लभते' न प्राप्नोति दातुः सकाशात्, 'यस्य' कर्मणः 'उदयेन' विपाकेनैतत्पुनः 'लाभविघ्नं तु' लाभान्तरायमेव । ननु तद्दानान्तरायमेव किमितिकृत्वा दातुर्नोच्यते, यावल्लाभान्तरायमुच्यते [5]याचितुः ?, उच्यते—स्यादिदं वचो दानान्तरायमेव तन्न लाभान्तरायम् । यदि दाता यथा तस्य विवक्षितस्य न ददाति तथाऽन्यस्यापि यदि न कस्यचिद्दद्यात्तदा त्वदुक्तमेव स्यात् । यावता त्वसौ विवक्षितस्यैव न ददाति, अन्यस्य तु पुनः सर्वस्यापि ददाति तस्माल्लाभान्तरायमेव तत्, न दानान्तरायं दायकविषयं हि तद् ग्राहकविषयं तु, लाभान्तरायम् । इति गाथार्थः ॥१६२॥

उक्तं लाभान्तरायम् । अधुना भोगोपभोगसाधनसत्तायामप्युपभोगभोगयोर्विघ्नमाह—

(पारमा०) यद्यपि प्रसिद्धो दाता सर्वजनदायकत्वेन । यः किल कस्यचिद्ददाति कस्यचिन्न तस्मान्न निश्चयेन लाभः संभवतीति प्रसिद्धोपादानम् । एवंविधेऽपि दातरि अकालमार्गणउच्छृङ्खलभाषणादियाचकवैगुण्यादपि न दानसंभव इत्याह—याचननिपुणश्च याचको यद्यपि प्रसादपरं ज्ञात्वा प्रह्लादयन् तथा याचते यथाऽदाताऽपि ददाति, किं पुनर्दाता ? । तथाऽपि न लभते 'यस्य' कर्मण उदयेन, एतत्पुनर्लाभविघ्नं लाभान्तरायम् । इति गाथार्थः ॥१६२॥

अथ भोगोपभोगयोर्विघ्नमाह—

मणुयत्तेवि [6]हु पत्ते, [7]लद्धे वि हु भोगसाहणे विभवे ।
भुत्तुं नवरि न सक्कइ, विरइविहूणोवि जस्सुदए ॥१६३॥

(पू०) व्याख्या—मनुष्यत्वं पुरुषत्वं प्रधानं भोगोपभोगकरणं विकलादिगतौ तदयोग्यत्वात् तस्मात्तत्प्राप्तिरेव दुर्लभा, अतो दुर्लभे मनुजत्वे प्राप्तेऽपि तथा मनुजत्वे सत्यपि प्रधानं भोगकारणं विभवः, तदभावे तेषां भोक्तुमशक्य[8]त्वात्परिभोक्तुम् (?), अत आह—'लब्धेऽपि च'

---

१ "जयवि" (?) इत्यपि पाठः । २ "न वि लब्भइ जस्सुदए" इत्यपि पाठः । ३ याचयति (?) जे० । ४ यदा-ऽपि (?) जे० । ५ याचयितुः (?) जे० । ६ "य" इत्यपि पाठः । ७ "लद्धेवि य भोगसाहणे विभवे । इयभुंजिउं न सक्कइ" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातमस्ति । ८ त्वात्, अत जे० ।

तत्र दानान्तरायमाह—

सइ फासुयंमि दाणे, दाणफलं तह य बुज्झई विउलं ।
बंभच्चेराइजुयं, पत्तंपि य विज्जए [1]तत्थ ॥१६०॥

(पू०) व्याख्या–'**सति**' विद्यमाने '**प्रासुके**' निर्जीवे '**दाने**' देयवस्तुनि, तथा न केवलं देयमस्ति, दानस्य यत् फलं स्वर्गापवर्गलक्षणं, तच्च वुध्यते '**अतुलं**' अनन्यसाधारणं, न केवलं फलं वेत्ति, ब्रह्मचर्यादियुक्तम्, आदिशब्दादहिंसादिपरिग्रहः । पात्रमपि च देययोग्यं साधुरूपमपि च '**विद्यते**' अस्ति '**अत्र**' लोके दान[2]प्रस्तावे । इति गाथार्थः ॥१६०॥

उक्तं दानकारणम्, सत्यपि तस्मिन् दानान्तरायमाह—

(पारमा०) '**सति**' विद्यमाने '**प्रासुके**' यतिजनग्रहणोचिते '**दाने**' देयवस्तुनि न केवलं देयमस्ति । तथा दानफलं च '**अतुल्यं**' असाधारणं स्वर्गापवर्गादि '**बुध्यते**' जानाति दानसामग्रीपतितो जीव इति गम्यम् । न केवलं फलं वेत्ति, ब्रह्मचर्यादीति ब्रह्मचर्यज्ञानतपोयुक्तं पात्रमपि च विद्यते तत्रेति दानप्रस्तावे ॥१६०॥

दाउं नवरि न सक्कइ, दाणविघायस्स [3]कम्मणो उदए ।
दाणंतरायमेयं, लाभेवि य भण्णए विग्घं ॥१६१॥

(पू०) व्याख्या–दानसामग्र्यां सत्यामपि '**दातुं**' प्रयच्छयितुं (वितरीतुं) '**नवरं**' केवलं '**न शक्नोति**' न शक्तो भवति, क सति ? इत्याह–'**दानविघातस्य कर्मण उदये**' वितरणविघ्नकरस्य कर्मणो विपाके दानान्तरायं '**एतत्**' कर्म । यदस्मिन् सति दानसामग्रीसद्भावेऽपि दानं न करोति । दानान्तरायमिदं प्रत्यक्षोक्तं । लाभेऽपि च, न केवलं दाने '**भण्यते**' प्रतिपाद्यते '**विघ्नं**' अन्तरायम् । इति गाथार्थः ॥१६१॥

तदेवाह—

(पारमा०) केवलमेवंविधायामपि सामग्र्यां '**दानविघातस्य**' दानविघ्नकरस्य कर्मण उदयाद्दातुं न शक्नोति, एतद्दानान्तरायम् । लाभान्तरायं प्रस्तौति–लाभेऽपि च भण्यते '**विघ्नं**' अन्तरायम् । इति गाथाद्वयार्थः ॥१६१॥

प्रतिज्ञातमाह—

---

१ व्याख्याकारेण तु "इत्थ" इति पाठ आहतः । २ ०प्रस्तावे च । जे० । ३ कम्मुणो इत्यपि पाठः ।

जइवि पसिद्धो दाथा, जायणनिउणोवि जायगो [1]जइवि ।
[2]न लहइ जस्सुदएणं, एयं पुण लाभविग्घं तु ॥१६२॥

(पू०) व्याख्या—यद्यपि प्रसिद्धो भवति दाता, सर्वजनदायकत्वेन प्रसिद्धिं गतः, एकः कश्चित्कस्यचिद्ददाति कस्यचिन्न स न प्रसिद्धः । यस्तु सार्वजनिकः स प्रसिद्धो भवति दाता । यद्यपि दाता प्रसिद्धो भवति तथाऽपि याचको न निपुणः ततो दानं न प्रवर्तते इत्याह—याचना=मार्गणा तत्र निपुणो विज्ञानवान्, तथा [3]याचते यथाऽदातापि ददाति, किं पुनर्दाता ? । याचको [4]यद्यप्येवंभूतस्तथाऽपि नापि(?) 'नैव लभते' न प्राप्नोति दातुः सकाशात्, 'यस्य' कर्मणः 'उदयेन' विपाकेनैतत्पुनः 'लाभविघ्नं तु' लाभान्तरायमेव । ननु तद्दानान्तरायमेव किमितिकृत्वा दातुर्नोच्यते, यावल्लाभान्तरायमुच्यते [5]याचितुः ?, उच्यते—स्यादिदं वचो दानान्तरायमेव तन्न लाभान्तरायम् । यदि दाता यथा तस्य विवक्षितस्य न ददाति तथाऽन्यस्यापि यदि न कस्यचिद्दद्यात्तदा त्वदुक्तमेव स्यात् । यावता त्वसौ विवक्षितस्यैव न ददाति, अन्यस्य तु पुनः सर्वस्यापि ददाति तस्माल्लाभान्तरायमेव तत्, न दानान्तरायं दायकविषयं हि तद् ग्राहकविषयं तु, लाभान्तरायम् । इति गाथार्थः ॥१६२॥

उक्तं लाभान्तरायम् । अधुना भोगोपभोगसाधनसत्तायामप्युपभोगभोगयोर्विघ्नमाह—

(पारमा०) यद्यपि प्रसिद्धो दाता सर्वजनदायकत्वेन । यः किल कस्यचिद्ददाति कस्यचिन्न तस्मान्न निश्चयेन लाभः संभवतीति प्रसिद्धोपादानम् । एवंविधेऽपि दातरि अकालमार्गणउच्छृङ्खलमापणादियाचकत्रैगुण्यादपि न दानसंभव इत्याह—याचननिपुणश्च याचको यद्यपि प्रसादपरं ज्ञात्वा प्रह्लादयन् तथा याचते यथाऽदाताऽपि ददाति, किं पुनर्दाता ? । तथाऽपि न लभते 'यस्य' कर्मण उदयेन, एतत्पुनर्लाभविघ्नं लाभान्तरायम् । इति गाथार्थः ॥१६२॥

अथ भोगोपभोगयोर्विघ्नमाह—

मणुयत्तोवि [6]हु पत्तो, [7]लद्धेवि हु भोगसाहणे विभवे ।
भुत्तुं नवरि न सक्कइ, विरइविहूणोवि जस्सुदए ॥१६३॥

(पू०) व्याख्या—मनुष्यत्वं पुरुषत्वं प्रधानं भोगोपभोगकरणं विकलादिगतौ तदयोग्यत्वात् तस्मात्तत्प्राप्तिरेव दुर्लभा, अतो दुर्लभे मनुजत्वे प्राप्तेऽपि तथा मनुजत्वे सत्यपि प्रधानं भोगकारणं विभवः, तदभावे तेषां भोक्तुमशक्य[8]त्वात्परिभोक्तुम् (?), अत आह—'लब्धेऽपि च'

१ "जयवि" (?) इत्यपि पाठः । २ "न वि लब्भइ जस्सुदए" इत्यपि पाठः । ३ याचयति (?) जे० । ४ यदा-ऽपि (?) जे० । ५ याचयितुः (?) जे० । ६ "य" इत्यपि पाठः । ७ "लद्धेवि य भोगसाहणे विभवे । उयभुंजिउं न सक्कइ" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातमस्ति । ८ त्वात्, अत जे० ।

तत्र दानान्तरायमाह—

सइ फासुयंमि दाणे, दाणफलं तह य बुज्झई विउलं।
बंभच्चेराइजुयं, पत्तंपि य विज्जए [1]तत्थ ॥१६०॥

(पू०) व्याख्या—'सति' विद्यमाने 'प्रासुके' निर्जीवे 'दाने' देयवस्तुनि, तथा न केवलं देयमस्ति, दानस्य यत् फलं स्वर्गापवर्गलक्षणं, तच्च बुध्यते 'अतुलं' अनन्यसाधारणं, न केवलं फलं वेत्ति, ब्रह्मचर्यादियुक्तम्, आदिशब्दादहिंसादिपरिग्रहः। पात्रमपि च देययोग्यं साधुरूपमपि च 'विद्यते' अस्ति 'अत्र' लोके दान[2]प्रस्तावे। इति गाथार्थः ॥१६०॥

उक्तं दानकारणम्, सत्यपि तस्मिन् दानान्तरायमाह—

(पारमा०) 'सति' विद्यमाने 'प्रासुके' यतिजनग्रहणोचिते 'दाने' देयवस्तुनि न केवलं देयमस्ति। तथा दानफलं च 'अतुल्यं' असाधारणं स्वर्गापवर्गादि 'बुध्यते' जानाति दानसामग्रीपतितो जीव इति गम्यम्। न केवलं फलं वेत्ति, ब्रह्मचर्यादीति ब्रह्मचर्यज्ञानतपोयुक्तं पात्रमपि च विद्यते तत्रेति दानप्रस्तावे ॥१६०॥

दाउं नवरि न सक्कइ, दाणविघायस्स [3]कम्मणो उदए।
दाणंतरायमेयं, लाभेवि य भण्णए विग्घं ॥१६१॥

(पू०) व्याख्या—दानसामग्र्यां सत्यामपि 'दातुं' प्रयच्छयितुं (वितरीतुं) 'नवरं' केवलं 'न शक्नोति' न शक्तो भवति, क्व सति? इत्याह—'दानविघातस्य कर्मण उदये' वितरणविघ्नकरस्य कर्मणो विपाके दानान्तरायं 'एतत्' कर्म। यदस्मिन् सति दानसामग्रीसद्भावेऽपि दानं न करोति। दानान्तरायमिदं प्रत्यक्षोक्तं। लाभेऽपि च, न केवलं दाने 'भण्यते' प्रतिपाद्यते 'विघ्नं' अन्तरायम्। इति गाथार्थः ॥१६१॥

तदेवाह—

(पारमा०) केवलमेवंविधायामपि सामग्र्यां 'दानविघातस्य' दानविघ्नकरस्य कर्मण उदयाद्दातुं न शक्नोति, एतद्दानान्तरायम्। लाभान्तरायं प्रस्तौति—लाभेऽपि च भण्यते 'विघ्नं' अन्तरायम्। इति गाथाद्वयार्थः ॥१६१॥

प्रतिज्ञातमाह—

---

१ व्याख्याकारेण तु "इत्थ" इति पाठ आदृतः। २ ०प्रस्तावे च। जै०। ३ कम्मुणो इत्यपि पाठः।

जइवि पसिद्धो दाया, जायणनिउणोवि जायगो [1]जइवि ।
[2]न लहइ जस्सुदएणं, एयं पुण लाभविग्घं तु ॥१६२॥

(पू०) व्याख्या–यद्यपि प्रसिद्धो भवति दाता, सर्वजनदायकत्वेन प्रसिद्धिं गतः, एकः कश्चित्कस्यचिद्दाति कस्यचिन्न स न प्रसिद्धः । यस्तु सार्वजनिकः स प्रसिद्धो भवति दाता । यद्यपि दाता प्रसिद्धो भवति तथाऽपि याचको न निपुणः ततो दानं न प्रवर्तते इत्याह–याचना=मार्गणा तत्र निपुणो विज्ञानवान्, तथा [3]याचते यथाऽदातापि ददाति, किं पुनर्दाता ? । याचको [4]यद्यप्येवंभूतस्तथाऽपि नापि(?) 'नैव लभते' न प्राप्नोति दातुः सकाशात्, 'यस्य' कर्मणः 'उदयेन' विपाकेनैतत्पुनः 'लाभविघ्नं तु' लाभान्तरायमेव । ननु तद्दानान्तरायमेव किमितिकृत्वा दातुर्नोच्यते, यावल्लाभान्तरायमुच्यते [5]याचितुः ?, उच्यते–स्यादिदं वचो दानान्तरायमेव तन्न लाभान्तरायम् । यदि दाता यथा तस्य विवक्षितस्य न ददाति तथाऽन्यस्यापि यदि न कस्यचिद्दद्यात्तदा त्वदुक्तमेव स्यात् । यावता त्वसौ विवक्षितस्यैव न ददाति, अन्यस्य तु पुनः सर्वस्यापि ददाति तस्माल्लाभान्तरायमेव तत्, न दानान्तरायं दायकविषयं हि तद् ग्राहकविषयं तु, लाभान्तरायम् । इति गाथार्थः ॥१६२॥

उक्तं लाभान्तरायम् । अधुना भोगोपभोगसाधनसत्तायामप्युपभोगभोगयोर्विघ्नमाह—

(पारमा०) यद्यपि प्रसिद्धो दाता सर्वजनदायकत्वेन । यः किल कस्यचिद्दाति कस्यचिन्न तस्मान्न निश्चयेन लाभः संभवतीति प्रसिद्धोपादानम् । एवंविधेऽपि दातरि अकालमार्गणउच्छृङ्खलभाषणादियाचकवैगुण्यादपि न दानसंभव इत्याह–याचननिपुणश्च याचको यद्यपि प्रसादपरं ज्ञात्वा प्रह्लादयन् तथा याचते यथाऽदाताऽपि ददाति, किं पुनर्दाता ? । तथाऽपि न लभते 'यस्य' कर्मण उदयेन, एतत्पुनर्लाभविघ्नं लाभान्तरायम् । इति गाथार्थः ॥१६२॥

अथ भोगोपभोगयोर्विघ्नमाह—

मणुयत्तेवि [6]हु पत्ते, [7]लद्धे वि हु भोगसाहणे विभवे ।
भुत्तुं नवरि न सक्कइ, विरइविहूणोवि जस्सुदए ॥१६३॥

(पू०) व्याख्या–मनुष्यत्वं पुरुषत्वं प्रधानं भोगोपभोगकारणं विकलादिगतौ तदयोग्यत्वात् तस्मात्तत्प्राप्तिरेव दुर्लभा, अतो दुर्लभे मनुजत्वे प्राप्तेऽपि तथा मनुजत्वे सत्यपि प्रधानं भोगकारणं विभवः, तदभावे तेषां भोक्तुमशक्य[8]त्वात्परिभोक्तुम् (?), अत आह—'लब्धेऽपि च'

---

१ "जयवि" (?) इत्यपि पाठः । २ "न वि लब्भइ जस्सुदए" इत्यपि पाठः । ३ याच्यति (?) जे० । ४ यदा-ऽपि (?) जे० । ५ याचयितुः (?) जे० । ६ "य" इत्यपि पाठः । ७ "लद्धेवि य भोगसाहणे विभवे । उवभुजिउं न सक्कइ" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातमस्ति । ८ त्वात्, अत जे० ।

तत्र दानान्तरायमाह—

सइ फासुयंमि दाणे, दाणफलं तह य बुज्झई विउलं ।
बंभञ्चेराइजुयं, पत्तंपि य विज्जए [1]तत्थ ॥१६०॥

(पू०) व्याख्या-'सति' विद्यमाने 'प्रासुके' निर्जीवे 'दाने' देयवस्तुनि, तथा न केवलं देयमस्ति, दानस्य यत् फलं स्वर्गापवर्गलक्षणं, तच्च बुध्यते 'अतुलं' अनन्यसाधारणं, न केवलं फलं वेत्ति, ब्रह्मचर्यादियुक्तम्, आदिशब्दादहिंसादिपरिग्रहः । पात्रमपि च देययोग्यं साधुरूपमपि च 'विद्यते' अस्ति 'अत्र' लोके दान[2]प्रस्तावे । इति गाथार्थः ॥१६०॥

उक्तं दानकारणम्, सत्यपि तस्मिन् दानान्तरायमाह—

(पारमा०) 'सति' विद्यमाने 'प्रासुके' यतिजनग्रहणोचिते 'दाने' देयवस्तुनि न केवलं देयमस्ति । तथा दानफलं च 'अतुल्यं' असाधारणं स्वर्गापवर्गादि 'बुध्यते' जानाति दान-सामग्रीपतितो जीव इति गम्यम् । न केवलं फलं वेत्ति, ब्रह्मचर्यादीति ब्रह्मचर्यज्ञानतपोयुक्तं पात्रमपि च विद्यते तत्रेति दानप्रस्तावे ॥१६०॥

दाउं नवरि न सक्कइ, दाणविघायस्स [3]कम्मणो उदए ।
दाणंतरायमेयं, लाभेवि य भण्णए विग्घं ॥१६१॥

(पू०) व्याख्या-दानसामग्र्यां सत्यामपि 'दातुं' प्रयच्छयितुं (वितरीतुं) 'नवरं' केवलं 'न शक्नोति' न शक्तो भवति, क्व सति ? इत्याह-'दानविघातस्य कर्मण उदये' वितरण-विघ्नकरस्य कर्मणो विपाके दानान्तरायं 'एतत्' कर्म । यदस्मिन् सति दानसामग्रीसद्भावेऽपि दानं न करोति । दानान्तरायमिदं प्रत्यक्षोक्तं । लाभेऽपि च, न केवलं दाने 'भण्यते' प्रति-पाद्यते 'विघ्नं' अन्तरायम् । इति गाथार्थः ॥१६१॥

तदेवाह—

(पारमा०) केवलमेवंविधायामपि सामग्र्यां 'दानविघातस्य' दानविघ्नकरस्य कर्मण उदयाद्दातुं न शक्नोति, एतद्दानान्तरायम् । लाभान्तरायं प्रस्तौति-लाभेऽपि च भण्यते 'विघ्नं' अन्तरायम् । इति गाथाद्वयार्थः ॥१६१॥

प्रतिज्ञातमाह—

१ व्याख्याकारेण तु "इत्थ" इति पाठ आहतः । २ ०प्रस्तावे च । जे० । ३ कम्मुणो इत्यपि पाठः ।

जइवि पसिद्धो दाया, जायणनिउणोवि जायगो [1]जइवि।
[2]न लहइ जस्सुदएणं, एयं पुण लाभविग्घं तु ॥१६२॥

(पू०) व्याख्या—यद्यपि प्रसिद्धो भवति दाता, सर्वजनदायकत्वेन प्रसिद्धिं गतः, एकः कश्चि-त्कस्यचिद्ददाति कस्यचिन्न स न प्रसिद्धः। यस्तु सार्वजनिकः स प्रसिद्धो भवति दाता। यद्यपि दाता प्रसिद्धो भवति तथाऽपि याचको न निपुणः ततो दानं न प्रवर्तते इत्याह—याचना=मार्गणा तत्र निपुणो विज्ञानवान्, तथा [3]याचते यथाऽदातापि ददाति, किं पुनर्दाता ? । याचको [4]यद्य-प्येवंभूतस्तथाऽपि नापि(?)'नैव लभते' न प्राप्नोति दातुः सकाशात्, 'यस्य' कर्मणः 'उदयेन' विपाकेनैतत्पुनः 'लाभविघ्नं तु' लाभान्तरायमेव। ननु तद्दानान्तरायमेव किमितिकृत्वा दातु-र्नोच्यते, यावल्लाभान्तरायमुच्यते [5]याचितुः ?, उच्यते—स्याददिदं वचो दानान्तरायमेव तन्न लाभान्तरायम्। यदि दाता यथा तस्य विवक्षितस्य न ददाति तथाऽन्यस्यापि यदि न कस्य-चिद्दद्यात्तदा त्वदुक्तमेव स्यात्। यावता त्वसौ विवक्षितस्यैव न ददाति, अन्यस्य तु पुनः सर्वस्यापि ददाति तस्माल्लाभान्तरायमेव तत्, न दानान्तरायं दायकविषयं हि तद् ग्राहकविषयं तु, लाभान्तरायम्। इति गाथार्थः ॥१६२॥

उक्तं लाभान्तरायम्। अधुना भोगोपभोगसाधनसत्तायामप्युपभोगभोगयोर्विघ्नमाह—

(पारमा०) यद्यपि प्रसिद्धो दाता सर्वजनदायकत्वेन। यः किल कस्यचिद्ददाति कस्यचिन्न तस्मान्न निश्चयेन लाभः संभवतीति प्रसिद्धोपादानम्। एवंविधेऽपि दातरि अकालमार्गणउच्छृ-ङ्खलभाषणादियाचकवैगुण्यादपि न दानसंभव इत्याह—याचननिपुणश्च याचको यद्यपि प्रसादपरं ज्ञात्वा प्रह्लादयन् तथा याचते यथाऽदाताऽपि ददाति, किं पुनर्दाता ?। तथाऽपि न लभते 'यस्य' कर्मण उदयेन, एतत्पुनर्लाभविघ्नं लाभान्तरायम्। इति गाथार्थः ॥१६२॥

अथ भोगोपभोगयोर्विघ्नमाह—

मणुयत्तोवि [6]हु पत्तो, [7]लद्धे वि हु भोगसाहणे विभवे।
भुत्तुं नवरि न सक्कइ, विरइविहूणोवि जस्सुदए॥१६३॥

(पू०) व्याख्या—मनुष्यत्वं पुरुषत्वं प्रधानं भोगोपभोगकरणं विकलादिगतौ तदयोग्यत्वात् तस्मात्तत्प्राप्तिरेव दुर्लभा, अतो दुर्लभे मनुजत्वे प्राप्तेऽपि तथा मनुजत्वे सत्यपि प्रधानं भोग-कारणं विभवः, तदभावे तेषां भोक्तुमशक्य[8]त्वात्परिभोक्तुम् (?), अत आह—'लब्धेऽपि च'

---

१ "जयवि" (?) इत्यपि पाठः। २ "न वि लब्भइ जस्सुदए" इत्यपि पाठः। ३ याचयति (?) जे०। ४ यदा-ऽपि (?) जे०। ५ याचयितुः (?) जे०। ६ "य" इत्यपि पाठः। ७ "लद्धेवि य भोगसाहणे विभवे। उयभुजिउं न सफइ" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातमस्ति। ८ त्वात्, भव जे०।

प्राप्तेऽपि च **'भोगसाधने'** भोगशब्दस्योपलक्षणत्वाद्भोगोपभोगकारणे **'विभवे'** धनादौ, किम्? इत्याह–**'उपभोक्तुं'** परिभोक्तुं **'न शक्नोति'** न शक्तः, कथंभूतः सन्? इत्याह– **'विरतिविहीनोऽपि'** विरतिरहितोऽपि **'यस्य'** कर्मणः **'उदये'** विपाके। इति गाथार्थः॥१६३॥

तदेतत् किम्? इत्याह—

(पारमा०) **'मनुष्यत्वेऽपि'** विशिष्टभोगयोग्यताऽसाधारणकारणे प्राप्ते तत्रापि प्रधानं भोगसाधनं विभव इत्युक्तम् **'लब्धेऽपि'** प्राप्तेऽपि **'भोगसाधने विभवे'** भोजनताम्बूलविलेपनादिविधिप्रसाधने धने भोक्तुं **'नवरं'** केवलं **'यस्य'** कर्मणः **'उदये'** विपाके **'विरतिविहीनोऽपि'** भावनावशमनुत्थपरिहारामिसन्धिशून्योऽपि कार्पण्याशक्त्यादिकारणवशान्न शक्नोति॥१६३॥

[१]भोगस्स विग्घमेयं, उवभोगे आवि विग्घमेवेव।
भोगुवभोगाणेसिं, नवरि विसेसो इमो होइ॥१६४॥

(पू०) व्याख्या–उप सामीप्येन भुज्यते परिसमन्तात् पुनः पुनर्वा भुज्यत इत्युपभोगस्तस्य विघ्नं एतदुपभोगान्तरायम्। [२]भोगोऽप्येवमेव उपभोगोक्तनीत्या, यथोपभोगेऽन्तरायमभिहितं तथाऽत्रापि विघ्नं द्रष्टव्यम्। तुशब्दः पादपूरणः। ननु सूत्रोक्तं क्रममुल्लङ्घ्य किमर्थमुपभोगान्तरायव्याख्यातम्? सूत्रक्रमात्प्रथमं भोगान्तरायं व्याख्यातुं युज्यते, अत्रोच्यते–उपभोगस्य प्राधान्यख्यापनार्थं व्यतिक्रमव्याख्यानम्। भोगोपभोगयोः कः प्रतिविशेषः? इत्युच्यते, **'नवरं'** केवलं विशेषः **'एष.'** वक्ष्यमाणलक्षणः (**'भवति'** जायते)। इति गाथार्थः॥१६४॥

भोगोपभोगयोर्विषयव्यवस्थामाह—

(पारमा०) भोगविघ्नमेतदिति भोगान्तरायमिदमिति भावः। उपभोगे चापि विघ्नमेवमेवेति पूर्ववत्। यदुदयेन मनुष्यत्वेऽपि प्राप्ते ललितललनाद्युपभोग्यतासंबन्धनिबन्धने लब्धेऽप्युभोगसाधने अमररमणीरामणीयकहठहरणप्रवीणपण्यतरुणीवशीकरणकार्मणसन्निभे विभवे ब्रह्मचर्यादिविशिष्टपरिणामापरिगतोऽपि कदर्यत्वासामर्थ्यादिकारणवशादुपभोक्तुं न शक्नोति तदुपभोगान्तरायमिति भावः। भोगोपभोगयोरेतयोः केवलं विशेषः **'एषः'** वक्ष्यमाणलक्षणो भवति। इति गाथाद्वयार्थः॥१६४॥ प्रतिज्ञातमाह—

सइ भुज्जइत्ति भोगो, सो [३]पुण आहारपुप्फमाईओ।
उवभोगो [४]य पुणो पुण, उवभुज्जइ भवणविलयाई॥१६५॥

---

१ "उवभोगविग्घमेयं. भोगेवि हु एवमेव विग्घं तु" इत्यपि पाठस्तदनुसारेण व्याख्याकारेण व्याख्यातमस्ति॥ २ भोगे जे०। ३ "पुणु आहारपुप्फमाईणं" इत्यपि पाठः। ४ "उ" इत्यपि पाठः।

(पू०) व्याख्या—'सकृद्' एकयैव वारया निर्वर्तितं वस्तु भुज्यते, एकां वा वारां भुज्यत इति भोगः। स पुनः कः ? इत्याह—आहारश्चतुर्विधोऽशनपानखादिमस्वादिमरूपः, पुष्पाण्यादौ यस्याहारादेः स आहारपुष्पादिर्भोग्यं वस्तूच्यते आदिशब्दाद्विलेपनादिपरिग्रहः। उपभोगस्तु पुनः पुनर्भुज्यते, उप सामीप्येन वा भुज्यते उपभोगः। स च कः ? इत्याह—'भवनविलयादिः' भवनं धवलगृहादि, विलयादि कलत्रादि आदिशब्दादाभरणादिपरिग्रहः। इति गाथार्थः ॥१६५॥

अभिहितं भोगोपभोगान्तरायम्। साम्प्रतं वीर्यान्तरायमाह—

(पारमा०) 'सकृद्' एकवारं भुज्यत इति भोगः, स पुनराहारपुष्पादिकः। उपभोगश्च पुनः पुनरुपभुज्यते 'भवनवनितादिकः' गृहगृहिणीप्रभृतिकः। इति गाथार्थः ॥१६५॥

उक्तं भोगोपभोगयोरन्तरायं सकृत्पौनःपुन्यासेवनलक्षणो विशेषश्च। अधुना वीर्यान्तरायमाह—

बलवं रोगविउत्तो, वयसंपण्णोवि जस्स उदएणं।
विरिएण होइ हीणो, वीरियविग्धं तु पंचमयं ॥१६६॥

(पू०) व्याख्या—'बलवान्' बलसंपन्नः 'रोगवियुक्तः' रोगरहितः 'वयःसंपन्नः' शरीरावस्थया विशिष्टवयोऽवस्थासंपन्नः, सोऽप्येवंभूतोऽपि 'यस्य' कर्मणः 'उदयेन' विपाकेन 'वीर्येण भवति हीनः' अन्तःप्राणेन जायते रहितः। 'वीरियविग्घं तु पञ्चमयं' वीर्यान्तरायमेव पञ्चमकं संख्यया। इति गाथार्थः ॥१६६॥

अन्तरायनिगमनद्वारेण प्रकरणपरिसमाप्तिं प्रदर्शयन् प्रकरणकारः स्वनामाह—

(पारमा०) 'बलवं' इति बलवान् उपचितदेह इत्यर्थः। 'रोगवियुक्तः' कासश्वासादिरहितः 'वयःसंपन्नः' तारुण्यभरपरिगतः। एवंविधोऽपि 'यस्य' कर्मण उदयेन 'वीर्येण' शक्त्या हीनो भवति। केशोद्धरणकुसुमोच्चयादावप्यसमर्थः संपद्यते। तदित्यध्याहारात् तद्वीर्यान्तरायं पञ्चमकं भवति इति गाथार्थः ॥१६६॥

साम्प्रत्यन्तरायनिगमनपूर्वकं प्रकरणकारः प्रकरणपरिसमाप्तिं स्वनाम चाह—

एवं पंच[1]वियप्पं, अट्ठमयं अंतराइयं होइ।
भणिओ कम्मविवागो, समासओ गग्गरिसिणा उ ॥१६७॥

व्याख्या—'एवं' उक्तन्यायेन 'पञ्चविकल्पं' पञ्चप्रकारं 'अष्टमकं' संख्ययान्तरायिकं कर्म 'भवति' जायते। तदुक्ते 'भणितः' प्रतिपादितः 'कर्मविपाकः' कर्मविपाकाख्यं प्रकरणं 'समासतः' संक्षेपतः। केन ? इत्याह—'गर्गर्षिणा तु' उत्तमसाधुनैव। इति गाथार्थः ॥१६७॥ ग्रं ॥९६०॥ साम्प्रतं प्रकरणसंख्यामाह—

१ "विगप्पं" इत्यपि पाठः।

(पारमा०) 'एवं' उक्तयुक्त्या 'पञ्चविकल्पं' पञ्चप्रकारमष्टमकमन्तरायकं भवति। उक्तमन्तरायकं तदुक्तौ भणितः कर्मविपाकः। 'समासतः' संक्षेपतः 'गर्गर्षिणा' यतिमतल्लिकावृन्दवन्द्यपादपल्लवेन गर्गाभिधानमुनिनायकेन। इति गाथार्थः ॥१६७॥ अधुना ग्रन्थप्रमाणप्रतिपादनपुरस्सरं तत्परिज्ञानोपायप्रतिपादनद्वारेण पर्यन्तमङ्गलमाह—

एवं गाहाण सयं, अहियं छावट्ठिए उ पढिऊण।
जो गुरु पुच्छइ नाही, कम्मविवागं च सो अइरा ॥१६८॥

(पू०) व्याख्या–'एवं' उक्तनीत्या ग्रन्थतो गाथानां 'शतमधिकं षट्षष्ट्या तु' षट्षष्ट्यैव [1]चाधिकं शतं 'पठित्वा' कण्ठे कृत्वा. किम्? इत्याह–यो 'गुरुं पृच्छति' आचार्यं प्रश्नयति, विनेयो मानं विहाय, अनेन मानपरित्यागात्परलोकार्थिनाऽवश्यंतया तथा तथा गुरुराराधनीयः प्रष्टव्यश्च, यथाऽसौ प्रसन्नः सर्वस्वं कथयती[2]त्यावेदितम्, न पुनर्मानग्रस्तेन पुस्तकशिष्येण भाव्यम्, अविनयाज्ञाविराधनादिदोषप्रसङ्गात्। स चैवं[3]भूतः ज्ञास्यत्येव=[4]अवभोत्स्यत्येव 'कर्मविपाकं तु' कर्मस्वरूप तु 'सः' साधुः, अन्यो वा 'अचिरादेव' स्तोककालादेव। इति [5]गाथार्थः ॥१६८॥ ग्रन्थाग्रम् १६७॥

॥ इति कर्मविपाकसूत्रव्याख्या समाप्ता ॥

(पारमा०) एतद्गाथानां शतमधिकं षट्षष्ट्येति। आदिमान्तिमगाथयोर्नमस्कारकरणप्रकरणप्रमाणप्रतिपादनमात्रत्वेन ग्रन्थार्थानभिधायकत्वात्परमार्थतः षट्षष्ट्यैवाधिकं, तत्किम्? इत्याह- 'पठित्वा' कण्ठगतं कृत्वा यो गुरुं प्रश्नयति स ज्ञास्यत्यचिरात्कर्मविपाकम्। गुरुनामग्रहणं च कुर्वता ग्रन्थकृता पर्यन्तमङ्गलं शिष्यसंतानस्याप्रच्युतस्मृतये कृतमिति गाथार्थः ॥१६८॥

श्रीमद्रेश्वरसूरिशिष्यतिलकश्रीशान्तिसूरेःप्रभोः, श्रीमन्तोऽभयदेवसूरिगुरवः सिंहासनोत्तंसकाः।
तत्पादाम्बुजषट्पदेन परमानन्देन सत्प्रीतये, चक्रे कर्मविपाकवृत्तिमिषतः श्रोत्रैकलेह्यं मधु ॥१॥
यन्नागमानुगामि स्या–न्न वा सङ्गतिमङ्गति। इह तत्साधुभिः शोध्य–मनभ्यर्थितवत्सलैः ॥२॥
प्रत्यक्षरं निरूप्यास्याः, ग्रन्थाग्रं परिनिश्चितम्। अनुष्टुभां नवशती, द्वाविंशत्यधिका ९२२ भवेत् ॥३॥

॥ इति पारमानन्दी कर्मविपाकवृत्तिः समाप्ता ॥

---

१व्याख्याकारेण "तु" इति पाठ आदृतः ॥ २ ०अधिकं जे०। ३ ०भूतः साधुः जे०। ४ बुध अवगमने जे० टिप्पणी। ५ गाथार्थः ॥ छ। "छ" ॥कर्मविपाकविवरणं समाप्तमिति ॥ मंगल महाश्रीः" ॥ शिवमस्तु सर्वजगतः ॥ छ ॥ छ ॥ सवत १२२१ वर्षे माघशुदि ६ भौमे ॥ छ ॥ छ ॥ जे०।

समाप्तोऽयं टीकाद्वयोपेतः कर्मविपाकाख्यः प्रथमः कर्मग्रन्थः

॥ ॐ ह्रीँ श्रीँ अर्हँ श्रीशंखेश्वरपार्श्वनाथाय नमः ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

॥ सकलागमरहस्यवेदिश्रीमदाचार्यविजयदानसूरीश्वरेभ्यो नमः ॥

॥ कर्मसाहित्यनिष्णातश्रीमदाचार्यविजयप्रेमसूरीश्वरेभ्यो नमः ॥

## श्वेतपटाचार्यश्रीमद्गोविन्दगणिगुम्फितटीकया समलङ्कृतः

# कर्मस्तवाख्यो द्वितीयः कर्मग्रन्थः ।



कर्मबन्धोदयोदीर्या–सत्तावैचित्र्यवेदिनम् ।
कर्मस्तवस्य टीकेयं, नत्वा वीरं विरच्यते ॥१॥

**नमिऊण जिणवरिंदे, तिहुयणवरनाणदंसणपईवे ।**
**बंधुदयसंतजुत्तं, वोच्छामि थयं निसामेह ॥ १ ॥**

पूर्वार्धेन मङ्गलार्थमिष्टदेवतानमस्कारमाह–मङ्गलं चाविघ्नेन प्रकरणसमाप्त्यर्थम् । पश्चार्द्धेन तु प्रयोजनादित्रयमिति गाथासमुदायार्थः, अवयवार्थस्तु 'नत्वा' प्रणम्य '**जिनवरेन्द्रान्**' 'रागादिजयाज्जिनाः[1], ते च छद्मस्थवीतरागा अपि भवन्ति, अतः केवलिप्रतिपत्त्यर्थं वरग्रहणम् । जिनानां वरा जिनवराः, । ते च सामान्यकेवलिनोऽपि भवन्ति, अतोऽर्हत्प्रतिपत्त्यर्थमिन्द्रग्रहणम् । जिनवराणामिन्द्रा जिनवरेन्द्राः । जिनत्वे केवलित्वे च सति चतुस्त्रिंशद्बु[2]द्धातिशेषरूपपरमैश्वर्यवन्त इत्यर्थः, तान् । तेषां वरशब्दलब्धं केवलित्वं विशेषणान्तरेण विवृणोति–'**त्रिभुवनवरज्ञानदर्शनप्रदीपान्**' त्रीणि भुवनानि ऊर्ध्वाधस्तिर्यग्लोकरूपाणि, तेषां वराभ्यां केवलरूपतया ज्ञानदर्शनाभ्यां प्रदीपाः प्रकाशकास्तान्, एवंविधान् जिनवरेन्द्रान्नत्वा ततः स्तवं वक्ष्यामीति संबन्धः । किंविशिष्टं स्तवम्?, '**बन्धोदयसद्युक्तं**' तत्र मिथ्यात्वादिभिर्बन्धहेतुभिरञ्जनचूर्णपूर्णसमुद्गकवत् निरन्तरं पुद्गलनिचिते लोके कर्मयोग्यवर्गणापुद्गलैरात्मनो वह्न्ययःपिण्डवदन्योऽन्यानुगमाभेदात्मकः संबन्धो बन्धः । तेषां च यथा स्वस्थितिबद्धानां कर्मपुद्गलानां करणविशेषकृते स्वाभाविके वा स्थित्यपचये सत्युदयसमयप्राप्तानां विपाकवेदनमुदयः । उदयग्रहणेनोदीरणाऽपि तज्जातीया गृह्यते । सा पुनः कर्मपुद्गलानां करणविशेषजनिते स्थित्यपचये सत्युदयावलिकायां प्रवेशनमुदी-

---

१ "रागारिजया" रागादिविजया" इति वा पाठः । २ "द्धातिशय" इति वा ।

णा। बन्धसङ्क्रमाभ्यां लब्धात्मलाभानां कर्मणां निर्जरणसङ्क्रमणकृतस्वरूपप्रच्युत्यभावे सद्भावः सत्ता। बन्धश्च उदयश्च सत् चेति बन्धोदयसन्ति, सदिति भावप्रधानेन निर्देशेन सत्तोच्यते. तैर्बन्धोदयसद्भिर्युक्तः, तेषां व्यवच्छेदस्येह वर्णनात्, तं स्तवं वक्ष्यामि। स्तवस्त्वयमसाधारणसद्भूतगुणोत्कीर्त्तनरूपत्वात्। स त्विह गुणो बन्धोदयोदीरणासत्क्षयो जिनस्य वेदितव्यः। तथा च तदुद्देशाधिकारे वक्ष्यति "अडयालं पयडिसयं, खविय जिणं निव्वुयं वंदे" इति। सत्ताप्रक्षये च बन्धोदयोर्दीरणा अपि क्षीणा एव भवन्तिः इति पृथक् तत्क्षयो नोक्तः। तत्क्षयोऽपि वा प्रतिगुणस्थानं तद्व्यवच्छेदवचनेन पृथगुक्त एव। निशमयतेति शिष्यान् बोधयति। यमहं जिनस्य स्तवं वक्ष्ये तं 'निशामयत' शृणुत यूयं, तच्छ्रवणस्य तदुक्तभगवद्गुणबहुमानद्वारेणाशयशुद्ध्या कर्मक्षयहेतुत्वाद्वस्तुस्वरूपावगतिहेतुत्वाच्च। तदवगतिहेतुत्वं च स्तावकवचनानामपि वस्तुस्वरूपवाचित्वेन प्रामाण्याभ्युपगमात्, तदेवमिह वक्तुरात्माशयविशुद्धिरनन्तरं स्तववचनस्य प्रयोजनं शिष्यानुग्रहश्च। श्रोतॄणामपि स्वाशयविशुद्धिरेर्थावगतिश्च। पारम्पर्येण तु स्वाशयविशुद्धेरुत्तरोत्तरविशुद्धिफलत्वादुभयेषां परमविशुद्ध्यात्मको निःश्रेयस इति प्रयोजनम्। अभिधेयं च बन्धादिव्यवच्छेदरूपमर्हद्गुणनिकुरुम्बम्। संबन्धश्च स्तवप्रयोजनयोरुपायोपेयभावः। स्तवाभिधेययोस्तु वाच्यवाचकभाव इति दर्शितं वेदितव्यम् ॥१॥

कर्मणां च भगवतो न सर्वेषां युगपदेव बन्धादिव्यवच्छेदः, किं तर्हि ?, मिथ्यादृष्ट्यादीनि गुणस्थानानि परमपदप्रसादशिखरारोहणसोपानकल्पानि क्रमेणाधिरोहतः क्वचिदेव गुणस्थाने कियत्योऽप्येव कर्मप्रकृतयो बन्धमुदयमुदीरणां सत्तां वा प्रतीत्य व्यवच्छिन्नाः ?, तत्र तावद्बन्धं प्रतीत्य क्व कियत्यो व्यवच्छिन्नाः ? इत्येतदाह—

[2]मिच्छे सोलस पणुवी-स सासणे अविरए य दस पयडी।
चउछक्कमेग देसे, विरए य कमेण वोच्छिन्ना ॥२॥

अधुना सुखप्रतिपत्त्यर्थं तावद्गुणस्थानानि लेशतो व्याख्याय पश्चादिमां गाथां व्याख्यास्यामः। तानि च गुणस्थानानि चतुर्दशधा, तद्यथा-मिथ्यादृष्टिगुणस्थानम् १, सासादनसम्यग्दृष्टिगुणस्थानम् २, सम्यग्मिथ्यादृष्टिगुणस्थानम् ३, अविरतसम्यग्दृष्टिगुणस्थानम् ४, देशविरतगुणस्थानम् ५, प्रमत्तसंयतगुणस्थानम् ६, अप्रमत्तसंयतगुणस्थानम् ७, अपूर्वकरणगुणस्थानम् ८, अनिवृत्तिबादरसम्परायगुणस्थानम् ९, सूक्ष्मसम्परायगुणस्थानम् १०, उपशान्तकषायवीतरागच्छद्मस्थगुणस्थानम् ११, क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम् १२, सयोगि-

१ "-र्यापत्तिश्च।" इति वा पाठः॥ २ कर्मस्तवमूलपुस्तकेष्वेवद्गाथाद्वन्द्वं दृश्यते-'मिच्छद्दिट्ठी १ सासायणे २ य तह सम्मामिच्छद्दिट्ठी ३ य। अविरयसम्मद्दिट्ठी ४, विरयाविरए ५ पमत्ते ६ य॥१॥ तत्तो य अप्पमत्ते ७, नियट्टि ८ अनियट्टिबायरे ९ सुहुमे १०। उवसंत ११ खीणमोहे १२ होइ सजोगी १३ अजोगी १४ य॥२॥" परं टीकाया अभावेन नादृतं मूले॥

केवलिगुणस्थानम् १३, अयोगिकेवलिगुणस्थानं १४ चेति।

तत्र गुणाः ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषाः, स्थानं पुनरत्र तेषां शुद्ध्यशुद्धि-प्रकर्षापकर्षकृतः स्वरूपभेदः, तिष्ठन्त्यस्मिन् गुणा इतिकृत्वा यथाऽध्यवसायस्थानमिति, गुणानां स्थानं गुणस्थानम् ॥

मिथ्या विपर्यस्ता दृष्टिरर्हत्प्रणीतवस्तुप्रतिपत्तिर्यस्य भक्षितहृत्पूरपुरुषस्य सिते पीतप्रतिपत्तिवत् मिथ्यादृष्टिस्तस्य गुणस्थानं ज्ञानादिगुणानामविशुद्धिप्रकर्षविशुद्ध्यपकर्षकृतः स्वरूपविशेषो मिथ्या-दृष्टिगुणस्थानम् १, ननु च दृष्टौ विपर्यस्तायां तदाधारत्वाद् गुणानामभाव एव स्यात् तदभावे च कुतस्तत्स्वरूपविशेषात्मकं मिथ्यादृष्टेर्गुणस्थानम् इत्यत्रोच्यते—यद्यपि मिथ्यात्वमोहनीयोदयाद् दृष्टिविपर्यासस्तथाऽपि नैकान्तेनास्य निर्गुणत्वं, अजीवत्वप्रसङ्गात्। तथा चार्षम्—"**सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो निच्चुग्घाडिओ। जइ पुण सोवि आवरेज्जेज्जा तेणं जीवो अजीवत्तं पावेज्जा। सुट्ठुवि मेहसमुदए होइ पहा चंदसूराणं**" इत्यस्ति, तस्यापि या च यावती च गुणमात्रा दृष्टिर्विपर्यासेन तु साऽपि विपर्यस्तस्वरूपैवेति। जिनप्रणीतं चैकम-प्यक्षरमश्रद्दधानो मिथ्यादृष्टिर्भवतीति। उक्तं च—"**सूत्रोक्तस्यैकस्या—प्यरोचनादक्षरस्य भवति नरः। मिथ्यादृष्टिः सूत्रं, हि नः प्रमाणं जिनाभिहितम्** ॥१॥" इति १॥

आयं सादयतीति आसादनं, अनन्तानुबन्धिकषायवेदनम्, नैरुक्तो यशब्दलोपः। सति हि तस्मिन्ननन्तसुखफलदनिःश्रेयसतरुबीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयेन उत्कृष्टतः षड्भिरावलिकाभिः सीदत्यपगच्छति। सहासादनेन वर्तत इति सासादनः। सम्यग-विपर्यस्ता दृष्टिर्जिनप्रणीतवस्तुप्रतिपत्तिर्यस्य स सम्यग्दृष्टिः। सासादनश्चासौ सम्यग्दृष्टिश्चेति सासादनसम्यग्दृष्टिः, तस्य गुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानमिति। एतच्चैवं भवति—गम्भीरभवोदधिमध्यविपरिवर्त्ती जन्तुरनाभोगनिर्वर्त्तितेन गिरिसरिदुपलघोलनाकल्पेन यथा-प्रवृत्तिकरणेन संपादितान्तः सागरोपमकोटाकोटीस्थितिकस्य मिथ्यात्ववेदनीयस्य कर्मणः स्थिते-रन्तर्मुहूर्तमुदयक्षणादुपर्यतिक्रम्यापूर्वकरणानिवृत्तिकरणसंज्ञिताभ्यां विशुद्धिविशेषाभ्यामन्तर्मुहूर्त-कालप्रमाणमन्तरकरणं करोति। तस्मिन् कृते तस्य कर्मणः स्थितिद्वयं भवति, अन्तरकरणादध-स्तनी प्रथमस्थितिरन्तर्मुहूर्तमात्रा, तस्मादेवोपरितनी शेषा द्वितीयस्थितिरिति। स्थापनेयम्—△ □

तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिः। अन्तर्मुहूर्तेन तु तस्याम-पगतायामन्तरकरणप्रथमसमय एवौपशमिकं सम्यक्त्वमाप्नोति मिथ्यात्वदलिकवेदनाभावात्, यथा हि वनदवानलः पूर्वदग्धेन्धनमूषरं वा देशमवाप्य विध्यायति, तथा मिथ्यात्ववेदनाग्निर-न्तरकरणमवाप्य विध्यायति। तस्यामान्तर्मौहूर्तिक्यामुपशान्ताद्धायां परमनिधिलाभकल्पायां जघन्येन समयशेषायामुत्कर्षेण षडावलिकाशेषायां कस्यचिदनन्तानुबन्ध्युदयो भवति। तदुदये

रणा। बन्धसङ्क्रमाभ्यां लब्धात्मलाभानां कर्मणां निर्जरणसङ्क्रमणकृतस्वरूपप्रच्युत्यभावे सद्भावः सत्ता। बन्धश्च उदयश्च सत् चेति बन्धोदयसन्ति, सदिति भावप्रधानेन निर्देशेन सत्तोच्यते, तैर्बन्धोदयसद्भिर्युक्तः, तेषां व्यवच्छेदस्येह वर्णनात्, तं स्तवं वक्ष्यामि। स्तवस्त्वयमसाधारणसद्भूतगुणोत्कीर्त्तनरूपत्वात्। स त्विह गुणो बन्धोदयोदीरणासत्क्षयो जिनस्य वेदितव्यः। तथा च सदुदेशाधिकारे वक्ष्यति "**अडयालं पयडिसयं, खविय जिणं निव्वुयं वंदे**" इति। सत्ताप्रक्षये च बन्धोदयोदीरणा अपि क्षीणा एव भवन्तिः इति पृथक् तत्क्षयो नोक्तः। तत्क्षयोऽपि वा प्रतिगुणस्थानं तद्व्यवच्छेदवचनेन पृथगुक्त एव। निशमयतेति शिष्यान् बोधयति। यमहं जिनस्य स्तवं वक्ष्ये तं '**निशमयत**'शृणुत यूयं, तच्छ्रवणस्य तदुक्तभगवद्गुणबहुमानद्वारेणाशयशुद्ध्या कर्मक्षयहेतुत्वाद्वस्तुस्वरूपावगतिहेतुत्वाच्च। तदवगतिहेतुत्वं च स्तावकवचनानामपि वस्तुस्वरूपवाचित्वेन प्रामाण्याभ्युपगमात्, तदेवमिह वक्तुरात्माशयविशुद्धिरनन्तरं स्तववचनस्य प्रयोजनं शिष्यानुग्रहश्च। श्रोतॄणामपि स्वाशयविशुद्धिरेर्थावगतिश्च। पारम्पर्येण तु स्वाशयविशुद्धेरुत्तरोत्तरविशुद्धिफलत्वादुभयेषां परमविशुद्ध्यात्मको निःश्रेयस इति प्रयोजनम्। अभिधेयं च बन्धादिव्यवच्छेदरूपमर्हद्गुणनिकुरुम्बम्। संबन्धश्च स्तवप्रयोजनयोरुपायोपेयभावः। स्तवाभिधेययोस्तु वाच्यवाचकभाव इति दर्शितं वेदितव्यम् ॥१॥

कर्मणां च भगवतो न सर्वेषां युगपदेव बन्धादिव्यवच्छेदः, किं तर्हि ?, मिथ्यादृष्ट्यादीनि गुणस्थानानि परमपदप्रसादशिखरारोहणसोपानकल्पानि क्रमेणाधिरोहतः क्वचिदेव गुणस्थाने कियत्योऽप्येव कर्मप्रकृतयो बन्धमुदयमुदीरणां सत्तां वा प्रतीत्य व्यवच्छिन्नाः ?, तत्र तावद्बन्धं प्रतीत्य क्व कियत्यो व्यवच्छिन्नाः ? इत्येतदाह—

[२]मिच्छे सोलस पणुवी–स सासणे अविरए य दस पयडी।
चउछक्कमेग देसे, विरए य कमेण वोच्छिन्ना ॥२॥

अधुना सुखप्रतिपत्त्यर्थं तावद्गुणस्थानानि लेशतो व्याख्याय पश्चादिमां गाथां व्याख्यास्यामः। तानि च गुणस्थानानि चतुर्दशधा, तद्यथा–मिथ्यादृष्टिगुणस्थानम् १, सासादनसम्यग्दृष्टिगुणस्थानम् २, सम्यग्मिथ्यादृष्टिगुणस्थानम् ३, अविरतसम्यग्दृष्टिगुणस्थानम् ४, देशविरतगुणस्थानम् ५, प्रमत्तसंयतगुणस्थानम् ६, अप्रमत्तसंयतगुणस्थानम् ७, अपूर्वकरणगुणस्थानम् ८, अनिवृत्तिबादरसम्परायगुणस्थानम् ९, सूक्ष्मसम्परायगुणस्थानम् १०, उपशान्तकषायवीतरागच्छद्मस्थगुणस्थानम् ११, क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम् १२, सयोगि-

---

१ "–र्थापत्तिश्च।" इति वा पाठः॥ २ कर्मस्तवमूलपुस्तकेष्वेतद्गाथाद्वन्द्वं दृश्यते–'मिच्छदिट्ठी १ सासायणे २ य तह सम्ममिच्छदिट्ठी ३ य। अविरयसम्मदिट्ठी ४, विरयाविरए ५ पमत्ते ६ य ॥१॥ तत्तो य अप्पमत्ते ७, नियट्टि ८ अनियट्टिबायरे ९ सुहुमे १०। उवसंत ११ खीणमोहे १२ होइ सजोगी १३ अजोगी १४ य ॥२॥" परं टीकाया अभावेन नादृतं मूले॥

केवलिगुणस्थानम् १३, अयोगिकेवलिगुणस्थानं १४ चेति।

तत्र गुणाः ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषाः, स्थानं पुनरत्र तेषां शुद्ध्यशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः, तिष्ठन्त्यस्मिन् गुणा इतिकृत्वा यथाऽध्यवसायस्थानमिति, गुणानां स्थानं गुणस्थानम् ॥

मिथ्या विपर्यस्ता दृष्टिरर्हत्प्रणीतवस्तुप्रतिपत्तिर्यस्य भक्षितहृत्पूरपुरुषस्य सिते पीतप्रतिपत्तिवत् मिथ्यादृष्टिस्तस्य गुणस्थानं ज्ञानादिगुणानामविशुद्धिप्रकर्षविशुद्ध्यपकर्षकृतः स्वरूपविशेषो मिथ्यादृष्टिगुणस्थानम् १, ननु च दृष्टौ विपर्यस्तायां तदाधारत्वाद् गुणानामभाव एव स्यात् तदभावे च कुतस्तत्स्वरूपविशेषात्मकं मिथ्यादृष्टेर्गुणस्थानम् इत्यत्रोच्यते—यद्यपि मिथ्यात्वमोहनीयोदयाद् दृष्टिविपर्यासस्तथाऽपि नैकान्तेनास्य निर्गुणत्वं, अजीवत्वप्रसङ्गात्। तथा चार्षम्—"**सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो निच्चुग्घाडिओ। जइ पुण सोवि आवरेज्जेज्जा तेणं जीवो अजीवत्तं पावेज्जा। सुट्ठुवि मेहसमुदए होइ पहा चंदसूराणं**" इत्यस्ति, तस्यापि या च यावती च गुणमात्रा दृष्टिर्विपर्यासेन तु साऽपि विपर्यस्तस्वरूपैवेति। जिनप्रणीतं चैकमप्यक्षरमश्रद्दधानो मिथ्यादृष्टिर्भवतीति। उक्तं च—"**सूत्रोक्तस्यैकस्या—प्यरोचनादक्षरस्य भवति नरः। मिथ्यादृष्टिः सूत्रं, हि नः प्रमाणं जिनाभिहितम् ॥१॥**" इति १॥

आयं सादयतीति आसादनं, अनन्तानुबन्धिकषायवेदनम्, नैरुक्तो यशब्दलोपः। सति हि तस्मिन्ननन्तसुखफलदनिःश्रेयसतरुबीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयेन उत्कृष्टतः षड्भिरावलिकाभिः सीदत्यपगच्छति। सहासादनेन वर्तत इति सासादनः। सम्यगविपर्यस्ता दृष्टिर्जिनप्रणीतवस्तुप्रतिपत्तिर्यस्य स सम्यग्दृष्टिः। सासादनश्चासौ सम्यग्दृष्टिश्चेति सासादनसम्यग्दृष्टिः, तस्य गुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानमिति। एतच्चैवं भवति—गम्भीरभवोदधिमध्यविपरिवर्त्ती जन्तुरनाभोगनिर्वार्त्तितेन गिरिसरिदुपलघोलनाकल्पेन यथाप्रवृत्तिकरणेन संपादितान्तःसागरोपमकोटाकोटीस्थितिकस्य मिथ्यात्ववेदनीयस्य कर्मणः स्थितेरन्तर्मुहूर्तमुदयक्षणादुपर्यतिक्रम्यापूर्वकरणानिवृत्तिकरणसंज्ञिताभ्यां विशुद्धिविशेषाभ्यामन्तर्मुहूर्तकालप्रमाणमन्तरकरणं करोति। तस्मिन् कृते तस्य कर्मणः स्थितिद्वयं भवति, अन्तरकरणादधस्तनी प्रथमस्थितिरन्तर्मुहूर्तमात्रा, तस्मादेवोपरितनी शेषा द्वितीयस्थितिरिति। स्थापनेयम्—△ □

तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिः। अन्तर्मुहूर्तेन तु तस्यामपगतायामन्तरकरणप्रथमसमय एवौपशमिकं सम्यक्त्वमाप्नोति मिथ्यात्वदलिकवेदनाभावात्, यथा हि वनदवानलः पूर्वदग्धेन्धनमूपरं वा देशमवाप्य विध्यायति, तथा मिथ्यात्ववेदनाग्निरन्तरकरणमवाप्य विध्यायति। तस्यामान्तर्मौहूर्तिक्यामुपशान्ताद्धायां परमनिधिलाभकल्पायां जघन्येन समयशेषायामुत्कर्षेण षडावलिकाशेषायां कस्यचिदनन्तानुबन्ध्युदयो भवति। तदुदये

चासौ सासादनसम्यग्दृष्टिगुणस्थाने वर्तते, उपशमश्रेणिप्रतिपतितो वा कश्चिन्सासादनत्वं याति। तदुत्तरकालमवश्यं मिथ्यात्वोदयादसौ मिथ्यादृष्टिर्भवतीति २ ॥

सम्यक् च मिथ्या च दृष्टिर्यस्य स सम्यग्मिथ्यादृष्टिः, तस्य गुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानम्। वर्णितविधिना लब्धं सम्यक्त्वमौषधविशेषकल्पमासाद्य मदनकोद्रवस्थानीयं दर्शनमोहनीयं अशुद्धं कर्म त्रिधा करोति, अशुद्धं १ अर्द्धविशुद्धं २ विशुद्धं ३ चेति। स्थापना—

| | | |
|---|---|---|
| अ | अर्द्ध | वि |

त्रयाणां चैतेषां पुञ्जानां मध्ये यदाऽर्द्धविशुद्धः पुञ्ज उदेति तदा तदुदयवशादर्द्धविशुद्धमर्हद्दृष्टतत्त्वश्रद्धानं भवति जीवस्य, तेन तदाऽसौ सम्यग्मिथ्यादृष्टिगुणस्थानमन्तर्मुहूर्तं कालं स्पृशति, तत ऊर्ध्वमवश्यं सम्यक्त्वं मिथ्यात्वं वा गच्छतीति ३ ॥ तथा विरतिर्विरतं, 'नपुंसके भावे क्तः' तत्पुनः सावद्ययोगप्रत्याख्यानं, तन्न जानाति नाभ्युपगच्छति न तत्पालनाय यतत इति त्रयाणां पदानामष्टौ भङ्गाः। तज्ज्ञापनाय स्थापना—

| | | |
|---|---|---|
| न | ना | न |
| न | ना | पा |
| न | ऽ | न |
| न | ऽ | पा |
| ज्ञा | ना | न |
| ज्ञा | ना | पा |
| ज्ञा | ऽ | न |
| ज्ञा | ऽ | पा |

तत्र प्रथमेषु चतुर्षु भङ्गेषु मिथ्यादृष्टिरज्ञानित्वाद्गम्यते। शेषेषु त्रिषु सम्यग्दृष्टिः, तस्य हि ज्ञानमेव भवतीति सप्तसु भङ्गेषु नास्य विरतमस्तीत्यविरतो भवति। चरमभङ्गे तु विरतिरस्तीति।

अविरतश्चासौ सम्यग्दृष्टिश्चेत्यविरतसम्यग्दृष्टिः तस्य गुणस्थानमविरतसम्यग्दृष्टिगुणस्थानम्, सम्यग्दृष्टित्वं पुनरौपशमिकसम्यक्त्वे वर्णितान्तरकरणकालसंभवे विशुद्धदर्शनमोहपुञ्जकोदयकालसंभवे वा क्षायोपशमिकसम्यक्त्वे सर्वदर्शनमोहक्षयसंभवे वा क्षायिकसम्यक्त्वे सति भवति, विरतः पुनरप्रत्याख्यानावरणकषायोदयवशान्न भवति। ते ह्यल्पमपि प्रत्याख्यानमावृण्वन्तीति नञोऽल्पार्थत्वादप्रत्याख्यानावरणा उच्यन्ते इति ४ ॥

एकव्रतविषयस्थूलसावद्ययोगादौ सर्वव्रतविषयानुमतिवर्जसावद्ययोगान्ते करणत्रययोगत्रयविषयसर्वसावद्ययोगस्य देशे विरतमस्यास्तीति देशविरतः। सर्वसावद्ययोगप्रत्याख्यानरूपं तु विरतमस्य नास्ति, प्रत्याख्यानावरणकषायोदयात्। सर्वविरतिरूपं हि प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणा उच्यन्त इति ५ ॥ संयच्छति स्म सम्यगुपरमति स्म यावज्जीवं सर्वसावद्ययोगादिति संयतः। "कर्तरि निष्ठा गत्यर्थाकर्मका" इत्यादिसूत्रेण, प्रमदनं प्रमत्तं प्रमादः, स च विकथाकषायमद्यविकटेन्द्रियनिद्रारूपाणां पञ्चानामन्यतमः प्रमत्तमस्यास्तीति अर्शआदित्वाद् अचः मत्वर्थीयस्योपादानात् प्रमत्तः प्रमादवानित्यर्थः, स चासौ संयतश्चेति प्रमत्तसंयतस्तस्य संबन्धिनां गुणानां स्थानं विशुद्ध्यविशुद्धिप्रकर्षापकर्षकृतः स्वरूपविशेषः। तथाहि—देशविरतगुणादेतद्गुणानां विशुद्धिप्रकर्षोऽशुद्ध्यपकर्षश्च, अप्रमत्तसंयतगुणापेक्षया तु विपर्यय इति

एवमन्यगुणस्थानेष्वपि गुणस्थानयोजना द्रष्टव्या पूर्वोत्तरापेक्षया विशुद्ध्यविशुद्धिप्रकर्षापकर्षकृतेति ६ ॥

नास्ति प्रमत्तमस्येति अप्रमत्तो विकथादिप्रमादरहितः । अप्रमत्तश्चासौ संयतश्चेत्यप्रमत्तसंयतस्तस्य गुणस्थानम् ७ ॥

अपूर्वं करणं स्थितिघातरसघातगुणश्रेणिगुणसङ्क्रमस्थितिबन्धानां पञ्चानामर्थानां निर्वर्तनमस्यासावपूर्वकरणः, तथाहि—यावत्प्रमाणमसौ पूर्वगुणस्थानविशुद्ध्या स्थितिखण्डकं रसखण्डकं वा हतवान्, ततो बृहत्तरप्रमाणमपूर्वमस्मिन् गुणस्थाने हन्ति । उपरितनस्थितेर्विशुद्धिवशादपवर्तनाकरणेनावतारितस्य दलिकस्यान्तर्मुहूर्तप्रमाणमुदयक्षणादुपरि क्षिप्रतरक्षपणाय प्रतिक्षणमसंख्येयगुणवृद्ध्या विरचनं गुणश्रेणिरित्युच्यते । स्थापना । एतां च पूर्वगुणस्थानेष्वविशुद्धतरत्वात् कालतो द्राघीयसीमप्रथीयसीं च दलिकस्याल्पतरस्यापवर्तनाद्विरचितवान् । इह तु विशुद्धतरत्वादपूर्वां कालतो ह्रस्वतरां पृथुतरां च बहुतरदलिकापवर्तनाद्विरचयति । स्थापना । शुभप्रकृतिष्वशुभप्रकृतिदलिकस्य प्रतिक्षणमसंख्येयगुणवृद्ध्या विशुद्धिवशान्नयनं गुणसङ्क्रमः, तमिहासावपूर्वं करोति । स्थितिं च कर्मणां द्राघीयसीं प्राग्बद्धवान्, इह तु तामपूर्वां ह्रसीयसीं बध्नाति विशुद्धतरत्वादिति । पञ्चाप्यपूर्वाणि करणान्यस्य । स च द्विधा, क्षपक उपशमको वा । क्षपणोपशमनार्हत्वात्, राज्यार्हकुमारराजवत्, न पुनरसौ क्षपयत्युपशमयति वा, तस्य गुणस्थानं अपूर्वकरणगुणस्थानम् । अपूर्वकरणाद्धायाश्चान्तर्मौहूर्तिक्याः प्रथमसमये जघन्यादीन्युत्कृष्टान्तान्यध्यवसायस्थानानि असंख्येयलोकाकाशप्रदेशमात्राणि । द्वितीयसमये तदन्यान्यधिकतराणि । तृतीयसमये तदन्यान्यधिकतराणि चतुर्थसमये । तदन्यान्यधिकतराणीत्येवं यावच्चरमसमय इति । तानि च स्थापनायां विषमचतुरस्रं क्षेत्रमास्तृणन्ति । स्थापना—

| |
|---|
| ७००००००००० |
| ६०००००००० |
| ५००००००० |
| ४०००००० |
| ३००००० |
| २०००० |
| १००० |
| ज० म० उ० |

प्रथमसमयजघन्यात्प्रथमसमयोत्कृष्टमनन्तगुणविशुद्धम्, तस्माद् द्वितीयसमयजघन्यमनन्तगुणविशुद्धम्, तस्मात्तदुत्कृष्टमनन्तगुणेन विशुद्धमिति । एवं यावद्द्विचरमसमयोत्कृष्टाच्चरमसमयजघन्यमनन्तगुणविशुद्धम्, तस्माच्चदुत्कृष्टमनन्तगुणविशुद्धमिति । एकसमयगतानि तु परस्परं षट्स्थानपतितानीति । युगपदेतद्गुणस्थानप्रविष्टानां बहूनां जीवानामन्योऽन्यस्य संबन्धिनोऽध्यवसायस्थानस्यास्ति निवृत्तिरपीति निवृत्तिगुणस्थानमपीदमुच्यते ८ ॥

युगपदेकगुणस्थानं प्रतिपन्नानां बहूनां जीवानामन्योऽन्यस्य संबन्धिनोऽध्यवसायस्थानस्य व्यावृत्तिरिह निवृत्तिरभिप्रेता, नास्ति तथाविधा निवृत्तिरस्येत्यनिवृत्तिः, अन्येषां यदध्यवसायस्थानमसावपि तद्वर्तीत्यर्थः, सम्परायः कषायोदयः,समन्तात्परैति पर्यटति संसारमनेनेतिकृत्वा । बादरः स्थूलः सम्परायो यस्य स बादरसम्परायः, सूक्ष्मकिट्टीकृतसम्परायापेक्षया बादरत्वम् । अनिवृत्तिश्चासौ बाद-

रसम्परायश्चेत्यनिवृत्तिबादरसम्परायः। स च द्विविधः, क्षपक उपशमको वा, क्षपयति उपशमयति वा मोहनीयादिकर्मेति कृत्वा, तस्य गुणस्थानं अनिवृत्तिबादरसम्परायगुणस्थानम्। अनिवृत्तिबादरसम्परायाद्धायामान्तर्मौहूर्तिक्यां प्रथमसमयादारभ्य प्रतिसमयमेकैकमनन्तगुणविशुद्धं यथोत्तरमध्यवसायस्थानम् तेन तत्रैकसमयप्रविष्टानामेकमध्यवसायस्थानमनुवर्तते परस्परं न तु निवर्तत इत्यनिवृत्तित्वम् ९ ॥

सूक्ष्मः सम्परायः किट्टीकृतलोभकषायोदयरूपो यस्य सोऽयं सूक्ष्मसम्परायः। सोऽपि द्विविधः, क्षपकः उपशमको वा। क्षपयत्युपशमयति वा लोभमेकमितिकृत्वा, तस्य गुणस्थानम् १० ॥

छाद्यते केवलज्ञानदर्शनमात्मनोऽनेनेऽति छद्म ज्ञानावरणदर्शनावरणान्तरायमोहनीयकर्मोदयः, सति तस्मिन् केवलस्यानुत्पादात्तदपगमानन्तरं चोत्पादाच्छद्मनि तिष्ठतीति छद्मस्थः, स च सरागोऽपि भवतीत्यतस्तद्व्यवच्छेदार्थं वीतरागग्रहणम्। वीतो विगतो रागो मायालोभकषायोदयरूपो यस्य स वीतरागः, स चासौ छद्मस्थश्च वीतरागच्छद्मस्थः। स च क्षीणकषायोऽपि भवति, तस्यापि यथोक्तरागापगमादतस्तद्व्यवच्छेदार्थमुपशान्तकषायग्रहणम्। कषत्रूष-शिषेत्यादिदण्डकधातुर्हिंसार्थः। कषन्ति कष्यन्ते च परस्परमस्मिन् प्राणिन इति कषः संसारः। 'पुंसि सञ्ज्ञायां घः प्रायेण' (पा० ३-३-१८) इति घः प्रायग्रहणात्, अन्यथा हि हलन्तत्वात् 'हलश्च' (पा०३-३-१२१) इति घञ् स्यात्। कषमयन्ते गच्छन्ति एभिर्जन्तव इति कषायाः क्रोधादयः। उपशान्ता उपशमिता विद्यमाना एव सङ्क्रमणोद्वर्तनापवर्तनादिकरणोदयायोग्यत्वेन व्यवस्थापिताः कषाया येन स उपशान्तकषायः, स चासौ वीतरागच्छद्मस्थश्चेत्युपशान्तकषायवीतरागच्छद्मस्थः तस्य गुणस्थानमिति प्राग्वत्। तत्राविरतसम्यग्दृष्टेः प्रभृत्यनन्तानुबन्धिनः कषाया उपशान्ताः संभवन्ति। उपशमश्रेण्यारम्भे ह्यनन्तानुबन्धिकषायानविरतो देशविरतः प्रमत्तोऽप्रमत्तो वा सन् उपशमय्य दर्शनमोहत्रितयमुपशमयति। तदुपशमानन्तरं प्रमत्ताप्रमत्तगुणस्थानपरिवृत्तिशतानि कृत्वा ततोऽपूर्वकरणगुणस्थानोत्तरकालमनिवृत्तिबादरसम्परायगुणस्थाने चारित्रमोहनीयस्य प्रथमं नपुंसकवेदमुपशमयति, ततः स्त्रीवेदम्, ततो हास्यरत्यरतिशोकभयजुगुप्सारूपं युगपत् षट्कम् ६, ततः पुरुषवेदम्, ततो युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणौ क्रोधौ, ततः संज्वलनक्रोधम्, ततो युगपद्द्वितीयतृतीयौ मानौ ततः संज्वलनमानम्, ततो युगपद्द्वितीयतृतीये माये, ततः संज्वलनमायाम्, ततो युगपद्द्वितीयतृतीयौ लोभौ, ततः सूक्ष्मसम्परायगुणस्थाने संज्वलनलोभमुपशमयतीति। तदेवमन्येष्वपि गुणस्थानेषु क्वापि कियतामपि कषायाणामुपशान्तत्वसंभवात् उपशान्तकषायव्यपदेशः संभवतीत्यतस्तद्व्यवच्छेदार्थमुपशान्तकषायग्रहणे सत्यपि वीतरागग्रहणं कर्तव्यम्। उपशान्तकषायवीतराग इति चैतावतैवेष्टसिद्धौ छद्मस्थग्रहणं स्वरूपकथनार्थम्, व्यवच्छेद्याभावात्। न ह्यच्छद्मस्थ उपशान्तकषायवीतरागः संभवति, यस्य छद्मस्थग्रहणेन व्यवच्छेदः स्यात् ११ ॥

क्षीणा अभावमापन्नाः कषाया यस्य स क्षीणकषायः । तत्रानन्तानुबन्धिकषायान् प्रथममविरतसम्यग्दृष्ट्याद्यप्रमत्तान्तगुणस्थानेषु क्षपयति । दर्शनत्रितयं चैतेषु पूर्वोक्तगुणस्थानेषु क्षपयति । ततः शेषान् संज्वलनलोभवर्जाननिवृत्तिबादरसम्परायगुणस्थाने वक्ष्यमाणेन क्रमेण क्षपयति । संज्वलनलोभं सूक्ष्मसम्परायगुणस्थान इति । तदेवमन्येष्वपि सरागेषु क्षीणकषायव्यपदेशः संभवति क्वापि कियतामपि कषायाणां क्षीणत्वसंभवात्, अतस्तद्व्यवच्छेदार्थं वीतरागग्रहणम् । क्षीणकषायवीतरागत्वं च केवलिनोऽप्यस्तीति तद्व्यवच्छेदार्थं छद्मस्थग्रहणम् । छद्मस्थग्रहणेऽपि च कृते सरागव्यवच्छेदार्थं वीतरागग्रहणम् । वीतरागश्चासौ छद्मस्थश्चेति वीतरागच्छद्मस्थः । स चोपशान्तकषायोऽप्यस्तीति तद्व्यवच्छेदार्थं क्षीणकषायग्रहणम् । क्षीणकषायश्चासौ वीतरागच्छद्मस्थश्च क्षीणकषायवीतरागच्छद्मस्थः तस्य गुणस्थानमिति प्राग्वत् १२ ॥

वीर्यान्तरायक्षयक्षयोपशमसमुत्थलब्धिविशेषप्रत्ययमभिसन्ध्यनभिसन्धिपूर्वमात्मनो वीर्यं योगः । स द्विधा, सकरणोऽकरणश्च । तत्रालेश्यस्य केवलिनः कृत्स्नयोर्ज्ञेयदृश्ययोरर्थयोः केवलं ज्ञानं दर्शनं चोपयुञ्जानस्य योऽसावपरिस्पन्दोऽप्रतिघो वीर्यविशेषः सोऽकरणः, स च नेहाधिक्रियते । यस्तु मनोवाक्कायकरणसाधनसलेश्यजीवकर्तृको जीवप्रदेशपरिस्पन्दात्मको व्यापारः स सकरणस्तेकेवलिनो नेहाधिकारः । स च करणभेदात्तिस्रः संज्ञा लभते, तद्यथा-कायिको वाचिको मानसश्चेति । तत्र भगवतोऽभिसन्धिपूर्वस्त्रिविधोऽपि भवति । कायिकश्चङ्क्रमणनिमेषोन्मेषादौ । वाचिको देशनादौ । मानसो मनःपर्यायज्ञानिभिरनुत्तरसुरादिभिर्वा मनसा पृष्टस्य सतो मनसैव देशनायाम्, ते हि भगवत्प्रयुक्तानि मनोद्रव्याणि मनःपर्यायज्ञानेनावधिज्ञानेन च पश्यन्ति, ततस्तद्द्वारेण पृष्टमर्थमवगच्छन्ति । सह योगेन वर्तत इति सयोगः सयोगीति वा, बहुव्रीहेर्मत्वर्थीय इति यथा सर्वधनीत्यादौ सर्वधनादेराकृतिगणत्वात्, केवलमेकमसहायमसाधारणमनन्तमपरिशेषं च । तत्रैकं तद्भावे छाद्मस्थिकशेषज्ञानदर्शनाभावात् । 'उक्तं च-'[1]"'उप्पन्नंमि अणंते, नट्ठंमि य छाउमत्थिए नाणे" इति । असहायं न तु मतिज्ञानवदिन्द्रियमनःकृतसहायकापेक्षमर्थग्रहणे प्रवर्तते, परनिरपेक्षनिरावरणात्मस्वभावत्वात् । असाधारणमनन्यसदृशं, तदन्यस्यैवंविधज्ञानदर्शनाभावात् । अनन्तमपर्यवसानं, पुनस्तत्स्वरूपतिरस्करणकारणघातिकर्माऽत्यन्तक्षयोद्भूतत्वात् द्रव्याद्यनन्तज्ञेयग्रहणात्मकत्वाद्वा अनन्तम् । अपरिशेषं संपूर्णं, संभिन्नापरिशेषद्रव्यक्षेत्रकालभावलक्षणवस्तुग्रहणस्वरूपत्वात् । तच्च द्विविधं, ज्ञानं दर्शनं चेति । तत्केवलं यस्यास्तीति स केवली, सयोगी चासौ केवली चेति सयोगिकेवली तस्य गुणस्थानं तथैव १३॥

नास्ति यथोक्तो योगो निरुद्धत्वादस्येत्ययोगः अयोगीति वा पूर्ववदिति । स त्रिविधोऽपि योगः प्रत्येकं द्विविधः, सूक्ष्मो बादरश्च । तत्र केवलोत्पत्तेरुत्तरकालं जघन्येनान्तर्मुहूर्तमुत्कर्षेण देशो-

---

१ "तदुक्तम्" इत्यपि पाठः ॥

नपूर्वकोटीं विहृत्यान्तर्मुहूर्तावशेषायुष्कः सयोगिकेवली प्रथमं बादरकाययोगेन बादरवाङ्मनोयोगौ निरुणद्धि । ततः सूक्ष्मकाययोगेन बादरं काययोगं निरुणद्धि, सति तस्मिन् सूक्ष्मयोगस्य निरोद्धुमशक्यत्वात् । ततश्च सर्वबादरयोगनिरोधानन्तरं सूक्ष्मक्रियमनिवर्त्तिशुक्लध्यानं ध्यायन् सूक्ष्मकाययोगेन सूक्ष्मवाङ्मनोयोगौ निरुणद्धि । ततस्तमेव सूक्ष्मकाययोगं स्वात्मनैव निरुणद्धि । तन्निरोधानन्तरं समुच्छिन्नक्रियमप्रतिपातिशुक्लध्यानं ध्यायन् ह्रस्वपञ्चाक्षरोच्चारणमात्रं कालं शैलेशीकरणं प्रविष्टो भवति शीलस्य योगलेश्याकलङ्कविप्रमुक्तयथाख्यातचारित्रलक्षणस्य य ईशः स शीलेशः, तस्येयं शैलेशी । त्रिभागोनस्वदेहावगाहनयामुदरादिरन्ध्रपूरणवशात्सङ्कोचितस्वप्रदेशस्य शीलेशस्यात्मनोऽत्यन्तं स्थिरावस्थितिरित्यर्थः । तस्यां करणं पूर्वरचितशैलेशीसमयसमानगुणश्रेणीकस्य वेदनीयनामगोत्राख्यस्याघातिकर्मत्रितयस्यासंख्येयगुणया श्रेण्या, आयुःशेषस्य तु यथास्वरूपस्थितया श्रेण्या निर्जरणं शैलेशीकरणम्, तच्चासौ प्रविष्टः सन् अयोगी चासौ केवली चेत्ययोगिकेवली भवस्थः । स च शैलेशीकरणचरमसमयान्तरसमये छिन्नचतुर्विधकर्मबन्धनत्वाच्छिन्नफलबन्धनैरण्डबीजवद्गतिप्रवृत्तेः, व्यवगतकर्मलेपसङ्गत्वात् । विगतमृल्लेपसङ्गगम्भीरजलतलवत्युपरितलगामयलाबुवत् सर्वथा विप्रहाय शरीरत्रयमूर्ध्वमृजुश्रेण्या समयेन गच्छत्यालोका[1]न्तरम्, न परतोऽपि, मत्स्यस्य जलकल्पगत्युपष्टम्भकधर्मास्तिकायाभावात् । तत्रासौ सिद्धोऽयोगिकेवली शाश्वतं कालमास्ते १४॥ इति व्याख्यातानि लेशतो गुणस्थानकानि ।

गाथाऽधुना विव्रियते–'मिच्छे' इति, भीमसेनो भीम इत्यादिवत्पदवाच्यस्यार्थस्य पदैकदेशेनाप्यभि[2]धानदर्शनान्मिथ्यादृष्टिगुणस्थानमित्यर्थः । एवमुत्तरेष्वपि पदवाच्यस्यार्थस्य पदैकदेशप्रयोगो द्रष्टव्यः । तत्र षोडशेति बन्धमाश्रित्य कर्मप्रकृतय इति प्रक्रमाद्गम्यते । व्यवच्छिन्ना इति वक्ष्यमाणेन संबन्धः । तत्र भावस्तदुत्तरेषु चाभावो व्यवच्छेदार्थः । केवलज्ञानं जम्बूस्वामिनि यथा, विंशत्युत्तरं च कर्मप्रकृतिशतं बन्धेऽधिक्रियते तच्च दर्शयिष्यामः । तत्र तीर्थकरनाम्न आहारकद्वयस्य च मिथ्यादृष्टेर्बन्धो नास्ति, तद्बन्धस्य यथासङ्ख्यं सम्यक्त्वसंयमप्रत्ययत्वात् । उक्तं च–"सम्मत्तगुणनिमित्तं, तित्थयरं संजमेण आहारं" इति । शेषस्य सप्तदशोत्तरस्य कर्मप्रकृतिशतस्य मिथ्यादृष्टेर्बन्ध इति । 'पणुवीस सासणे' इति, पञ्चविंशतिः कर्मप्रकृतयः सासादनसम्यग्दृष्टिगुणस्थाने बन्धं प्रतीत्य व्यवच्छिन्नाः । इह तु मिथ्यादृष्टिषोडशके सप्तदशोत्तरशतादपनीते शेषस्यैकोत्तरशतस्य बन्धः । तीर्थकरनाम्नस्तु सत्यपि तत्प्रत्यये सम्यक्त्वे नास्तीह बन्धः, तस्य हि बन्धारम्भः शुद्धसम्यग्दृष्टेरेव भवति । तत्सत्कर्मा च सासादनत्वं न प्राप्नोति । सम्यग्मिथ्यादृष्टिगुणस्थाने तु देवमनुष्यायुषोरपि बन्धो नास्ति, आयुर्बन्धाध्यवसायस्थानविरहात् । अतस्तत्सहितायां सासादनव्यवच्छिन्नपञ्चविंशतावेकोत्तरशतादपनीतायां शेष-

१ "न्तात्, न" इत्यपि ॥ २ "धानान्मिथ्या" इति वा पाठः ।

चतुःसप्ततेर्बन्धः 'अविरए य दस पयडी' इति, अविरतसम्यग्दृष्टिगुणस्थाने दश प्रकृतयो बन्धं प्रतीत्य व्यवच्छिन्नाः। पूर्वोक्तायां चतुःसप्ततौ देवमनुष्यायुष्कतीर्थकरनामसु प्रक्षिप्तेषु सप्तसप्ततेर्बन्धः। 'चउ छक्कमेग देसे, विरए य कमेण वोच्छिन्ना' इति, चतस्रः षट्कं एकं देशे इति देशविरतगुणस्थाने, विरते चेति विरतो द्विविधः, प्रमत्तोऽप्रमत्तश्च तस्मिन्निति। किमुक्तं भवति?-देशविरतगुणस्थाने चतस्रः प्रमत्तसंयतगुणस्थाने, षट्कं अप्रमत्तसंयतगुणस्थाने त्वेका कर्मप्रकृतिः क्रमेण यथासंख्यं व्यवच्छिन्नाः। तत्र देशविरतगुणस्थाने दशसु प्रकृतिषु अविरतसम्यग्दृष्टिव्यवच्छिन्नासु सप्तसप्ततेरपनीतासु शेषायाः सप्तषष्टेर्बन्धः। प्रमत्तसंयतगुणस्थाने तु देशविरतव्यवच्छिन्नासु चतसृषु प्रकृतिषु सप्तषष्टेरपनीतासु शेषायास्त्रिषष्टेर्बन्धः। अप्रमत्तसंयतगुणस्थाने तु प्रमत्तसंयतव्यवच्छिन्नासु षट्सु प्रकृतिषु त्रिषष्टेरपनीतासु शेषायां सप्तपञ्चाशति द्वयोराहारकशरीराहारकाङ्गोपाङ्गयोः प्रक्षिप्तयोरेकोनषष्टेर्बन्धः। प्रमत्तसंयतगुणस्थाने तु तत्प्रत्यये संयमे सत्यपि नास्त्याहारकद्वयबन्धः, तस्य प्रमादरहितविशिष्टसंयमप्रत्ययत्वात् देवायुषस्तु बन्धे व्यवच्छिन्ने सत्यप्रमत्तसंयतस्याप्यष्टपञ्चाशतो बन्धः ॥२॥

दुगतीसचउरपुव्वे, पंच नियट्टिंमि बंधवोच्छेओ।
सोलस सुहुमसरागे, साय सजोगी जिणवरिंदे ॥३॥

(टीका) 'दुगतीसचउरपुव्वे' इति, अपूर्वकरणगुणस्थाने त्वन्तर्मुहूर्तमात्रायास्तदद्धाया भागसप्तकम्। तत्र प्रथमे सप्तभागे द्विकस्य बन्धव्यवच्छेद इति वक्ष्यमाणेन संबन्धः। षष्ठे सप्तभागे त्रिंशतः, चरमे सप्तमागे चतसृणां प्रकृतीनां बन्धव्यवच्छेदः। तत्र प्रथमे सप्तभागे प्रागुक्ताया अष्टपञ्चाशतो बन्धः। द्वितीयादिभागेषु तु प्रथमभागव्यवच्छिन्नं प्रकृतिद्वयमष्टपञ्चाशतः शोध्यते, शेषायाः षट्पञ्चाशतो बन्धः। सप्तमभागे षष्ठभागव्यवच्छिन्नायां त्रिंशति षट्पञ्चाशतः शोधितायां शेषायाः षड्विंशतेर्बन्धः। 'पंच नियट्टिंमि बंधवोच्छेओ' इति, अनिवृत्तिबादरसम्परायगुणस्थाने पञ्चानां कर्मप्रकृतीनां बन्धव्यवच्छेदः। 'पञ्च' इति, छन्दोवशादार्षत्वाच्च षष्ठ्यर्थे प्रथमा, दृश्यते ह्यार्षे विभक्तिव्यत्ययः। तद्यथा-'अक्खत्थूससिएण' इति। अन्यत्रोच्छ्वसितादिति पञ्चम्यर्थे तृतीया। एवं द्विकत्रिंशच्चतुरित्यत्रापि समाहारद्वन्द्वात्षष्ठ्यर्थे प्रथमा द्रष्टव्या। तासां च पञ्चानां न युगपद्बन्धव्यवच्छेदः, किन्तु क्रमेणानिवृत्त्यद्धायाः पञ्चसु भागेषु एकस्याः कर्मप्रकृतेः प्रथमभागे, द्वितीयस्या द्वितीये, तृतीयस्यास्तृतीये, चतुर्थ्याश्चतुर्थे, पञ्चम्याः पञ्चमे भागे बन्धव्यवच्छेद इति। तत्र प्रथमे भागे चतसृषु प्रकृतिष्वपूर्वकरणगुणस्थानसप्तमभागव्यवच्छिन्नासु षड्विंशतेरपनीतासु शेषाया द्वाविंशतेर्बन्धः। द्वितीयभागे प्रथमभागव्यवच्छिन्नामेकामपनीय शेषैकविंशतेर्बन्धः। तृतीये भागे द्वितीयभागव्यवच्छिन्नामेकामपनीय शेषाया विंशते-

बन्धः । चतुर्थभागे तु तृतीयभागव्यवच्छिन्नामेकां मुक्त्वा शेषाया एकान्नविंशतेर्बन्धः । पञ्चमभागे तु चतुर्थभागे व्यवच्छिन्नामेकां मुक्त्वा शेषाणामष्टादशानां बन्धो बोद्धव्यः । **'सोलस सुहुमसरागे'** इति, सूक्ष्मसम्परायगुणस्थाने षोडशेति विभक्तिव्यत्ययात्षोडशानां कर्मप्रकृतीनां बन्धव्यवच्छेदः । इह चानिवृत्तिबादरसम्परायपञ्चमभागव्यवच्छिन्नायामेकस्यां कर्मप्रकृतावष्टादशभ्योऽपनीतायां शेषाणां सप्तदशानां बन्धः । **'साय सजोगो जिणवरिंदे'** इति, सयोगिकेवलिगुणस्थाने सातस्यैकस्य बन्धव्यवच्छेदः । जिनवरेन्द्र इति पूर्ववत् । सूक्ष्मसम्परायव्यवच्छिन्नासु षोडशसु प्रकृतिषु सप्तदशभ्योऽपनीतासूपशान्तमोहक्षीणमोहसयोगिकेवलिगुणस्थानेषु शेषाया एकस्याः सातवेदनीयकर्मप्रकृतेर्बन्धः । अयोगिकेवली त्वबन्धकः, पुद्गलग्रहणहेतोर्योगस्याभावात् । उक्तं हि–**'जोगा पयडिपएसं'** इति ॥३॥

उक्तो गुणस्थानेषु प्रकृतिबन्धव्यवच्छेदोद्देशः । इदानीं तेष्वेव क कियतीनां कर्मप्रकृतीनामुदयव्यवच्छेदः ? इत्याह—

**पण नव [1]इग सत्तरसं, अड पंच य चउर छक्क छ च्चेव ।**
**[2]इग दुग सोलस तीसं, बारस उदए [3]अजोगंता ॥४॥**

पञ्च १ नव २ एका ३ सप्तदश ४ अष्टौ ५ पञ्च ६ च चतस्रः ७ षट्कं ८ षट् ९ चैव एका १० द्विकं ११ षोडश १२ त्रिंशत् १३ द्वादश १४ कर्मप्रकृतयो यथासङ्ख्यं मिथ्यादृष्टिगुणस्थानप्रभृत्ययोग्यन्ता योज्याः । कर्मप्रकृतीनां च द्वाविंशं शतमुदयोदीरणयोरधिक्रियते, तच्च दर्शयिष्यामः । तत्र–मिथ्यादृष्टिगुणस्थाने पञ्चानामुदयव्यवच्छेदः पूर्वोक्त एव व्यवच्छेदार्थः सर्वत्रानुसरणीयः इह सम्यक्त्वसम्यग्मिथ्यात्वाहारकशरीरतदङ्गोपाङ्गनामतीर्थकरनाम्नां पञ्चानां प्रकृतीनामुदयो मिथ्यादृष्टेर्नास्ति । शेषस्य सप्तदशोत्तरस्य शतस्योदयः । सासादनसम्यग्दृष्टिगुणस्थाने नवानामुदयव्यवच्छेदः । सासादनभावस्थस्य नरकेषूत्पादो न संभवतीति तदपान्तरालगतिभावी नरकानुपूर्व्या नास्त्युदय इति तत्सहिते मिथ्यादृष्टिव्यवच्छिन्ने पञ्चके सप्तदशोत्तरशतादपनीते शेषस्यैकादशोत्तरशतस्योदयः । सम्यग्मिथ्यादृष्टिगुणस्थाने त्वेकस्याः कर्मप्रकृतेरुदयव्यवच्छेदः । सम्यग्मिथ्यादृष्टेर्विग्रहगतिर्न संभवति, **'न सम्ममिच्छो कुणइ कालं'** इति वचनात् । अतो विग्रहगतिभावी नास्त्यानुपूर्वीचतुष्कस्योदयः । तत्र नरकानुपूर्वी पूर्वा(र्वम)पनीतैव, शेषत्रयसहितं सासादनव्यवच्छिन्नं नवकं द्वादश भवन्ति । तेष्वेकादशोत्तरशतादपनीतेषु [4]शेषा नवनवतिः, तस्यां सम्यग्मिथ्यात्वे प्रक्षिप्ते शतस्योदयः । अविरतसम्यग्दृष्टिगुणस्थाने सप्तदशानां प्रकृतीनामुदयव्यवच्छेदः । सम्यग्मिथ्यादृष्टिव्यवच्छिन्नामेकां प्रकृतिं

---

१–२ "दुगि" इत्यपि पाठः ३ "य" इत्यपि पाठः । ४ "शेषायां नवनवतौ सम्यग्मिथ्यात्वं प्रक्षिप्यते ततश्च शतस्योदयः" इत्यपि पाठः ।

शतादपनीय शेषायां नवनवतौ सम्यक्त्वमानुपूर्वीचतुष्कं च प्रक्षिप्यते ततश्चतुरुत्तरशतस्योदयः । देशविरतगुणस्थाने प्रकृत्यष्टकस्योदयव्यवच्छेदः । अविरतसम्यग्दृष्टिव्यवच्छिन्ने सप्तदशके चतुरुत्तरशतादपनीते शेषायाः सप्ताशीतेरुदयः । प्रमत्तसंयतगुणस्थाने पञ्चानामुदयव्यवच्छेदः । देशविरतव्यवच्छिन्नमष्टकं सप्ताशीतेरपनीय [1]शेषायामेकोनाशीतावाहारकशरीरतदङ्गोपाङ्गनाम्नोः प्रक्षिप्तयोरेकाशीतेरुदयः । अप्रमत्तसंयतगुणस्थाने चतसृणां प्रकृतीनामुदयव्यवच्छेदः । प्रमत्तसंयतव्यवच्छिन्नं पञ्चकमेकाशीतेरपनीयते शेषायाः षट्सप्ततेरुदयः । अपूर्वकरणगुणस्थाने षण्णां प्रकृतीनामुदयव्यवच्छेदः । अप्रमत्तव्यवच्छिन्ने चतुष्के षट्सप्ततेरपनीते शेषाया द्वासप्ततेरुदयः । अनिवृत्तिबादरसम्परायगुणस्थाने षण्णां प्रकृतीनामुदयव्यवच्छेदः । अपूर्वकरणव्यवच्छिन्ने षट्के द्वासप्ततेरपनीते शेषायाः षट्षष्टेरुदयः । सूक्ष्मसम्परायगुणस्थाने त्वेकस्याः प्रकृतेरुदयव्यवच्छेदः अनिवृत्तिबादरसम्परायव्यवच्छिन्ने षट्के षट्षष्टेरपनीते शेषायाः षष्टेरुदयः । उपशान्तमोहगुणस्थाने द्वयोः प्रकृत्योरुदयव्यवच्छेदः । [2]सूक्ष्मसम्परायव्यवच्छिन्नायामेकस्यां प्रकृतौ षष्टेरपनीतायामेकोनषष्टेरुदयः । क्षीणमोहगुणस्थाने षोडशानां प्रकृतीनामुदयव्यवच्छेदः । द्वयोर्द्विचरमसमये चतुर्दशानां तु चरमसमये उपशान्तमोहव्यवच्छिन्नं द्वयमेकोनषष्टेरपनीयते, शेषायाः सप्तपञ्चाशत उदयः । सयोगिकेवलिगुणस्थाने त्रिंशतः प्रकृतीनामुदयव्यवच्छेदः । क्षीणमोहव्यवच्छिन्ने षोडशके सप्तपञ्चाशतोऽपनीते शेषायामेकचत्वारिंशति तीर्थकरनाम्नि प्रक्षिप्ते द्वाचत्वारिंशत उदयः । भवस्थायोगिकेवलिगुणस्थाने द्वादशानामुदयव्यवच्छेदः । सयोगिकेवलिव्यवच्छिन्नायां त्रिंशति द्वाचत्वारिंशतः शोधितायां द्वादशानामुदयः । सिद्धकेवली त्ववेदकः ॥४॥

इति प्रकृत्युदयव्यवच्छेदोद्देशः । इदानीमुदीरणाव्यवच्छेदोद्देशमाह—

पण नव [3]इग सत्तरसं, अट्ठट्ठ य चउर छक्क छ च्चेव ।
[4]इग दुग सोलगुयालं, उदीरणा होइ जोगंता ॥५॥

इहोदयाधिकारमनुसृत्य भावनीयमुदीरणाभिलापेन । नवरं विशेष उच्यते—प्रमत्तसंयतगुणस्थाने प्रकृत्यष्टकस्योदीरणाव्यवच्छेदः । उदीरणा त्वेकाशीतेरुदयवत् । अप्रमत्ते चतसृणां प्रकृतीनामुदीरणाव्यवच्छेदः । प्रमत्तव्यवच्छिन्नमष्टकमेकाशीतेरपनीयते, शेषायास्त्रिसप्ततेरुदीरणा । अपूर्वकरणे षण्णां व्यवच्छेदः । अप्रमत्तव्यवच्छिन्ने चतुष्के त्रिसप्ततेरपनीते शेषाया एकोनसप्तते-

१ "शेषायामेकाशीती" इति वा पाठः । एवमग्रेऽपि 'एकोनचत्वारिंशत् एकोनषष्टिः' इत्यादावपि 'एकान्नचत्वारिंशत् एकान्नषष्टिः' इत्यादि "नविंशत्यादिनैकोऽन्नान्त" (सिद्ध० ३-१-६१) इति सूत्रेण तत्पुरुषसमासे एकशब्दस्य 'अद्' इत्यन्तागमे च ज्ञेयम् ॥ २ "सूक्ष्मरागव्यव" इति वा पाठः ॥ ३-४ "इगि" इत्यपि पाठः ।

रुदीरणा । अनिवृत्तिबादरसम्पराये षण्णां व्यवच्छेदः । अपूर्वकरणव्यवच्छिन्नं षट्कमेकोनसप्ततेरपनीयते, शेषायास्त्रिषष्टेरुदीरणा । सूक्ष्मसम्पराये त्वेकस्याः प्रकृतेरुदीरणाव्यवच्छेदः । अनिवृत्तिबादरसम्परायव्यवच्छिन्ने षट्के त्रिषष्टेरपनीते शेषायाः सप्तपञ्चाशत उदीरणा । उपशान्तमोहे द्वयोरुदीरणाव्यवच्छेदः । [1]सूक्ष्मरागव्यवच्छिन्नायामेकस्यां सप्तपञ्चाशतः शोधितायां शेषायाः षट्पञ्चाशत उदीरणा । क्षीणमोहे षोडशानामुदीरणाव्यवच्छेदः । उपशान्तमोहव्यवच्छिन्ने द्वये षट्पञ्चाशतः शोधिते शेषायाश्चतुष्पञ्चाशत उदीरणा । सयोगिकेवलिन्येकोनचत्वारिंशत उदीरणाव्यवच्छेदः । क्षीणकषायव्यवच्छिन्ने षोडशके चतुष्पञ्चाशतः शोधिते शेषायामष्टात्रिंशति तीर्थकरनाम्नि प्रक्षिप्ते सत्येकोनचत्वारिंशत उदीरणा । अयोगिकेवली त्वनुदीरक एव ॥५॥

इति प्रकृत्युदीरणाव्यवच्छेदोद्देशः । प्रकृतिसत्ताव्यवच्छेदोद्देशमाह—

**अणमिच्छमीससम्मं, अविरयसम्माइअप्पमत्तंता ।**
**सुरनरयतिरियआउं, नियगभवे सव्वजीवाणं ॥६॥**

अनन्तानुबन्धिनश्चत्वारः क्रोधमानमायालोभाः, मिथ्यात्वं, 'मिश्रं' सम्यग्मिथ्यात्वमित्यर्थः सम्यक्त्वं इत्येताः सप्त कर्मप्रकृतयोऽविरतसम्यग्दृष्ट्याद्यप्रमत्तान्ताः । किमुक्तं भवति ?, एताः प्रकृतयोऽविरतदेशविरतप्रमत्ताप्रमत्तसंयतगुणस्थाना[2]नामन्यतमस्मिन् व्यवच्छिन्नसत्ताका भवन्ति । एतां हि सप्त प्रकृतीरेतेषामन्यतमो विशुद्धिवशात् क्षपयतीति । तथा सुरनारकतिर्यगायूंषि निजकभवे सत्तामधिकृत्य व्यवच्छिन्नानीत्यधिकाराल्लभ्यते । केषाम् ?, इत्याह—सर्वजीवानां क्षपकजिनत्वं प्राप्स्यतामेव, न त्वन्येषामित्यर्थाद्गम्यते । तथाहि—ये जीवाः सुरनारकतिर्यक्षु चरमं तद्भवमनुभूय मनुष्यतयोत्पन्नास्तेषां सुरनारकतिर्यगायूंषि स्वस्वभवे व्यवच्छिन्नसत्ताकानि जातानि, पुनस्तदनवाप्तेः, नान्येषां पुनस्तत्प्राप्तेरिति । अष्टचत्वारिंशं च शतं कर्मप्रकृतीनां सत्तायामधिक्रियते, तच्च दर्शयिष्यामः । तत्र मिथ्यादृष्टेरष्टचत्वारिंशस्यापि शतस्य सत्ता । यदा प्राग्बद्धनारकायुष्कः क्षायोपशमिकं सम्यक्त्वमवाप्य तीर्थकरनाम्नो बन्धमारभते, तदाऽसौ नरकेषूत्पद्यमानः सम्यक्त्वमवश्यं वमतीति मिथ्यादृष्टेस्तीर्थकरनाम्नोऽपि सत्ता संभवति । सासादनसम्यग्मिथ्यादृष्ट्योस्तस्मिन्नेव तीर्थकरनामरहिते सप्तचत्वारिंशस्य शतस्य सत्ता । तीर्थकरनामसत्कर्मणो जीवस्य तद्भावानवाप्तेः । तद्बन्धारम्भस्य च शुद्धसम्यक्त्वप्रत्ययत्वादित्युक्तं प्राक् । अविरतदेशविरत[3]प्रमत्तसंयताप्रमत्तसंयतानामक्षपितदर्शनसप्तकानामष्टचत्वारिंशस्य शतस्य सत्ता संभवति । तदितरेषां त्वेकचत्वारिंशस्य शतस्येति । इयं चैतेषु गुणस्थानेषु सामान्यजीवानां संभवमधिकृत्य सत्ता वर्णिता, न त्वधिकृतस्तवस्तुत्यस्य जिनस्यैषा सत्ता

१ "सूक्ष्मसम्परायव्यव०" इति वा पाठः २ "अन्यतरस्मिन्" इत्यपि पाठः । ३ "प्रमत्ताप्रमत्तसंयतानाम" इति वा पाठः ।

संभवति, अस्याः सुरनारकतिर्यगायुष्कसंभवापेक्षणीयत्वात्, जिनस्य च तद्‌संभवत्त्वेऽपि वा प्राग्भवापेक्षया संभवो भाव्यः । इदानीं जिनस्य क्षपकश्रेण्यामपूर्वकरणादिषु प्रकृतिसत्ताऽनुवर्ण्यते । उपशमश्रेणी [1]सत्तायास्त्विह नाधिकारः । तत्रापूर्वकरणगुणस्थाने स्वस्वभवव्यवच्छिन्नानि देवनारकतिर्यगायूंषि त्रीण्यविरताद्यप्रमत्तसंयतावसानगुणस्थानव्यवच्छिन्नं च दर्शनसप्तकमष्टाचत्वारिंशशतादपनीयते, शेषस्याष्टात्रिंशस्य प्रकृतिशतस्य सत्ता ॥६॥

अधुना त्वनिवृत्तिबादरसम्परायगुणस्थाने प्रकृतिसत्ताव्यवच्छेदमाह—

सोलस [2]अट्ठेक्केक्कं [3]छक्केक्कक्केक्क खीणमनियट्टी ।
एगं सुहुमसरागे, खीणकसाए य सोलसगं ॥७॥

षोडश १ अष्टौ २ एकं ३ एकं ४ "छक्केक्केक्क खीणमनियट्टी" इति, षट् ५ एकं ६ एकं ७ एकं ८ एकं ९ । क्रमेण कर्म क्षीणं 'अनिवृत्तौ' अनिवृत्त्यद्धायां प्रथमं षोडश कर्माणि क्षीणानि । ततोऽष्टौ तत एकमित्यादिक्रमः । यावदक्षीणं षोडशकं तावत्पूर्वोक्तस्याष्टात्रिंशस्य शतस्य सत्ता । तस्मिन् क्षीणे सत्यष्टात्रिंशशतादपनीते शेषस्य द्वाविंशस्य शतस्य सत्ता । ततोऽप्यष्टके क्षीणे द्वाविंशशतादपनीते शेषस्य चतुर्दशोत्तरस्य शतस्य सत्ता । ततोऽप्येकस्मिन् क्षीणे त्रयोदशस्य शतस्य सत्ता । ततः पुनरेकस्मिन क्षीणे द्वादशस्य शतस्य सत्ता । ततोऽपि षट्के क्षीणे द्वादशशतादपनीते षडुत्तरशतस्य सत्ता । तस्मादेकस्मिन् क्षीणे पञ्चोत्तरशतस्य सत्ता । ततोऽपि द्वितीये पुनरेकस्मिन् क्षीणे चतुरुत्तरशतस्य सत्ता । ततोऽपि तृतीये पुनरेकस्मिन् क्षीणे त्र्युत्तरशतस्य सत्ता । ततश्चतुर्थे पुनरेकस्मिन् क्षीणे द्व्युत्तरशतस्य सत्ता । **'एगं सुहुमसरागे'** इति, सूक्ष्मसरागगुणस्थाने त्वेकं कर्म क्षीणं व्यवच्छिन्नमित्यर्थः । पूर्वोक्तस्य द्व्युत्तरशतस्य सत्ता । **'खीणकसाए य सोलसगं'** इति, क्षीणकषायगुणस्थाने षोडशकं कर्मणां क्षीणम् । द्वे कर्मणी द्विचरमसमये, चतुर्दश चरमसमय इति । तत्र यावद्द्विचरमसमयस्तावत्सूक्ष्मसम्परायक्षीणायामेकस्यां कर्मप्रकृतौ द्व्युत्तरशतादपनीतायां शेषस्यैकोत्तरशतस्य सत्ता । चरमसमये तु द्विचरमसमयक्षीणं द्विकमेकोत्तरशतादपनीयते, शेषाया नवनवतेः सत्ता । सयोगिकेवलिनस्तु क्षीणकषायचरमसमयक्षीणे चतुर्दशके नवनवतेरपनीते शेषायाः पञ्चाशीतेः सत्ता ॥७॥

बावत्तरि दुचरिमे, तेरस चरिमे अजोगिणो खीणे ।
अडयालं पयडिसयं, खविय जिणं निव्वुयं वंदे ॥८॥

---

१ "सत्तया त्विह" इत्यपि पाठः ॥ २ "अट्ठिक्किक्कं" इत्यपि पाठः । ३–४ "छक्किक्किक्किक्क खीणमनियट्टी ।" इति वा पाठः ॥

अयोगिकेवलिनो द्वासप्ततिर्द्विचरमे समये क्षीणा। द्वौ चरमावस्मादिति द्विचरमः, तद्गुणसंविज्ञानेन बहुव्रीहिणा चरमात्पूर्वोऽनन्तरसमय उच्यते। **'तेरस चरिमे अजोगिणो खीणे'** इति त्रयोदश चरमे समये कर्माण्ययोगिकेवलिनः क्षीणानि। यावद्द्विचरमसमयस्तावत्पूर्वोक्तायाः पञ्चाशीतेः सत्ता। चरमसमये तु द्विचरमसमयक्षीणायां द्वासप्ततौ पञ्चाशीतेरपनीतायां शेषाणां त्रयोदशानां सत्ता। तदेवं च **'अडयालं पयडिसयं, खविय जिणं निव्वुयं वंदे'** इति, पूर्वमवक्षीणमायुस्त्रयमविरताद्यप्रमत्तान्तगुणस्थानक्षीणे दर्शनसप्तके क्षिप्तं जाता दश। तेऽप्यनिवृत्तिबादरसम्परायक्षीणे षोडशके क्षिप्ता जाता षड्विंशतिः। तस्यां तत्रैव क्षीणमष्टकं क्षिप्तं जाता चतुस्त्रिंशत्। तस्यां तत्रैव क्रमेण क्षीणौ द्वावेककौ क्षिप्तौ जाता षट्त्रिंशत्। तस्यां तत्रैव क्षीणं षट्कं क्षिप्तं जाता द्विचत्वारिंशत्। तस्यां तत्रैव क्रमेण क्षीणाश्चत्वार एककाः क्षिप्ता जाता षट्चत्वारिंशत्। तस्यां सूक्ष्मसम्परायक्षपित एकः क्षिप्तो जाता सप्तचत्वारिंशत्। तस्यां क्षीणमोहक्षपितं द्वयं क्षिप्तं जातैकोनपञ्चाशत्। तस्यां तत्क्षपितमेव चतुर्दशकं क्षिप्तं जाता त्रिषष्टिः। साऽप्ययोगिकेवलिक्षपितायां द्विसप्ततौ क्षिप्ता जातं पञ्चत्रिंशं शतम्। तत्र तत्क्षपितमेव त्रयोदशकं क्षिप्तं जातमष्टचत्वारिंशं शतमिति। तदेवमष्टचत्वारिंशं प्रकृतिशतं क्षपयित्वा जिनो निर्वृतः, तमेवंविधं जिनमहं वन्दे॥८॥

इत्युक्तः सत्ताव्यवच्छेदोद्देशः। इदानीं बन्धादिव्यवच्छेदोद्देशेषूद्दिष्टानां षोडशादीनां प्रकृतिसंख्यानां प्रतिनिर्देशाय मूलप्रकृत्युत्तरप्रकृतीर्दर्शयितुमाह—

नाणस्स दंसणस्स य, आवरणं वेयणीयमोहणियं।
आउयनामं गोयं, तहंतरायं च पयडीओ ॥९॥
पंच नव [१]दोन्नि अट्ठावीसा चउरो तहेव बायाला।
[२]दोण्णि य पंच य भणिया, पयडीओ उत्तरा चेव ॥१०॥

गाथे युगपद्व्याख्यायेते—ज्ञानस्यावरणं पञ्चविधं भवति। तद्यथा—आभिनिबोधिकज्ञानावरणं १ श्रुतज्ञानावरणं २ अवधिज्ञानावरणं ३ मनःपर्यायज्ञानावरणं ४ केवलज्ञानावरण ५ मिति १॥ दर्शनस्यावरणं नवविधम्। तद्यथा—निद्रा १ निद्रानिद्रा २ प्रचला ३ प्रचलाप्रचला ४ स्त्यानर्द्धिः ५ चक्षुर्दर्शनावरणं ६ अचक्षुर्दर्शनावरण ७ अवधिदर्शनावरणं ८ केवलदर्शनावरणं ९ चेति २॥ वेदनीयं द्विविधम्—सातवेदनीयं १ असातवेदनीयं २ चेति ३॥ मोहनीयमष्टाविंशतिविधम्। तिस्रो दर्शनमोहनीयप्रकृतयः-मिथ्यात्वं १ सम्यग्मिथ्यात्वं २ सम्यक्त्वं ३ चेति। पञ्चविंशतिश्चारित्रमोहनीयप्रकृतयः। तद्यथा—षोडश कषायाः १६ नव नोकषायाः २५। तत्र कषायाः—अनन्तानुबन्धी क्रोधो मानो माया लोभश्च ४, अप्रत्याख्यानावरणः क्रोधो मानो

१-२ "दुन्नि" इत्यपि पाठः।

माया लोभश्च ८, प्रत्याख्यानावरणः क्रोधो मानो माया लोभश्च १२, संज्वलनः क्रोधो मानो माया लोभश्च १६ इति षोडश कषायाः। नव नोकषायास्तु—वेदत्रयं हास्यादिषट्कं च। वेदत्रयम्—स्त्रीवेदः १ पुंवेदः २ नपुंसकवेदः ३ इति। हास्यादिषट्कं च—हास्यं १ रतिः २ अरतिः ३ शोकः ४ भयं ५ जुगुप्सा ६ इत्यष्टाविंशतिधा मोहनीयमुक्तम् ४॥ आयुष्कं चतुर्धा-नारकायुष्कम् १ तिर्यगायुष्कम् २ मनुष्यायुष्कम् ३ देवायुष्क ४ मिति ५॥ [1]नाम द्विचत्वारिंशद्भेदम्। तद्यथा चतुर्दश पिण्डप्रकृतयः १४, अष्टाविंशतिः प्रत्येकप्रकृतयः २८ इति द्विचत्वारिंशत्। पिण्डप्रकृतयस्तावत्-गतिनाम १ जातिनाम २ शरीरनाम ३ शरीराङ्गोपाङ्गनाम ४ शरीरबन्धननाम ५ शरीरसङ्घातननाम ६ संहनननाम ७ संस्थाननाम ८ वर्णनाम ९ गन्धनाम १० रसनाम ११ स्पर्शनाम १२ आनुपूर्वीनाम १३ विहायोगतिनाम १४ इति चतुर्दश। एतासां तावद्भेदा दर्श्यन्ते। गतिनाम चतुर्विधम्—नारकगतिनाम १ तिर्यग्गतिनाम २ मनुष्यगतिनाम ३ देवगतिनाम ४ इति। जातिनाम पञ्चविधम्—एकेन्द्रियजातिनाम १ द्वीन्द्रियजातिनाम २ त्रीन्द्रियजातिनाम ३ चतुरिन्द्रियजातिनाम ४ पञ्चेन्द्रियजातिनाम ५ इति। शरीरनाम पञ्चविधम्—औदारिकशरीरनाम १ वैक्रियशरीरनाम २ आहारकशरीरनाम ३ तैजसशरीरनाम ४ कार्मणशरीरनाम ५ इति। अङ्गोपाङ्गं त्रिविधम्—औदारिकाङ्गोपाङ्गम् १ वैक्रियाङ्गोपाङ्गम् २ आहारकाङ्गोपाङ्गं ३ चेति। बन्धनं पञ्चविधम्—औदारिकबन्धनादि शरीरवत् ५। सङ्घातनामापि तथैव ५। संहनननाम षड्विधम्-वज्रर्षभनाराचम् १ ऋषभनाराचम् २ नाराचम् ३ अर्द्धनाराचम् ४ कीलिका ५ सेवार्त्तं ६ चेति। संस्थाननाम षड्विधम्-समचतुरस्रम् १ न्यग्रोधपरिमण्डलम् २ [2]सादि ३ वामनम् ४ कुब्जं ५ हुण्डं ६ चेति। वर्णनाम पञ्चविधम्—कृष्णम् १ नीलम् २ लोहितम् ३ हारिद्रम् ४ शुक्लं ५ चेति। गन्धनाम द्विविधम्—सुरभिनाम १ दुरभिनाम २ चेति। रसनाम पञ्चविधम्—तिक्तम् १ कटुकम् २ कषायम् ३ अम्लम् ४ मधुरं ५ चेति। स्पर्शनामष्टविधम्—कर्कशम् १ मृदु २ गुरु ३ लघु ४ शीतम् ५ उष्णम् ६ स्निग्धम् ७ रूक्षं चेति। आनुपूर्वी चतुर्विधा नरकानुपूर्वी १ तिर्यगानुपूर्वी २ मनुष्यानुपूर्वी ३ देवानुपूर्वी ४ चेति। विहायोगतिर्द्विविधा-प्रशस्तविहायोगतिः १ अप्रशस्तविहायोगति २ श्चेति। इत्येताश्चतुर्दश पिण्डप्रकृतयः। प्रभेदाप्रभेतासां पञ्चषष्टिरिति ६५। प्रत्येकप्रकृतयस्त्विमाः—त्रसनाम १ स्थावरनाम २ बादरनाम ३ सूक्ष्मनाम ४ पर्याप्तकनाम ५ अपर्याप्तकनाम ६ प्रत्येकनाम ७ साधारणनाम ८ स्थिरनाम ९ अस्थिरनाम १० शुभनाम ११ अशुभनाम १२ सुस्वरनाम १३ दुःस्वरनाम १४ सुभगनाम १५ दुर्भगनाम १६ आदेयनाम १७ अनादेयनाम १८ यशःकीर्तिनाम १९ अयशःकीर्त्तिनाम २० अगुरुलघुनाम

१ "तदिदानीं नाम भण्यते, तद्द्विचत्वारिंशद्विधम्।" इति वा पाठः। २ "सादि ३" इत्यपि। ३ "द्विधा" इति वा। ४ "अष्टधा" इति वा पाठः॥

अयोगिकेवलिनो द्वासप्ततिर्द्विचरमे समये क्षीणा। द्वौ चरमावस्मादिति द्विचरम', तद्गुणसंविज्ञानेन बहुव्रीहिणा चरमात्पूर्वोऽनन्तरसमय उच्यते। **'तेरस चरिमे अजोगिणो खीणे'** इति त्रयोदश चरमे समये कर्माण्ययोगिकेवलिनः क्षीणानि। यावद्द्विचरमसमयस्तावत्पूर्वोक्तायाः पञ्चाशीतेः सत्ता। चरमसमये तु द्विचरमसमयक्षीणायां द्वासप्ततौ पञ्चाशीतेरपनीतायां शेषाणां त्रयोदशानां सत्ता। तदेवं च **'अडयालं पयडिसयं. खविय जिणं निव्वुयं वंदे'** इति, पूर्वमवक्षीणमायुस्त्रयमविरताद्यप्रमत्तान्तगुणस्थानक्षीणे दर्शनसप्तके क्षिप्तं जाता दश। तेऽप्यनिवृत्तिबादरसम्परायक्षीणे षोडशके क्षिप्ता जाता षड्विंशतिः। तस्यां तत्रैव क्षीणमष्टकं क्षिप्तं जाता चतुस्त्रिंशत्। तस्यां तत्रैव क्रमेण क्षीणौ द्वावेकको क्षिप्तौ जाता षट्त्रिंशत्। तस्यां तत्रैव क्षीणं षट्कं क्षिप्तं जाता द्विचत्वारिंशत्। तस्यां तत्रैव क्रमेण क्षीणाश्चत्वार एकका: क्षिप्ता जाता षट्चत्वारिंशत्। तस्यां सूक्ष्मसम्परायक्षपित एकः क्षिप्तो जाता सप्तचत्वारिंशत्। तस्यां क्षीणमोहक्षपितं द्वयं क्षिप्तं जातैकोनपञ्चाशत्। तस्यां तत्क्षपितमेव चतुर्दशकं क्षिप्तं जाता त्रिषष्टिः। साऽप्ययोगिकेवलिक्षपितायां द्विसप्ततौ क्षिप्ता जातं पञ्चत्रिंशं शतम्। तत्र तत्क्षपितमेव त्रयोदशकं क्षिप्तं जातमष्टचत्वारिंशं शतमिति। तदेवमष्टचत्वारिंशं प्रकृतिशतं क्षपयित्वा जिनो निर्वृतः, तमेवंविधं जिनमहं वन्दे ॥८॥

इत्युक्तः सत्ताव्यवच्छेदोद्देशः। इदानीं बन्धादिव्यवच्छेदोद्देशेषूद्दिष्टानां षोडशादीनां प्रकृतिसंख्यानां प्रतिनिर्देशाय मूलप्रकृत्युत्तरप्रकृतीर्दर्शयितुमाह—

नाणस्स दंसणस्स य. आवरणं वेयणीयमोहणियं।
आउयनामं गोयं, तहंतरायं च पयडीओ ॥९॥
पंच नव [1]दोन्नि अट्ठा-वीसा चउरो तहेव बायाला।
[2]दोण्णि य पंच य भणिया. पयडीओ उत्तरा चेव ॥१०॥

गाथे युगपद्व्याख्यायेते—ज्ञानस्यावरणं पञ्चविधं भवति। तद्यथा—आभिनिबोधिकज्ञानावरणं १ श्रुतज्ञानावरणं २ अवधिज्ञानावरणं ३ मनःपर्यायज्ञानावरणं ४ केवलज्ञानावरण ५ मिति १॥ दर्शनस्यावरणं नवविधम्। तद्यथा—निद्रा १ निद्रानिद्रा २ प्रचला ३ प्रचलाप्रचला ४ स्त्यानर्द्धिः ५ चक्षुर्दर्शनावरणं ६ अचक्षुर्दर्शनावरणं ७ अवधिदर्शनावरणं ८ केवलदर्शनावरणं ९ चेति २॥ वेदनीयं द्विविधम्—सातवेदनीयं १ असातवेदनीयं २ चेति ३॥ मोहनीयमष्टाविंशतिविधम्। तिस्रो दर्शनमोहनीयप्रकृतयः-मिथ्यात्वं १ सम्यग्मिथ्यात्वं २ सम्यक्त्वं ३ चेति। पञ्चविंशतिश्चारित्रमोहनीयप्रकृतयः। तद्यथा—षोडश कषायाः १६ नव नोकषायाः २५। तत्र कषायाः—अनन्तानुबन्धी क्रोधो मानो माया लोभश्च ४, अप्रत्याख्यानावरणः क्रोधो मानो

[1]-[2] "दुन्नि" इत्यपि पाठः।

माया लोभश्च ८, प्रत्याख्यानावरणः क्रोधो मानो माया लोभश्च १२, संज्वलनः क्रोधो मानो माया लोभश्च १६ इति षोडश कषायाः। नव नोकषायास्तु—वेदत्रयं हास्यादिषट्कं च। वेदत्रयम्—स्त्रीवेदः १ पुंवेदः २ नपुंसकवेदः ३ इति। हास्यादिषट्कं च—हास्यं १ रतिः २ अरतिः ३ शोकः ४ भयं ५ जुगुप्सा ६ इत्यष्टाविंशतिधा मोहनीयमुक्तम् ४॥ आयुष्कं चतुर्धा-नारकायुष्कम् १ तिर्यगायुष्कम् २ मनुष्यायुष्कम् ३ देवायुष्क ४ मिति ५॥ [1]नाम द्विचत्वारिंशद्भेदम्। तद्यथा चतुर्दश पिण्डप्रकृतयः १४, अष्टाविंशतिः प्रत्येकप्रकृतयः २८ इति द्विचत्वारिंशत्। पिण्डप्रकृतयस्तावत्-गतिनाम १ जातिनाम २ शरीरनाम ३ शरीराङ्गोपाङ्गनाम ४ शरीरबन्धननाम ५ शरीरसङ्घातननाम ६ संहनननाम ७ संस्थाननाम ८ वर्णनाम ९ गन्धनाम १० रसनाम ११ स्पर्शनाम १२ आनुपूर्वीनाम १३ विहायोगतिनाम १४ इति चतुर्दश। एतासां तावद्भेदा दर्श्यन्ते। गतिनाम चतुर्विधम्—नारकगतिनाम १ तिर्यग्गतिनाम २ मनुष्यगतिनाम ३ देवगतिनाम ४ इति। जातिनाम पञ्चविधम्—एकेन्द्रियजातिनाम १ द्वीन्द्रियजातिनाम २ त्रीन्द्रियजातिनाम ३ चतुरिन्द्रियजातिनाम ४ पञ्चेन्द्रियजातिनाम ५ इति। शरीरनाम पञ्चविधम्—औदारिकशरीरनाम १ वैक्रियशरीरनाम २ आहारकशरीरनाम ३ तैजसशरीरनाम ४ कार्मणशरीरनाम ५ इति। अङ्गोपाङ्गं त्रिविधम्—औदारिकाङ्गोपाङ्गम् १ वैक्रियाङ्गोपाङ्गम् २ आहारकाङ्गोपाङ्गं ३ चेति। बन्धनं पञ्चविधम्—औदारिकबन्धनादि शरीरवत् ५। सङ्घातनामापि तथैव ५। संहनननाम षड्विधम्-वज्रर्षभनाराचम् १ ऋषभनाराचम् २ नाराचम् ३ अर्द्धनाराचम् ४ कीलिका ५ सेवार्त्तं ६ चेति। संस्थाननाम षड्विधम्-समचतुरस्रम् १ न्यग्रोधपरिमण्डलम् २ [2]सादि ३ वामनम् ४ कुब्जं ५ हुण्डं ६ चेति। वर्णनाम पञ्चविधम्—कृष्णम् १ नीलम् २ लोहितम् ३ हारिद्रम् ४ शुक्लं ५ चेति। गन्धनाम द्विविधम्—सुरभिनाम १ दुरभिनाम २ चेति। रसनाम पञ्चविधम्—तिक्तम् १ कटुकम् २ कषायम् ३ अम्लम् ४ मधुरं ५ चेति। स्पर्शनामष्टविधम्—कर्कशम् १ मृदु २ गुरु ३ लघु ४ शीतम् ५ उष्णम् ६ स्निग्धम् ७ रूक्षं चेति। आनुपूर्वी चतुर्विधा नरकानुपूर्वी १ तिर्यगानुपूर्वी २ मनुष्यानुपूर्वी ३ देवानुपूर्वी ४ चेति। विहायोगतिर्द्विविधा-प्रशस्तविहायोगतिः १ अप्रशस्तविहायोगति २ श्चेति। इत्येताश्चतुर्दश पिण्डप्रकृतयः। प्रभेदाग्रमेतासां पञ्चषष्टिरिति ६५। प्रत्येकप्रकृतयस्त्विमाः—त्रसनाम १ स्थावरनाम २ बादरनाम ३ सूक्ष्मनाम ४ पर्याप्तकनाम ५ अपर्याप्तकनाम ६ प्रत्येकनाम ७ साधारणनाम ८ स्थिरनाम ९ अस्थिरनाम १० शुभनाम ११ अशुभनाम १२ सुस्वरनाम १३ दुःस्वरनाम १४ सुभगनाम १५ दुर्भगनाम १६ आदेयनाम १७ अनादेयनाम १८ यशःकीर्तिनाम १९ अयशःकीर्त्तिनाम २० अगुरुलघुनाम

१ "तदिदानीं नाम भण्यते, तद्द्विचत्वारिंशद्विधम्।" इति वा पाठः। २ "साति ३" इत्यपि। ३ "द्विधा" इति वा। ४ "माष्टधा" इति वा पाठः॥

२१ उपघातनाम २२ पराघातनाम २३ उच्छ्वासनाम २४ आतपनाम २५ उद्योतनाम २६ निर्माणनाम२७ तीर्थकरनाम २८ इत्यष्टाविंशतिः प्रत्येकप्रकृतयः। पूर्वोक्तपिण्डप्रकृतिचतुर्दशकेन सहिता द्विचत्वारिंशद्भवन्ति। पिण्डप्रकृतिप्रभेदपञ्चषष्ट्या तु सहिता त्रिनवतिर्भवति ६ ॥ गोत्रं द्विभेदम्-उच्चैर्गोत्रं १ नीचैर्गोत्रं २ चेति ७ ॥ अन्तरायं पञ्चधा—दानान्तरायम् १ लाभान्तरायम् २ भोगान्तरायम् ३ उपभोगान्तरायम् ४ वीर्यान्तरायं ५ चेति ८ ॥ एवं च कृत्वा ज्ञानावरणे पञ्च प्रकृतयः। दर्शनावरणे नव। वेदनीये द्वे। मोहनीयेऽष्टाविंशतिः। आयुषि चतस्रः। नाम्नि त्रिनवतिः। गोत्रे द्वे। अन्तराये पञ्च। सर्वपिण्डोऽष्टचत्वारिंशं शतमित्येतेन सर्वेण सत्तायामधिकारः। उदयोदीरणयोस्त्वौदारिकादिबन्धनानां पञ्चानामौदारिकादिसङ्घातानां च पञ्चानां यथास्वमौदारिकादिषु पञ्चसु शरीरेष्वन्तर्भावः। वर्णगन्धरसस्पर्शानां यथासंख्यं पञ्च-द्विपञ्चाष्टप्रभेदानां तत्प्रभेदकृतां विंशतिमपनीय तेषामेव चतुर्णामभिन्नानां ग्रहणे षोडशकमिदं, बन्धनसङ्घातदशकसहितमष्टचत्वारिंशशतादपनीयते, शेषेण द्वाविंशेन शतेनाधिकारः। बन्धे तु सम्यक्त्वसम्यग्मिथ्यात्वयोः सङ्क्रमेणैव निष्पाद्यत्वाद्बन्धो न संभवतीति तयोर्द्वाविंशशतादपनीतयोः शेषेण विंशेन शतेनाधिकारः। इति प्रकृतिसमुत्कीर्तना कृता। अधुना प्रकृतिवर्णना क्रियते। तत्र ज्ञानावरणं तावत्-सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोधो ज्ञानं तस्यावरणं ज्ञानावरणम्। तस्य प्रथमो भेद आभिनिबोधिकज्ञानावरणम्। अभिमुखो योग्यदेशावस्थितार्थापेक्षी नियतः स्वस्वविषयापेक्षी बोधोऽभिनिबोधः स एवाभिनिबोधिकं, तच्च तद् ज्ञानं चेति आभिनिबोधिकज्ञानम्। तच्चतुर्विधम्—अवग्रहः १ ईहा २ अपायः ३ धारणा ४ चेति। अवग्रहो द्विविधः—व्यञ्जनावग्रहः १ अर्थावग्रहश्च २। तत्र व्यञ्जनावग्रहश्चक्षुर्मनोवर्जानामिन्द्रियाणां स्वस्वविषयद्रव्यैः सह संबन्धः, तेनासौ चतुर्विध एव। अर्थावग्रहस्तु किमपीदमित्येतावन्मात्रो मनःषष्ठैः पञ्चभिरिन्द्रियैर्वस्त्ववबोधः, ततश्चैवमसौ षोढा। ईहादयोऽपि मनःषष्ठेन्द्रियपञ्चकसंभवत्वात्षोढैव। अपि किं न्वयं भवेत् पुरुष एव उत स्थाणुः ? इत्यादिवस्तुधर्मान्वेषणात्मकं ज्ञानचेष्टनमीहा। पुरुष एवायमिति [2]वस्त्वध्यवसायात्मको निश्चयोऽपायः। निश्चितस्याविच्युतिस्मृतिवासनात्मकं धरणं धारणा। तदेतदष्टाविंशतिविधं श्रुतनिश्रितमाभिनिबोधिकज्ञानम्, श्रुतेन संस्क्रियमाणत्वात्। अश्रुतनिश्रितेनौत्पत्तिक्यादिबुद्धिचतुष्टयेन सह द्वात्रिंशद्विधम्। अथवा बहुबहुविधक्षिप्रानिश्रितासंदिग्धध्रुवाणां सेतराणामर्थानां ग्रहणेन भिद्यमानत्वाद्द्वादशभिरष्टाविंशतिर्गुणिता त्रीणि शतानि षट्त्रिंशानि, तानि बुद्धिचतुष्टयसहितानि चत्वारिंशानि त्रीणि शतानि भेदानामाभिनिबोधिकज्ञानस्येति तस्यैतावद्भेदमेव यदावरणस्वभावं कर्म

१ "कृता विंशतिरपनीयते, ते-०" इति वा पाठः।

२ "वस्तुन्यध्यवसायात्मको" इत्यपि पाठः॥

तदाभिनिबोधिकज्ञानावरणमेकग्रहणेन गृह्यते १ । तथा श्रवणं श्रुतं अभिलापप्लावितार्थग्रहणप्रत्ययोपलब्धिविशेषः, ततस्तेन तदेव वा ज्ञानं श्रुतज्ञानम् । तच्च संक्षेपतश्चतुर्दशविधमक्षरश्रुतादि । तत्राक्षरश्रुतं त्रिविधम्—संज्ञा १ व्यञ्जन २ लब्धि ३ भेदात् । तत्र संज्ञाक्षरं लेख्यलिपिरूपम्, यथा—ठकारो घटाकृतिः, घटीरूपो धकार इत्यादि । व्यञ्जनाक्षरं भाषाशब्दस्तदेतद् द्वितयमज्ञानात्मकमपि श्रुतकारणत्वादुपचारेण श्रुतम् । लब्ध्यक्षरं तु शब्दश्रवणरूपदर्शनादेरर्थप्रत्यायनगर्भाक्षरोपलब्धिः १ अनक्षरश्रुतं क्ष्वेडितशिरःकम्पादिनिमित्तं मामाह्वयति वारयति वेत्यादिरूपमभिप्रायादिपरिज्ञानम् २ । समनस्कस्य मनःसहायैरिन्द्रियैर्जनितमुक्तलक्षणं श्रुतं संज्ञिश्रुतम् ३ । तदेव मनोरहितेन्द्रियजमसंज्ञिश्रुतममनस्कस्य ४ । सम्यग्दृष्टेरर्हत्प्रणीतमितरद्वा श्रुतं यथास्वरूपावगमात् सम्यक्श्रुतम् ५ । तदेव मिथ्यादृष्टेर्मिथ्याश्रुतम्, अन्यथाऽवगमात् ६ । सादिश्रुतं ज्ञानात्मकं सम्यग्दृष्टेरज्ञानात्मकं वा सम्यक्त्वच्युतस्य ७ । मिथ्यादृष्टेरलब्धपूर्वसम्यक्त्वस्य तु तदेवानादिश्रुतम् ८ । सपर्यवसितं भव्यानां केवलोत्पत्तौ ध्रुवं पर्यवसानात् ९ । अपर्यवसितमभव्यानां केवलोत्पादानर्हत्वात् १० । भिन्ने यदर्थजाते सदृशाक्षरालापकं तद्गमिकम् ११ । असदृशं त्वगमिकम् १२ । अङ्गप्रविष्टमाचारादीन्यङ्गानि १३ शेषं प्रकीर्णका नङ्गप्रविष्टम् १४ । इति चतुर्दशधा श्रुतज्ञानं तस्यावरणस्वभावं कर्म श्रुतज्ञानावरणम् २ । तथाऽवधानमवधिरिन्द्रियाद्यनपेक्षात्मनः साक्षादर्थग्रहणम्, अवधिरेव ज्ञानमवधिज्ञानम् । अथवाऽवधिर्मर्यादा तेनावधिना रूपिद्रव्यमर्यादात्मकेन ज्ञानमवधिज्ञानम् । इत्येक एव समासशब्दो विग्रहद्वयनिष्पन्नः स्वसर्थमन्यव्यतिरिक्तमाह, मतिश्रुते तावदिन्द्रियमनोजनिते, तयोः प्रथमेन विग्रहेण व्यतिरेकः, द्वितीयेन तु मनःपर्यायकेवलयोः एकस्य सर्वरूपिमर्यादया ज्ञानत्वासंभवात्, द्वितीयस्य तु रूप्यरूपिविषयत्वात् । यत्त्ववधिज्ञानं तस्य सर्वरूपिमर्यादयापि विषयः संभवतीति मनःपर्यायकेवलयोस्ततो व्यतिरेकः । तद्भवप्रत्ययं नारकदेवानां गुणप्रत्ययं मनुष्यतिरश्चाम् । एतच्च षोढा, अनुगाम्यादि । तत्र अनुगामि यद्देशान्तरगतमपि ज्ञानिनमनुगच्छति लोचनवत् १ यत्तु तद्देशस्थस्यैव भवति स्थानस्थदीपवत्, तद्देशनिबन्धनक्षयोपशमजन्यत्वात्, देशान्तरगतस्य त्वपैति तदननुगामीति २ । अवस्थितं यन्न प्रतिपतति, आदित्यमण्डलवत् ३ । अनवस्थितं यत्प्रतिपतति, लवणसमुद्रवेलावत् ४ । हीयमानकं यज्जघन्येनाङ्गुलासङ्ख्येयभागविषयमुत्कर्षेण सर्वलोकविषयमुत्पद्य पुनः संक्लेशवशात्क्रमेण हानिं विषयसंकोचात्मिकां याति, यावदङ्गुलासङ्ख्येयभागस्ततोऽपि प्रतिपतति, येन त्वलोकस्य प्रदेशोऽपि दृष्टस्तस्य न हीयते ५ । वर्धमानकं यदङ्गुलासङ्ख्येयभागादिविषयमुत्पद्य पुनर्वृद्धिं विषयविस्तरणात्मिकां याति, यावदलोके लोकप्रमाणान्यसङ्ख्येयानि खण्डानि ६ । इति षड्विधमवधिज्ञानम् । तस्य च जघन्योत्कृष्टमध्यमक्षेत्रविषयासङ्ख्येयत्ववशादसङ्ख्येया भेदाः, तेषामावरणस्वभावानि एतावन्त्येव कर्माणि, तानि चैकग्रहणेन

गृह्यन्तेऽवधिज्ञानावरणमिति ३ । तथा संज्ञिभिर्जीवैः काययोगेन गृहीतानि मनःप्रायोग्यवर्गणा-पुद्गलद्रव्याणि चिन्तनीयवस्तुचिन्तनव्यापृतेन मनोयोगेन मनस्त्वेन परिणमय्यालम्ब्यमानानि मनांसीत्युच्यन्ते, तेषां मनसां पर्यायाश्चिन्तनानुगुणाः परिणामाः तेषु ज्ञानं मनःपर्यायज्ञानम् । अथवाऽऽत्मभिर्वस्तुचिन्तने व्यापारितानि मनांसि पर्येति परिगच्छत्यवैतीति मनःपर्यायं, 'कर्मण्यण्' (पाणि०३-२-१) तस्य कथंचित्कर्तुरनन्यत्वात्कर्तृत्वम् । कर्ता वाऽऽत्मा यथोक्तानि मनांसि पर्येति अनेनेति मनःपर्यायम् । 'अकर्तरि च' इत्यादिना घञ् । तत्पुनस्तदावरणक्षयोपशमजो लब्धिविशेषः, तदुपयोगो वा विषयग्रहणात्मक इति । तच्च तद् ज्ञानं च मनःपर्यायज्ञानम् । तच्च द्विविधम्—ऋजुमति विपुलमति चेति । ऋज्वी साक्षात्कृतेष्वनुमितेषु वाऽर्थेष्वल्पतरविशेषविषयतया मुग्धा मतिविषयपरिच्छित्तिर्यस्य तदृजुमति । तदितरा विपुला मतिर्यस्य तद्विपुलमति । तत्रर्जुमतेरर्धतृतीयाङ्गुलहीनो मनुष्यलोकः क्षेत्रतो विषयः, स एव विपुलमतेः संपूर्णो निर्मलतरः । कालतस्त्वेतावति क्षेत्रे भूतभाविनोः पल्योपमासङ्ख्येयभागयोरतीतानागतानि, संज्ञिमनोरूपाणि मूर्त्तद्रव्याणि, तान्येव च द्रव्यतोऽपि । भावतस्तु तत्पर्यायाश्चिन्तनानुगुणाः परिणतिरूपा ऋजुमतेर्विषय इति । चिन्तनीयं तु मूर्त्तममूर्त्तं वा त्रिकालगोचरमपि बाह्यमर्थमनुमानादवैति, न साक्षात् । यत एतत्परिणतान्येतानि मनोद्रव्याणीत्येतदन्यथानुपपत्तेरमुकोऽनेनार्थश्चिन्तित इति लेखाक्षरदर्शनात्तदुक्तार्थमिवाप्रत्यक्षं मनोद्रव्यदर्शनाच्चिन्त्यमर्थमनुमिमीते । स चैष बाह्याभ्यन्तररूपो द्विविधोऽपि विषयः स्फुटतरबहुतरविशेषाध्यासितत्वेन विपुलमतेर्विमलतरोऽवसेयः । तदेवमेतयोर्द्वयोरपि मनःपर्यायभेदयोरावरणस्वभावं कर्मापि द्विविधमेव, तदेकग्रहणेन गृह्यते मनःपर्यायज्ञानावरणमिति ४ । केवलज्ञानं प्रागुक्तस्वरूपं तस्यावरणं केवलज्ञानावरणम् ५ । इत्युक्तं पञ्चविधं ज्ञानावरणम् १ ॥ सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधो दर्शनं तस्यावरणस्वभावं कर्म दर्शनावरणम् । तन्नवविधम् । तत्र निद्रापञ्चकं तावत् 'द्रा' कुत्सायां गतौ । नियतं द्राति कुत्सितत्वमविस्पष्टत्वं[1] गच्छति चैतन्यमनयेति निद्रा सुखप्रबोधा स्वापावस्था, नखच्छोटिकामात्रेणापि यत्र प्रबोधो भवति तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रेति कार्येण व्यपदिश्यते १ । तथा निद्रातिशायिनी निद्रा निद्रानिद्रा, शाकपार्थिवादित्वान्मध्यपदलोपी समासः । सा पुनर्दुःखप्रबोधा स्वापावस्था तस्यां ह्यत्यर्थमस्फुटतरीभूतचैतन्यत्वाद्दुःखेन बहुभिर्घोलनादिभिः प्रबोधो भवति, अतः सुखप्रबोधनिद्रापेक्षयाऽस्या अतिशायिनीत्वम्, तद्विपाकवेद्या कर्मप्रकृतिः कार्यद्वारेण निद्रानिद्रेत्युच्यते २ । उपविष्ट ऊर्ध्वस्थितो वा प्रचलत्यस्यां स्वप्ता स्वापावस्थायामिति प्रचला, सा ह्युपविष्टस्योर्ध्वस्थि-

१ "मविस्फुटत्वं" इति वा पाठः ॥

तस्य वा घूर्णमानस्य स्वप्तुर्भवति, तथाविधविपाकवेद्या कर्मप्रकृतिः प्रचलेति ३। तथैव प्रचला-ऽतिशायिनी प्रचला प्रचलाप्रचला, सा हि चङ्क्रमणादि कुर्वतः स्वप्तुर्भवति, अतः स्थानस्थित-स्वप्तृभवां प्रचलामपेक्ष्याऽतिशायिनी, तद्विपाका कर्मप्रकृतिरपि प्रचलाप्रचला ४। स्त्याना बहुत्वेन सङ्घातमापन्ना गृद्धिरभिकाङ्क्षा जाग्रदवस्थाऽध्यवसितार्थसाधनविषया यस्यां स्वापावस्थायां सा स्त्यानगृद्धिः। तस्यां हि सत्यां जाग्रदवस्थाध्यवसितमर्थमुत्थाय साधयति। स्त्याना वा पिण्डीभूता ऋद्धिरात्मशक्तिरूपा [1]अस्यामिति स्त्यानर्द्धिरित्यप्युच्यते, तद्भावे हि स्वप्तुः प्रथमसंहननस्य केश-वबलसदृशी शक्तिर्भवति। प्रसिद्धं चैतदागमे—भिक्षार्थमन्यग्रामं गतस्य क्षुल्लकस्यागच्छतो न्यग्रोध[2]शाखायां शिरः स्खलितम्। ततस्तेन [3]रुषितेन रात्रावेतन्निद्रोदये सा वटशाखा भङ्क्त्वा प्रतिश्रयद्वारे प्रक्षिप्तेत्यादि॥ अथवा स्त्याना जडीभूता चैतन्यर्द्धिरस्यामिति स्त्यानर्द्धिरिति, तादृशविपाकवेद्या कर्मप्रकृतिरपि स्त्यानर्द्धिः स्त्यानगृद्धिरिति वा ५ तदेतन्निद्रापञ्चकं दर्शनावर-णक्षयोपशमलब्धात्मलाभानां दर्शनलब्धीना[4]मावारकमुक्तम्। अधुना यद्दर्शनलब्धीनां मूलत एव लाभमावृणोति तदिदं दर्शनावरणचतुष्कमुच्यते—चक्षुषा सामान्यग्राही बोधश्चक्षुर्दर्शनं तस्यावरणं चक्षुर्दर्शनावरणम् ६ अचक्षुषा चक्षुर्वर्जेन्द्रियचतुष्टयेन मनसा वा यद्दर्शनं तदचक्षुर्दर्शनं तस्यावरणम् ७। अवधिना—रूपि[5]द्रव्यमर्यादया अवधिरेव वा करणनिरपेक्षबोधरूपो दर्शनं सामान्यार्थग्रह-णमवधिदर्शनं तस्यावरणम् ८ तथा केवलमुक्तस्वरूपं तच्च तद्दर्शनं च तस्यावरणं केवलदर्शनाव-रणम् ९। इत्युक्तं नवविधं दर्शनावरणम् २॥ आरोग्यविषयोपभोगादिजनितमाह्लादरूपं सुखं सातं, तद्रूपेण विपाकेन वेद्यत इति सातवेदनीयम् १। तद्विपरीतं दुःखमसातं, तद्रूपेण विपाकेन वेद्यत इत्यसातवेदनीयम् २। इत्युक्तं द्विविधं वेदनीयम् ३॥ तत्त्वार्थश्रद्धानं दर्शनं, तन्मोहयति विपर्यासं गमयतीति दर्शनमोहनीयम्। तत्त्रिविधं, मिथ्यात्वादि। तत्र मिथ्यात्वं त्रिविधम्—सांशयिकम् १ आभिग्रहिकम् २ अनाभिग्रहिकं ३ चेति। तत्र सांशयिकं यदिदमुक्तमर्हता तत्त्वं जीवादि, तन्न जाने—तथा स्यात् उतान्यथा ? इत्येवंरूपम्। उक्तं च—"**एकस्मिन्नपि तत्त्वे, सन्दिग्धे प्रत्ययोऽर्हति हि नष्टः। मिथ्या च दर्शनं तत्, स चादिहेतुर्भवगतो-नाम्॥१॥**" इति १। आभिग्रहिकं येन बोटिकादिकुदर्शनानामन्यतमदभिगृह्णाति २। अना-भिग्रहिकं अज्ञानां गोपादीनामपि माध्यस्थ्याद्वाऽनभिगृहीतदर्शनविशेषा सर्वदर्शनानि शोभना-नीत्येवंरूपा या प्रतिपत्तिः ३। इत्येतेन त्रिविधेन प्रकारेण विपच्यते यत्कर्म तदपि मिथ्यात्वम् १। सम्यग्मिथ्यात्वमर्द्धविपर्यस्तत्वं दर्शनस्य नैकान्तशुद्धमशुद्धमेव वा [6]तत्त्वश्रद्धानत्वं तादृशविपा-

---

१ "यत्या" इत्यपि। २ "शाखया" इति वा। ३ "रुषितेन गत्वा स्त्यानर्द्धिनिद्रोदये सा"। ४ "मावरण-कर्तु" इति क्वचित्॥ ५ "रूपिमर्यादयाः" इत्यपि। ६ "तत्त्वार्थश्रद्धानत्वं तादृशविपाकवेद्य" इत्यपि पाठः।

कवेद्यं कर्म सम्यग्मिथ्यात्वम् २ । तथा सम्यक्त्वमविपर्यस्तत्वं तत्त्वदर्शनस्य यथा यदर्हन् प्राह तथैव तत् , इत्येवंरूपं, तत्त्व [1]श्रद्धानत्वम् , एतत्परिणामपरिणतेनात्मना यद्वेद्यते तद्दर्शनमोहनीयं कर्म, तदपि सम्यक्त्वमिति ३ । १ । तथा चारित्रं सावद्ययोगविरतिलक्षणो जीवपरिणामः तन्मोहयतीति चारित्रमोहनीयम् । तत्र षोडश कषायाः । कषायशब्दः प्रागुक्तार्थ एव । तत्रानन्तं संसारमनुबध्नन्ति अनुसंदधति तच्छीलाश्चेत्यनन्तानुबन्धिनः । यद्यपि चैतेषां शेषकषायरहितानामुदयो नास्ति, तथाऽप्यवश्यमनन्तसंसारमौलकारणमिथ्यात्वोदया[2]क्षेपित्वादेतषामेवैष व्यपदेशः । शेषकषाया हि नावश्यं मिथ्यात्वोदयमाक्षिपन्ति, अतस्तेषामुदययौगपद्ये सत्यपि नायं व्यपदेशः, इत्यसाधारणमेतेषामेवैतन्नामधेयम् । ते च चत्वारः । क्रोधोऽक्षान्तिपरिणतिलक्षणः । मानो गर्वो जात्याद्युद्भवममार्दवम् । माया वञ्चनप्रतिकुञ्चनाद्यात्मिका परिणतिः । लोभोऽसंतोषात्मको गार्द्ध्यपरिणामः । तद्विपाकवेद्याः कर्मप्रकृतयोऽपि तन्नामधेयाः । इत्येते क्रोधादयो यथासङ्ख्यं पर्वतरेखाशैलस्तम्भवंशीमूलकृमिरागसमाना यावज्जीवानुबन्धिनो जीवपरिणामविशेषा अनन्तानुबन्धिन इत्यवसेया इति ४ ॥ त एव च क्रोधादयो यथाक्रमं पृथिवीरेखाऽस्थिमेषशृङ्गकर्दमरागसमानाः संवत्सरानुबन्धिनोऽप्रत्याख्यानावरणाः, नञोऽल्पार्थत्वादल्पं प्रत्याख्यानं अप्रत्याख्यानं देशविरत्याख्यं तदावृण्वन्ति ये ते तथोक्ताः ४ । त एव क्रमेण रेणुरेखाकाष्ठगोमूत्रिकाखञ्जनरागसमानाश्चतुर्मासानुबन्धिनः प्रत्याख्यानावरणाः, प्रत्याख्यानं सर्वविरत्याख्यमावृण्वन्तीतिकृत्वा ४ । त एव क्रमशो जलरेखातिनिसलताअवलेखहरिद्रारागसमानाः पक्षानुबन्धिनः संज्वलनाः, संज्वलयन्त्युदयेन चारित्रिणमपीति संज्वलनाः ४ । इत्युक्ताः षोडश कषायाः । नव नोकषाया इति, नोशब्दः साहचर्यार्थः । कषायैः सहचरा नोकषायाः । केवलानां नैषां प्राधान्यं, किन्तु कषायैरनन्तानुबन्ध्यादिभिः सहोदयं यान्ति तद्विपाकसदृशमेव विपाकमादर्शयन्तीति बुधग्रहवदन्यसंसर्गमनुवर्तन्ते । तत्र वेदत्रये—यदुदयेन स्त्रियाः पुंस्यभिलाषः पित्तोदयेन मधुराभिलाषवत् , स[3]फुम्फुमाग्निसमानः स्त्रीवेदः १ । यदुदयेन पुंसः स्त्रियामभिलाषः श्लेष्मोदयादम्लाभिलाषवत् , स तृणाग्निज्वालासमानः पुंवेदः २ । यदुदयेन पण्डकस्य स्त्रीपुंसयोरुभयोरभिलाषः पित्तश्लेष्मणोरुदयेन मर्जि(ज्जि)काभिलाषवत् , स महानगरदाहाग्निसमानो नपुंसकवेदः ३ । यदुदयेन सनिमित्तमनिमित्तं वा हसति तत्कर्म हास्यवेदनीयम् ४ । [4]यदुदयेन रमणीयेषु वस्तुषु रमते प्रमोदते तद्रतिवेदनीयमिति ५ । ततो विपरीतमरतिवेद-

---

१ "अश्रद्धानत्व—" इति वा पाठः ॥ २ "यापेक्षित्वा" इत्यपि ॥ ३ "फुम्फकाग्नि" इति वा पाठः । ४ "यदुदयेन सचित्ताचित्तेषु बाह्यद्रव्येषु जीवस्य रतिरुत्पद्यते तद्रतिवेदनीयं कर्म ५ । यदुदयेन तेष्वेवारतिरुत्पद्यते तदरतिवेदनीयं कर्म ६ । यदुदयेन शोकरहितस्यापि जीवस्याक्रन्दनादिशोको जायते तच्छोकवेदनीयं कर्म ७ । यदुदयेन भयवर्जितस्यापि जीवस्येहलोकादि सप्तप्रकारं भयमुत्पद्यते तद्भयवेदनीयं कर्म ८ ॥" इति वा पाठः ॥

नीयम् ६ । यदुदयेन प्रियविप्रयोगादिपीडितचित्तः शोचनाऽऽक्रन्दपरिदेवनादि करोति तच्छोकवेदनीयम् ७ । यदुदयेन सनिमित्तमनिमित्तं वा बिभेति तद्भयवेदनीयम् ८ । यदुदयेन शकृदादिबीभत्सपदार्थेभ्यो जुगुप्सते उद्विजते तज्जुगुप्सावेदनीयम् ९ । इत्युदिता नोकषायाः, तदभिधानाच्चारित्रमोहनीयं च २ मोहनीयं चाष्टाविंशतिविधमिति ४ ॥ एति याति चेत्यायुः, नैरुक्तीशब्दव्युत्पत्तिः । यद्यपि च सर्वं कर्म स्वहेतुभिर्नियमादपूर्वमेत्यात्मानं, पूर्वबद्धं च यात्यपैत्यात्मनस्तथाप्ययमस्त्यायुषो विशेषः । प्राग्भवबद्धमात्मनो यदा यात्यपैति तदा तदपगमानन्तरं वर्तमानभवबद्धमुदयमेति एति याति चेत्यनया व्युत्पत्त्या, तदेवेदृशं गमनागमनं विवक्षितमित्यसाधारणमायुषो नाम, तच्चतुर्धा । नारकस्य सतो वेद्यमायुष्कम् नारकायुष्कम् १ । तिरश्चां तिर्यगायुष्कम् २ । मनुष्याणां मनुष्यायुष्कम् ३ । देवानां देवायुष्कम् ४ इत्युक्तं चतुर्विधमायुष्कम् ५ ॥ तथा नामयति परिणमयत्यात्मानं तैस्तैर्गत्यादिभिः पर्यायैरिति नाम । गच्छन्ति प्राप्नुवन्ति तथाविधकर्मोदयसचिवा जीवास्तामिति गतिः । नारकादिपर्यायपरिणतिस्तद्विपाकवेद्या कर्मप्रकृतिरपि गतिः, सैव नाम गतिनाम । नारकशब्दव्यपदेश्यपर्यायनिबन्धनं नारकगतिनाम एवं तिर्यङ्मनुष्यदेवगतिनामापि वाच्यम् १ । जननं जातिरेकेन्द्रियादिशब्दव्यपदेश्येन पर्यायेण जीवानामुत्पत्तिः, तद्भावनिबन्धनभूतं नाम जातिनाम, तत्पञ्चधा, एकेन्द्रियजातिनामादि । तत्रैकस्य स्पर्शनेन्द्रियज्ञानस्यावरणक्षयोपशमात्तदेकविज्ञानभाज एकेन्द्रियाः अनेनैवाभिलापेन द्वयोः स्पर्शनरसनज्ञानयोर्द्वीन्द्रियाः । त्रयाणां स्पर्शनरसनघ्राणज्ञानानां त्रीन्द्रियाः । चतुर्णां स्पर्शनरसनघ्राणचक्षुर्ज्ञानानां चतुरिन्द्रियाः । पञ्चानां स्पर्शनरसनघ्राणचक्षुःश्रोत्रज्ञानानामावरणक्षयोपशमात्पञ्चविज्ञानभाजः पञ्चेन्द्रियाश्च वाच्याः । एकेन्द्रियाणां जातिनामैकेन्द्रियजातिनाम, एवं यावत्पञ्चेन्द्रियजातिनाम । ननु चैकादीन्द्रियज्ञानावरणक्षयोपशमादेवैकेन्द्रियादिव्यपदेशः सिद्ध्यत्येव तत्किमपरं जातिनाम्ना कार्यम् ?, नैतदस्ति, क्षयोपशमस्य ज्ञानोत्पादनमात्रनिबन्धनत्वेनैकेन्द्रियादिव्यपदेशहेतुत्वायोगात् । किञ्चैकेन्द्रियजात्यादिनामोदयजनितस्यैकेन्द्रियादिशब्दव्यपदेशहेतोः पर्यायविशेषस्याभावे क्षयोपशमं प्रति नियमो न स्यात्, ततश्च पृथिव्यादीनां शङ्खादीनां (पिपीलिकादीनां) चैकद्वित्र्यादीन्द्रियज्ञानावरणक्षयोपशमोऽप्यनियमेन स्यात्तस्माज्जातिनामोदयकृतः पर्यायविशेषस्तथातथाक्षयोपशमस्य नियामक एकेन्द्रियादिव्यपदेशहेतुश्चेति स्थितम् २ । शीर्यते तदिति शरीरं, प्रतिक्षणं प्रागवस्थातश्चयापचयाभ्यां विनश्यतीत्यर्थः । तच्च पञ्चविधैरौदारिकादिवर्गणापुद्गलैः क्रियत इति तद्भेदात्पञ्चधा, औदारिकशरीरादि, तद्विपाकवेद्यं कर्मापि तन्नामकं पञ्चधैव । तत्र यस्य कर्मण उदयादौदारिकवर्गणपुद्गलान् गृहीत्वौदारिकशरीरत्वेन परिणमयति तदौदारिकशरीरनाम । एवं वैक्रियाहारकतैजसकार्मणशरीरनामकर्मस्वपि स्वस्ववर्गणापुद्गलग्रहण-

परिणमनकारणत्वं वाच्यम् । यावद्यस्य कर्मण उदयात्कार्मणवर्गणापुद्गलान् गृहीत्वा कार्मणशरीरत्वेन परिणमयति तत्कार्मणशरीरनामकर्म. तच्च कार्मणशरीरादन्यत् । सत्यपि समानवर्गणापुद्गलात्मकत्वे तद्धि नाम्नः कर्मण उत्तरप्रकृतिः । कार्मणशरीरं पुनस्तदुदयनिर्वर्त्यमशेषकर्मणां प्ररोहभूमिराधारभूतम् । तथा संसारिणामात्मनां गत्यन्तरसंक्रमणे साधकतमं करणमित्यन्यत् . ततस्तत्कारणभूतं कार्मणशरीरनामकर्मेति स्थितम् ३ । अङ्गानि शिरउरउदरपृष्ठबाहूरुसंज्ञकान्यष्टौ । तदवयवभूतानि त्वङ्गुल्यादीन्युपाङ्गानि । शेषाणि तु तत्प्रत्यवयवभूतान्यङ्गुलिपर्वरेखादीन्यङ्गोपाङ्गानि । अङ्गानि चोपाङ्गानि चाङ्गोपाङ्गानि चेति द्वन्द्वगर्भादेकशेषादङ्गोपाङ्गानि. तानि च यस्य कर्मण उदयात्त्रिषु शरीरेषु भवन्ति, तत्त्रिविधमङ्गोपाङ्गनाम । तत्र यदुदयादौदारिकशरीरत्वेन परिणतानां पुद्गलानामङ्गोपाङ्गविभक्त्या परिणतिः तदौदारिकशरीराङ्गोपाङ्गनाम । एवं वैक्रियाहारकाङ्गोपाङ्गनाम्नोरपि वाच्यम् । तैजसकार्मणयोस्तु, जीवप्रदेशसंस्थानानुरोधित्वान्नास्त्यङ्गोपाङ्गसंभवः ४ । पूर्वगृहीतैरौदारिकपुद्गलैः सह परस्परं च गृह्यमाणानौदारिकपुद्गलानुदितेन येन कर्मणा बध्नात्यात्माऽन्योऽन्यसंसक्तान् करोति तदौदारिकशरीरबन्धननाम, दारुपाषाणादीनां जतुरालाप्रभृतिश्लेष[1]"द्रव्य" वत् । एवं वैक्रियादि चतुष्केऽपि वाच्यम् । यदि त्विदं शरीरपञ्चकपुद्गलानामन्योऽन्यसंबन्धकारि बन्धनपञ्चकं न स्यात्ततस्तेषां शरीरपरिणतौ सत्यामप्यसंबद्धत्वात्पवनाहतकुण्डस्थितास्तीमितसक्तूनामिवैकत्रस्थैर्यं न स्यात् ५ । तच्च बन्धनमसंहतानां न संभवति, अतस्तत्पिण्डनकारणं पञ्चविधं सङ्घातनाम । तथैवौदारिकसङ्घातनामादि । तत्र यस्योदयादौदारिकशरीरत्वपरिणतान् पुद्गलानात्मा सङ्घातयति=पिण्डयति तदौदारिकसङ्घातनाम । वैक्रियादिचतुष्केऽप्येवमेव वाच्यम् ६ । संहननमस्थिसंचयः, तच्चौदारिकशरीर एव, नान्येषु, तेषामस्थ्याद्यभावात् । तच्च षोढा, वज्रर्षभनाराचादि । तत्र वज्रं कीलिका. ऋषभः परिवेष्टनपट्टः, नाराच उभयतो मर्कटबन्धः । यत्र द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाकारं वज्रनामकमस्थि भवति तद्वज्रर्षभनाराचं प्रथमम् । यत्र तु कीलिका नास्ति तदृषभनाराचं द्वितीयम्, ऋषभवर्जं वज्रनाराचं द्वितीयमित्येके । वज्रर्षभवर्जं नाराचं तृतीयम् । एकतो मर्कटबन्धं द्वितीयपार्श्वे कीलिकाविद्धमर्द्धनाराचं चतुर्थम् । ऋषभनाराचवर्जं कीलिकाविद्धास्थिद्वयमंचितं कीलिकाख्यं पञ्चमम् । अस्थिद्वयपर्यन्तसंस्पर्शलक्षणां सेवामृतमागतं सेवार्तं षष्ठम् । इतीदं षड्विधमस्थिसंनिचयात्मकं संहननं यदुदयाद्भवति शरीरे तदपि तत्संज्ञकं षड्विधं संहनननामकर्म ७ । संस्थानं शरीराकृतिरवयवरचनात्मिका तदपि षोढा, समचतुरस्रादि । तत्र समाः शरीरलक्षणशास्त्रोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत्समचतुरस्रम् । 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः' (पाणि०

1 द्रव्याणां तुल्यम्" इति वा पाठः ॥

५-४-१२०) इत्यकारः समासान्तः । अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिताः शरीरावयवाः । ततश्च सर्वेऽप्यत्रयवाः शरीरलक्षणोक्तप्रमाणाऽव्यभिचारिणो यस्य, न तु न्यूनाधिकप्रमाणाः, तत्तुल्यं समचतुरस्रम् । न्यग्रोधवत्परिमण्डलं न्यग्रोधपरिमण्डलम् । यथा न्यग्रोध उपरि संपूर्णावयवः, अधस्तनभागे तु न तथा, तथेदमपि नाभेरुपरि विस्तरबहुलं शरीरलक्षणोक्तप्रमाणभाग्, अधस्तु हीनाधिकप्रमाणमिति । सादीति, आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते, तेनादिना शरीरलक्षणोक्तप्रमाणभाजा सह वर्तते यत्तत्सादि । सर्वमेव हि शरीरमविशिष्टेनादिना सह वर्तते इति विशेषणान्यथानुपपत्तेरादेरिह विशिष्टता लभ्यते । सादि उत्सेधबहुलं परिपूर्णोत्सेधमित्यर्थः । वामनं मडभकोष्ठं, यत्र पाणिपादशिरोग्रीवं शरीरलक्षणोक्तप्रमाणयुक्तम् , यत्पुनः शेषं कोष्ठमुरउदरपृष्ठादिरूपं तन्मडभं न्यूनाधिकप्रमाणं तद्वामनम् । कुब्जमधस्तनकायमडभं वामनविपर्ययाद्भावनीयम् । नवरमधस्तनकायशब्देन पाणिपादशिरोग्रीवमिहोच्यते । सर्वत्रासंस्थितं हुण्डं, यस्य हि प्रायेणैकोऽप्यवयवः शरीरलक्षणोक्तं प्रमाणं न संवदति तत्सर्वत्रासंस्थितं हुण्डमिति । उक्तं च—"**तुल्लं वित्थडबहुलं, उस्सेहबहुं च मडहकोट्ठं च । हेट्ठिल्लकायमडहं, सव्वत्थासंठियं हुंडं** ॥१॥" इत्येतद्यथाक्रमं षण्णामपि लक्षणमितीदं षड्विधं संस्थानं यदुदयाद्भवति शरीरे तदपि कर्म तदभिधानं षड्विधं संस्थाननाम ८ । वर्णः पञ्चविधः प्रसिद्धस्वरूपः, स यदुदयाच्छरीरपुद्गलेषु भवति तत्पञ्चविधं कृष्णनामादि वर्णनाम ९ । एवं गन्धो द्विविधः, रसः पञ्चविधः, स्पर्शश्चाष्टविधः, प्रसिद्धस्वरूप एव । तन्नामान्यपि कर्माणि तथैव वाच्यानि १० । ११ । १२ । द्विसमयादिना विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियता गमनपरिपाटीहानुपूर्वीत्युच्यते, तद्विपाकवेद्या कर्मप्रकृतिरप्यानुपूर्वी । सा चतुर्विधा । नरकगतिनामकर्मप्रकृतेः सहचरितानुपूर्वी नरकगत्यानुपूर्वी, तया सह वेद्यमानत्वात्तत्सहचरितत्वम् तथा तिर्यङ्मनुष्यदेवानुपूर्व्योऽपि वाच्याः १३ । गमनं गतिः, सा चेह पादविहरणाद्यात्मिका देशान्तरप्राप्तिहेतुर्द्वीन्द्रियादीनां प्रवृत्तिरभिधीयते, नैकेन्द्रियाणां, पादाद्यभावात् । विहायसा गतिर्विहायोगतिः । ननु च विहायसः सर्वगतत्वात्ततोऽन्यत्र गतिर्न संभवति, ततश्च व्यवच्छेद्याभावाद्विहायसा विशेषणमनर्थकम् , सत्यमेतत् , नभसोऽन्यत्र गतिर्नास्ति तथाऽपि यदि गतिरित्येवोच्येत, ततो नाम्नः प्रथमप्रकृतिरपि गतिरस्तीति पौनरुक्त्याशङ्कास्यात् , अतस्तद्व्यवच्छेदार्थं [1]विहायोग्रहणं कार्यम् । विहायसा गतिः प्रवृत्तिर्न तु भवगतिर्नरकगत्यादिकेति । सा च द्विविधा, प्रशस्ताऽप्रशस्ता च । प्रशस्ता गजहंसवृषभादीनाम् , अप्रशस्ता तुष्ट्रखरटोलादीनामिति, तद्विपाकवेद्या कर्मप्रकृतिरपि तन्नामिकैव द्विविधा १४ । इत्युक्ताः पिण्डप्रकृतयः ॥ त्रसन्त्युष्णाद्यभितप्ताः छायाद्यभिसर्पणेनोद्विजन्ते तस्मादिति त्रसा द्वीन्द्रियादयः, तत्पर्यायविपाकवेद्यं कर्मापि त्रसनाम १५ । उष्णाद्यभितापेऽपि स्थानशीला न तत्परिहारसमर्थाः

१ "विहायसो" इति वा पाठः ।

परिणमनकारणत्वं वाच्यम् । यावद्यस्य कर्मण उदयात्कार्मणवर्गणापुद्गलान् गृहीत्वा कार्मणशरीरत्वेन परिणमयति तत्कार्मणशरीरनामकर्म, तच्च कार्मणशरीरादन्यत्। सत्यपि समानवर्गणापुद्गलात्मकत्वे तद्धि नाम्नः कर्मण उत्तरप्रकृतिः। कार्मणशरीरं पुनस्तदुदयनिर्वर्त्यमशेषकर्मणां प्ररोहभूमिराधारभूतम्। तथा संसार्यात्मनां गत्यन्तरसंक्रमणे साधकतमं करणमित्यन्यत्, ततस्तत्कारणभूतं कार्मणशरीरनामकर्मेति स्थितम् ३ । अङ्गानि शिरउरउदरपृष्ठबाहूरुसंज्ञकान्यष्टौ । तदवयवभूतानि त्वङ्गुल्यादीन्युपाङ्गानि। शेषाणि तु तत्प्रत्यवयवभूतान्यङ्गुलिपर्वरेखादीन्यङ्गोपाङ्गानि। अङ्गानि चोपाङ्गानि चाङ्गोपाङ्गानि चेति द्वन्द्वगर्भादेकशेषादङ्गोपाङ्गानि, तानि च यस्य कर्मण उदयात्त्रिषु शरीरेषु भवन्ति, तत्त्रिविधमङ्गोपाङ्गनाम । तत्र यदुदयादौदारिकशरीरत्वेन परिणतानां पुद्गलानामङ्गोपाङ्गविभक्त्या परिणतिः तदौदारिकशरीराङ्गोपाङ्गनाम । एवं वैक्रियाहारकाङ्गोपाङ्गनाम्नोरपि वाच्यम् । तैजसकार्मणयोस्तु, जीवप्रदेशसंस्थानानुरोधित्वाभावान्नाङ्गोपाङ्गसंभवः ४ । पूर्वगृहीतैरौदारिकपुद्गलैः सह परस्परं च गृह्यमाणानौदारिकपुद्गलानुदितेन येन कर्मणा बध्नात्यात्माऽन्योऽन्यसंसक्तान् करोति तदौदारिकशरीरबन्धननाम, दारुपाषाणादीनां जतुरालाप्रभृतिश्लेष"द्रव्य"[1] वत् । एवं वैक्रियादि चतुष्केऽपि वाच्यम् । यदि त्विदं शरीरपञ्चकपुद्गलानामन्योऽन्यसंबन्धकारि बन्धनपञ्चकं न स्यात्ततस्तेषां शरीरपरिणतौ सत्यामप्यसंबद्धत्वात्पवनाहतकुण्डस्थितास्तीमितसक्तूनामिवैकत्रस्थैर्यं न स्यात् ५ । तच्च बन्धनमसंहतानां न संभवति, अतस्तत्पिण्डनकारणं पञ्चविधं सङ्घातनाम । तथैवौदारिकसङ्घातनामादि । तत्र यस्योदयादौदारिकशरीरत्वपरिणतान् पुद्गलानात्मा सङ्घातयति=पिण्डयति तदौदारिकसङ्घातनाम । वैक्रियादिचतुष्केऽप्येवमेव वाच्यम् ६ । संहननमस्थिसंचयः, तच्चौदारिकशरीर एव, नान्येषु, तेषामस्थ्याद्यभावात् । तच्च षोढा, वज्रर्षभनाराचादि । तत्र वज्रं कीलिका, ऋषभः परिवेष्टनपट्टः, नाराच उभयतो मर्कटबन्धः । यत्र द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाकारं वज्रनामकमस्थि भवति तद्वज्रर्षभनाराचं प्रथमम् । यत्र तु कीलिका नास्ति तदृषभनाराचं द्वितीयम्, ऋषभवर्जं वज्रनाराचं द्वितीयमित्येके । वज्रर्षभवर्जं नाराचं तृतीयम् । एकतो मर्कटबन्धं द्वितीयपार्श्वे कीलिकाविद्धमर्द्धनाराचं चतुर्थम् । ऋषभनाराचवर्जं कीलिकाविद्धास्थिद्वयसंचितं कीलिकाख्यं पञ्चमम् । अस्थिद्वयपर्यन्तसंस्पर्शलक्षणां सेवामृतमागतं सेवार्तं षष्ठम् । इतीदं षड्विधमस्थिसंनिचयात्मकं संहननं यदुदयाद्भवति शरीरे तदपि तत्संज्ञकं षड्विधं संहनननामकर्म ७ । संस्थानं शरीराकृतिरवयवरचनात्मिका तदपि षोढा, समचतुरस्रादि । तत्र समाः शरीरलक्षणशास्त्रोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत्समचतुरस्रम् । 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः' (पाणि०

---

१ द्रव्याणां तुल्यम्" इति वा पाठः ॥

५-४-१२०) इत्यकारः समासान्तः। अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिताः शरीरावयवाः। ततश्च सर्वेऽप्यवयवाः शरीरलक्षणोक्तप्रमाणाऽव्यभिचारिणो यस्य, न तु न्यूनाधिकप्रमाणाः, तत्तुल्यं समचतुरस्रम्। न्यग्रोधवत्परिमण्डलं न्यग्रोधपरिमण्डलम्। यथा न्यग्रोध उपरि संपूर्णावयवः, अधस्तनभागे तु न तथा, तथेदमपि नाभेरुपरि विस्तरबहुलं शरीरलक्षणोक्तप्रमाणभाग्, अधस्तु हीनाधिकप्रमाणमिति। सादीति, आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते, तेनादिना शरीरलक्षणोक्तप्रमाणभाजा सह वर्तते यत्तत्सादि। सर्वमेव हि शरीरमविशिष्टेनादिना सह वर्तते इति विशेषणान्यथानुपपत्तेरादेरिह विशिष्टता लभ्यते। सादि उत्सेधबहुलं परिपूर्णोत्सेधमित्यर्थः। वामनं मडभकोष्ठं, यत्र पाणिपादशिरोग्रीवं शरीरलक्षणोक्तप्रमाणयुक्तम्, यत्पुनः शेषं कोष्ठमुरउदरपृष्ठादिरूपं तन्मडभं न्यूनाधिकप्रमाणं तद्वामनम्। कुब्जमधस्तनकायमडभं वामनविपर्ययाद्भावनीयम्। नवरमधस्तनकायशब्देन पाणिपादशिरोग्रीवमिहोच्यते। सर्वत्रासंस्थितं हुण्डं, यस्य हि प्रायेणैकोऽप्यवयवः शरीरलक्षणोक्तं प्रमाणं न संवदति तत्सर्वत्रासंस्थितं हुण्डमिति। उक्तं च—"**तुल्लं वित्थडबहुलं, उस्सेहबहुं च मडहकोट्ठं च। हेट्ठिल्लकायमडहं, सव्वत्थासंठियं हुंडं** ॥१॥" इत्येतद्यथाक्रमं षण्णामपि लक्षणमितीदं षड्विधं संस्थानं यदुदयाद्भवति शरीरे तदपि कर्म तदभिधानं षड्विधं संस्थाननाम ८। वर्णः पञ्चविधः प्रसिद्धस्वरूपः, स यदुदयाच्छरीरपुद्गलेषु भवति तत्पञ्चविधं कृष्णनामादि वर्णनाम ९। एवं गन्धो द्विविधः, रसः पञ्चविधः, स्पर्शश्चाष्टविधः, प्रसिद्धस्वरूप एव। तन्नामान्यपि कर्माणि तथैव वाच्यानि १०। ११। १२। द्विसमयादिना विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियता गमनपरिपाटीहानुपूर्वीत्युच्यते, तद्विपाकवेद्या कर्मप्रकृतिरप्यानुपूर्वी। सा चतुर्विधा। नरकगतिनामकर्मप्रकृतेः सहचरितानुपूर्वी नरकगत्यानुपूर्वी, तया सह वेद्यमानत्वात्तत्सहचरितत्वम् तथा तिर्यङ्मनुष्यदेवानुपूर्व्योऽपि वाच्याः १३। गमनं गतिः, सा चेह पादविहरणाद्यात्मिका देशान्तरप्राप्तिहेतुर्द्वीन्द्रियादीनां प्रवृत्तिरभिधीयते, नैकेन्द्रियाणां, पादाद्यभावात्। विहायसा गतिर्विहायोगतिः। ननु च विहायसः सर्वगतत्वात्ततोऽन्यत्र गतिर्न संभवति, ततश्च व्यवच्छेद्याभावाद्विहायसा विशेषणमनर्थकम्, सत्यमेतत्, नभसोऽन्यत्र गतिर्नास्ति तथाऽपि यदि गतिरित्येवोच्येत, ततो नाम्नः प्रथमप्रकृतिरपि गतिरस्तीति पौनरुक्त्याशङ्कास्यात्, अतस्तद्व्यवच्छेदार्थं [१]विहायोग्रहणं कार्यम्। विहायसा गतिः प्रवृत्तिर्न तु भवगतिर्नरकगत्यादिकेति। सा च द्विविधा, प्रशस्ताऽप्रशस्ता च। प्रशस्ता गजहंसवृषभादीनाम्, अप्रशस्ता तूष्ट्रखरटोलादीनामिति, तद्विपाकवेद्या कर्मप्रकृतिरपि तन्नामिकैव द्विविधा १४। इत्युक्ताः पिण्डप्रकृतयः॥ त्रसन्त्युष्णाद्यभितप्ताः छायाद्यभिसर्पणेनोद्विजन्ते तस्मादिति त्रसा द्वीन्द्रियादयः, तत्पर्यायविपाकवेद्यं कर्मापि त्रसनाम १५। उष्णाद्यभितापेऽपि स्थानशीला न तत्परिहारसमर्थाः

१ "विहायसो" इति वा पाठः।

परिणमनकारणत्वं वाच्यम् । यावद्यस्य कर्मण उदयात्कार्मणवर्गणापुद्गलान् गृहीत्वा कार्मणशरीरत्वेन परिणमयति तत्कार्मणशरीरनामकर्म. तच्च कार्मणशरीरादन्यत् । नत्यपि समानवर्गणापुद्गलात्मकत्वे तद्धि नाम्नः कर्मण उत्तरप्रकृतिः । कार्मणशरीरं पुनस्तदुदयनिर्वर्त्यमशेषकर्मणां प्ररोहभूमिराधारभूतम् । तथा संसारात्मनां गत्यन्तरसंक्रमणे साधकतमं करणमित्यन्यत् . ततस्तत्कारणभूतं कार्मणशरीरनामकर्मेति स्थितम् ३ । अङ्गानि शिरउरउदरपृष्ठबाहूरुसंज्ञकान्यष्टौ । तदवयवभूतानि त्वङ्गुल्यादीन्युपाङ्गानि । शेषाणि तु तत्प्रत्यवयवभूतान्यङ्गुलिपर्वरेखादीन्यङ्गोपाङ्गानि । अङ्गानि चोपाङ्गानि चाङ्गोपाङ्गानि चेति द्वन्द्वगर्भादेकशेषादङ्गोपाङ्गानि. तानि च यस्य कर्मण उदयात्त्रिषु शरीरेषु भवन्ति, तत्त्रिविधमङ्गोपाङ्गनाम । तत्र यदुदयादौदारिकशरीरत्वेन परिणतानां पुद्गलानामङ्गोपाङ्गविभक्त्या परिणतिः तदौदारिकशरीराङ्गोपाङ्गनाम । एवं वैक्रियाहारकाङ्गोपाङ्गनाम्नोरपि वाच्यम् । तैजसकार्मणयोस्तु, जीवप्रदेशसंस्थानानुरोधित्वान्नास्त्यङ्गोपाङ्गसंभवः ४ । पूर्वगृहीतैरौदारिकपुद्गलैः सह परस्परं च गृह्यमाणानौदारिकपुद्गलानुदितेन येन कर्मणा बध्नात्यात्माऽन्योऽन्यसंसक्तान् करोति तदौदारिकशरीरबन्धननाम, दारुपाषाणादीनां जतुरालाप्रभृतिश्ले"ष'द्रव्य" वत् । एवं वैक्रियादि चतुष्केऽपि वाच्यम् । यदि त्विदं शरीरपञ्चकपुद्गलानामन्योऽन्यसंबन्धकारि बन्धनपञ्चकं न स्यात्ततस्तेषां शरीरपरिणतौ सत्यामप्यसंबद्धत्वात्पवनाहतकुण्डस्थितास्तीमितसक्तूनामिवैकत्रस्थैर्यं न स्यात् ५ । तच्च बन्धनमसंहतानां न संभवति, अतस्तत्पिण्डनकारणं पञ्चविधं सङ्घातनाम । तथौदारिकसङ्घातनामादि । तत्र यस्योदयादौदारिकशरीरत्वपरिणतान् पुद्गलानात्मा सङ्घातयति=पिण्डयति तदौदारिकसङ्घातनाम । वैक्रियादिचतुष्केऽप्येवमेव वाच्यम् ६ । संहननमस्थिसंचयः, तच्चौदारिकशरीर एव, नान्येषु, तेषामस्थ्याद्यभावात् । तच्च षोढा, वज्रर्षभनाराचादि । तत्र वज्रं कीलिका, ऋषभः परिवेष्टनपट्टः, नाराच उभयतो मर्कटबन्धः । यत्र द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाकारं वज्रनामकमस्थि भवति तद्वज्रर्षभनाराचं प्रथमम् । यत्र तु कीलिका नास्ति तदृषभनाराचं द्वितीयम् . ऋषभवर्जं वज्रनाराचं द्वितीयमित्येके । वज्रर्षभवर्जं नाराचं तृतीयम् । एकतो मर्कटबन्धं द्वितीयपार्श्वे कीलिकाविद्धमर्द्धनाराचं चतुर्थम् । ऋषभनाराचवर्जं कीलिकाविद्धास्थिद्वयमंचितं कीलिकाख्यं पञ्चमम् । यास्थिद्वयपर्यन्तसंस्पर्शलक्षणां सेवामृतमागतं सेवार्तं षष्ठम् । इतीदं षड्विधमस्थिसंनिचयात्मकं संहननं यदुदयाद्भवति शरीरे तदपि तत्संज्ञकं षड्विधं संहनननामकर्म ७ । संस्थानं शरीराकृतिरवयवरचनात्मिका तदपि षोढा, समचतुरस्रादि । तत्र समाः शरीरलक्षणशास्त्रोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत्समचतुरस्रम् । 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः' (पाणि०

---

१ द्रव्याणां तुल्यम्" इति वा पाठः ॥

५-४-१२०) इत्यकारः समासान्तः। अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिताः शरीरावयवाः। ततश्च सर्वेऽप्यवयवाः शरीरलक्षणोक्तप्रमाणाऽव्यभिचारिणो यस्य, न तु न्यूनाधिकप्रमाणाः, तत्तुल्यं समचतुरस्रम्। न्यग्रोधवत्परिमण्डलं न्यग्रोधपरिमण्डलम्। यथा न्यग्रोध उपरि संपूर्णावयवः, अधस्तनभागे तु न तथा, तथेदमपि नाभेरुपरि विस्तरबहुलं शरीरलक्षणोक्तप्रमाणभाग्, अधस्तु हीनाधिकप्रमाणमिति। सादीति. आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते, तेनादिना शरीरलक्षणोक्तप्रमाणभाजा सह वर्तते यत्तत्सादि। सर्वमेव हि शरीरमविशिष्टेनादिना सह वर्तते इति विशेषणान्यथानुपपत्तेरादेरिह विशिष्टता लभ्यते। सादि उत्सेधबहुलं परिपूर्णोत्सेधमित्यर्थः। वामनं मडमकोष्ठं, यत्र पाणिपादशिरोग्रीवं शरीरलक्षणोक्तप्रमाणयुक्तम्, यत्पुनः शेषं कोष्ठमुरउदरपृष्ठादिरूपं तन्मडभं न्यूनाधिकप्रमाणं तद्वामनम्। कुब्जमधस्तनकायमडभं वामनविपर्ययाद्भावनीयम्। नवरमधस्तनकायशब्देन पाणिपादशिरोग्रीवमिहोच्यते। सर्वत्रासंस्थितं हुण्डं, यस्य हि प्रायेणैकोऽप्यवयवः शरीरलक्षणोक्तं प्रमाणं न संवदति तत्सर्वत्रासंस्थितं हुण्डमिति। उक्तं च—"तुल्लं वित्थडबहुलं, उस्सेहबहुं च मडहकोट्ठं च। हेट्ठिल्लकायमडहं, सव्वत्थासंठियं हुंडं ॥१॥" इत्येतद्यथाक्रमं षण्णामपि लक्षणमितीदं षड्विधं संस्थानं यदुदयाद्भवति शरीरे तदपि कर्म तदभिधानं षड्विधं संस्थाननाम ८। वर्णः पञ्चविधः प्रसिद्धस्वरूपः, स यदुदयाच्छरीरपुद्गलेषु भवति तत्पञ्चविधं कृष्णनामादि वर्णनाम ९। एवं गन्धो द्विविधः, रसः पञ्चविधः, स्पर्शश्चाष्टविधः, प्रसिद्धस्वरूप एव। तन्नामान्यपि कर्माणि तथैव वाच्यानि १०। ११। १२। द्विसमयादिना विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियता गमनपरिपाटीहानुपूर्वीत्युच्यते, तद्विपाकवेद्या कर्मप्रकृतिरप्यानुपूर्वी। सा चतुर्विधा। नरकगतिनामकर्मप्रकृतेः सहचरितानुपूर्वी नरकगत्यानुपूर्वी, तया सह वेद्यमानत्वात्तत्सहचरितत्वम् तथा तिर्यङ्मनुष्यदेवानुपूर्व्योऽपि वाच्याः १३। गमनं गतिः, सा चेह पादविहरणाद्यात्मिका देशान्तरप्राप्तिहेतुर्द्वीन्द्रियादीनां प्रवृत्तिरभिधीयते, नैकेन्द्रियाणां, पादाद्यभावात्। विहायसा गतिर्विहायोगतिः। ननु च विहायसः सर्वगतत्वात्ततोऽन्यत्र गतिर्न संभवति, ततश्च व्यवच्छेद्याभावाद्विहायसा विशेषणमनर्थकम्, सत्यमेतत्, नभसोऽन्यत्र गतिर्नास्ति तथाऽपि यदि गतिरित्येवोच्येत, ततो नाम्नः प्रथमप्रकृतिरपि गतिरस्तीति पौनरुक्त्याशङ्का स्यात्, अतस्तद्व्यवच्छेदार्थं [1]विहायोग्रहणं कार्यम्। विहायसा गतिः प्रवृत्तिर्न तु भवगतिर्नरकगत्यादिकेति। सा च द्विविधा, प्रशस्ताऽप्रशस्ता च। प्रशस्ता गजहंसवृषभादीनाम्, अप्रशस्ता तुरगखरटोलादीनामिति, तद्विपाकवेद्या कर्मप्रकृतिरपि तन्नामिकैव द्विविधा १४। इत्युक्ताः पिण्डप्रकृतयः॥ त्रसन्त्युष्णाद्यभितप्ताः छायाद्यभिसर्पणेनोद्विजन्ते तस्मादिति त्रसा द्वीन्द्रियादयः, तत्पर्यायविपाकवेद्यं कर्मापि त्रसनाम १५। उष्णाद्यभितापेऽपि स्थानशीला न तत्परिहारसमर्थाः

१ "विहायसो" इति वा पाठः।

स्थावराः पृथिव्यादय एकेन्द्रियाः, तत्पर्यायविपाकवेद्यं कर्मापि स्थावरनाम । तेजोवाय्वो तु स्थावरनामोदयेऽपि स्वाभाविकं चलनम् १६ । यस्योदयाज्जीवा बादराः स्थूरा भवन्ति तद्बादरनाम । न चेह चाक्षुषत्वं बादरत्वमिष्टं, बादरस्याप्येकैकस्य पृथिव्यादिशरीरस्य च क्षुषत्वाभावात् । यद्यपि चैतज्जीवविपाकि बादरनाम तथापि शरीरेऽभिव्यक्तिं कियतीमपि दर्शयति । [1]यथा क्रोध उदितो रक्तनेत्रभ्रकुटीभङ्गरूक्षवदनत्वादिकमिति । तेन पृथिव्यादीनां बादराणां बहूनां समेतानां चाक्षुषत्वं भवति, न तु सूक्ष्माणामिति १७ । यस्योदयात्सूक्ष्माः पृथिव्यादयः पञ्च भवन्ति तत्सूक्ष्मनाम १८ । पर्याप्तिराहारादिपुद्गलदलिकग्रहणपरिणमनहेतुः पुद्गलोपचयजः शक्तिविशेषः । सा च साध्यभेदेन षोढा । यया ह्याहारमात्मा गृहीत्वा खलरसतया परिणमयति सा शक्तिराहारपर्याप्तिः । यया रसीभूतमाहारं सप्तधातुतया परिणमयति सा शरीरपर्याप्तिः । यया तु धातुभूतमिन्द्रियतया परिणमयति सेन्द्रियपर्याप्तिः । यया तूच्छ्वासप्रायोग्यं वर्गणाद्रव्यमादायोच्छ्वासतयाऽऽलम्ब्य मुञ्चति सोच्छ्वासपर्याप्तिः । यया तु भाषाप्रायोग्यं वर्गणाद्रव्यमादाय भाषात्वेनावलम्ब्य मुञ्चति सा भाषापर्याप्तिः । यया तु मनःप्रायोग्यं वर्गणाद्रव्यमादाय मनस्त्वयाऽऽलम्ब्य मुञ्चति सा मनःपर्याप्तिः । इत्येताः यथासंख्यमेकेन्द्रियविकलेन्द्रियसंज्ञिपञ्चेन्द्रियाणां चतुष्पञ्चषट्सङ्ख्याः पर्याप्तयो यस्योदयाद्भवन्ति तत्पर्याप्तकनाम । येषां हि पर्याप्तयः सन्ति ते पर्याप्ताः, मत्वर्थीयोऽच्प्रत्ययः, पर्याप्ता एव पर्याप्तकाः । तद्भावविपाकवेद्यं कर्मापि पर्याप्तकनाम । ननु च शरीरपर्याप्त्यैव शरीरं भविष्यति तत्किं शरीरनाम्ना ?, नैतदस्ति, साध्यभेदात्, शरीरनाम्नो हि जीवेन गृहीतानां पुद्गलानामौदारिकादित्वेन परिणतिः साध्या, शरीरपर्याप्तेस्तु प्रागात्मनाऽऽरब्धस्य शरीरस्य परिसमाप्तिरिति १९ । ता एव षड् यथास्वं शक्तयो विकला अपर्याप्तयस्ता यस्योदयाद्भवन्ति तदपर्याप्तकनाम, शब्दव्युत्पत्तिः पूर्ववत् २० यस्योदयात्प्रत्येकं शरीरं भवति, एकैकस्य जीवस्यैकैकं शरीरमित्यर्थः, तत्प्रत्येकनाम २१ । यस्योदयादनन्तानां जीवानां साधारणमेकं शरीरं भवति तत्साधारणनाम २२ । यदुदयाद्दन्त्यादयः शरीरावयवाः स्थिरा निश्चला भवन्ति तत्स्थिरनाम २३ । यदुदयाज्जिह्वादिवदस्थिरा भवन्ति तदस्थिरनाम २४ । यदुदयान्नाभेरुपरि शुभाः शरीरावयवा भवन्ति तच्छुभनाम, शिरःप्रभृतिना हि स्पृष्टस्तुष्यति पादादिभिस्तु रुष्यति २५ । यदुदयान्नाभेरधोऽशुभाः शरीरावयवा भवन्ति तदशुभनाम २६ । यदुदयान्मधुरगम्भीरोदारः स्वरो भवति तत्सुस्वरनाम २७ । यदुदयात्खरभिन्नहीनदीनः स्वरो भवति तद्दुःस्वरनाम २८ । यदुदयात्सर्वस्य प्रियः प्रह्लादकारी भवति तत्सुभगनाम २९ । तद्विपरीतं दुर्भगनाम ३० । यदुदयेन यत्किंचिदपि ब्रुवाण उपादेयवचनो भवति सर्वस्य तदादेयनाम ३१ । यदुदयेन तु युक्तमपि ब्रुवाणः परिहार्यवचनो भवति तदनादेयनाम

१ "यथा क्रोधे उदिते" इत्यपि पाठः ॥

३२। सर्वदिग्गामिनी पराक्रमकृता वा सर्वजनोत्कीर्त्तनीयगुणता यश उच्यते, एकदिग्गामिनी तु दानपुण्यकृता वा कीर्त्तिः, यशश्च कीर्त्तिश्च यशःकीर्त्ती, ते यदुदयाद्भवतस्तद्यशःकीर्त्तिनाम ३३। तद्विपर्ययादयशःकीर्त्तिनाम ३४। सर्वप्राणिनां शरीराणि यदुदयान्नैकान्तगुरूणि नैकान्तलघूनि भवन्ति तदगुरुलघुनाम। एकान्तगुरुत्वे हि वोढुमशक्यानि स्युः, एकान्तलघुत्वे तु वायुनाऽपि ह्रियमाणानि धारयितुं न पार्येरन् ३५। स्वशरीरावयवैरेव नखादिभिः शरीरान्तर्वर्द्धमानैर्यदुदयादुपहन्यते पीड्यते तदुपघातनाम ३६। यदुदयात् परानाहन्ति दुष्प्रधृष्यतया शरीराकृतेरभिभवति तत्पराघातनाम ३७। यदुदयादुच्छ्वासलब्धिरात्मनो भवति तदुच्छ्वासनाम। सर्वलब्धीनां क्षायोपशमिकत्वादौदयिकी लब्धिर्न संभवति?, इति चेत् नैतदस्ति, वैक्रियाहारकलब्धीनामौदायिकीनामपि संभवात्। वीर्यान्तरायक्षयोपशमोऽपि च तत्र निमित्तीभवतीति सत्यप्यौदयिकत्वे क्षायोपशमिकव्यपदेशोऽपि न विरुध्यत एव। सतीमपि चोच्छ्वासनामोदयजनितामुच्छ्वसनलब्धिमात्मा व्यापारयितुं न शक्नुयात् शक्तिविशेषरूपामुच्छ्वासपर्याप्तिमन्तरेण, यथा हि वीर्यान्तरायक्षयोपशमजनितां सतीमपि वाग्व्यापारात्मिकां वाग्वीर्यलब्धिं व्यापारयितुं न शक्नोति 'भाषापर्याप्तिमन्तरेण, इत्यसावपि वाग्वीर्यलब्धेः पृथगिष्यते। यथा वा ज्ञानदर्शनावरणान्तरायक्षयोपशमजनितां सतीमपि मनोव्यापारात्मिकां पर्यालोचनवीर्यलब्धिं व्यापारयितुं न शक्नोति मनःपर्याप्तिमन्तरेण इत्यसावपि मनोवीर्यलब्धेः पृथगिष्यत एव। तथोच्छ्वासनामोदयजनितायामुच्छ्वासलब्धौ सत्यामप्युच्छ्वासपर्याप्तिरेपितव्या ३८। यदुदयाज्जन्तुशरीराण्यत्युष्णप्रकाशलक्षणमातपं प्रकुर्वन्ति तदातपनाम। तदुदयश्च रविबिम्बादौ पार्थिवशरीरेष्वेव न शेषेषु, वह्निज्वालाप्रभादिषूष्णप्रकाशरूपत्वे सत्यप्यातपो न भवति, किं तर्हि? तेजोजन्तुशरीराण्येव, तत्र तूष्णत्वमुष्णस्पर्शनामोदयात्, प्रकाशरूपत्वं तु लोहितवर्णनामोदयादवसेयमिति ३९। यदुदयाज्जन्तुशरीरमनुष्णप्रकाशात्मकमुद्द्योतं प्रकरोति। यथा यतिदेवोत्तरवैक्रियचन्द्रर्क्षग्रहताराररत्नौषधिमणिप्रभृतयस्तदुद्द्योतनाम ४०। यदुदयाच्छरीरेष्वङ्गप्रत्यङ्गानां प्रतिनियतस्थानवृत्तिता भवति तत्सूत्रधारकल्पं निर्माणनाम। तदभावे हि तद्भृतककल्पैरङ्गोपाङ्गनामादिभिर्निर्वृत्तानामपि शिरउरउदरादीनां स्थानवृत्तेरनियमः स्यात् ४१ यदुदयाज्जीवः सदेवमनुजासुरलोकपूज्यमुत्तमोत्तमं पदं धर्मतीर्थस्य प्रवर्त्तयितृत्वमवाप्नोति तत्तीर्थकरनाम ४२। इत्युक्तं नाम ६॥ गां वाचं त्रायत इति गोत्रम्। तत्पुनः प्राणिनामुच्चैर्नीचैर्भावलक्षणः कर्मविशेषोदयजनितः पर्यायविशेषः। स ह्युत्तमाधमादिशब्दरूपां स्वार्थप्रतिपादनप्रवृत्तां प्रवृत्तिनिमित्तीभवन् वाचं रक्षति तदर्थाभिधायित्वेन पालयति। अथवा 'गुङ् शब्दे' इत्यस्माद्धातोः ष्ट्रन्। गूयते संशब्द्यते प्रधानाधमादिरूपतयाऽनेनेति गोत्रम्। तथाविधविपाकवेद्यं कर्मापि गोत्रम्, तच्च

१ "वाक्पर्या-" इति पाठः॥

स्थावराः पृथिव्यादय एकेन्द्रियाः, तत्पर्यायविपाकवेद्यं कर्मापि स्थावरनाम । तेजोवायूनां तु स्थावरनामोदयेऽपि स्वाभाविकं चलनम् १६ । यस्योदयाज्जीवा बादराः स्थूरा भवन्ति तद्बादरनाम । न चेह चाक्षुषत्वं बादरत्वमिष्टं, बादरस्यापि एकैकस्य पृथिव्यादिशरीरस्य च क्षुषत्वाभावात् । यद्यपि चैतज्जीवविपाकि बादरनाम तथापि शरीरेऽभिव्यक्तिं कियतीमपि दर्शयति । [1]यथा क्रोध उदितो रक्तनेत्रभ्रकुटीभङ्गरूक्षवदनत्वादिकमिति । तेन पृथिव्यादीनां बादराणां बहूनां समेतानां चाक्षुषत्वं भवति, न तु सूक्ष्माणामिति १७ । यस्योदयात्सूक्ष्माः पृथिव्यादयः पञ्च भवन्ति तत्सूक्ष्मनाम १८ । पर्याप्तिराहारादिपुद्गलदलिकग्रहणपरिणमनहेतुः पुद्गलोपचयजः शक्तिविशेषः । सा च साध्यभेदेन षोढा । यया ह्याहारमात्मा गृहीत्वा खलरसतया परिणमयति सा शक्तिराहारपर्याप्तिः । यया रसीभूतमाहारं सप्तधातुतया परिणमयति सा शरीरपर्याप्तिः । यया तु धातुभूतमिन्द्रियतया परिणमयति सेन्द्रियपर्याप्तिः । यया तूच्छ्वासप्रायोग्यं वर्गणाद्रव्यमादायोच्छ्वासतयाऽऽलम्ब्य मुञ्चति सोच्छ्वासपर्याप्तिः । यया तु भाषाप्रायोग्यं वर्गणाद्रव्यमादाय भाषात्वेनावलम्ब्य मुञ्चति सा भाषापर्याप्तिः । यया तु मनःप्रायोग्यं वर्गणाद्रव्यमादाय मनस्तयाऽऽलम्ब्य मुञ्चति सा मनःपर्याप्तिः । इत्येताः यथासंख्यमेकेन्द्रियविकलेन्द्रियसंज्ञिपञ्चेन्द्रियाणां चतुष्पञ्चषट्सङ्ख्याः पर्याप्तयो यस्योदयाद्भवन्ति तत्पर्याप्तकनाम । येषां हि पर्याप्तयः सन्ति ते पर्याप्ताः, मत्वर्थीयोऽच्प्रत्ययः, पर्याप्ता एव पर्याप्तकाः । तद्भावविपाकवेद्यं कर्मापि पर्याप्तकनाम । ननु च शरीरपर्याप्त्यैव शरीरं भविष्यति तत्किं शरीरनाम्ना ?, नैतदस्ति, साध्यभेदात्, शरीरनाम्नो हि जीवेन गृहीतानां पुद्गलानामौदारिकादित्वेन परिणतिः साध्या, शरीरपर्याप्तेस्तु प्रागात्मनाऽऽरब्धस्य शरीरस्य परिसमाप्तिरिति १९ । ता एव षड् यथास्वं शक्तयो विकला अपर्याप्तयस्ता यस्योदयाद्भवन्ति तदपर्याप्तकनाम, शब्दव्युत्पत्तिः पूर्ववत् २० यस्योदयात्प्रत्येकं शरीरं भवति, एकैकस्य जीवस्यैकैकं शरीरमित्यर्थः, तत्प्रत्येकनाम २१ । यस्योदयादनन्तानां जीवानां साधारणमेकं शरीरं भवति तत्साधारणनाम २२ । यदुदयादस्थ्यादयः शरीरावयवाः स्थिरा निश्चला भवन्ति तत्स्थिरनाम २३ । यदुदयाज्जिह्वादिवदस्थिरा भवन्ति तदस्थिरनाम २४ । यदुदयान्नाभेरुपरि शुभाः शरीरावयवा भवन्ति तच्छुभनाम, शिरःप्रभृतिना हि स्पृष्टस्तुष्यति पादादिभिस्तु रुष्यति २५ । यदुदयान्नाभेरधोऽशुभाः शरीरावयवा भवन्ति तदशुभनाम २६ । यदुदयान्मधुरगम्भीरोदारः स्वरो भवति तत्सुस्वरनाम २७ । यदुदयात्खरभिन्नहीनदीनः स्वरो भवति तद्दुःस्वरनाम २८ । यदुदयात्सर्वस्य प्रियः प्रह्लादकारी भवति तत्सुभगनाम २९ । तद्विपरीतं दुर्भगनाम ३० । यदुदयेन यत्किंचिदपि ब्रुवाण उपादेयवचनो भवति सर्वस्य तदादेयनाम ३१ । यदुदयेन तु युक्तमपि ब्रुवाणः परिहार्यवचनो भवति तदनादेयनाम

---

१ "यथा क्रोधे उदिते" इत्यपि पाठः ॥

३१। सर्वदिग्गामिनी पराक्रमकृता वा सर्वजनोत्कीर्त्तनीयगुणता यश उच्यते, एकदिग्गामिनी तु दानपुण्यकृता वा कीर्त्तिः, यशश्च कीर्त्तिश्च यशःकीर्त्ती, ते यदुदयाद्भवतस्तद्यशःकीर्त्तिनाम ३३। तद्विपर्ययादयशःकीर्त्तिनाम ३४। सर्वप्राणिनां शरीराणि यदुदयान्नैकान्तगुरूणि नैकान्तलघूनि भवन्ति तदगुरुलघुनाम। एकान्तगुरुत्वे हि वोढुमशक्यानि स्युः, एकान्तलघुत्वे तु वायुनाऽपि ह्रियमाणानि धारयितुं न पार्येरन् ३५। स्वशरीरावयवैरेव नखादिभिः शरीरान्तर्वर्द्धमानैर्यदुदयादुपहन्यते पीड्यते तदुपघातनाम ३६। यदुदयात् परानाहन्ति दुष्प्रधृष्यतया शरीराकृतेरभिभवति तत्पराघातनाम ३७। यदुदयादुच्छ्वासलब्धिरात्मनो भवति तदुच्छ्वासनाम। सर्वलब्धीनां क्षायोपशमिकत्वादौदयिकी लब्धिर्न संभवति?, इति चेत् नैतदस्ति, वैक्रियाहारकलब्धीनामौदायिकीनामपि संभवात्। वीर्यान्तरायक्षयोपशमोऽपि च तत्र निमित्तीभवतीति सत्यप्यौदयिकत्वे क्षायोपशमिकव्यपदेशोऽपि न विरुध्यत एव। सतीमपि चोच्छ्वासनामोदयजनितामुच्छ्वसनलब्धिमात्मा व्यापारयितुं न शक्नुयात् शक्तिविशेषरूपामुच्छ्वासपर्याप्तिमन्तरेण, यथा हि वीर्यान्तरायक्षयोपशमजनितां सतीमपि वाग्व्यापारात्मिकां वाग्वीर्यलब्धिं व्यापारयितुं न शक्नोति 'भाषापर्याप्तिमन्तरेण, इत्यसावपि वाग्वीर्यलब्धेः पृथगिष्यते। यथा वा ज्ञानदर्शनावरणान्तरायक्षयोपशमजनितां सतीमपि मनोव्यापारात्मिकां पर्यालोचनवीर्यलब्धिं व्यापारयितुं न शक्नोति मनःपर्याप्तिमन्तरेण इत्यसावपि मनोवीर्यलब्धेः पृथगिष्यत एव। तथोच्छ्वासनामोदयजनितायामुच्छ्वासलब्धौ सत्यामप्युच्छ्वासपर्याप्तिरेषितव्या ३८। यदुदयाज्जन्तुशरीराण्यत्युष्णप्रकाशलक्षणमातपं प्रकुर्वन्ति तदातपनाम। तदुदयश्च रविबिम्बादौ पार्थिवशरीरेष्वेव न शेषेषु, वह्निज्वालाप्रभादिषूष्णप्रकाशरूपत्वे सत्यप्यातपो न भवति, किं तर्हि? तेजोजन्तुशरीराण्येव, तत्र तूष्णत्वमुष्णस्पर्शनामोदयात्, प्रकाशरूपत्वं तु लोहितवर्णनामोदयादवसेयमिति ३९। यदुदयाज्जन्तुशरीरमनुष्णप्रकाशात्मकमुद्द्योतं प्रकरोति। यथा यतिदेवोत्तरवैक्रियचन्द्रर्क्षग्रहतारारत्नौषधिमणिप्रभृतयस्तदुद्द्योतनाम ४०। यदुदयाच्छरीरेष्वङ्गप्रत्यङ्गानां प्रतिनियतस्थानवृत्तिता भवति तत्सूत्रधारकल्पं निर्माणनाम। तदभावे हि तद्भृतककल्पैरङ्गोपाङ्गनामादिभिर्निर्वर्त्तितानामपि शिरउरउदरादीनां स्थानवृत्तेरनियमः स्यात् ४१ यदुदयाज्जीवः सदेवमनुजासुरलोकपूज्यमुत्तमोत्तमं पदं धर्मतीर्थस्य प्रवर्त्तयितृत्वमवाप्नोति तत्तीर्थकरनाम ४२। इत्युक्तं नाम ६॥ गां वाचं त्रायत इति गोत्रम्। तत्पुनः प्राणिनामुच्चैर्नीचैर्भावलक्षणः कर्मविशेषोदयजनितः पर्यायविशेषः। स ह्युत्तमाधमादिशब्दरूपां स्वार्थप्रतिपादनप्रवृत्तां प्रवृत्तिनिमित्तीभवन् वाचं रक्षति तदर्थाभिधायित्वेन पालयति। अथवा 'गुङ् शब्दे' इत्यस्माद्धातोः ष्ट्रन्। गूयते संशब्द्यते प्रधानाधमादिरूपतयाऽनेनेति गोत्रम्। तथाविधविपाकवेद्यं कर्मापि गोत्रम्, तच्च

१ "भाषापर्या-" इति पाठः॥

द्विधा–उच्चैर्गोत्रं १ नीचैर्गोत्रं २ च। तत्रोच्चैर्गोत्रमष्टधा वेद्यते, जातिकुलबलरूपतपऐश्वर्यश्रुतलाभैः १। तद्विपर्ययात्तु नीचैर्गोत्रम् २। निर्गुणोऽपि हि जातिवशादुत्तम इति जनैः पूज्यते। जातिहीनस्तु गुणवानपि निन्द्यते तथा कुलादिष्वपि वाच्यम् उक्तं द्विविधं गोत्रम् ७॥ जीवं चार्थसाधनं चान्तरा एति पततीत्यन्तरायम्। जीवस्य दानादिकमर्थं सिसाधयिषोर्विघ्नीभूय विचाले पततीत्यर्थः। तत्पञ्चधा–दानस्यान्तरायं दानान्तरायमित्यादि। सति दातव्ये वस्तुनि समागते च गुणवति पात्रे दानस्य च कल्याणकं फलविशेषं विद्वानपि यदुदयाद्दातुं नोत्सहते तद्दानान्तरायम् १ प्रसिद्धादपि सर्वप्रदाद्दातुः गृहे च विद्यमानं देयमर्थजातं याञ्चाकुशलो याचमानो गुणवानपि यदुदयान्न लभते तल्लाभान्तरायम् २। सकृद्भुज्यत इति भोगः, आहारमाल्यविलेपनादिः। पुनः पुनर्भुज्यत इत्युपभोगः शयनवसनवनिताभूषणादिस्तस्यान्तरायम्, भोग्यमुपभोग्यं वा विद्यमानमनुपहताङ्गोऽपि यदुदयान्न शक्नोति भोक्तुमुपभोक्तुं वा तद्भोगान्तरायमुपभोगान्तरायं च वेदितव्यम् ३। ४। वीर्यं शक्तिरुत्साहः सामर्थ्यमिति चोच्यते, तस्यान्तरायं विघातकं वीर्यान्तरायम्। यदुदयादनुपहतपीनाङ्गोऽपि शक्तिविकलो भवति तद्वीर्यान्तरायम् ५। इत्युक्तं पञ्चविधमन्तरायम् ८॥ कृता च प्रकृतिवर्णना। व्याख्यातं च मूलोत्तरप्रकृतिसंख्याप्रतिपादकं गाथाद्वयम्॥ ९॥ १०॥

इदानीं कास्ता मिथ्यादृष्ट्यादिगुणस्थानेषु षोडशाद्याः कर्मप्रकृतयो बन्धादीन् प्रतीत्य व्यवच्छिन्नाः ? इति प्रदर्शयन्नाह—

> मिच्छ नपुंसगवेयं, नरयाउं तह य चेव नरयदुगं।
> इगविगलिंदियजाई[1], हुंडमसंपत्तमायावं ॥११॥
> थावर सुहुमं च तहा, साहारणयं तहा अपज्जत्तं।
> एया सोलस पयडी, मिच्छंमि य बंधवोच्छेओ ॥१२॥

मिथ्यात्वं नपुंसकवेदः नरकायुष्कं 'तह य नरयदुगं' इति, नरकगतिनाम [2]नरकगत्यानुपूर्वीनाम 'इगविगलिंदियजाई' इति, एकेन्द्रियजातिः द्वीन्द्रियजातिः त्रीन्द्रियजातिः चतुरिन्द्रियजातिः हुण्डं संस्थानं 'असंप्राप्तं' सेवार्त्तसंहननं आतपनाम स्थावरनाम सूक्ष्मनाम साधारणनाम अपर्याप्तनाम, 'एया सोलस पयडी' इति, विभक्तिव्यत्ययादेतासां षोडशानां प्रकृतीनां मिथ्यादृष्टिगुणस्थाने बन्धव्यवच्छेदो भवति, एतत्प्रकृतिबन्धस्य मिथ्यात्वप्रत्ययत्वात्, तस्य चोत्तरत्राभावात् ॥११॥ १२॥

---

१ "जाइं" इत्यपि पाठः। २ "नरकानुपूर्वीनाम" इति वा पाठः॥

थीणतिगं इत्थी वि य, अण तिरियाउं तहेव तिरियदुगं।
मज्झिम चउ संठाणं, मज्झिम चउ चेव संघयणं ॥१३॥
उज्जोयमप्पसत्था, [1]विहायगइ दूभगं अणाएज्जं।
दूसर नीयागोयं, सासणसम्मम्मि वोच्छिन्ना ॥१४॥

'**थीण तिगं**' इति, निद्रानिद्रा १ प्रचलाप्रचला २ स्त्यानगृद्धिः ३ स्त्रीवेदः ४ 'अण' इति, अनन्तानुबन्धिनश्चत्वारः क्रोधमानमायालोभाः ८ तिर्यगायुष्कं ९ '**तहेव तिरियदुगं**' इति, तिर्यग्गतिनाम १० तिर्यग्गत्यानुपूर्वीनाम ११ '**मज्झिम चउ संठाणं मज्झिम चउ चेव संघयणं**' इति, प्रथमचरमवर्जानि मध्यमानि चत्वारि चत्वारि संस्थानसंहननानि । तानि चामूनिन्यग्रोधपरिमण्डलसंस्थानं सादिसंस्थानं वामनसंस्थानं कुब्जसंस्थानं ऋषभनाराचसंहननं नाराचसंहननं अर्द्धनाराचसंहननं कीलिकासंहननं चेति, उद्द्योतनाम अप्रशस्तविहायोगतिः दुर्भगं अनादेयं दुस्वरं नीचैर्गोत्रम्, इत्येताः पञ्चविंशतिः कर्मप्रकृतयो बन्धं प्रतीत्य सासादनसम्यग्दृष्टौ व्यवच्छिन्नाः । अनन्तानुबन्ध्युदयप्रत्ययत्वादेतद्बन्धस्य तदभावादुत्तरेष्विति ॥१३॥१४॥

बीयकसायचउक्कं, मणुयाउं मणुय[2]दुग य ओरालं।
तस्स य अंगोवंगं, संघयणाई अविरयंमि ॥१५॥

'**बीयकसायचउक्कं**' इत्यप्रत्याख्यानावरणाश्चत्वारः क्रोधमानमायालोभाः मनुष्यायुष्कं '**मणुयदुग य**' इति, मनुष्यगतिर्मनुष्यगत्यानुपूर्वी, औदारिकशरीरं '**तस्स य अंगोवंगं**' इति, औदारिकाङ्गोपाङ्गं '**संघयणाई**' इति, संहननानामादिप्रकृतिर्वज्रर्षभनाराचसंहननम्, इत्येता दश प्रकृतयोऽविरतसम्यग्दृष्टौ व्यवच्छिन्ना इति वर्तते । बन्धं प्रतीत्येति च प्रकरणाद्गम्यते । तत्र द्वितीयकषायचतुष्कं तदुदयाभावान्न बध्नाति देशविरतादिः । कषाया ह्यनन्तानुबन्धिवर्जा वेद्यमाना एव बध्यन्ते, "**जे वेयइ ते बंधति**" इतिवचनात् । अनन्तानुबन्धिनस्तु चतुर्विंशतिमोहसत्कर्माऽनन्तवियोजको मिथ्यात्वं गतो बन्धावलिकामात्रं कालमनुदितान् बध्नाति । मनुष्यायुरादित्रयं त्वेकान्तेन मनुष्यवेद्यमेव । औदारिकादित्रयं तु मनुष्यतिर्यगेकान्तवेद्यमेव । देशविरतादिस्तु देवगतिवेद्यमेव बध्नाति, नान्यत् । तेनैतद्दशकमविरत एव व्यवच्छिन्नम् । सम्यग्मिथ्यादृष्टौ न कस्यचिद्बन्धव्यवच्छेदः, तस्याविरतसम्यग्दृष्टिना सह बन्धहेत्वविशेषात् ॥१५॥

तइयकसायचउक्कं, विरयाविरयंमि बंधवोच्छेओ।
[3]अस्सायमरइसोयं, तह चेव य अथिरमसुभं च ॥१६॥

---

१ "विहाइगइदूभयं" इत्यपि पाठः । २ "०दुगय" इत्यपि पाठः । ३ "अस्साइअरइसोगं" इत्यपि पाठः ।

द्विधा—उच्चैर्गोत्रं १ नीचैर्गोत्रं २ च । तत्रोच्चैर्गोत्रमष्टधा वेद्यते, जातिकुलबलरूपतपऐश्वर्यश्रुतलाभैः १ । तद्विपर्ययात्तु नीचैर्गोत्रम् २ । निर्गुणोऽपि हि जातिवशादुत्तम इति जनैः पूज्यते । जातिहीनस्तु गुणवानपि निन्द्यते तथा कुलादिष्वपि वाच्यम् उक्तं द्विविधं गोत्रम् ७ ॥ जीवं चार्थसाधनं चान्तरा एति पततीत्यन्तरायम् । जीवस्य दानादिकमर्थं सिसाधयिषोर्विघ्नीभूय विचाले पततीत्यर्थः । तत्पञ्चधा—दानस्यान्तरायं दानान्तरायमित्यादि । सति दातव्ये वस्तुनि समागते च गुणवति पात्रे दानस्य च कल्याणकं फलविशेषं विद्वानपि यदुदयाद्दातुं नोत्सहते तद्दानान्तरायम् १ प्रसिद्धादपि सर्वप्रदाद्दातुः गृहे च विद्यमानं देयमर्थजातं याञ्चाकुशलो याचमानो गुणवानपि यदुदयान्न लभते तल्लाभान्तरायम् २ । सकृद्भुज्यत इति भोगः, आहारमाल्यविलेपनादिः । पुनः पुनर्भुज्यत इत्युपभोगः शयनवसनवनिताभूषणादिस्तस्यान्तरायम्, भोग्यमुपभोग्यं वा विद्यमानमनुपहताङ्गोऽपि यदुदयान्न शक्नोति भोक्तुमुपभोक्तुं वा तद्भोगान्तरायमुपभोगान्तरायं च वेदितव्यम् ३ । ४ । वीर्यं शक्तिरुत्साहः सामर्थ्यमिति चोच्यते, तस्यान्तरायं विघातकं वीर्यान्तरायम् । यदुदयादनुपहतपीनाङ्गोऽपि शक्तिविकलो भवति तद्वीर्यान्तरायम् ५ । इत्युक्तं पञ्चविधमन्तरायम् ८ ॥ कृता च प्रकृतिवर्णना । व्याख्यातं च मूलोत्तरप्रकृतिसंख्याप्रतिपादकं गाथाद्वयम् ॥ ९ ॥ १० ॥

इदानीं कास्ता मिथ्यादृष्ट्यादिगुणस्थानेषु षोडशाद्याः कर्मप्रकृतयो बन्धादीन् प्रतीत्य व्यवच्छिन्नाः ? इति प्रदर्शयन्नाह—

> मिच्छ नपुंसगवेयं, नरयाउं तह य चेव नरयदुगं ।
> इगविगलिंदिय[१]जाई, हुंडमसंपत्तमायावं ॥११॥
> थावर सुहुमं च तहा, साहारणयं तहा अपज्जत्तं ।
> एया सोलस पयडी, मिच्छंमि य बंधवोच्छेओ ॥१२॥

मिथ्यात्वं नपुंसकवेदः नरकायुष्कं 'तह य नरयदुगं' इति, नरकगतिनाम [२]नरकगत्यानुपूर्वीनाम 'इगविगलिंदियजाई' इति, एकेन्द्रियजातिः द्वीन्द्रियजातिः त्रीन्द्रियजातिः चतुरिन्द्रियजातिः हुण्डं संस्थानं 'असंप्राप्तं' सेवार्त्तसंहननं आतपनाम स्थावरनाम सूक्ष्मनाम साधारणनाम अपर्याप्तनाम, 'एया सोलस पयडी' इति, विभक्तिव्यत्ययादेतासां षोडशानां प्रकृतीनां मिथ्यादृष्टिगुणस्थाने बन्धव्यवच्छेदो भवति, एतत्प्रकृतिबन्धस्य मिथ्यात्वप्रत्ययत्वात्, तस्य चोत्तरत्राभावात् ॥११॥ १२॥

---

१ "जाइं" इत्यपि पाठः । २ "नरकानुपूर्वीनाम" इति वा पाठः ॥

द्विधा—उच्चैर्गोत्रं १ नीचैर्गोत्रं २ च । तत्रोच्चैर्गोत्रमष्टधा वेद्यते, जातिकुलबलरूपतपऐश्वर्यश्रुतलाभैः १ । तद्विपर्ययात्तु नीचैर्गोत्रम् २ । निर्गुणोऽपि हि जातिवशादुत्तम इति जनैः पूज्यते । जातिहीनस्तु गुणवानपि निन्द्यते तथा कुलादिष्वपि वाच्यम् उक्तं द्विविधं गोत्रम् ७ ॥ जीवं चार्थसाधनं चान्तरा एति पततीत्यन्तरायम् । जीवस्य दानादिकमर्थं सिसाधयिषोर्विघ्नीभूय विचाले पततीत्यर्थः । तत्पञ्चधा—दानस्यान्तरायं दानान्तरायमित्यादि । सति दातव्ये वस्तुनि समागते च गुणवति पात्रे दानस्य च कल्याणकं फलविशेषं विद्वानपि यदुदयाद्दातुं नोत्सहते तद्दानान्तरायम् १ प्रसिद्धादपि सर्वप्रदाद्दातुः गृहे च विद्यमानं देयमर्थजातं याञ्चाकुशलो याचमानो गुणवानपि यदुदयान्न लभते तल्लाभान्तरायम् २ । सकृद्भुज्यत इति भोगः, आहारमाल्यविलेपनादिः । पुनः पुनर्भुज्यत इत्युपभोगः शयनवसनवनिताभूषणादिस्तस्यान्तरायम्, भोग्यमुपभोग्यं वा विद्यमानमनुपहताङ्गोऽपि यदुदयान्न शक्नोति भोक्तुमुपभोक्तुं वा तद्भोगान्तरायमुपभोगान्तरायं च वेदितव्यम् ३ । ४ । वीर्यं शक्तिरुत्साहः सामर्थ्यमिति चोच्यते, तस्यान्तरायं विघातकं वीर्यान्तरायम् । यदुदयादनुपहतपीनाङ्गोऽपि शक्तिविकलो भवति तद्वीर्यान्तरायम् ५ । इत्युक्तं पञ्चविधमन्तरायम् ८ ॥ कृता च प्रकृतिवर्णना । व्याख्यातं च मूलोत्तरप्रकृतिसंख्याप्रतिपादकं गाथाद्वयम् ॥ ९ ॥ १० ॥

इदानीं कास्ता मिथ्यादृष्ट्यादिगुणस्थानेषु षोडशाद्याः कर्मप्रकृतयो बन्धादीन् प्रतीत्य व्यवच्छिन्नाः ? इति प्रदर्शयन्नाह—

मिच्छ नपुंसगवेयं, नरयाउं तह य चेव नरयदुगं ।
इगविगलिंदियजाई, हुंडमसंपत्तमायावं ॥११॥
थावर सुहुमं च तहा, साहारणयं तहा अपज्जत्तं ।
एया सोलस पयडी, मिच्छंमि य बंधवोच्छेओ ॥१२॥

मिथ्यात्वं नपुंसकवेदः नरकायुष्कं 'तह य नरयदुगं' इति, नरकगतिनाम [1]नरकगत्यानुपूर्वीनाम 'इगविगलिंदियजाई' इति, एकेन्द्रियजातिः द्वीन्द्रियजातिः त्रीन्द्रियजातिः चतुरिन्द्रियजातिः हुण्डं संस्थानं 'असंप्राप्तं' सेवार्त्तसंहननं आतपनाम स्थावरनाम सूक्ष्मनाम साधारणनाम अपर्याप्तनाम, 'एया सोलस पयडी' इति, विभक्तिव्यत्ययादेतासां षोडशानां प्रकृतीनां मिथ्यादृष्टिगुणस्थाने बन्धव्यवच्छेदो भवति, एतत्प्रकृतिबन्धस्य मिथ्यात्वप्रत्ययत्वात्, तस्य चोत्तरत्राभावात् ॥११॥ १२॥

---

१ "जाइं" इत्यपि पाठः । २ "नरकानुपूर्वीनाम" इति वा पाठः ॥

थीणतिगं इत्थी वि य, अण तिरियाउं तहेव तिरियदुगं।
मज्झिम चउ संठाणं, मज्झिम चउ चेव संघयणं ॥१३॥
उज्जोयमप्पसत्था, [1]विहायगइ दूभगं अणाएज्जं।
दूसर नीयागोयं, सासणसम्मम्मि वोच्छिन्ना ॥१४॥

'थीणतिगं' इति, निद्रानिद्रा १ प्रचलाप्रचला २ स्त्यानगृद्धिः ३ स्त्रीवेदः ४ 'अण' इति, अनन्तानुबन्धिनश्चत्वारः क्रोधमानमायालोभाः ८ तिर्यगायुष्कं ९ 'तहेव तिरियदुगं' इति, तिर्यग्गतिनाम १० तिर्यग्गत्यानुपूर्वीनाम ११ 'मज्झिम चउ संठाणं मज्झिम चउ चेव संघयणं' इति, प्रथमचरमवर्जानि मध्यमानि चत्वारि चत्वारि संस्थानसंहननानि। तानि चामूनिन्यग्रोधपरिमण्डलसंस्थानं सादिसंस्थानं वामनसंस्थानं कुब्जसंस्थानं ऋषभनाराचसंहननं नाराचसंहननं अर्द्धनाराचसंहननं कीलिकासंहननं चेति, उद्द्योतनाम अप्रशस्तविहायोगतिः दुर्भगं अनादेयं दुस्वरं नीचैर्गोत्रम्, इत्येताः पञ्चविंशतिः कर्मप्रकृतयो बन्धं प्रतीत्य सासादनसम्यग्दृष्टौ व्यवच्छिन्नाः। अनन्तानुबन्ध्युदयप्रत्ययत्वादेतद्बन्धस्य तदभावादुत्तरेष्विति ॥१३॥१४॥

बीयकसायचउक्कं, मणुयाउं मणुय[2]दुग य ओरालं।
तस्स य अंगोवंगं, संघयणाई अविरयंमि ॥१५॥

'बीयकसायचउक्कं' इत्यप्रत्याख्यानावरणाश्चत्वारः क्रोधमानमायालोभाः मनुष्यायुष्कं 'मणुयदुग य' इति, मनुष्यगतिर्मनुष्यगत्यानुपूर्वी, औदारिकशरीरं 'तस्स य अंगोवंगं' इति, औदारिकाङ्गोपाङ्गं संघयणाई' इति, संहनननामादिप्रकृतिर्वज्रर्षभनाराचसंहननम्, इत्येता दश प्रकृतयोऽविरतसम्यग्दृष्टौ व्यवच्छिन्ना इति वर्तते। बन्धं प्रतीत्येति च प्रकरणाद्गम्यते। तत्र द्वितीयकषायचतुष्कं तदुदयाभावान्न बध्नाति देशविरतादिः। कषाया ह्यनन्तानुबन्धिवर्जा वेद्यमाना एव बध्यन्ते, "जे वेयइ ते बंधति" इतिवचनात्। अनन्तानुबन्धिनस्तु चतुर्विंशतिमोहसत्कर्माऽनन्तवियोजको मिथ्यात्वं गतो बन्धावलिकामात्रं कालमनुदितान् बध्नाति। मनुष्यायुरादित्रयं त्वेकान्तेन मनुष्यवेद्यमेव। औदारिकादित्रयं तु मनुष्यतिर्यगेकान्तवेद्यमेव। देशविरतादिस्तु देवगतिवेद्यमेव बध्नाति, नान्यत्। तेनैतद्दशकमविरत एव व्यवच्छिन्नम्। सम्यग्मिथ्यादृष्टौ न कस्यचिद्बन्धव्यवच्छेदः, तस्याविरतसम्यग्दृष्टिना सह बन्धहेत्वविशेषात् ॥१५॥

तइयकसायचउक्कं, विरयाविरयंमि बंधवोच्छेओ।
[3]अस्सायमरइसोयं, तह चेव य अथिरमसुभं च ॥१६॥

---

१ "विहाइगइदूभयं" इत्यपि पाठः। २ "०दुगय" इत्यपि पाठः। ३ "अस्साअरइसोगं" इत्यपि पाठः।

अज्जसकित्ती य तहा, पमत्तविरयंमि बंधवोच्छेओ ।
[1]देवाउयं च एगं, नायव्वं अप्पमत्तंमि ॥ १७ ॥

तइयेत्यादि गाथापूर्वार्द्धम् । 'तइयकसायचउक्कं' इति, प्रत्याख्यानावरणानां क्रोधमानमायालोभानां देशविरतेर्बन्धव्यवच्छेदः, तदुत्तरेषु तेषामुदयाभावादनुदितानां चाबन्धात्प्राग्वत् ॥

'अस्साय' इत्यादि पश्चार्द्धम् । 'अज्जसकित्ती' इत्यादि पूर्वार्द्धम् । असातवेदनीयं अरतिः शोकः अस्थिरनाम अशुभनाम ॥१६॥ अयशःकीर्त्तिनाम, इत्येतासां षण्णां प्रकृतीनां प्रमत्तविरतेर्बन्धव्यवच्छेदः, तद्बन्धस्य प्रमादप्रत्ययत्वात् , प्रमादस्य चोत्तरत्राभावात् ॥

'देवाउयं' इत्यादि पश्चार्द्धम् , देवायुष्कमेकं ज्ञातव्यं, अप्रमत्ते बन्धं प्रतीत्य व्यवच्छिन्नम् । [2]देवायुष्कबन्धं हि प्रमत्तः [3]सन्नारभते, तद्बन्धाद्धायामेव कश्चिदप्रमत्तो भूत्वा समापयति, न त्वप्रमत्त एवारभते । तदुत्तरेषु तद्बन्धासंभव एव, तेषामत्यन्तविशुद्धत्वात् , आयुषश्च घोलनापरिणामेनैव बन्धात् ॥१७॥

निद्दापयला य तहा, अपुव्वपढमंमि बंधवोच्छेओ ।
देवदुगं पंचिंदिय-उरालवज्जं चउसरीरं ॥ १८ ॥
समचउरं वेउव्विय–आहारय अंगुवंगनामं च ।
वण्णचउक्कं च तहा, अगुरुयलहुयं च चत्तारि ॥१९॥
तसचउपसत्थमेव य, विहायगइ थिरसुभं च नायव्वं ।
सुहयं सुस्सरमेव य, आएज्जं चेव निमिणं [4]च ॥२०॥
तित्थयरमेव तीसं, अपुव्वछब्भागबंधवोच्छेओ ।
हासरइभयदुगुंछा, अपुव्व[5]चरमंमि वोच्छिन्ना ॥२१॥

निद्देति गाथाचतुष्कं । अपूर्वकरणाद्धायाः सप्त भागाः क्रियन्ते । तत्र प्रथमे भागे निद्राप्रचलयोर्बन्धव्यवच्छेदः । तदुत्तरत्र तद्बन्धाध्यवसायस्थानाभावाद् , उत्तरेष्वपि चायमेव हेतुरनुसरणीयः । 'देवदुगं' इति, देवगतिर्देवानुपूर्वी पञ्चेन्द्रियजातिः 'उरालवज्जं चउसरीरं' इति, वैक्रियं आहारकं तैजसं कार्मणं, समचतुरस्रसंस्थानं वैक्रियाङ्गोपाङ्गं आहारकाङ्गोपाङ्गम् 'वण्णचउक्कं च तहा' इति, वर्णो गन्धो रसः स्पर्शः, 'अगुरुयलहुयं च चत्तारि' इति, अगुरुलघु उपघातं पराघातं उच्छ्वासनाम चेति, 'तस चउ' इति, त्रसं बादरं पर्याप्तकं, प्रत्येकं, 'पसत्थमेव य विहायगइ' इति, प्रशस्ता विहायोगतिः, स्थिरं शुभं च ज्ञातव्यम् , सुभगं सुस्वरं आदेयं निर्माणं तीर्थकरनाम, च. इत्येतासां त्रिंशतः कर्मप्रकृतीनामपूर्वकरणस्य

---

१ "देवाउगं च एक्कं वहापमत्तम्मि नायव्वं" । इत्यपि पाठः । २ "तदायु०" इत्यपि पाठः । ३ "सन्नारभ्य त०" इति वा पाठः । ४ "चेव" (?) इत्यपि पाठः । ५ "०चरिमम्मि" इत्यपि पाठः ।

'छब्भाग' इति, षष्ठे सप्तमागे बन्धव्यवच्छेदः । हास्यरतिभयजुगुप्साश्चतस्रः प्रकृतयोऽपूर्वकरण-चरमे सप्तभागे बन्धं प्रतीत्य व्यवच्छिन्नाः ॥१८॥१९॥२०॥२१॥

पुरिसं चउसंजलणं, पंच य पयडीओ पंच [1]भागंमि ।
अनियट्टीअद्धाए, जहक्कमं बंधवोच्छेओ ॥२२॥

पुरुषं कर्म पुरुषवेदः, 'चउ संजलणं' इति, चत्वारः संज्वलनाः क्रोधमानमायालोभाः, इत्येतासां पञ्चानां प्रकृतीनां 'पञ्च भागंमि' इति, पञ्चसु भागेष्वनिवृत्त्यद्धायाः 'यथाक्रमं' यथासंख्यमेकैकस्मिन् भागे एकैकस्याः प्रकृतेर्बन्धव्यवच्छेदः । पुरुषवेदादीनां मायासंज्वलनान्तानामुत्तरत्र तद्बन्धाध्यवसायस्थानाभावः, व्यवच्छेदहेतुर्लोभसंज्वलनस्य (संज्वलनलोभस्य) तु बादरसम्परायप्रत्ययो बन्धः, स चोत्तरत्र नास्तीत्यतो व्यवच्छेदः ॥२२॥

नाणंतरायदसगं दंसण चत्तारि उच्चजसकित्ती ।
एया सोलस पयडी, [2]सुहुमकसायंमि वोच्छिन्ना ॥२३॥

'नाणंतरायदसगं' इति, ज्ञानावरणं पञ्चविधमन्तरायं पञ्चविधं, 'दंसण चत्तारि' इति, दर्शनावरणानि चत्वारि चक्षुरचक्षुरवधिकेवलदर्शनावरणाख्यानि, उच्चैर्गोत्रं, यशःकीर्त्तिः, इत्येताः षोडश प्रकृतयः सूक्ष्मकषाये बन्धं प्रतीत्य व्यवच्छिन्नाः । एतद्बन्धस्य साम्परायिकत्वादुत्तरेषु च सम्परायस्य कषायोदयलक्षणस्याभावात् ॥२३॥

उवसंतखीणमोहे, [3]जोगिंमि उ साय बंधवोच्छेओ ।
नायव्वो पयडीणं, बंधस्संतो अणंतो [4]य ॥२४॥

॥ बंधो सम्मत्तो ॥

उवसंतेत्यादि । उपशान्तमोहे क्षीणमोहे सयोगिकेवलिनि च सातवेदनीयस्य बन्धव्यवच्छेदः । तदुत्तरस्मिन्नयोगिकेवलिनि तद्बन्धप्रत्ययस्य योगस्याभावात्, इत्येवं ज्ञातव्यः प्रकृतीनां बन्धस्यान्तोऽनन्तश्च । यत्र हि गुणस्थाने यासां प्रकृतीनां बन्धहेतुव्यवच्छेदस्तत्र तासां बन्धस्यान्तः, यथा मिथ्यादृष्टिव्यवच्छिन्नबन्धानां षोडशानां प्रकृतीनां मिथ्यात्वाविरतिप्रमादकषाययोगाः समुदिता बन्धहेतवः, तेषु मध्ये मिथ्यात्वं तत्रैव व्यवच्छिन्नम् । ततश्च मिथ्यादृष्टिगुणस्थाने तासां बन्धस्यान्तः तत उत्तरेषु कारणवैकल्येन बन्धाभावादितरासां बन्धस्यानन्तः । तत उत्तरेष्वपि तद्बन्धकारणसाकल्येन बन्धभावात् इत्येवमन्येष्वपि गुणस्थानेषु प्रकृतीनां स्वस्वबन्धहेतूनां व्यवच्छेदाव्यवच्छेदाभ्यां साकल्यवैकल्यवशाद्बन्धस्यान्तोऽनन्तश्च भावनीयः ॥२४॥

॥ इति बन्धाधिकारः समाप्तः ॥

१ "मायम्मि" इत्यपि पाठः । २ "सुहुमसरागम्मि" इत्यपि पाठः । ३ "सजोइम्मी साय" इत्यपि पाठः । ४ "वा" इत्यपि पाठः ।

अथेदानीं कास्ताः पञ्चाद्याः कर्मप्रकृतयो यासां मिथ्यादृष्ट्यादिगुणस्थानेषूदयव्यवच्छेदः ? इत्याह—

मिच्छत्तं आयावं सुहुम अपज्जतया य तह चेव ।
साहारणं च पंच य, मिच्छंमि य उदयवोच्छेओ ॥२५॥

मिथ्यात्वं आतपनाम सूक्ष्मनाम अपर्याप्तकनाम साधारणं च, इत्यासां पञ्चानां प्रकृतीनां मिथ्यादृष्टावुदयव्यवच्छेदः । मिथ्यात्वोदयस्तावन्मिथ्यादृष्टेरेव भवति, तेनोत्तरेषु तदुदयाभावः । आतपनामोदयस्तु बादरपृथिवीकायिकेष्वेव । अपर्याप्तनाम्नस्तु सर्वेष्वपर्याप्तकेषु । सूक्ष्मनाम्नः सूक्ष्मैकेन्द्रियेषु । साधारणनाम्नोऽनन्तकायिकवनस्पतिषु । न चैतेषु स्थितो जीवः सासादनादित्वं लभते, नापि पूर्वप्रतिपन्नस्तेषूत्पद्यते । सासादनस्तु यद्यपि बादरपर्याप्तकैकेन्द्रियेषूत्पद्यते तथाऽपि न तस्यातपनामोदयसंभवः, तत्रोत्पन्नमात्रस्यासमाप्तशरीरस्यैव सासादनत्ववमनात् । समाप्ते च शरीरे तत्रातपनामोदयो भवति, तेनैतासां मिथ्यादृष्टौ व्यवच्छेद उदयस्य ॥२५॥

अण एगिंदियजाई, विगलिंदियजाइमेव थावरयं ।
एया नव पयडीओ, सासणसम्मंमि वोच्छिन्ना ॥२६॥

**'अण'** इति अनन्तानुबन्धिनश्चत्वारः, एकेन्द्रियजातिः, **'विगलिंदियजाइमेव'** इति विकलानि पञ्चभ्य ऊनानि इन्द्रियाणि येषां ते विकलेन्द्रिया द्वीन्द्रियादयस्तेषां जातयस्तिस्रः, तद्यथा—द्वीन्द्रियजातिः, त्रीन्द्रियजातिः, चतुरिन्द्रियजातिः, स्थावरनाम, इत्येता नव प्रकृतयः सासादनसम्यग्दृष्टावुदयं प्रतीत्य व्यवच्छिन्नाः । अनन्तानुबन्धिनामुदये सम्यक्त्वलाभो न भवति, **"पढमिल्लुयाण उदए, नियमा संजोयणा कसायाणं । सम्मद्दंसणलंभं, भवसिद्धीयावि न लभंति ॥१॥"** इतिवचनात् । नापि सम्यङ्मिथ्यात्वं कोऽप्यनन्तानुबन्ध्युदये गच्छति । योऽपि पूर्वप्रतिपन्नसम्यक्त्वोऽनन्तानुबन्धिनामुदयं करोति सोऽपि सासादन एव भवतीत्युत्तरेष्वासामुदयाभावः । शेषास्त्वेकेन्द्रियजात्यादयो यथास्वमेकेन्द्रियविकलेन्द्रियवेद्या एव । उत्तरगुणस्थानानि तु संज्ञिपञ्चेन्द्रिया एव प्रतिपद्यन्ते । पूर्वप्रतिपन्नोऽपि पञ्चेन्द्रियेष्वेव गच्छति अत उत्तरेष्वासामुदयाभावः । । ततश्च सासादन एवोदयव्यवच्छेदः ॥२६॥

सम्मा मिच्छत्तेगं, सम्मामिच्छमि उदयवोच्छेओ ।
बीयकसायचउक्कं तह चेव य नरयदेवाऊ ॥२७॥
मणुयतिरियाणुपुव्वी, वेउव्वियछक्क [1]दूहयं चेव ।
अणएज्जं चेव तहा, अज्जसकित्ती अविरयंमि ॥२८॥

---

१ "दूहियं" इत्यपि पाठः ।

पूर्वार्द्धम् । सम्यङ्मिथ्यात्वस्यैकस्य सम्यङ्मिथ्यादृष्टावुदयव्यवच्छेदः । तदुदये हि सम्यङ्मिथ्यादृष्टिरेव भवति नान्य इति ॥

'बीयकसायचउक्कं' इति, अप्रत्याख्यानावरणाः क्रोधमानमायालोभाः । देवायुः नरकायुः मनुजानुपूर्वी, तिर्यगानुपूर्वी 'वेउव्वियछक्क' इति वैक्रियेण युक्तं षट्कं वैक्रियषट्कम्-वैक्रियशरीरं वैक्रियाङ्गोपाङ्गं नरकगतिः नरकानुपूर्वी देवगतिः देवानुपूर्वीति । दुर्भगं, अनादेयं, अयशःकीर्त्तिः, इत्येताः सप्तदश प्रकृतय उदयं प्रतीत्याविरतसम्यग्दृष्टौ व्यवच्छिन्नाः । द्वितीयकषायोदये देशविरतेरपि लाभः श्रुते प्रतिषिद्धः, 'बीयकसायाणुदये' इत्यादिना । नापि पूर्वप्रतिपन्नदेशविरत्यादेर्जीवस्य तदुदयसंभवः, तेनोत्तरेषु तदुदयाभावः । देवनरकायुषी देवगतिद्विकं नरकगतिद्विकं च यथास्वं देवनारकवेद्यमेव, न च तेषु देशविरत्यादेः संभवः । वैक्रियशरीरवैक्रियाङ्गोपाङ्गनाम्नोस्तु देवनारकेषूदयः । तिर्यङ्मनुष्येषु त्वप्राचुर्येणाविरतसम्यग्दृष्ट्यन्तेषु । यस्तूत्तरगुणस्थानेष्वपि केषाञ्चिदागमे विष्णुकुमारस्थूलभद्रादीनां वैक्रियद्वितियस्योदयः श्रूयते, स इहाचार्येण न विवक्षितः, किं प्रविरलतरत्वात्, आहोस्विदन्यः कोऽप्यभिप्रायः ?, इति न विद्मः तिर्यङ्मनुजानुपूर्व्योस्तु परभवादिसमयेषु त्रिष्वपान्तरालगतावुदयसंभवः, स च यथायोगं तिर्यङ्मनुष्याणां वर्षाष्टकादुपरिष्टात्संभविषु देशविरत्यादिगुणस्थानेषु न संभवति । दुर्भगमनादेयमयशःकीर्तिरित्येतास्तु तिस्रः प्रकृतयो देशविरतादीनां गुणप्रत्ययान्नोद्यन्तीत्यत एता अविरते व्यवच्छिन्नाः ॥२७॥२८॥

तइयकसायचउक्कं, [1]तिरियाऊ तह य चेव तिरियगई ।
उज्जोय [2]नीयगोयं, विरयाविरयंमि वोच्छिन्ना ॥२९॥

'तृतीयकषायचतुष्कं' इति, प्रत्याख्यानावरणाः क्रोधादयः, तिर्यगायुः, तिर्यग्गतिः, उद्योतं, नीचैर्गोत्रम्, इत्येता अष्टौ प्रकृतय उदयं प्रतीत्य विरताविरते व्यवच्छिन्नाः । विरतश्चासौ स्थूलप्राणातिपातादेरविरतश्च सूक्ष्मप्राणातिपातादेर्विरताविरतो=निवृत्तानिवृत्तो देशविरत इत्यर्थः । तृतीयकषायोदये हि चारित्रलाभो न भवति, "तइयकसायाणुदए" इत्यादिवचनात् । न च पूर्वप्रतिपन्नचारित्रस्य तदुदयसंभव इत्युत्तरेषु तदुदयाभावः । तिर्यगायुस्तिर्यग्गतिरुद्योतनाम इत्येताः स्वभावतस्तिर्यग्वेद्या एव । तेषु च देशविरतान्तान्येव गुणस्थानानि संभवन्ति नोत्तराणि इत्युत्तरेषु तदुदयाभावः । उद्योतनाम्नस्तु यतिवैक्रियेऽप्युदयसंभवः । तथा चोक्तम्-"उत्तरवेउव्व देवजति" इति, स त्विहाचार्येण वैक्रियोदयवन्न विवक्षितः । नीचैर्गोत्रं तु तिर्यक्षु गतिस्वाभाव्याद् ध्रुवौदयिकं न परावर्तते । ततश्च देशविरतस्यापि तिरश्चो नीचैर्गोत्रोदयोऽस्त्येव । मनुजेषु तु सर्वस्य देशविरतादेर्गुणिनो गुणप्रत्ययादुच्चैर्गोत्रमेवोदेतीति उक्तत्र नीचैर्गोत्रोदयाभावः । ततश्चैता अष्टावपि देशविरत एवोदयं प्रतीत्य व्यवच्छिन्नाः ॥२९॥

१ "तिरियाउं तहय चेव तिरियगई" इत्यपि पाठः । २ "निय०" इत्यपि पाठः ।

थीणतिगं चेव तहा, आहारदुगं पमत्तविरयंमि ।
सम्मत्तं संघयणं, अंतिमतिगमप्पमत्तंमि ॥३०॥

पूर्वार्द्धम् । स्त्यानर्धित्रयं पूर्वोक्तम् , तथा 'आहारकद्वयं' आहारकशरीराहारकाङ्गोपाङ्गाख्यम् , इत्येतत् प्रकृतिपञ्चकं प्रमत्तविरते व्यवच्छिन्नमुदयं प्रतीत्य । तत्र स्त्यानर्द्धित्रयोदयः प्रमादरूपत्वादप्रमत्ते न संभवति । आहारकं च शरीरं विकुर्वाणो यतिरवश्यं प्रमादवशगो भवति । यत्त्विदमन्यत्र श्रूयते—प्रमत्तयतिराहारकं विकृत्य पश्चाद्विशुद्धिवशात्तत्रस्थ एवाप्रमत्ततां यातीति तदाचार्येण वैक्रियोदयन्यायेन न विवक्षितम् ॥

'सम्मत्तं' इत्यादि पश्चार्द्धम् । सम्यक्त्वं, तथा 'संहननानामन्त्यत्रयं' इति, अर्द्धनाराचकीलिकासेवार्त्ताख्यं, इत्येताश्चतस्रः प्रकृतय उदयं प्रतीत्याप्रमत्ते व्यवच्छिन्नाः । तत्र सम्यक्त्वे क्षपिते उपशमिते वा श्रेणिद्वयमारुह्यत इत्यपूर्वकरणादौ तदुदयाभावः । चरमसंहननत्रयोदये तु श्रेणिरारोढुं न शक्यते, तथाविधविशुद्धेरभावादित्युत्तरेषु तदुदयाभावः ॥३०॥

तह नोकसायछक्कं, अपुव्वकरणंमि उदयवोच्छेओ ।
वेयतिग कोह[1]माणामायासंजलणमनियट्टी ॥३१॥

पूर्वार्द्धम् । नोकषायषट्कस्य हास्यरत्यरतिशोकभयजुगुप्साख्यस्यापूर्वकरणे उदयव्यवच्छेदः । संक्लिष्टतरपरिणामवेद्यत्वादुत्तरेषां च विशुद्धतरपरिणामत्वात्तेषु तदुदयाभाव इति, उत्तरेष्वप्ययमुदयव्यवच्छेदो हेतुरनुसरणीयः ॥

'वेयतिग' इत्यादिपश्चार्द्धम् । वेदत्रिकं स्त्रीवेदपुंवेदनपुंसकवेदाख्यम् , क्रोधमानमायाः संज्वलनास्त्रयः, इत्यस्य प्रकृतिषट्कस्यानिवृत्तिबादरसम्पराये उदयव्यवच्छेदः । तत्र स्त्रियाः श्रेणिमारोहन्त्याः स्त्रीवेदस्य प्रथममुदयव्यवच्छेदः, ततः क्रमेण संज्वलनत्रयस्य, पुंसोऽप्येवम् , नवरं प्रथमं पुंवेदस्य, नपुंसकस्य तु प्रथमं नपुंसकवेदस्य ॥३१॥

संजलणलोभमेगं, [2]सुहुमकसायंमि उदयवोच्छेओ ।
तह [3]रिसहं नारायं, नारायं चेव उवसंते ॥३२॥

पूर्वार्द्धम् । संज्वलनलोभस्यैकस्य सूक्ष्मकषाये उदयव्यवच्छेदः । तदुत्तरेष्वस्योदयाभावः, उपशान्तत्वात्क्षीणत्वाद्वा ॥

'तह रिसहं' इति पश्चार्द्धम् । ऋषभनाराचं द्वितीयं संहननं नाराचं तृतीयमित्यनयोरुपशान्तमोहे उदयव्यवच्छेदः । प्रथमसंहननेनैव क्षपकश्रेण्यारोहणात्क्षीणमोहादौ तदुदयाभावः । उपशमश्रेणिस्तु प्रथमसंहननत्रयेणारुह्यते ॥३२॥

---

१ "नाणय०" इत्यपि पाठः । २ "सुहुमसरागम्मि" इत्यपि पाठः । ३ "रिसहना०" इत्यपि पाठः ।

निद्दा पयला य तहा, खीणदुचरिमंमि उदयवोच्छेओ ।
नाणंतरायदसगं, दंसण चत्तारि चरिमंमि ॥३३॥

निद्राप्रचलयोः क्षीणकषायस्य द्विचरमसमये उदयव्यवच्छेदः । चरमसमये तु क्षीणत्वात्तदुदयाभावः । अपरे पुनराहुः—उपशान्तमोहे निद्राप्रचलयोरुदयव्यवच्छेदः । पञ्चानामपि हि निद्राणां घोलनपरिणामे भवत्युदयः । क्षपकाणां त्वतिविशुद्धत्वान्न निद्रोदयसंभवः । उपशमकानां पुनरनतिविशुद्धत्वात्स्यादपीति । 'नाणंतरायदसगं' इति, ज्ञानावरणे पञ्च, अन्तराये पञ्च, दर्शनावरणानि चत्वारि चक्षुर्दर्शनावरणादीनि, इत्येतासां चतुर्दशानां प्रकृतीनां क्षीणकषायचरमसमये उदयव्यवच्छेदः, तदनन्तरं क्षयादिति ॥३३॥

[1]अन्नयरवेयणीयं, ओरालियतेयकम्मनामं च ।
छच्चेव य संठाणा, ओरालियअंगुवंगं च ॥३४॥
[2]आइमसंघयणं खलु, वण्णचउक्कं च दो विहायगती ।
अगुरुयलहुयचउक्कं, पत्तेयथिराथिरं चेव ॥३५॥
सुभसुस्सरजुयलावि य, निमिणं च तहा हवंति नायव्वा ।
एया तीसं पयडी, सजोगिचरिमंमि वोच्छिन्ना ॥३६॥

गाथात्रयम् । 'अन्यतरवेदनीयं' सातमसातं वा यदयोगिगुणस्थाने न वेदयिष्यते । औदारिकशरीरं तैजसशरीरं कार्मणशरीरम्, 'छच्चेव य संठाणा' षट् संस्थानानि समचतुरस्रादीनि, 'ओरालियअंगुवंगं च' इति, औदारिकाङ्गोपाङ्गनाम, 'आदिमसंहननं' वज्रर्षभनाराचम् 'वर्णचतुष्कं' वर्णगन्धरसस्पर्शाख्यम्, 'दो विहायगती' इति, प्रशस्ताप्रशस्तविहायोगती इति, 'अगुरुलघुचतुष्कं' अगुरुलघूपघातपराघातोच्छ्वासाख्यम्, प्रत्येकं स्थिरं अस्थिरं, 'सुभसुस्सरजुयलावि य' इति, शुभं अशुभं सुस्वरं दुःस्वरं निर्माणम्, इत्येतास्त्रिंशत् प्रकृतय उदयं प्रतीत्य सयोगिचरमसमये व्यवच्छिन्नाः । तत्रान्यतरवेदनीयं यदयोगिगुणस्थाने न वेदयितव्यं तत्सयोगिचरमसमये व्यवच्छिन्नोदयं भवति, पुनरुत्तरत्रोदयाभावात् । सुस्वरदुःस्वरनाम्नोस्तु भाषापुद्गलविपाकित्वाद्वाग्योगिनामेवोदयः, शेषाणां शरीरपुद्गलविपाकित्वात्काययोगिनामेव । तेन हि योगेन तत्पुद्गलग्रहणपरिणामालम्बनानि, ततस्तेषु गृहीतेषु पुद्गलेष्वेतेषां कर्मणां स्वस्वविपाकेनोदयो भवति, तेनायोगिनि योगाभावात्तदुदयाभावः ॥३४॥३५॥३६॥

---

१-"अन्नयरं" इत्यपि पाठः । २ "आयम" (?) इत्यपि पाठः ।

'अन्नयरवेयणीयं मणुयाऊ मणुयगइ य बोद्धव्वा ।
पंचिंदियजाई वि य, तस सुभगा[2]एज्जपज्जत्तं ॥३७॥
बायरजसकित्ती वि य, तित्थयरं उच्चगोयय' चेव ।
एया बारस पयडी, अजोगिचरिमंमि वोच्छिन्ना ॥३८॥

॥ उदओ सम्मत्तो ॥

•

गाथाद्वयम् ॥ 'अन्यतरवेदनीयं' सातमसातं वा, यदुदयावस्थं मनुष्यायुः मनुष्यगतिः पञ्चेन्द्रियजातिः त्रसं सुभगं आदेयं पर्याप्तं बादरं यशःकीर्त्तिः तीर्थकरं उच्चैर्गोत्रम्, इत्येता द्वादश प्रकृतयो भवस्थायोगिचरमसमये व्यवच्छिन्ना उदयमाश्रित्य क्षयादुत्तरत्रोदयाभावः ॥३७॥३८॥

॥ इत्युदयाधिकारः ॥

•

इदानीं कास्ताः पञ्चनवत्याः कर्मप्रकृतयो यासां गुणस्थानेषूदीरणाव्यवच्छेदः ? इत्येतदतिदेशद्वारेणाह—

उदयस्सुदीरणाए, सामित्ताओ न विज्जइ विसेसो ।
मोत्तूण तिन्नि ठाणे, पमत्तजोगी अजोगी य ॥३९॥

उदयस्योदीरणस्य च इत्यनयोरभिहितलक्षणयोः 'स्वामित्वात्' स्वामित्वमाश्रित्य, कर्मप्रकृतीनामिति गम्यते । न विद्यते विशेषः संख्यान्यूनाधिकत्वकृतो भेदः । किमुक्तं भवति— यावतीनां प्रकृतीनां यो मिथ्यादृष्ट्यादिर्वेदयिता स तावतीनामुदीरयिता-ऽपीति, अतिप्रसङ्गनिवृत्त्यर्थमपवादमाह—मुक्त्वा त्रीणि स्थानानि प्रमत्तयतिसयोग्ययोगिगुणस्थानकाख्यानीति ॥३९॥

तेषु तु यो विशेषस्तमाह—

तीसं बारस उदए, केवलिणो मेलणं च काऊण ।
सायासायं च तहा [3]मणुयाउं अवणियं किच्चा ॥४०॥

त्रिंशत् द्वादश च यथासंख्यं प्रकृतय उदयव्यवच्छेदमाश्रित्य, केषाम् ? इत्याह—केवलिनां सयोगिनामयोगिनां च । ततश्च तासां त्रिंशतो द्वादशानां च प्रकृतीनां मीलनं कृत्वा द्विचत्वारिंशति जातायां सातमसातं च तथा मनुष्यायुरित्येतत् प्रकृतित्रयमपनीतं कृत्वा ॥४०॥

ततः—

सेसं इगुयालीसं, [4]जोगिंमि उदीरणा य बोद्धव्वा ।
अवणीय तिन्नि पयडी, [5]पमत्त उदयंमि पक्खित्ता ॥४१॥

---

१ "अन्नयरं वेअणीयं मणुयाउं मणुयगती य" इत्यपि पाठः । २ "॰इज्ज" इत्यपि पाठः । ३ "मणुयाऊमवणियं" (?) इत्यपि पाठ । ४ "सजोगम्मि" इत्यपि । ५ "पमत्तविरियम्मि" इत्यपि पाठः ।

शेषमपनीतस्य किं भवति ? एकोनचत्वारिंशत् प्रकृतयः, तासां सयोगिगुणस्थाने उदीरणा बोद्धव्या । अपनीय तिस्रः प्रकृतीः प्रमत्तयतेरुदये व्यवच्छिन्नस्य प्रकृतिपञ्चकस्य संनिधिनि प्रक्षिप्ताः । सातासातमनुजायुषां हि प्रमादसहितेनैव योगेनोदीरणा भवति, नान्येन; इत्युत्तरेषु तदुदीरणाया अभावः ॥४१॥

ततश्च किं भवति—

तह चेव अट्ठ पयडी, पमत्तविरए उदीरणा होइ ।
नत्थित्ति अजोगिजिणे, उदीरणा होइ नायव्वा ॥४२॥

॥ उदीरणा सम्मत्ता ॥

•

तथा चैवं सत्यष्टानां प्रकृतीनां प्रमत्तविरते व्यवच्छेदमधिकृत्योदीरणा भवति, अष्टानामुदीरणाव्यवच्छेदो भवतीत्यर्थः । नास्तीत्ययोगिजिने उदीरणा ज्ञातव्या भवति, योगाभावात् । उदीरणा हि योगविशेषरूपः करणविशेषः ॥४२॥

॥ इत्युदीरणाधिकारः ॥

•

इदानीं प्रकृतिसत्ताव्यवच्छेदाधिकारोद्दिष्टाः प्रकृतीरानुपूर्व्या प्रतिनिर्दिशति—

अणमिच्छमीससम्मं, [1]अविरयसम्माइअप्पमत्तंता ।
सुरनरयतिरियआऊ, नियभवे सव्वजीवाणं ॥४३॥

पूर्वव्याख्यातैव गाथा । पूर्वमुद्देशाधिकारोक्ताऽपि पुनरिह प्रकृतिनिर्देशप्रसङ्गेन पठिता स्मृत्यर्थं विस्मरणशीलानामिति ॥४३॥

थीणतिगं चेव तहा, नरयदुगं चेव तह य तिरियदुगं ।
इगिविगलिंदियजाई, आयावुज्जोयथावरयं ॥४४॥

प्राग्भवन्यवच्छिन्नायुस्त्रयसत्ताकः सम्भिविरताद्यप्रमत्तान्तगुणस्थानेषु क्षपितदर्शनसप्तको यतिरप्रमत्तः प्रतिसमयानन्तगुणविशुद्धिविवृद्ध्यात्मकयथाप्रवृत्तकरणबलेनापूर्वकरणं प्रविश्य तत्र चातिशयवद्विशुद्धिवशात्कर्माणि क्षपणयोग्यतामापाद्यानिवृत्तिबादरसम्परायगुणस्थानं प्रविशति । तत्र च प्रथममेव द्वितीयतृतीयानष्टौ कषायान् क्षपयितुमारभते, तेषु चार्द्धक्षपितेष्वेताः षोडश प्रकृतीरुत्सादयति । तद्यथा—'स्त्यानर्द्धित्रयं' प्रागुक्तम्, 'नरयदुगं चेव तह य तिरियदुगं' इति, नरकगतिर्नरकानुपूर्वी, तिर्यग्गतिरितिर्यगानुपूर्वी, 'इगिविगलिंदियजाई' इति, एकेन्द्रियजातिस्तथा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातयस्तिस्रः, आतपमुद्योतं स्थावरम् ॥४४॥

---

१ "अविरइ" इत्यपि पाठः ।

साहारण सुहुमं [1]चिय, सोलस पयडीओ [2]होंति नायव्वा।
बीयकसायचउक्कं, तइयकमायं च [3]अट्ठेव ॥४५॥

साधारणं सूक्ष्मं, इत्येताः पोडश प्रकृतयः प्रागुद्दिष्टाः सत्ताव्यवच्छेदमधिकृत्य भवन्ति ज्ञातव्याः। तासां च क्षयानन्तरं शेषमष्टकं क्षपयति, तच्चेदं—द्वितीयकषायचतुष्कम्, तृतीयकषायाश्च चत्वार इति ॥४५॥

एगनपुंसगवेयं, इत्थीवेयं तहेव एगं च।
तह नोकसायछक्कं, पुरिसं [4]कोहं च माणं च ॥४६॥

ततश्चैको नपुंसकवेदः सत्तां प्रतीत्य व्यवच्छिन्नो ज्ञातव्यः। ततः स्त्रीवेद एकः, ततः 'नोकषायषट्कं' हास्यरत्यरतिशोकभयजुगुप्साख्यम्, ततः पुरुषवेदः, ततः संज्वलनः क्रोधः, ततः संज्वलनो मानः, सत्ताव्यवच्छेदमधिकृत्य ज्ञातव्यः ॥४६॥

मायं चिय अनियट्टी, भागं गंतूण संतवोच्छेओ।
लोहं चिय संजलणं, [5]सुहुमकसायंमि वोच्छिन्ना ॥४७॥

पूर्वार्द्धम् ॥ मायायाश्च संज्वलनाया अनिवृत्त्यद्धाया भागं गत्वा सत्ताव्यवच्छेदः। अनिवृत्त्यद्धाभागं गत्वेत्येतद् पूर्वेष्वपि षोडशाष्टैकैकादिष्वपेक्षणीयम्।

'लोभं चिय' इत्यादिपश्चार्द्धम्। लोभस्य संज्वलनस्य सूक्ष्मकषाये सत्तामधिकृत्य व्यवच्छेदः ॥४७॥

खीणकसायदुचरिमे, [6]निद्दं पयलं च हणइ छउमत्थो।
नाणंतरायदसगं दंसणचत्तारि चरिमंमि ॥४८॥

क्षीणकषायो द्विचरमे समये निद्रां प्रचलां च हन्ति, छद्मस्थः सन्नित्यतो द्विचरमसमये तयोः सत्ताव्यवच्छेदः। तथा ज्ञानावरणं पञ्चविधम्, अन्तरायं पञ्चविधम्, इत्येतद्दशकम्, दर्शनावरणानि चत्वारि, इत्येताश्चतुर्दश प्रकृतीः क्षीणकषायच्छद्मस्थश्चरमसमये हन्तीत्यतस्तत्र तासां व्यवच्छेदः ॥४८॥

देवदुग पणसरीरं, पंचसरीरस्स बंधणं चेव।
पंचेव य संघाया, संठाणा तह य छक्कं च ॥४९॥
तिन्नि य अंगोवंगा, संघयणं तह य होइछक्कं च।
पंचेव य [7]वण्णरसा, दो गंधा अट्ठ फासा य ॥५०॥

---

१ "चिय" इत्यपि। २ "हुंति" इत्यपि। ३ "अट्ठ च" इत्यपि पाठः। ४ "कोहा य माणा य" इत्यपि पाठः। ५ "सुहुमसरागम्मि" इत्यपि पाठः। ६ "निद्दा पयला हणइ" इत्यपि पाठः। ७ "वन्नरसा" इत्यपि पाठः।

अगुरुयलहुयचउक्कं, विहायगइदुग थिराथिरं चेव ।
'सुहसुस्सरजुयलावि य, पत्तेयं दूभगं अजसं ॥५१॥
अणएज्जं निमिणं चिय, अपजत्तं तह य [2]नीयगोयं च ।
[3]अन्नयरवेयणियं अजोगिदुचरमंमि वोच्छिण्णा ॥५२॥

गाथाचतुष्टयम् ॥ देवगतिर्देवानुपूर्वी । पञ्च शरीराण्यौदारिकादीनि । पञ्चशरीरस्यौदारिकादेर्बन्धनान्यौदारिकबन्धनादीनि । पञ्च संघातनामान्यौदारिकसङ्घातादीनि । संस्थानषट्कं षट्प्रकारं समचतुरस्रादि । त्रीण्यङ्गोपाङ्गनामान्यौदारिकाङ्गोपाङ्गादीनि । संहननषट्कं षट्प्रकारं वज्रर्षभनाराचादि । 'पंचेव य वण्णरसा' इति, पञ्च वर्णनामानि कृष्णादीनि, पञ्चरसनामानि तिक्तादीनि । द्वे गन्धनामनी सुरभि असुरभि च । अष्टौ स्पर्शनामानि कर्कशादीनि । 'अगुरुयलहुयचउक्कं' इति, अगुरुलघुपघातपराघातोच्छ्वासाख्यं चतुष्कम् । 'विहायगइदुग' इति, प्रशस्तविहायोगतिरप्रशस्तविहायोगतिः, इत्येतद्द्विकं स्थिरमस्थिरं 'सुहसुस्सरजुयलावि य' इति, शुभमशुभं सुस्वरं दुःस्वरमिति । प्रत्येकं दुर्भगमयशःकीर्त्तिरनादेयं निर्माणमपर्याप्तकं नीचैर्गोत्रमन्यतरवेदनीयमनुदयावस्थं सातमसातं वा । इत्येता द्वासप्ततिः प्रकृतयः सत्तामधिकृत्यायोगिद्विचरमसमये व्यवच्छिन्नाः । सर्वा अपि ह्येता अनुदयावस्थाः । ततश्च यद्यपि सयोगिना योगनिरोधं कुर्वता सर्वासामघातिप्रकृतीनां कालतः समैव गुणश्रेणिरुपरचिता तथाऽप्यनुदयावस्थप्रकृतीनां चरमसमये दलिकमुदयवतीषु स्तिबुकसंक्रमेण संक्रान्तत्वात् आत्मानुभावतो नास्ति। तेन द्विचरमसमये तत्सत्ताव्यवच्छेदः ॥४९॥५०॥५१॥५२॥

[4]अन्नयरवेयणीयं, मणुयाऊ मणुयदुवय बोद्धव्वा ।
पंचिंदियजाईवि य, तससुभगाएज्जपज्जत्तं ॥५३॥
बायरजसकित्ती वि य, तित्थयरं उच्चगोययं चेव ।
एया तेरस पयडी, अजोगिचरिमंमि वोच्छिन्ना ॥५४॥

॥ सत्ता सम्मत्ता ॥

गाथाद्वयम् ॥ अन्यतरवेदनीयं सातमसातं वा, यदुदयावस्थं मनुष्यायुः, 'मणुयदुवय बोद्धव्वा' मनुजद्वितयं मनुजगतिः मनुष्यानुपूर्वी पञ्चेन्द्रियजातिः त्रसं सुभगं आदेयं पर्याप्तं बादरं यशःकीर्त्तिस्तीर्थंकरं उच्चैर्गोत्रम्, इत्येतास्त्रयोदश प्रकृतयोऽयोगिचरमसमये व्यवच्छिन्नाः सत्तामधिकृत्य । अपरेषां पुनराचार्याणां मतेन—मनुजानुपूर्व्या द्विचरमसमये सत्ताव्यवच्छेदः उदयाभावात् । उदयवतीनां हि द्वादशानां स्तिबुकसङ्क्रमाभावात्स्वानुभवे दलिकं चरमसमयेऽपि दृश्यत

१ "सुभसुस्सरजुगलदुगं पत्तेयं दूहगं" इत्यपि पाठः । २ "नीयगुत्तं च" इत्यपि पाठः । ३ "अन्नयरं वेअणीयं अजोगिदुचरिमम्मि वोच्छिन्ना" इत्यपि पाठः । ४ "अन्नयरं" इत्यपि पाठः ।

एवेति युक्तस्तासां चरमसमये व्यवच्छेदः । आनुपूर्वीनाम्नां चतुर्णामपि क्षेत्रविपाकित्वाद्भवान्तरापान्तरालगतावेवोदयस्तेन भवस्थस्य नास्ति तदुदयः । तदभावाच्चायोगिद्विचरमसमये मनुजानुपूर्व्या अपि सत्ताव्यवच्छेदः । ततश्च तन्मतेनोल्लिङ्गनगाथादावेवं पाठो द्रष्टव्यः–'**तेवत्तरिं दुचरिमे बारसचरमे अजोगिणो खीणे**' इति। तथा–"**मणएज्जनिमिणमणुयाणुपुव्विपज्जत्तय च नीयं च**" । तथा–"**मणुयाऊ मणुयगइ य बोद्धव्वा**" । तथा–"**एया बारस पयडी अजोगिचरिमंमि वोच्छिन्ना**" इति । तथा चेहाप्युदयाधिकारे द्वादशानामयोगिन्युदय उक्तः '**बारस उदये अजोगंता**' ॥५३॥५४॥

॥ इति सत्ताधिकारः ॥

•

तदेवं भगवता क्रमेण गुणस्थानान्यारोहता संपादितं कर्मप्रकृतिबन्धोदयोदीरणासत्ताव्यवच्छेदाख्यं गुणमभिष्टुत्य स्तवकारः सर्वकर्मबन्धादिव्यवच्छेदोद्भवं भगवतो निरतिशयं गुणं दर्शयन्नात्मनः प्रशस्ताध्यवसायप्रवृत्तिहेतुं प्रार्थनाविशेषमाह—

सो मे तिहुयणमहिओ, सिद्धो बुद्धो निरंजणो निच्चो ।
दिसउ वरनाण[1]लंभं, दंसणसुद्धिं समाहिं च ॥५५॥

॥ कर्मस्तवः समाप्तः ॥

•

'**सः**' भगवानेवमात्मनः संपादितगुणातिशयः '**मे**' मह्यं दिशतु ज्ञानलाभादिकमिति संबन्धः । त्रिभुवनेन देवमनुजासुरलोकत्रयलक्षणेन महितः पूजितः, '**सिद्धः**' निष्ठिताशेषप्रयोजनः, '**बुद्धः**' समस्तवस्तुविषयकेवलबोधभाक्, '**निरञ्जनः**' निर्गताशेषक्लिष्टकर्माञ्जनः, '**नित्यः**' ध्रुवः साद्यनिधनं कालं तत्पर्यायापरित्यागी '**दिशतु**' ददातु वरमुत्तमं ज्ञानं सम्यग्ज्ञानरूपं मतिज्ञानादिकेवलज्ञानान्तं तस्य लाभमप्राप्तप्राप्तिलक्षणम्, तथा दर्शनं सम्यक्त्वं तस्य शुद्धिं दर्शनमोहनीयकर्मापगमकृतं वैमल्यम्, तथा '**समाधिं**' चारित्रविशुद्धात्मकमिति ॥५५॥

स्मृत्यनुसारेण मया, यद्गदितमिहोनमधिकमागमतः । तत्क्षन्तव्यं [2]श्रुतशु-द्धबुद्धिभिः शोधनीयं च॥१॥
इति श्वेतपटाचा[3]र्य–गोविन्दगणिना कृता । कर्मस्तवस्य टीकेयं, देवनागगुरोर्गिरा ॥२॥
अनुष्टुप्छन्दसां प्रायः, संकलय्यानुवर्णितम् । सहस्रमेकं श्लोकानां, नवत्युत्तरमेव च ॥३॥

॥ इति श्वेतपटाचार्यश्रीमद्गोविन्दगणिकृता कर्मस्तवटीका समाप्ता ॥

---

१ "लाभं" इत्यपि पाठः । २ 'सर्व, सुबु–" इत्यपि । ३ "र्य श्रीगोविन्देन निर्मिता" इत्यपि पाठ. ॥

समाप्तोऽयं सटीकः कर्मस्तवाख्यो द्वितीयः कर्मग्रन्थः

॥ ॐ ह्रीँ अर्हं श्री शंखेश्वरपार्श्वनाथाय नमः ॥

॥ न्यायाम्भोनिधि–प्रतिभाप्रतिकृति–श्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

॥ सकलागमरहस्यवेदिश्रीमदाचार्यविजयदानसूरीश्वरेभ्यो नमः ॥

॥ कर्मसाहित्यनिष्णातश्रीमदाचार्यविजयप्रेमसूरीश्वरेभ्यो नमः ॥

# बन्धस्वामित्वाख्यस्तृतीयः कर्मग्रन्थः ।

## श्रीमद्धरिभद्रसूरिविरचितव्याख्ययोपेतः ।



गत्यादिमार्गणास्थान-बन्धस्वामित्वदेशकम् ।
नत्वा वीरं जिनं वक्ष्ये, बन्धस्वामित्ववृत्तिकाम् ॥१॥

इह स्वपरोपकाराय यथार्थाभिधानं बन्धस्वामित्वप्रकरणमारिप्सुराचार्यो मङ्गलादिप्रतिपादकं गाथासूत्रमिदमाह—

**नमिऊण वद्धमाणं, 'गइयाईठाणदेसयं सिद्धं ।**
**गइयाइएसु 'वोच्छं, बंधस्सामित्तमोघेणं ॥१॥**

(हारि०) व्याख्या-इह प्रथमार्द्धेन मङ्गलं द्वितीयार्द्धेनाभिधेयं साक्षादुक्तम् । प्रयोजनसंबन्धौ तु सामर्थ्यगम्यौ, इति गाथासमुदायार्थः । अवयवार्थस्त्वयम्–'वक्ष्ये' अभिधास्ये, किं तद् ? 'बन्धस्वामित्वं' मिथ्यात्वादिभिर्बन्धहेतुभिः कर्मपरमाणूनां जीवप्रदेशैः सह संबन्धो बन्धस्तस्य स्वामित्वमाधिपत्यं बन्धस्वामित्वं, जीवानामिति गम्यते । केषु ? 'गइयाइएसु' इति गत्यादिमार्गणास्थानेषु, केन ? 'ओघेन' सामान्येन, किं कृत्वा ? 'नत्वा' प्रणम्य, कम् ? 'वर्द्धमानं' स्वकुलसमृद्धिवृद्धिकारकत्वेन पितृभ्यां व्यवस्थापितैवंविधनामकं चरमतीर्थाधिपतिं, शेषजिनत्यागेन च वर्द्धमानग्रहणं वर्त्तमानतीर्थाधिपतित्वेन परमोपकारित्वात् । कीदृशम् ? गतिरादिर्येषां तानि गत्यादीनि तानि च तानि स्थानानि च गत्यादिस्थानानि तेषां देशकः प्रतिपादको गत्यादिस्थानदेशकस्तम् तथा सितं बद्धं ध्मातं भस्मसात्कृतमष्टप्रकारं कर्म येन स सिद्धस्तम् । इति गाथार्थः ॥१॥

गत्यादीन्येवाह—

**गइ इंदिए य काए, जोए वेए कसाय नाणे य ।**
**संजम दंसण लेसा, भव सम्मे सण्णि आहारे ॥२॥**

---

१ "गइयाइट्ठा०" इत्यपि पाठः । २ "वुच्छं" इत्यपि ।

एवेति युक्तस्तासां चरमसमये व्यवच्छेदः । आनुपूर्वीनाम्नां चतुर्णामपि क्षेत्रविपाकित्वाद्भवान्तरापान्तरालगतावेवोदयस्तेन भवस्थस्य नास्ति तदुदयः । तदभावाच्चायोगिद्विचरमसमये मनुजानुपूर्व्या अपि सत्ताव्यवच्छेदः । ततश्च तन्मतेनोल्लिङ्गनगाथादावेवं पाठो द्रष्टव्यः—**'तेवत्तरिं दुचरिमे बारसचरमे अजोगिणो खीणे'** इति । तथा—**"अणएज्जनिमिणमणुयाणुपुव्विपज्जत्तय च नीयं च"** । तथा—**"मणुयाऊ मणुयगइ य बोद्धव्वा"** । तथा—**"एया बारस पयडी अजोगिचरिमंमि वोच्छिन्ना"** इति । तथा चेहाप्युदयाधिकारे द्वादशानामयोगिन्युदय उक्तः **'बारस उदये अजोगंता'** ॥५३॥५४॥

॥ इति सत्ताधिकारः ॥

•

तदेवं भगवता क्रमेण गुणस्थानान्यारोहता संपादितं कर्मप्रकृतिबन्धोदयोदीरणासत्ताव्यवच्छेदाख्यं गुणमभिष्टुत्य स्तवकारः सर्वकर्मबन्धादिव्यवच्छेदोद्भवं भगवतो निरतिशयं गुणं दर्शयन्नात्मनः प्रशस्ताध्यवसायप्रवृत्तिहेतुं प्रार्थनाविशेषमाह—

सो मे तिहुयणमहिओ, सिद्धो बुद्धो निरंजणो निच्चो ।
दिसउ वरनाण[1]लंभं, दंसणसुद्धिं समाहिं च ॥५५॥

॥ कर्मस्तवः समाप्तः ॥

•

**'सः'** भगवानेवमात्मनः संपादितगुणातिशयः **'मे'** मह्यं दिशतु ज्ञानलाभादिकमिति संबन्धः । त्रिभुवनेन देवमनुजासुरलोकत्रयलक्षणेन महितः पूजितः, **'सिद्धः'** निष्ठिताशेषप्रयोजनः, **'बुद्धः'** समस्तवस्तुविषयकेवलबोधभाक्, **'निरञ्जनः'** निर्गताशेषक्लिष्टकर्मप्रक्षणः, **'नित्यः'** ध्रुवः साद्यनिधनं कालं तत्पर्यायापरित्यागी **'दिशतु'** ददातु वरमुत्तमं ज्ञानं सम्यग्ज्ञानरूपं मतिज्ञानादिकेवलज्ञानान्तं तस्य लाभमप्राप्तप्राप्तिलक्षणम्, तथा दर्शनं सम्यक्त्वं तस्य शुद्धिं दर्शनमोहनीयकर्मापगमकृतं वैमल्यम्, तथा **'समाधिं'** चारित्रविशुद्धात्मकमिति ॥५५॥

स्मृत्यनुसारेण मया, यद्गदितमिहोनमधिकमागमतः । तत्क्षन्तव्यं [2]श्रुतशु-द्धबुद्धिभिः शोधनीयं च ॥१॥
इति श्वेतपटाचा[3]र्य—गोविन्दगणिना कृता । कर्मस्तवस्य टीकेयं, देवनागगुरोर्गिरा ॥२॥
अनुष्टुप्छन्दसां प्रायः, संकलय्यानुवर्णितम् । सहस्रमेकं श्लोकानां, नवत्युत्तरमेव च ॥३॥

॥ इति श्वेतपटाचार्यश्रीमद्गोविन्दगणिकृता कर्मस्तवटीका समाप्ता ॥

---

१ "लाभं" इत्यपि पाठः । २ "सर्व, सुबु—" इत्यपि । ३ "र्यं श्रीगोविन्देन निर्मिता" इत्यपि पाठ· ॥

समाप्तोऽयं सटीकः कर्मस्तवाख्यो द्वितीयः कर्मग्रन्थः

॥ ॐ ह्रीँ अर्हँ श्री शंखेश्वरपार्श्वनाथाय नमः ॥

॥ न्यायाम्भोनिधि–प्रतिभाप्रतिकृति–श्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

॥ सकलागमरहस्यवेदिश्रीमदाचार्यविजयदानसूरीश्वरेभ्यो नमः ॥

॥ कर्मसाहित्यनिष्णातश्रीमदाचार्यविजयप्रेमसूरीश्वरेभ्यो नमः ॥

# बन्धस्वामित्वाख्यस्तृतीयः कर्मग्रन्थः ।

## श्रीमद्धरिभद्रसूरिविरचितव्याख्ययोपेतः ।



गत्यादिमार्गणास्थान-बन्धस्वामित्वदेशकम् ।
नत्वा वीरं जिनं वक्ष्ये, बन्धस्वामित्ववृत्तिकाम् ॥१॥

इह स्वपरोपकाराय यथार्थाभिधानं बन्धस्वामित्वप्रकरणमारिप्सुराचार्यो मङ्गलादिप्रतिपादकं गाथासूत्रमिदमाह—

**नमिऊण वद्धमाणं, [1]गइयाईठाणदेसयं सिद्धं ।**
**गइयाइएसु [2]वोच्छं, बंधस्सामित्तमोघेणं ॥१॥**

(हारि०) व्याख्या-इह प्रथमार्द्धेन मङ्गलं द्वितीयार्द्धेनाभिधेयं साक्षादुक्तम् । प्रयोजनसंबन्धौ तु सामर्थ्यगम्यौ, इति गाथासमुदायार्थः । अवयवार्थस्त्वयम्–'वक्ष्ये' अभिधास्ये, किं तद् ? 'बन्धस्वामित्वं' मिथ्यात्वादिभिर्बन्धहेतुभिः कर्मपरमाणूनां जीवप्रदेशैः सह संबन्धो बन्धस्तस्य स्वामित्वमाधिपत्यं बन्धस्वामित्वं, जीवानामिति गम्यते । केषु ? 'गइयाइएसु' इति गत्यादिमार्गणास्थानेषु, केन ? 'ओघेन' सामान्येन, किं कृत्वा ? 'नत्वा' प्रणम्य, कम् ? 'वर्द्धमानं' स्वकुलसमृद्धिवृद्धिकारकत्वेन पितृभ्यां व्यवस्थापितैवंविधनामकं चरमतीर्थाधिपतिं, शेषजिनत्यागेन च वर्द्धमानग्रहणं वर्त्तमानतीर्थाधिपतित्वेन परमोपकारित्वात् । कीदृशम् ? गतिरादिर्येषां तानि गत्यादीनि तानि च तानि स्थानानि च गत्यादिस्थानानि तेषां देशकः प्रतिपादको गत्यादिस्थानदेशकस्तम् तथा सितं बद्धं ध्मातं भस्मसात्कृतमष्टप्रकारं कर्म येन स सिद्धस्तम् । इति गाथार्थः ॥१॥

गत्यादीन्येवाह—

**गइ इंदिए य काए, जोए वेए कसाय नाणे य ।**
**संजम दंसण लेसा, भव सम्मे सण्णि आहारे ॥२॥**

१ "गइयाइट्ठा०" इत्यपि पाठः । २ "वुच्छं" इत्यपि ।

(हारि०)व्याख्या–तत्र **'गतयो'** नरकगत्याद्याश्चतस्रः। **'इन्द्रियाणि'** स्पर्शनादीनि पञ्च। **'कायाः'** पृथिव्यादयः षट्। **'योगाः'** सत्यमनःप्रभृतयः पञ्चदश। **'वेदाः'** स्त्रीवेदादयस्त्रयः। **'कषायाः'** क्रोधादयश्चत्वारः **'ज्ञानानि'** मतिज्ञानादीनि पञ्च । इहोपलक्षणत्वेन विपक्षस्यापि संग्रहादज्ञानान्यपि मत्यज्ञानादीनि त्रीणि ग्राह्याणि। एवमुत्तरत्रापि क्वाप्युपलक्षणव्याख्यानं द्रष्टव्यम्। ननु ज्ञाने प्रस्तुते उपलक्षणत्वेन किमर्थमज्ञानत्रयग्रहणं कृतम् ?, सत्यं, सौम्य ! चतुर्दशमार्गणास्थानेषु प्रत्येकं सर्वेषां सांरिकसत्त्वसंग्रहार्थम्। तथा **'संयमः'** सामायिकादिः पञ्चप्रकारः। उपलक्षणत्वाद्देशसंयमासंयमौ च, इत्येते सप्तात्रापि ग्राह्याः। **'दर्शनानि'** चक्षुर्दर्शनादीनि चत्वारि। **'लेश्याः'** कृष्णलेश्याद्याः षट्। भवपदेन भव्याभव्यौ द्वौ ग्राह्यौ। **'सम्यक्त्वानि'** वेदकादीनि त्रीणि। संज्ञिपदेन संज्ञ्यसंज्ञिनौ द्वौ। आहारकपदेन आहारकानाहारकौ द्वौ गृहीतौ। इति द्वारगाथासमासार्थः ॥२॥

इह यद्यपि गत्यादिषु बन्धस्वामित्वं वक्ष्यामीति प्रागुक्तं तथाऽपि न तद्गुणस्थानकनिरपेक्षं वक्ष्यते। गुणस्थानकानामपि बन्धस्वामित्ववद्गत्याद्याश्रितत्वादिति गुणस्थानकानि। तथा गत्याद्याश्रितत्वेनैव सुरनिरयनरतिरश्चां पर्याप्तापर्याप्तकजीवस्थानयोरपि बन्धस्वामित्वस्य वक्ष्यमाणत्वादिति जीवस्थानानि च गतिषु दर्शयन्नाह—

## गुणठाणा सुरनिरए, चउ पण [1]तिरिएसु चउदस नरेसु।
## जीवट्ठाणा तिरिए, चउदस सेसेसु [2]दुग दुगं जाण ॥३॥ गीतिरियम्

(हारि०) व्याख्या–इह यथासंभवं सर्वत्र लिङ्गव्यत्ययविभक्तिलोपादिकं प्राकृतत्वाद्द्रष्टव्यम्। ततश्च गुणस्थानकानि–"**मिच्छद्दिट्ठी सासा-यणे य तह सम्ममिच्छिद्दिट्ठी य । अविरयसम्मद्दिट्ठी, विरयाविरए पमत्ते य ॥१॥ तत्तो य अप्पमत्ते, नियट्टि अनियट्टिबायरे सुहुमे । उवसंतखीणमोहे, होइ सजोगी अजोगी य ॥२॥**" इति नामकानि। एतानि च क्व कियन्ति भवन्ति ? इत्याह–सुरनारकयोश्चत्वारि प्रत्येकमाद्यानि जानीहि, इति संबन्धः। तथा पञ्च तिर्यक्षु आद्यान्येव। तथा चतुर्दश नरेषु। इति योजितानि चतसृष्वपि गतिषु गुणस्थानकानि, सम्प्रति तास्वेव जीवस्थानानि योजयन्नाह–जीवस्थानानि–"**सुहुमा बायर बेइं-दिया य तेइंदिया य चउरिंदी । अस्सण्णी सण्णी खलु, चउदस पज्जत्त अपजत्ता ॥१॥**" इत्येवंरूपाणि। एतानि च केषु कियन्ति भवन्ति ? इत्याह तिर्यक्षु चतुर्दश। **'शेषेषु'** सुरनरनारकेषु द्विकं द्विकं जीवस्थानयोरिति शेषः । पर्याप्तापर्याप्तकसंज्ञिपञ्चेन्द्रियलक्षणं **'जानीहि'** अवबुध्यस्वेति। ननु संमूर्च्छनजापर्याप्तलक्षणं नरेषु तृतीयमपि जीवस्थानकमस्ति तत्कथमत्र न गृहीतम् ?, इत्यत्रोच्यते–तिर्यग्ग्रहणेन तेषां ग्रहणादिति न दोषः। इति गाथार्थः ॥३॥

---

१ 'तिरिए चउद्दस नरेसु" इत्यपि पाठः। २ "जाण दुगं" (?) इत्यपि पाठः।

इह बन्धस्वामित्वं वक्ष्य इत्युक्तम्। बन्धश्च कर्मप्रकृतीनां भवति, अतः शिष्यहितार्थं त्रेऽनुक्ता अपि प्रथमं प्रकृतयः सर्वाः प्ररूप्यन्ते, [1]ताश्चैताः–"दसण १ नाणावरण २ न्तराय ३ मोहा ४ ऽऽउ ५ गोय ६ वेयणियं ७। नामं ८ च नव १ पण २ पण ऽट्ठवीस ४ चउ ५ दु ६ दु ७ बियाल ८ विहं ॥१॥ नयणेयरोहिकेवल दंसणआ-रणयं [2]भवे चउहा। निद्दापयलाहिं छहा, निद्दाइदुरुत्तथीणद्धी ॥२॥ नाणावरणं मइसुयओहिमणोनाणकेवलावरणं। विग्घं दाणे लाभे, भोगुवभोगेसु विरिए य ॥३॥ सोलस कसाय नव नोकसाय दंसणतिगं [3]च मोहणियं। नरयतिरिनरसुराऊ, नीउच्चं सायमस्सायं ॥४॥ गइ १ जाइ २ तणु ३ उवंगा ४, बंधण ५ संघाय-णाणि ६ संघयणा ७। संठाण ८ वण्ण ९ गंध १० रस ११ फास १२ अणुपुव्वि १४ विहगगई १४ ॥५॥ पिंडपयडित्ति चउदस, परघाउज्जोयआयवुस्सासं। अगु-रुलहुतित्थनिमिणोवघायमिइ अड पत्तेया ॥६॥ तसबायरपज्जत्तं, पत्तेय थिरं सुभं च सुभगं च। [4]सुसराऽऽएज्जजसं तसदसगं थावरदसं तु इमं ॥७॥ थावरसुहुम अपज्ज, साहारणअथिरअसुभदुभगाणि। दूसरणाएज्जाजसमिय नामे सेयरा वीसं ॥८॥ तसचउ थिरछक्कं अथिरछक्क सुहुमतिग थावरचउक्कं। सुभगतिगाइविभासा, पयडीण तयाइ संखाहिं ॥९॥ गइयाईण य कमसो, चउ १ पण २ पण ३ ति ४ पण ५ पंच ६ छ ७ छक्कं ८। पण ९ दुग १० पण ११ ऽट्ठ १२ चउ १३ दुग १४–मिय उत्तरभेय पणसट्ठी ॥१०॥ निरयतिरिनरसुरगई, इगबियतियचउपणिंदि जाईओ। ओरालियवेउव्वियआहारगतेयकम्मइया ॥११॥ पढमतिगुणुवंगा, बंधण संघायणा य तणुनामा। सुत्ते सत्तिविसेसो संघयणमिहट्ठिनिचउत्ति ॥१२॥ छव्हा संघयणं वज्जरिसभनाराय १ वज्जनारायं २। नाराय ३ मद्धनाराय ४ कीलिया ५ तह य छेवट्ठं ६ ॥१३॥ समचउरंसं १ नग्गोह २ साइ ३ खुज्जाणि ४ वामणं ५ हुंडं ६। संठाणा वण्णा किण्हनीललोहियहलिद्दसिया ॥१४॥ सुरभि १ दुरभी २ रसा पण,तित्त १ कडु २ कसाय ३ अंबिला ४ महुरा ५। फासा गुरु १ लहु २ मिउ ३ खर ४ सी ५ उण्ह ६ सिणिद्ध ७ रुक्ख ८ ऽट्ठ ॥१५॥ चउह गइव्वणु-पुव्वी, दुविहा य सुहासुहा विहायगई। गइअणुपुव्वी उ दुगं, तिगं तु तं चिय नियाउजुयं ॥१६॥ इय तेणउई संते बंधणपण्णरसगेण तिसयं वा। वण्णाइभेय १६ बंधण १५ संघाय ५ विणा उ सत्तट्ठी ॥१७॥ सा बंधुदए बंधणसंघाया निय-तणुग्गहणगहिया। वण्णाइविगप्पा वि हु, न य बंधे सम्ममीसाइ ॥१८॥ वेउ-

१ "ताश्चेमाः" इत्यपि पाठः। २ "हवइ" इत्यपि पाठः। ३ "ति" इत्यपि। ४ "सूसरआएज्जजसं" इत्यपि मुद्रितप्रतौ।

(हारि०) व्याख्या–तत्र **'गतयो'** नरकगत्याद्याश्चतस्रः। **'इन्द्रियाणि'** स्पर्शनादीनि पञ्च। **'कायाः'** पृथिव्यादयः षट्। **'योगाः'** सत्यमनःप्रभृतयः पञ्चदश। **'वेदाः'** स्त्रीवेदादयस्त्रयः। **'कषायाः'** क्रोधादयश्चत्वारः **'ज्ञानानि'** मतिज्ञानादीनि पञ्च। इहोपलक्षणत्वेन विपक्षस्यापि संग्रहादज्ञानान्यपि मत्यज्ञानादीनि त्रीणि ग्राह्याणि। एवमुत्तरत्रापि क्वाप्युपलक्षणव्याख्यानं द्रष्टव्यम्। ननु ज्ञाने प्रस्तुते उपलक्षणत्वेन किमर्थमज्ञानत्रयग्रहणं कृतम्?, सत्यं, सौम्य! चतुर्दशमार्गणास्थानेषु प्रत्येकं सर्वेषां सांरिकसत्त्वसंग्रहार्थम्। तथा **'संयमः'** सामायिकादिः पञ्चप्रकारः। उपलक्षणत्वाद्देशसंयमासंयमौ च, इत्येते सप्तात्रापि ग्राह्याः। **'दर्शनानि'** चक्षुर्दर्शनादीनि चत्वारि। **'लेश्याः'** कृष्णलेश्याद्याः षट्। भवपदेन भव्याभव्यौ द्वौ ग्राह्यौ। **'सम्यक्त्वानि'** वेदकादीनि त्रीणि। संज्ञिपदेन संज्ञ्यसंज्ञिनौ द्वौ। आहारकपदेन आहारकानाहारकौ द्वौ गृहीतौ। इति द्वारगाथासमासार्थः ॥२॥

इह यद्यपि गत्यादिषु बन्धस्वामित्वं वक्ष्यामीति प्रागुक्तं तथाऽपि न तद्गुणस्थानकनिरपेक्षं वक्ष्यते। गुणस्थानकानामपि बन्धस्वामित्ववद्गत्याद्याश्रितत्वादिति गुणस्थानकानि। तथा गत्याद्याश्रितत्वेनैव सुरनिरयनरतिरश्चां पर्याप्तापर्याप्तकजीवस्थानयोरपि बन्धस्वामित्वस्य वक्ष्यमाणत्वादिति जीवस्थानानि च गतिषु दर्शयन्नाह—

गुणठाणा सुरनिरए, चउ पण [1]तिरिएसु चउदस नरेसु।
जीवट्ठाणा तिरिए, चउदस सेसेसु [2]दुग दुगं जाण ॥३॥ गीतिरियम्

(हारि०) व्याख्या–इह यथासंभवं सर्वत्र लिङ्गव्यत्ययविभक्तिलोपादिकं प्राकृतत्वाद्द्रष्टव्यम्। ततश्च गुणस्थानकानि–"**मिच्छद्दिट्ठी सासायणे य तह सम्ममिच्छदिट्ठी य। अविरयसम्मदिट्ठी, विरयाविरए पमत्ते य ॥१॥ तत्तो य अप्पमत्ते, नियट्टि अनियट्टिबायरे सुहुमे। उवसंतखीणमोहे, होइ सजोगी अजोगी य ॥२॥**" इति नामकानि। एतानि च क्व कियन्ति भवन्ति? इत्याह–सुरनारकयोश्चत्वारि प्रत्येकमाद्यानि जानीहि, इति संबन्धः। तथा पञ्च तिर्यक्षु आद्यान्येव। तथा चतुर्दश नरेषु। इति योजितानि चतसृष्वपि गतिषु गुणस्थानकानि, सम्प्रति तास्वेव जीवस्थानानि योजयन्नाह–जीवस्थानानि–"**सुहुमा बायर बेइं-दिया य तेइंदिया य चउरिंदी। अस्सण्णी सण्णी खलु, चउदस पज्जत्त अपजत्ता ॥१॥**" इत्येवंरूपाणि। एतानि च केषु कियन्ति भवन्ति? इत्याह तिर्यक्षु चतुर्दश। **'शेषेषु'** सुरनरनारकेषु द्विकं द्विकं जीवस्थानयोरिति शेषः। पर्याप्तापर्याप्तकसंज्ञिपञ्चेन्द्रियलक्षणं **'जानीहि'** अवबुध्यस्वेति। ननु संमूर्च्छनजापर्याप्तलक्षणं नरेषु तृतीयमपि जीवस्थानकमस्ति तत्कथमत्र न गृहीतम्?, इत्यत्रोच्यते–तिर्यग्ग्रहणेन तेषां ग्रहणादिति न दोषः। इति गाथार्थः ॥३॥

---

१ 'तिरिए चउद्दस नरेसु" इत्यपि पाठः। २ "जाण दुगं" (?) इत्यपि पाठः।

इह बन्धस्वामित्वं वक्ष्य इत्युक्तम् । बन्धश्च कर्मप्रकृतीनां भवति, अतः शिष्यहितार्थं सूत्रेऽनुक्ता अपि प्रथमं प्रकृतयः सर्वाः प्ररूप्यन्ते, [1]ताश्चैताः—"दसण १ नाणावरण २ ऽन्तराय ३ मोहा ४ ऽऽउ ५ गोय ६ वेयणियं ७ । नामं ८ च नव १ पण २ पण ३ ऽट्ठवीस ४ चउ ५ दु ६ दु ७ बियाल ८ विहं ॥१॥ नयणेयरोहिकेवल दंसणआवरणयं [2]भवे चउहा । निद्दापयलाहिं छहा, निद्दाइदुरुत्तथीणद्धी ॥२॥ नाणावरणं मइसुयओहिमणोनाणकेवलावरणं । विग्घं दाणे लाभे, भोगुवभोगेसु विरिए य ॥३॥ सोलस कसाय नव नोकसाय दंसणतिगं [3]च मोहणियं । नरयतिरिनरसुराऊ, नीउच्चं सायमस्सायं ॥४॥ गइ १ जाइ २ तणु ३ उवंगा ४, बंधण ५ संघायणाणि ६ संघयणा ७ । संठाण ८ वण्ण ९ गंध १० रस ११ फास १२ अणुपुव्वि १४ विहगगई १४ ॥५॥ पिंडपयडित्ति चउदस, परघाउज्जोयआयवुस्सासं । अगुरुलहुतित्थनिमिणोवघायमिइ अट्ठ पत्तेया ॥६॥ तसबायरपज्जत्तं, पत्तेय थिरं सुभं च सुभगं च । [4]सुसराऽऽएज्जजसं तसदसगं थावरदसं तु इमं ॥७॥ थावरसुहुम अपज्ज, साहारणअथिरअसुभदुभगाणि । दूसरणाएज्जाजसमिय नामे सेयरा वीसं ॥८॥ तसचउ थिरछक्कं अथिरछक्क सुहुमतिग थावरचउक्कं । सुभगतिगाइविभासा, पयडोण तयाइ सत्वाहिं ॥९॥ गइयाईण य कमसो, चउ १ पण २ पण ३ ति ४ पण ५ पंच ६ छ ७ छक्कं ८ । पण ९ दुग १० पण ११ ऽट्ठ १२ चउ १३ दुग १४–मिय उत्तरभेय पणसट्ठी ॥१०॥ निरयतिरिनरसुरगई, इगबियतियचउपणिंदिआईओ । ओरालियवेउव्वियआहारगतेयकम्मइया ॥११॥ पढमतिणुणुवंगा, बंधण संघायणा य तणुनामा । सुरो सत्तिविसेसो संघयणमिहट्ठिनिचउत्ति ॥१२॥ छद्धा संघयणं वज्जरिसभनाराय १ वज्जनारायं २ । नाराय ३ मद्धनाराय ४ कीलिया ५ तह य छेवट्ठं ६ ॥१३॥ समचउरंसं १ नग्गोह २ साइ ३ खुज्जाणि ४ वामणं ५ हुंडं ६ । संठाणा वण्णा किण्हनीललोहियहलिद्दसिया ॥१४॥ सुरभि १ दुरभी २ रसा पण, तित्त १ कडु २ कसाय ३ अंबिला ४ महुरा ५ । फासा गुरु १ लहु २ मिउ ३ खर ४ सी ५ उण्ह ६ सिणिद्ध ७ रुक्ख ८ ऽट्ठ ॥१५॥ चउह गइव्वणुपुव्वी, दुविहा य सुहासुहा विहायगई । गइअणुपुव्वी उ दुगं, तिगं तु तं चिय नियाउजुयं ॥१६॥ इय तेणउई संते बंधणपण्णरसगेण तिसयं वा । वण्णाइभेय १६ बंधण १५ संघाय ५ विणा उ सत्तट्ठी ॥१७॥ सा बंधुदए बंधणसंघाया नियतणुग्गहणगहिया । वण्णाइविगप्पा वि हु, न य बंधे सम्ममीसाइ ॥१८॥ वेउ-

१ "ताश्चेमाः" इत्यपि पाठः । २ "हवइ" इत्यपि पाठः । ३ "ति" इत्यपि । ४ "सूसरआएज्जजसं" इत्यपि मुद्रितप्रतौ ।

(हारि०)व्याख्या–तत्र 'गतयो' नरकगत्याद्याश्चतस्रः। 'इन्द्रियाणि' स्पर्शनादीनि पञ्च। 'कायाः' पृथिव्यादयः षट्। 'योगाः' सत्यमनःप्रभृतयः पञ्चदश। 'वेदाः' स्त्रीवेदादयस्त्रयः। 'कषायाः' क्रोधादयश्चत्वारः 'ज्ञानानि' मतिज्ञानादीनि पञ्च। इहोपलक्षणत्वेन विपक्षस्यापि संग्रहादज्ञानान्यपि मत्यज्ञानादीनि त्रीणि ग्राह्याणि। एवमुत्तरत्रापि क्वाप्युपलक्षणव्याख्यानं द्रष्टव्यम्। ननु ज्ञाने प्रस्तुते उपलक्षणत्वेन किमर्थमज्ञानत्रयग्रहणं कृतम्?, सत्यं, सौम्य! चतुर्दशमार्गणास्थानेषु प्रत्येकं सर्वेषां सारिकसत्त्वसंग्रहार्थम्। तथा 'संयमः' सामायिकादिः पञ्चप्रकारः। उपलक्षणत्वाद्देशसंयमासंयमौ च, इत्येते सप्तात्रापि ग्राह्याः। 'दर्शनानि' चक्षुर्दर्शनादीनि चत्वारि। 'लेश्याः' कृष्णलेश्याद्याः षट्। भवपदेन भव्याभव्यौ द्वौ ग्राह्यौ। 'सम्यक्त्वानि' वेदकादीनि त्रीणि। संज्ञिपदेन संज्ञ्यसंज्ञिनौ द्वौ। आहारकपदेन आहारकानाहारकौ द्वौ गृहीतौ। इति द्वारगाथासमासार्थः ॥२॥

इह यद्यपि गत्यादिषु बन्धस्वामित्वं वक्ष्यामीति प्रागुक्तं तथाऽपि न तद्गुणस्थानकनिरपेक्षं वक्ष्यते। गुणस्थानकानामपि बन्धस्वामित्ववद्गत्याद्याश्रितत्वादिति गुणस्थानकानि। तथा गत्याद्याश्रितत्वेनैव सुरनिरयनरतिरश्चां पर्याप्तापर्याप्तकजीवस्थानयोरपि बन्धस्वामित्वस्य वक्ष्यमाणत्वादिति जीवस्थानानि च गतिषु दर्शयन्नाह—

गुणठाणा सुरनिरए, चउ पण [1]तिरिएसु चउदस नरेसु।
जीवट्ठाणा तिरिए, चउदस सेसेसु [2]दुग दुगं जाण ॥३॥ गीतिरियम्

(हारि०) व्याख्या–इह यथासंभवं सर्वत्र लिङ्गव्यत्ययविभक्तिलोपादिकं प्राकृतत्वाद्दृष्टव्यम्। ततश्च गुणस्थानकानि–"मिच्छ दिट्ठी सासा-यणे य तह सम्ममिच्छदिट्ठी य। अविरयसम्मदिट्ठी, विरयाविरए पमत्ते य ॥१॥ तत्तो य अप्पमत्ते, नियट्टि अनियट्टिबायरे सुहुमे। उवसंतखीणमोहे, होइ सजोगी अजोगी य ॥२॥" इति नामकानि। एतानि च क्व कियन्ति भवन्ति? इत्याह–सुरनारकयोश्चत्वारि प्रत्येकमाद्यानि जानीहि, इति संबन्धः। तथा पञ्च तिर्यक्षु आद्यान्येव। तथा चतुर्दश नरेषु। इति योजितानि चतसृष्वपि गतिषु गुणस्थानकानि, सम्प्रति तास्वेव जीवस्थानानि योजयन्नाह–जीवस्थानानि–"सुहुमा बायर बेइं-दिया य तेइंदिया य चउरिंदी। अस्सण्णी सण्णी खलु, चउदस पज्जत्त अपज्जत्ता ॥१॥" इत्येवंरूपाणि। एतानि च केषु कियन्ति भवन्ति? इत्याह तिर्यक्षु चतुर्दश। 'शेषेषु' सुरनरनारकेषु द्विकं द्विकं जीवस्थानयोरिति शेषः। पर्याप्तापर्याप्तकसंज्ञिपञ्चेन्द्रियलक्षणं 'जानीहि' अवबुध्यस्वेति। ननु संमूर्च्छनजापर्याप्तलक्षणं नरेषु तृतीयमपि जीवस्थानकमस्ति तत्कथमत्र न गृहीतम्?, इत्यत्रोच्यते–तिर्यग्ग्रहणेन तेषां ग्रहणादिति न दोषः। इति गाथार्थः ॥३॥

---

१ 'तिरिए चउसग नरेसु" इत्यपि पाठः। २ "जाण दुगं" (?) इत्यपि पाठः।

इह बन्धस्वामित्वं वक्ष्य इत्युक्तम् । बन्धश्च कर्मप्रकृतीनां भवति, अतः शिष्यहितार्थं सूत्रेऽनुक्ता अपि प्रथमं प्रकृतयः सर्वाः प्ररूप्यन्ते, [1]ताश्चैताः–"दंसण १ नाणावरण २ ऽन्तराय ३ मोहा ४ ऽऽउ ५ गोय ६ वेयणियं ७ । नामं ८ च नव १ पण २ पण ३ ऽट्ठवीस ४ चउ ५ दु ६ दु ७ बियाल ८ विहं ॥१॥ नयणेयरोहिकेवल दंसणआवरणयं [2]भवे चउहा । निद्दापयलाहिं छहा, निद्दाइदुरुत्तथीणद्धी ॥२॥ नाणावरणं मइसुयओहिमणोनाणकेवलावरणं । विग्घं दाणे लाभे, भोगुवभोगेसु विरिए य ॥३॥ सोलस कसाय नव नोकसाय दंसणतिगं [3]च मोहणियं । नरयतिरिनरसुराऊ, नीउच्चं सायमस्सायं ॥४॥ गइ १ जाइ २ तणु ३ उवंगा ४, बंधण ५ सघायणाणि ६ संघयणा ७ । संठाण ८ वण्ण ९ गंध १० रस ११ फास १२ अणुपुव्वि १३ विहगगई १४ ॥५॥ पिंडपयडित्ति चउदस, परघाउज्जोयआयवुस्सासं । अगुरुलहुतित्थनिमिणोवघायमिइ अट्ठ पत्तेया ॥६॥ तसबायरपज्जत्तं, पत्तेय थिरं सुभं च सुभगं च । [4]सुसराऽऽएज्जजसं तसदसगं थावरदसं तु इमं ॥७॥ थावरसुहुम अपज्ज, साहारणअथिरअसुभदुभगाणि । दूसरणाएज्जाजसमिय नामे सेयरा वीसं ॥८॥ तसचउ थिरछक्कं अथिरछक्क सुहुमतिग थावरचउक्कं । सुभगतिगाइविभासा, पयडीण तयाइ सव्वाहिं ॥९॥ गइयाईण य कमसो, चउ १ पण २ पण ३ ति ४ पण ५ पंच ६ छ ७ छक्कं ८ । पण ९ दुग १० पण ११ ऽट्ठ १२ चउ १३ दुग १४–मिय उत्तरभेय पणसट्ठी ॥१०॥ निरयतिरिनरसुरगई, इगबियतियचउपणिंदिजाईओ । ओरालियवेउव्वियआहारगतेयकम्मइया ॥११॥ पढमतिणुणुवंगा, बंधण संघायणा य तणुनामा । सुरो सत्तिविसेसो संघयणमिहट्ठिनिचउत्ति ॥१२॥ छद्धा संघयणं वज्जरिसभनाराय १ वज्जनारायं २ । नाराय ३ मद्धनाराय ४ कीलिया ५ तह य छेवट्ठं ६ ॥१३॥ समचउरंसं १ नग्गोह २ साइ ३ खुज्जाणि ४ वामणं ५ हुंडं ६ । संठाणा वण्णा किण्हनीललोहियहलिद्दसिया ॥१४॥ सुरभि १ दुरभी २ रसा पण,तित्त १ कडु २ कसाय ३ अंबिला ४ महुरा ५ । फासा गुरु १ लहु २ मिउ ३ खर ४ सी ५ उण्ह ६ सिणिद्ध ७ रुक्ख ८ ऽट्ठ ॥१५॥ चउह गइव्वणुपुव्वी, दुविहा य सुहासुहा विहायगई । गइअणुपुव्वी उ दुगं, तिगं तु तं चिय नियाउजुयं ॥१६॥ इय तेणउई संते बंधणपण्णरसगेण तिसयं वा । वण्णाइभेय १६ बंधण १५ संघाय ५ विणा उ सत्तट्ठी ॥१७॥ सा बंधुदए बंधणसंघाया नियतणुग्गहणगहिया । वण्णाइविगप्पा वि हु, न य बंधे सम्ममीसाइ ॥१८॥ वेउ-

१ "ताश्चेमाः" इत्यपि पाठः । २ "हवइ" इत्यपि पाठः । ३ "ति" इत्यपि । ४ "सूसरआएज्जजसं" इत्यपि मुद्रितप्रतौ ।

ऽवाहारोरालियाण सग ३ तेय ३ कम्म ३ जुत्ताणं । नव बंधणाणि इयरदुसहियाणं तिण्णि ३ तेसिं च ३ ॥१९॥" अस्या अयमर्थः—पूर्वगृहीतवैक्रियपुद्गलैः सह परस्परं गृह्यमाणान् वैक्रियपुद्गलानुदितेन येन कर्मणा बध्नात्यात्मा तद् वैक्रियवैक्रियबन्धनम् १ । एवं वैक्रियतैजसं २ वैक्रियकार्मणं ३ । आहारकाहारक ४ आहारकतैजस ५ आहारककार्मण ६ औदारिकौदारिक ७ औदारिकतैजस ८ औदारिककार्मण ९ वैक्रियतैजसकार्मण १० आहारकतैजसकार्मण ११ औदारिकतैजसकार्मण १२ [1]"तेसिं च' इति, तयोस्तैजसकार्मणयोः तैजसतैजस १३ तैजसकार्मण १४ कार्मणकार्मण १५ बन्धनानि । इति पञ्चदश बन्धनानि । वर्णादिविंशतेः शुभाशुभविभागोऽयम्—"नीलकसिणं दुगंधं, तित्तं कडुयं गुरुं खरं रुक्खं । सीयं च असुभनवगं, इक्कारसगं सुहं सेसं" इति प्ररूपिताः प्रकृतयः । आसां व्याख्यानं ग्रन्थान्तरादवसेयम्, गमनिकामात्रत्वात् प्रस्तुतप्रयासस्येति ॥

अथ वक्ष्यमाणार्थोपयोगि मिथ्यादृष्टि[2]सास्वादनगुणस्थानकव्यवच्छिन्नप्रकृतिसंख्यासूचकं गाथाद्वयमाह—

निरयतिगं मिच्छत्तं, नपुंस [3]इगविगलजाइआयावं ।
[4]छेवट्ठ थावरचऊ हुंडं चिय मिच्छदिट्ठिम्मि ॥४॥
थीणतिगित्थी अण तिरितिग [5]कुविहगई य नीयमुज्जोयं ।
[6]दूभगतिग पणुवीसा, मज्झिमसंठाणसंघयणा ॥५॥

(हारि०) व्याख्या—'निरयतिगं' इति, नरकत्रिकं नरकगति १ नरकानुपूर्वी २ नरकायुः ३ लक्षणम्, मिथ्यात्वं ४ नपुंसकवेदः ५, 'इगविगलजाइ' इति, एकेन्द्रियजातिः ६, द्वि ७ त्रि ८ चतुरिन्द्रिय ९ जातयश्च, आतपनाम १० सेवार्तसंहननम् ११, 'थावरचऊ' इति, स्थावरनाम १२ सूक्ष्मनाम १३ साधारणनाम १४ अपर्याप्तनाम १५ लक्षणं स्थावरचतुष्कम्, हुण्डसंस्थानं १६ चेति प्रकृतिषोडशकं मिथ्यादृष्टिगुणस्थानके बन्धं [7]प्रतीत्य व्यवच्छिन्नमिति ॥४॥ साम्प्रतं द्वितीयगाथा व्याख्यायते—'थीणतिगित्थी' इति, स्त्यानर्द्धित्रिकं स्त्यानर्द्धि १ निद्रानिद्रा २ प्रचलाप्रचला ३ लक्षणम्, स्त्रीवेदः ४ 'अण' इति, अनन्तानुबन्धि-क्रोध ५ मान ६ माया ७ लोभाः ८, 'तिरितिग' इति, तिर्यक्त्रिकं तिर्यग्गति ९ तिर्यगानुपूर्वी १० तिर्यगायु ११ लक्षणम्, 'कुविहगई य' इति, अशुभविहायोगतिश्च १२, नीचैर्गोत्रं १३ उद्योतनाम १४, 'दूभगतिग' इति, दुर्भगत्रिकं दुर्भगनाम १५ अनादेयनाम १६ दुःस्वरनाम १७ रूपम्,

१ " 'तेसिं च' इति, तयोस्तैजसकार्मणयोः" इति पाठो न दृश्यते जे० प्रतौ । २ केषुचित्पुस्तकेषु "०सासादन०" इत्यपि पाठः । ३ "इगि०" इत्यपि पाठः ४ "सेवट्ठ०" इति जे० प्रतौ । ५ "कुविहगगई" पाठः । ६ "दुभगतिगं" इत्यपि पाठः । ७ "प्रति व्यवच्छिन्नमिति" इत्यपि पाठः ॥

**'मज्झिमसंठाणसंघयणा'** इति, मध्यमसंस्थानानि चत्वारि न्यग्रोधपरिमण्डलं १८ सादि १९ वामनं २० कुब्जं २१ चेति, संहननानि चत्वारि ऋषभनाराचं २२ नाराचं २३ अर्द्धनाराचं २४ कीलिका २५ चेति पञ्चविंशतिप्रकृतयः। आसां सासादनगुणस्थाने बन्धमाश्रित्य व्यवच्छेद इति शेषः। सासादनगुणस्थानकस्वरूपं त्विदम् "**उवसमसम्मत्ताओ, चयओ मिच्छं अपाव-माणस्स सासायणसम्मत्तं तयंतरालम्मि छावलियं ॥१॥**" इति गाथाद्वयार्थः ॥५॥

व्याख्यातं वक्ष्यमाणार्थोपयोगि गाथाद्वयम्। अथ प्रस्तुतमभिधीयते, तत्र मार्गणास्था-नानां प्रथमं गतिद्वारमाश्रित्य नरकगतावोघबन्धः प्रतिपाद्यते—

थावरचउजाई चउ, विउवाहारदुग सुरनिरतिगाणि ।
आयवजुयाऽऽहिँ ऊणं, एगहियसयं नरयबंधे ॥६॥

(हारि०) व्याख्या—**'थावरचउ'** इति, स्थावरनाम १ सूक्ष्मनाम २ साधारणनाम ३ अप-र्याप्तनामेति ४ चत्वारि **'जाई चउ'** इति, एक ५ द्वि ६ त्रि ७ चतुरिन्द्रिय ८ जातयश्चतस्रः, **'विउवाहारदुग'** इति, द्विकशब्दस्य प्रत्येकमभिसंबन्धाद्वैक्रियशरीर ९ तदङ्गोपाङ्गद्विकम् १०, आहारकशरीर ११ तदङ्गोपाङ्गद्विकम् १२, **'सुरनिरतिगाणि'** इति, त्रिकशब्दस्य प्रत्येकम-भिसंबन्धात् सुरगति ११ सुरानुपूर्वी १४ सुरायुष्कत्रिकम्, १५, नरकगति १६ नरकानुपूर्वी १७ नरकायुष्कत्रिकम् १८ एषां तत्पुरुषगर्भो द्वन्द्वः। तानि किंविशिष्टानि ? इत्याह—**'आयवजुय'** इति, विभक्तिलोपादातपनाम १९ युतानि कर्माणीति शेषः। **'आहिँ ऊणं'** इति लिङ्गव्यत्य-येनैभिरूनमेकाधिकशतं नरकबन्धे। अयमत्राभिप्रायः—एकोनविंशतिं कर्मप्रकृतीर्बन्धाधिकृतकर्म-प्रकृतिविंशत्युत्तरशतमध्यान्मुक्त्वा ततः शेषस्यैकोत्तरशतस्य १०१ नरकगतावोघबन्धः। **'आय-वजुयाणि मोत्तुं'**[१] इति पाठेऽयमर्थः—प्राक्तनकर्माणि आतपयुतानि मुक्त्वा, शेषं तथैव। इति गाथार्थः ॥६॥

इति सामान्येन नरकगतौ बन्धमभिधाय साम्प्रतं तस्यामेव मिथ्यादृष्ट्यादिगुणस्थानक-चतुष्टयविशिष्टं तं प्रतिपिपादयिषुराह—

तित्थोणं सय मिच्छा, साणा नपुहुंड[१]छेयमिच्छोणं ।
मीसा नराउपणुवीसोणं सम्मा नराउतित्थजुयं ॥७॥ गीतिरियम्

(हारि०) व्याख्या—अत्र साध्याहारा योजना। ततः प्रागुक्तमेकोत्तरशतं, **'तित्थोणं'** इति, तीर्थकरनामोनं शतं भवति तन्मिथ्यादृष्टयो बध्नन्ति १००। एतच्च शतं नपुंसकवेद १ हुण्डसंस्थान २ छेदस्पृष्टसंहनन ३ मिथ्यात्वो ४ नं सत् षण्णवतिर्भवति, एतां सासादना बध्नन्ति ९६। एषा च षण्णवतिः, नरायुश्च प्रागुक्तपञ्चविंशतीश्च, नरायुःपञ्चविंशती, ताभ्यामूना

१ "०छेव०" इत्यपि पाठः।

नरायुःपञ्चविंशत्यूना सती सप्ततिर्भवति, तां मिश्रा बध्नन्ति '७० इति । एतां च सप्ततिं नरायुस्तीर्थकरनामयुतां सम्यग्दृष्टयो बध्नन्ति ७२ इति । अयं च बन्धो रत्नप्रभाशर्कराप्रभावालुकाप्रभाभिधानप्रथमनरकपृथिवीत्रये द्रष्टव्यः, पङ्कप्रभादिषु विशेषबन्धाभिधानात् । इति गाथार्थः ।।७।।

अथ तमेव पङ्कप्रभादिनरकपृथिवीत्रये गाथाप्रथमपादेन तथा सप्तमनरकपृथिव्यां पादोनगाथाद्वयेनाह—

पंकाइसु तित्थोणं, नराउहीणं सयं तु सत्तमिए ।
मणुदुगउच्चेहिँ विणा, मिच्छा बंधंति [1]छण्णउई ।।८।।
हुंडाईचउरहियं, साणा तिरियाउणा य [2]इगनउइं ।
इगुणपणुवीसरहिया, सनरदुगुच्चा सयरि मीसे ।।९।।

(हारि०) व्याख्या—सामान्यं गुणस्थानचतुष्टयवर्त्ति च प्राक्तनप्रथमनरकपृथिवीत्रयोक्तं बन्धकदम्बकं यथासंभवं तीर्थकरनामोनं 'पंकाइसु' इति, पङ्कप्रभाधूमप्रभातमःप्रभासु मन्तव्यमिति शेषः । अत्र पृथिवीत्रये तीर्थकरनामनिमित्तसम्यक्त्वसद्भावेऽपि क्षेत्रमाहात्म्येन तथाविधाध्यवसायाभावात्तीर्थकरनामकर्मबन्धो नास्तीति । ततः सामान्येन शतं १००, मिथ्यादृशां च शतं १००,सासादनानां षण्णवतिः ९६, मिश्राणां सप्ततिः ७०, अविरतसम्यग्दृष्टीनामेकसप्ततिः ७१, इति । इह तु सामान्यपदेऽविरतगुणस्थानके च तीर्थकरनामहीनतोक्ता, मिथ्यादृष्ट्यादिषु त्रिषु पुनस्तस्य प्रागेवापनीतत्वादिति भावः । 'नराउहीणं सयं तु सत्तमिए' इत्यादि पङ्कप्रभादिनरकपृथिवीत्रये सामान्येन यच्छतमुक्तं तदेव नरायुष्कहीनं पुनः सप्तम्यामोघबन्धः ९९ । तुशब्दः [3]पुनः योजित एवेति । अथ तस्यामेव गुणस्थानकेषु तन्निरूपयन्नाह— मणुदुग' इत्यादि मनुष्यगतिमनुष्यानुपूर्वीद्विकोच्चैर्गोत्रैर्विना षण्णवतिर्भवति, तां मिथ्यादृशो बध्नन्ति ९६ । इति ।।८।। अथ द्वितीयगाथा व्याख्यायते—'हुंडाईचउरहियं' इति, हुण्डसंस्थानच्छेदस्पृष्टसंहनननपुंसकवेदमिथ्यात्वचतुष्करहितम् तथा 'तिरियाउणा य' इति, तिर्यगायुषा च रहितां तां षण्णवतिं कृत्वेति शेषः, चशब्दाद्रहितशब्दः प्राक् समस्तोऽप्यत्र योज्यते । तत एकनवतिं ९१ सासादना बध्नन्तीति प्राक्तनेन संबन्धः । तथा 'इगुणपणुवीसरहिया' इति, एकेन तिर्यगायुषाऽनन्तरापनीतेनोना रहितैकोना सा चासौ पञ्चविंशतिश्च पूर्वोक्ता तया रहिता न्यूना एकोनपञ्चविंशतिरहिता । तथा 'सनरदुगुच्चा' इति, सह नरद्विकोच्चैर्वर्तते सनरद्विकोच्चा, नरगतिनरानुपूर्वीद्विकोच्चैर्गोत्रैः सहितेत्यर्थः । [4]यका एकनवतिः । सा सप्ततिर्भवति, सा च मिश्रे ७० । इह सप्तम्यां नरायुस्तावन्न बध्यत एव । तद्बन्धाभावेऽपि मिश्रगुणस्थानकेऽविर-

१ "छन्नउई" इत्यपि पाठः । २ "इगनउई" इत्यपि पाठः । ३ "पुनरर्थे" इत्यपि, "पुनरर्थो" इत्यपि । ४ "यका" इति स्वार्थिकप्रत्ययान्तं रूपम् , "या" इत्यर्थः ।

तगुणस्थानके च नरगतिनरानुपूर्वीद्वयं बध्यते, तस्यान्यदाऽपि बन्धात् । अयमर्थः—नरगति-नरानुपूर्व्योर्नरायुषा सह नावश्यं प्रतिबन्धः, यदुत यत्रायुर्बध्यते तत्रैव गत्यानुपूर्वीद्वयमपि, किन्तु आयुरेकदैव बध्यते, गत्यानुपूर्वीद्वयमन्यदाऽपि बध्यत इति । तथा मिथ्यात्व[1]सासादनाभ्यां द्वयं न बध्यते, कलुषाध्यवसायत्वादिति । अथ कथमत्राविरतगुणस्थानके बन्धस्वामित्वं पृथग् नोक्तम् ?, सत्यं, मिश्रस्येवाविरतस्यापि सप्ततिर्द्द श्या, न्यूनाधिकप्रकृतेरभावात् । इति गाथाद्वयार्थः ॥९॥

एवं नरकगतौ बन्धस्वामित्वमभिधायाथ तिर्यग्गतौ सामान्येन गुणस्थानकविशिष्टं च तदाह—

तित्थाहारदुगूणा, तिरिया बंधंति सव्वपयडीओ ।
पज्जत्ता तह मिच्छा, [2]साणा उण सोलसविहीणा ॥१०॥

(हारि०) व्याख्या—तीर्थकराहारकद्विकोनाः सर्वप्रकृतीः पर्याप्तास्तिर्यञ्चः प्रक्रमात्सामान्येन बध्नन्तीति ११७ । अत्र च तिरश्चां सत्यपि सम्यक्त्वे भवप्रत्ययादेव तथाविधाध्यवसायाभावात्तीर्थकरनाम्नः संपूर्णसंयमाभावादाहारकद्विकस्य च बन्धो नास्तीति हृदयम् । 'तह मिच्छा' इति तथा मिथ्यादृशोऽपि पर्याप्ता इति योगः । सप्तदशोत्तरशतसंख्याः ११७ प्रकृतीर्बध्नन्ति । 'साणा उण' इति सासादनाः पुनः षोडशेन पूर्वोक्तेन विहीनाः षोडशविहीनाः १०१ ता बध्नन्ति । इति गाथार्थः ॥१०॥

तथा—

नरतिगसुराउउसभं, उरलदुगं [3]मोत्तु पणवीसं च ।
अणुहत्तरिं तु मीसा, सुराउणा सत्तरी सम्मा ॥११॥

(हारि०) व्याख्या—'नरतिग' इति, नरगतिनरानुपूर्वीनरायुस्त्रिकं सुरायुः 'उसभं' इति, वज्रर्षभनाराचं, एषां समाहारद्वन्द्वस्तत् । 'उरलदुगं' इति औदारिकशरीरतदङ्गोपाङ्गद्विकमिति सप्तप्रकृतीः पञ्चविंशतिं च प्रागुक्तां मुक्त्वा एकोत्तरशतमध्यादिति शेषः । शेषामेकोनसप्ततिं मिश्रा बध्नन्ति ६९ । एषैव सुरायुषा सहिता सप्ततिर्भवति ७०, तां 'सम्मा' इति, अविरतसम्यग्दृष्टयो बध्नन्ति । इति गाथार्थः ॥११॥

तथा—

[4]बीयकसायूणा देस अपज्जत्ता सयं नवग्गं तु ।
मोत्तूणमोघबन्धा, निरसुरआउं विउव्विछक्कं च ॥१२॥ गीतिरियम्

---

१ "सासादनयोः तद्द्वयं" इत्यपि । २ "सासा उण सोलसविहूणा" इत्यपि । ३ "मुत्तुं" इत्यपि पाठः ।
४ "बीयकसायविहूणा देसमपज्जत्तसयनवग्गं तु मुत्तूण" । इत्यपि पाठः ।

नरायुःपञ्चविंशत्यूना सती सप्ततिर्भवति, तां मिश्रा बध्नन्ति '७० इति । एतां च सप्ततिं नरायुस्तीर्थकरनामयुतां सम्यग्दृष्टयो बध्नन्ति ७२ इति। अयं च बन्धो रत्नप्रभाशर्कराप्रभावालुकाप्रभाभिधानप्रथमनरकपृथिवीत्रये द्रष्टव्यः, पङ्कप्रभादिषु विशेषबन्धाभिधानात् । इति गाथार्थः ॥७॥

अथ तमेव पङ्कप्रभादिनरकपृथिवीत्रये गाथाप्रथमपादेन तथा सप्तमनरकपृथिव्यां पादोनगाथाद्वयेनाह—

पंकाइसु तित्थोणं, नराउहीणं सयं तु सत्तमिए ।
मणुदुगउच्चेहिँ विणा, मिच्छा बंधंति [1]छण्णउइं ॥८॥
हुंडाईचउरहियं, साणा तिरियाउणा य [2]इगनउइं ।
इगुणपणुवीसरहिया, सनरदुगुच्चा सयरि मीसे ॥९॥

(हारि०) व्याख्या–सामान्यं गुणस्थानचतुष्टयवर्त्ति च प्राक्तनप्रथमनरकपृथिवीत्रयोक्तं बन्धकदम्बकं यथासंभवं तीर्थकरनामोनं 'पंकाइसु' इति, पङ्कप्रभाधूमप्रभातमःप्रभासु मन्तव्यमिति शेषः । अत्र पृथिवीत्रये तीर्थकरनामनिमित्तसम्यक्त्वसद्भावेऽपि क्षेत्रमाहात्म्येन तथाविधाध्यवसायाभावात्तीर्थकरनामकर्मबन्धो नास्तीति । ततः सामान्येन शतं १००, मिथ्यादृशां च शतं १००,सासादनानां षण्णवतिः ९६, मिश्राणां सप्ततिः ७०, अविरतसम्यग्दृष्टीनामेकसप्ततिः ७१, इति । इह तु सामान्यपदेऽविरतगुणस्थानके च तीर्थकरनामहीनतोक्ता, मिथ्यादृष्ट्यादिषु त्रिषु पुनस्तस्य प्रागेवापनीतत्वादिति भावः । 'नराउहीणं सयं तु सत्तमिए' इत्यादि पङ्कप्रभादिनरकपृथिवीत्रये सामान्येन यच्छतमुक्तं तदेव नरायुष्कहीनं पुनः सप्तम्यामोघबन्धः ९९ । तुशब्दः [3]पुनः योजित एवेति । अथ तस्यामेव गुणस्थानकेषु तन्निरूपयन्नाह– मणुदुग' इत्यादि मनुष्यगतिमनुष्यानुपूर्वीद्विकोच्चैर्गोत्रैर्विना षण्णवतिर्भवति, तां मिथ्यादृशो बध्नन्ति ९६ । इति ॥८॥ अथ द्वितीयगाथा व्याख्यायते–'हुंडाईचउरहियं' इति, हुण्डसंस्थानच्छेदस्पृष्टसंहनननपुंसकवेदमिथ्यात्वचतुष्करहितम् तथा 'तिरियाउणा य' इति, तिर्यगायुषा च रहितां तां षण्णवतिं कृत्वेति शेषः, चशब्दाद्रहितशब्दः प्राक् समस्तोऽप्यत्र योज्यते । तत एकनवतिं ९१ सासादना बध्नन्तीति प्राक्तनेन संबन्धः । तथा 'इगुणपणुवीसरहिया' इति, एकेन तिर्यगायुषाऽनन्तरापनीतेनोना रहितैकोना सा चासौ पञ्चविंशतिश्च पूर्वोक्ता तया रहिता न्यूना एकोनपञ्चविंशतिरहिता । तथा 'सनरदुगुच्चा' इति, सह नरद्विकोच्चैर्वर्तते सनरद्विकोच्चा, नरगतिनरानुपूर्वीद्विकोच्चैर्गोत्रैः सहितेत्यर्थः । [4]यका एकनवतिः । सा सप्ततिर्भवति, सा च मिश्रे ७० । इह सप्तम्यां नरायुस्तावन्न बध्यत एव । तद्बन्धाभावेऽपि मिश्रगुणस्थानकेऽविर-

१ "छण्णउई" इत्यपि पाठः । २ "इगनउई" इत्यपि पाठः । ३ "पुनरर्थे" इत्यपि, "पुनरर्थो" इत्यपि । ४ "यका" इति स्वार्थिकप्रत्ययान्तं रूपम् , "या" इत्यर्थः ।

तगुणस्थानके च नरगतिनरानुपूर्वीद्वयं बध्यते, तस्यान्यदाऽपि बन्धात् । अयमर्थः—नरगति-नरानुपूर्व्योर्नरायुषा सह नावश्यं प्रतिबन्धः, यदुत यत्रायुर्बध्यते तत्रैव गत्यानुपूर्वीद्वयमपि, किन्तु आयुरेकदैव बध्यते, गत्यानुपूर्वीद्वयमन्यदाऽपि बध्यत इति । तथा मिथ्यात्व [1]सासादनाभ्यां द्वयं न बध्यते, कलुषाध्यवसायत्वादिति । अथ कथमत्राविरतगुणस्थानके बन्धस्वामित्वं पृथग् नोक्तम् ?, सत्यं, मिश्रस्येवाविरतस्यापि सप्ततिर्द्दश्या, न्यूनाधिकप्रकृतेरभावात् । इति गाथार्द्धार्थः ॥९॥

एवं नरकगतौ बन्धस्वामित्वमभिधायाथ तिर्यग्गतौ सामान्येन गुणस्थानकविशिष्टं च तदाह—

तित्थाहारदुगूणा, तिरिया बंधंति सव्वपयडीओ ।
पज्जत्ता तह मिच्छा, [2]साणा उण सोलसविहीणा ॥१०॥

(हारि०) व्याख्या—तीर्थकराहारकद्विकोनाः सर्वप्रकृतीः पर्याप्तास्तिर्यञ्चः प्रक्रमात्सामान्येन बध्नन्तीति ११७ । अत्र च तिरश्चां सत्यपि सम्यक्त्वे भवप्रत्ययादेव तथाविधाध्यवसायाभावात्तीर्थकरनाम्नः संपूर्णसंयमाभावादाहारकद्विकस्य च बन्धो नास्तीति हृदयम् । 'तह मिच्छा' इति तथा मिथ्यादृशोऽपि पर्याप्ता इति योगः । सप्तदशोत्तरशतसंख्याः ११७ प्रकृतीर्बध्नन्ति । 'साणा उण' इति सासादनाः पुनः षोडशेन पूर्वोक्तेन विहीनाः षोडशविहीनाः १०१ ता बध्नन्ति । इति गाथार्थः ॥१०॥

तथा—

नरतिगसुराउउसभं, उरलदुगं [3]मोत्तु पणवीसं च ।
अणुहत्तरिं तु मीसा, सुराउणा सत्तरी सम्मा ॥११॥

(हारि०) व्याख्या—'नरतिग' इति, नरगतिनरानुपूर्वीनरायुस्त्रिकं सुरायुः 'उसभं' इति, वज्रर्षभनाराचं, एषां समाहारद्वन्द्वस्तत् । 'उरलदुगं' इति औदारिकशरीरतदङ्गोपाङ्गद्विकमिति सप्तप्रकृतीः पञ्चविंशतिं च प्रागुक्तां मुक्त्वा एकोत्तरशतमध्यादिति शेषः । शेषामेकोनसप्ततिं मिश्रा बध्नन्ति ६९ । एषैव सुरायुषा सहिता सप्ततिर्भवति ७०, तां 'सम्मा' इति, अविरतसम्यग्दृष्टयो बध्नन्ति । इति गाथार्थः ॥११॥

तथा—

[4]बीयकसायूणा देस अपज्जत्ता सयं नवग्गं तु ।
मोत्तूणमोघबन्धा, निरसुरआउं विउव्विछक्कं च ॥१२॥ गीतिरियम्

---

१ "सासादनयोः सद्द्वयं" इत्यपि । २ "सासा उण सोलसविहूणा" इत्यपि । ३ "मुत्तुं" इत्यपि पाठः ।
४ "बीयकसायविहूणा देसअपज्जत्तसयनवगं तु मुत्तूण" । इत्यपि पाठः ।

नरायुःपञ्चविंशत्यूना सती सप्ततिर्भवति, तां मिश्रा बध्नन्ति '७० इति । एतां च सप्ततिं नरायुस्तीर्थकरनामयुतां सम्यग्दृष्टयो बध्नन्ति ७२ इति । अयं च बन्धो रत्नप्रभाशर्कराप्रभावालुकाप्रभाभिधानप्रथमनरकपृथिवीत्रये द्रष्टव्यः, पङ्कप्रभादिषु विशेषबन्धाभिधानात् । इति गाथार्थः ॥७॥

अथ तमेव पङ्कप्रभादिनरकपृथिवीत्रये गाथाप्रथमपादेन तथा सप्तमनरकपृथिव्यां पादोनगाथाद्वयेनाह—

पंकाइसु तित्थोणं, नराउहीणं सयं तु सत्तमिए ।
मणुदुगउच्चेहिं विणा, मिच्छा बंधंति [1]छण्णउइं ॥८॥
हुंडाईचउरहियं, साणा तिरियाउणा य [2]इगनउइं ।
इगुणपणुवीसरहिया, सनरदुगुच्चा सयरि मीसे ॥९॥

(हारि०) व्याख्या–सामान्यं गुणस्थानचतुष्टयवर्त्ति च प्राक्तनप्रथमनरकपृथिवीत्रयोक्तं बन्धकदम्बकं यथासंभवं तीर्थकरनामोनं 'पंकाइसु' इति, पङ्कप्रभाधूमप्रभातमःप्रभासु मन्तव्यमिति शेषः । अत्र पृथिवीत्रये तीर्थकरनामनिमित्तसम्यक्त्वसद्भावेऽपि क्षेत्रमाहात्म्येन तथाविधाध्यवसायाभावात्तीर्थकरनामकर्मबन्धो नास्तीति । ततः सामान्येन शतं १००, मिथ्यादृशां च शतं १००,सासादनानां षण्णवतिः ९६, मिश्राणां सप्ततिः ७०, अविरतसम्यग्दृष्टीनामेकसप्ततिः ७१, इति । इह तु सामान्यपदेऽविरतगुणस्थानके च तीर्थकरनामहीनतोक्ता, मिथ्यादृष्ट्यादिषु त्रिषु पुनस्तस्य प्रागेवापनीतत्वादिति भावः । 'नराउहीणं सयं तु सत्तमिए' इत्यादि पङ्कप्रभादिनरकपृथिवीत्रये सामान्येन यच्छतमुक्तं तदेव नरायुष्कहीनं पुनः सप्तम्यामोघबन्धः ९९ । तुशब्दः [3]पुनः योजित एवेति । अथ तस्यामेव गुणस्थानकेषु तन्निरूपयन्नाह– मणुदुग' इत्यादि मनुष्यगतिमनुष्यानुपूर्वीद्विकोच्चैर्गोत्रैर्विना षण्णवतिर्भवति, तां मिथ्यादृशो बध्नन्ति ९६ । इति ॥८॥ अथ द्वितीयगाथा व्याख्यायते–'हुंडाईचउरहियं' इति, हुण्डसंस्थानच्छेदस्पृष्टसंहनननपुंसकवेदमिथ्यात्वचतुष्करहितम् तथा 'तिरियाउणा य' इति, तिर्यगायुषा च रहितां तां षण्णवतिं कृत्वेति शेषः, चशब्दाद्रहितशब्दः प्राक् समस्तोऽप्यत्र योज्यते । तत एकनवतिं ९१ सासादना बध्नन्तीति प्राक्तनेन संबन्धः । तथा 'इगुणपणुवीसरहिया' इति, एकेन तिर्यगायुषाऽनन्तरापनीतेनोना रहितैकोना सा चासौ पञ्चविंशतिश्च पूर्वोक्ता तया रहिता न्यूना एकोनपञ्चविंशतिरहिता । तथा 'सनरदुगुच्चा' इति, सह नरद्विकोच्चैर्वर्तते सनरद्विकोच्चा, नरगतिनरानुपूर्वीद्विकोच्चैर्गोत्रैः सहितेत्यर्थः । [4]यका एकनवतिः । सा सप्ततिर्भवति, सा च मिश्रे ७० । इह सप्तम्यां नरायुस्तावन्न बध्यत एव । तद्बन्धाभावेऽपि मिश्रगुणस्थानकेऽविर-

१ "छन्नउई" इत्यपि पाठः । २ "इगनउई" इत्यपि पाठः । ३ "पुनरर्थे" इत्यपि, "पुनरर्थो" इत्यपि । ४ "यका" इति स्वार्थिकप्रत्ययान्तं रूपम्, "या" इत्यर्थः ।

तगुणस्थानके च नरगतिनरानुपूर्वीद्वयं बध्यते, तस्यान्यदाऽपि बन्धात् । अयमर्थः—नरगति-नरानुपूर्व्योर्नरायुषा सह नावश्यं प्रतिबन्धः, यदुत यत्रायुर्बध्यते तत्रैव गत्यानुपूर्वीद्वयमपि, किन्तु आयुरेकदैव बध्यते, गत्यानुपूर्वीद्वयमन्यदाऽपि बध्यत इति । तथा मिथ्यात्व[1]सासादनाभ्यां द्वयं न बध्यते, कलुषाध्यवसायत्वादिति । अथ कथमत्राविरतगुणस्थानके बन्धस्वामित्वं पृथग् नोक्तम् ?, सत्यं, मिश्रस्येवाविरतस्यापि सप्ततिर्द्दश्या, न्यूनाधिकप्रकृतेरभावात् । इति गाथाद्वयार्थः ॥९॥

एवं नरकगतौ बन्धस्वामित्वमभिधायाथ तिर्यग्गतौ सामान्येन गुणस्थानकविशिष्टं च तदाह—

तित्थाहारदुगूणा, तिरिया बंधंति सव्वपयडीओ ।
पज्जत्ता तह मिच्छा, [2]साणा उण सोलसविहीणा ॥१०॥

(हारि०) व्याख्या—तीर्थकराहारकद्विकोनाः सर्वप्रकृतीः पर्याप्तास्तिर्यञ्चः प्रक्रमात्सामान्येन बध्नन्तीति ११७ । अत्र च तिरश्चां सत्यपि सम्यक्त्वे भवप्रत्ययादेव तथाविधाध्यवसायाभावात्तीर्थकरनाम्नः संपूर्णसंयमाभावादाहारकद्विकस्य च बन्धो नास्तीति हृदयम् । 'तह मिच्छा' इति तथा मिथ्यादृशोऽपि पर्याप्ता इति योगः । सप्तदशोत्तरशतसंख्याः ११७ प्रकृतीर्बध्नन्ति । 'साणा उण' इति सासादनाः पुनः षोडशेन पूर्वोक्तेन विहीनाः षोडशविहीनाः १०१ ता बध्नन्ति । इति गाथार्थः ॥१०॥

तथा—

नरतिगसुराउउसभं, उरलदुगं [3]मोत्तु पणवीसं च ।
अणुहत्तरिं तु मीसा, सुराउणा सत्तरी सम्मा ॥११॥

(हारि०) व्याख्या—'नरतिग' इति, नरगतिनरानुपूर्वीनरायुस्त्रिकं सुरायुः 'उसभं' इति, वज्रर्षभनाराचं, एषां समाहारद्वन्द्वस्तत् । 'उरलदुगं' इति औदारिकशरीरतदङ्गोपाङ्गद्विकमिति सप्तप्रकृतीः पञ्चविंशतिं च प्रागुक्तां मुक्त्वा एकोत्तरशतमध्यादिति शेषः । शेषामेकोनसप्ततिं मिश्रा बध्नन्ति ६९ । एषैव सुरायुषा सहिता सप्ततिर्भवति ७०, तां 'सम्मा' इति, अविरतसम्यग्दृष्टयो बध्नन्ति । इति गाथार्थः ॥११॥

तथा—

[4]बीयकसायूणा देस अपज्जत्ता सयं नवगं तु ।
मोत्तूणमोघबन्धा, निरसुरआउं विउव्विछक्कं च ॥१२॥ गीतिरियम्

१ "सासादनयोः तद्द्वयं" इत्यपि । २ "सासा उण सोलसविहूणा" इत्यपि । ३ "मुत्तु" इत्यपि पाठः ।
४ "बीयकसायविहूणा देसभपज्जत्तसयनवगं तु मुत्तूण" । इत्यपि पाठः ।

(हारि०) व्याख्या–'बीयकसायूणा देस' इति द्वितीयकषायैरप्रत्याख्यानावरणैः क्रोधाद्यैश्चतुर्भिरूना=हीना द्वितीयकषायोनाः सप्ततिः प्रकृतयः षट्षष्टिर्भवति ६६, ताः प्रकृतीर्देशविरता बध्नन्तीति। पर्याप्तकपञ्चेन्द्रियाणां तिर्यग्जातीनां बन्धोऽभिहितः। अथापर्याप्तानां तेषां तमाह–'अपज्जत्ता' इत्यादिगाथापादत्रयम्, एतस्य मात्रार्थः–तिर्यग्गतिसत्कारसप्तदशोत्तरशतलक्षणादोघबन्धान्नारकसुरायुषी 'वैक्रियषट्कं च' वैक्रियशरीर १ तदङ्गोपाङ्ग २ नरकगति ३ नरकानुपूर्वी ४ देवगति ५ देवानुपूर्वी ६ लक्षणं मुक्त्वा शेषं शतं नवाग्रम् १०९, तुशब्दस्य पुनरर्थस्येह संबन्धादपर्याप्तपञ्चेन्द्रियाः पुनस्तिर्यगजातयो बध्नन्ति। इति गाथार्थः ॥१२॥

एवं तिर्यग्गतौ बन्धस्वामित्वमुक्तम्। साम्प्रतं नरगतावाद्यगुणस्थानकपञ्चके तदतिदिशन् शेषगुणस्थानकेषु तदेवाह––

तिरिया व नरा पयडी, बंधंती मिच्छमाइया पंच।
अजयाइ पंच तित्थं, अपमत्तनियट्टि आहारं॥१३॥
कम्मत्थयबंधसमो, पमत्तमाईण होइ बन्धो उ।
अप्पज्जत्ता मणुया, तिरिया व सयं [1]नवग्गं तु ॥१४॥

(हारि०) व्याख्या–सामान्येन नरा विंशत्युत्तरशतं बध्नन्तीति प्रक्रमः। मिथ्यादृगाद्याः पञ्च तिर्यञ्च इव प्रकृतीर्बध्नन्तीति। अत्रैव विशेषमाह––'अजयाइ पंच तित्थं' इति, अविरतसम्यग्दृष्ट्याद्या निवृत्तिबादरान्ताः पञ्च तीर्थकरनाम बध्नन्ति। तथा 'अपमत्तनियट्टि आहारं' इति, अप्रमत्तनिवृत्तिबादराः सप्तमाष्टमगुणस्थानवर्तिनो यतयो द्विकशब्दाध्याहारादाहारकद्विकं बध्नन्तीति ॥१३॥ तथा–कर्मस्तवबन्धसमः, मकारस्यालाक्षणिकत्वात् प्रमत्तादीनां पुनर्मनुष्याणां भवति बन्धः। तुशब्दः पुनरर्थः प्रागेव योजित इति, अस्याः सार्द्धगाथायाः सामान्येन चतुर्दशगुणस्थानकेषु च नरबन्धमधिकृत्यैवं सशब्दसंस्काराङ्कतः स्थापना–तत्र सामान्येन विंशत्यधिकशतं १२०, मिथ्यादृशां सप्तदशोत्तरशतं ११७, सासादनानामेकोत्तरशतं १०१, मिश्राणामेकोनसप्ततिः ६९, अविरतसम्यग्दृष्टीनामेकसप्ततिः ७१, देशविरतानां सप्तषष्टिः ६७, प्रमत्तानां त्रिषष्टिः ६३, अप्रमत्तानामेकोनषष्टिः ५९, निवृत्तिबादराणामष्टपञ्चाशत् ५८ षट्पञ्चाशत् ५६ षड्विंशतिश्चेति २६ त्रिभागत्रयम्, अनिवृत्तिबादराणां द्वाविंशतिः २२ एकविंशतिः २१ विंशतिः २० [2]एकोनविंशतिः १९ अष्टादश १८ चेति पञ्च विभागाः, सूक्ष्मसम्परायाणां सप्तदश १७, उपशान्तमोह १ क्षीणमोह १ सयोगिनां १ प्रत्येकमेकैव अयोगिनां बन्धो नास्ति। इति "कम्मत्थयबंधसमो, पमत्तमाईण होइ बंधो उ" इत्युक्तम्। तत्र कर्मस्तवग्रन्थे

१ "नवब्भहियं" इत्यपि पाठः। २ एकाभवि० जे०।

सामान्यतो बन्धं प्रत्युक्तम्, न पुनः काश्चन गतिमाश्रित्य। यथा–' सत्तरससयमेगुत्तर चउ-सयरी तह य सतत्तरा य। सगसट्ठी तेवट्ठी, उणसट्ठी अट्ठवण्णा य ॥१॥ छप्पण्णा छव्वीसा, बावीसा सत्तरेगमेगं च। एगा य बंधसेसो मिच्छाइसु होंति नायव्वा। ॥२॥" अङ्कतस्तु सामान्येन १२० । म० ११७। सा० १०१। मि० ७४। अ० ७७। दे० ६७। प्र० ६३। अ० ५९, ५८। नि० ५८, ५६, २६। अ० २२ २१, २० १९, १८। सू० २७। उ० १। क्षी० १। स० १ अ० ०। एतानि चाङ्कस्थानानि प्रतिगुणस्थानमनेन प्रकृतिव्यवच्छेद-क्रमेण जायन्ते। यथा-' मिच्छे सोलस पणुवीस सासणे अविरए य दसपयडी। चउक्क-क्कमेण देसे, विरए य कमेण वोच्छिन्नाः ॥२॥ दुगतीस चउरपुव्वे, पंच नियट्टिम्मि बंध-वोच्छेओ। सोलस सुहुमसरागे, सायसजोगो जिणवरिंदे ॥२॥" इह मिथ्यादृष्टिसासादनगुणस्थानकद्वये बन्धं प्रति व्यवच्छिन्नाः प्रकृतयोऽत्रैव प्राक् प्रतिपादिताः। मिश्रे तु न काश्चन प्रकृतयो व्यवच्छिन्नाः, अतोऽविरतगुणस्थानकादौ बन्धं प्रति व्यवच्छिन्नाः प्रकृतयः प्रतिपाद्यन्ते। तद्यथा–"बीयकसायचउक्कं ४, मणुयाउं ५ मणुयदुव्वय ७ ओरालं ८। तस्स य अंगोवंगं ९, संघयणाई १० अविरयम्मि। १॥ तइयकसायचउक्कं ४, विरयाविरयम्मि बंधवोच्छेओ। अस्साय १ मरइ २ सोगं ३, तह चेव य अथिर ४ असुहं ५ च ॥२॥ अजसकित्ती ६ य तहा, पमत्तविरयम्मि बंधवोच्छेओ। देवाउयं च एगं, [1]नायव्वं अप्पमत्तंमि ॥३॥ निद्दा १ पयला २ य तहा, अपुव्वपढमंमि बंधवुच्छेओ। देवदुगं २ पचिंदिय ३, उरालवज्जं चउसरीरं ७ ॥४॥ समचउरं ८ वेउव्विय ९, आहारगअंगुवंगनामं १० च। वण्णचउक्कं १४ च तहा, अगुरुयलहुयं च चत्तारि १८ ॥५॥ तसचउ २२ पसत्थमेव य, विहायगइ २३ थिर २४ सुहं च २५ नायव्वं। सुहयं २६ सूसरमेव य २७, आएज्जं २८ चेव निमिणं च २९ ॥६॥ तित्थयरमेव तीसं, ३०, अपुव्वछब्भाय बंधवोच्छेओ। हास १ रइ २ भय ३ दुगुंछा ४, अपुव्वचरिमम्मि वोच्छिन्ना ॥७॥ पुरिसं १ चउसंजलणं ५, पंच य पयडीओ पंचभागम्मि। अनियट्टीअद्धाए, जहक्कमं बंधवोच्छेओ ॥८॥ नाणंतराय-दसगं १०, दंसणचत्तारि १४ उच्च १५ जसकित्ती १६। एया सोलस पयडी सुहुमसरागंमि वोछिन्ना ॥९॥ उवसंतखीणमोहे, जोगिम्मि उ साय १ बंधवोच्छेओ। नायव्वो पयडीणं, बंधस्संतो अणंतो य ॥१०॥" बन्धस्यान्तोऽनन्तश्चेत्यस्यायमर्थः–याः प्रकृतयो यत्र गुणस्थाने व्यवच्छिन्नास्तत्र तासामन्तोऽग्रेतनगुणस्थाने न गच्छन्तीति, अन्यासां त्वनन्त उत्तरत्रापि गच्छन्तीति तात्पर्यमिति। आसां दशानामपि गाथानां पुनर्व्याख्यानं कर्मस्तवटीकातो बोद्धव्यमिति। तथाऽत्रैव प्रकृत्यपकर्षप्रक्षेपकथनगाथाः। यथा–

१ कर्मस्तवे तु "तहप्पमत्तम्मि नायव्वं" इत्येवंरूपः पाठोऽपि दृश्यते।

**"बीससयं सामन्ने, सत्तरससयं तु बंधए मिच्छो। तित्थयराहारदुगं, न बंधए मिट्टए तेण॥१॥ सम्मा मिच्छद्दिट्ठी, आऊणि न बंधए [1]जओ ताणि। मिट्ट ति [2]तेण तस्स उ अज्झवसाओ [1]जओ नत्थि ॥२॥ तित्थयरं पक्खिप्पइ, सम्मद्दिट्ठिम्मि बंधए जेण। सम्मत्तस्स गुणाणं, आऊणि य तत्थ खिप्पंति॥३॥ आहारमप्पमत्तो, पक्खिप्पइ जेण संजमो तस्स। इय इसु गुणठाणेसु, अवगरिसो दोसु पक्खेवो ॥४॥"** इह कर्मस्तवोक्तगुणस्थानकबन्धात् नरतिरश्चां मिश्राविरतगुणस्थानकयोर्विशेषोऽयं द्रष्टव्यः। तद्यथा—कर्मस्तवे मिश्रगुणस्थानके चतुःसप्ततिः ७४, अविरतगुणस्थानके सप्तसप्ततिः ७७ इति। नरतिरश्चां पुनर्मनुष्यगतिमनुष्यानुपूर्वीवज्रर्षभनाराचसंहननौदारिकशरीरतदङ्गोपाङ्ग-लक्षणप्रकृतिपञ्चकस्य बन्धाभावान्मिश्रगुणस्थानके एकोनसप्ततिः ६९, अविरते सप्ततिः ७०, केवलं नराणां तीर्थंकरक्षेपे एकसप्ततिः ७१ इति। इहैकसप्ततिप्रमाणनरबन्धमध्येऽनन्तरोक्तप्रकृ-तिपञ्चके नरायुष्के च क्षिप्ते कर्मस्तवोक्ता सप्तसप्ततिर्भवति अविरतगुणस्थानके ७७ इति। एवं सामान्यकर्मस्तवोक्ताङ्कावली नरतिर्यगङ्कावली च किंचित्पृथग्जातेति केवलं तिरश्चां पञ्चैव गुण-स्थानानि, नराणां तु सर्वाण्येव। विशेषस्तु मिश्राविरतगुणस्थानयोरिति तात्पर्यार्थः। विस्तरतस्तु कर्मप्रकृतिनिर्णनादिकर्मस्तवटीकातो विज्ञेयमिति। तथा—'अप्पज्जत्ता' इत्यादि, अपर्याप्तमनुजाः पुनस्तिर्यञ्च इव शतं नवाग्रं १०९ बध्नन्ति। तुशब्दो योजित एव। इति गाथाद्वयार्थः ॥१४॥

एवं मनुष्यगतौ बन्धस्वामित्वमुक्तम्। साम्प्रतं देवगतिमधिकृत्य तत्प्रतिपादयन्नाह—

वेउव्वाहारदुगं, नारयसुरसुहुमविगलजाइतिगं।
[4]मोत्तुं चउरग्गसयं, देवा बंधंति ओहेणं ॥१५॥

(हारि०)व्याख्या-'वेउव्वाहारदुगं' इति, द्विकशब्दस्य प्रत्येकमभिसंबन्धाद्वैक्रियशरीरतदङ्गो-पाङ्गद्विकं, आहारकशरीरतदङ्गोपाङ्गद्विकम्। 'नारयसुरसुहुमविगलजाइतिगं' इति, त्रिकश-ब्दस्य प्रत्येकमभिसंबन्धान्नारकत्रिकं सुरत्रिकं च प्राग्वत्। सूक्ष्मत्रिकं तु सूक्ष्मनामसाधारणना-मापर्याप्तनामलक्षणम्। विकलजातित्रिकं च प्राग्वत्। एवमेताः षोडश [5]प्रकृतीर्द्वन्द्वगर्भास्तत्पुरु-षकृतसमासाः विंशत्यधिकशतमध्यान्मुक्त्वा चतुरग्रशतं १०४ ओघेन देवा बध्नन्ति। इति गाथार्थः ॥१५॥

एवमोघबन्धं प्रतिपाद्य साम्प्रतं गुणस्थानकेषु तन्निरूपयन्नाह—

तित्थोणं तं मिच्छा, साणा छेवट्ठहुंडनपुमिच्छं।
एगिंदिथावरायवपयडी [6]मोत्तूण छन्नउइं ॥१६॥

---

१-२ "तओ" इति जे०। ३ "जेण" इति जे०। ४ "मुत्तुं" इत्यपि पाठः। ५ प्रकृतीस्तत्पुरुषगर्भकृ-तसमाहारद्वन्द्वा विंशत्य० जे०। ६ "मुत्तूण छन्नवई" इत्यपि पाठः।

(हारि०) व्याख्या–तच्च चतुरग्रशतं तीर्थकरनामोनं १०३ मिथ्यादृशो देवा वध्नन्ति इति प्राक्तनेन संबन्धः। एवमुत्तरत्रापि। छेदस्पृष्टसंहननहुण्डसंस्थाननपुंसकवेदमिथ्यात्वमिति द्वन्द्वैकवद्भावः। तथैकेन्द्रियजातिस्थावरनामातपनामप्रकृतीर्विहितद्वन्द्वसमासाः। एवमेताः सप्तापि त्र्यधिकशतमध्यान्मुक्त्वा शेषां पण्णवतिं सासादनसम्यग्दृष्टिदेवा ९६ वध्नन्ति इति गाथार्थः ॥१६॥

तथा—

ओघुत्तं पणुवीसं, नराउजुत्तं विवज्जिउं मीसा।
बंधंति सयरिमजया, तित्थनराऊहिँ विगसयरी ॥१७॥

(हारि०) व्याख्या–ओघोक्तां पञ्चविंशतिं नरायुर्युक्तां पण्णवतेर्मध्याद्विवर्ज्य शेषां सप्ततिं 'मिश्राः' सम्यग्मिथ्यादृष्टयो देवा बध्नन्ति ७०। एषा च सप्ततिस्तीर्थकरनामनरायुर्भ्यां सह द्विसप्ततिर्भवति, तां ७२ अयता बध्नन्ति। इति गाथार्थः ॥२७॥

इति सामान्येन देवगतिबन्धः प्रतिपादितः, साम्प्रतं विशेषतो देवविशेषनामोच्चारणपूर्वकं तमाह—

मिच्छाइअविरयंता, देवोघं तित्थहीण बंधंति।
भवणवणजोइदेवा, देवीओ चेव सव्वाओ ॥१८॥

(हारि०) व्याख्या–अत्र पदघटनैवं कार्या–भवनपतिव्यन्तरज्योतिष्कदेवाः सर्वे तद्देव्यश्चैव सर्वा मिथ्यादृगाद्या अविरतसम्यग्दृष्टिपर्यन्ता विभक्तिलोपात्तीर्थकरनामहीनं देवौघं चतुरग्रशतादिलक्षणं यथासंभवं बध्नन्तीति। तद्यथा–सामान्यतस्त्र्यधिकशतं १०३, मिथ्यादृशोऽपि त्र्यधिकशतं १०३, सासादनाः षण्णवतिं ९६, मिश्राः सप्ततिं ७०, अविरता एकाधिकसप्ततिं ७१ बध्नन्ति। इति गाथार्थः ॥१८॥

तथा—

सामन्नदेवभंगो, सोहम्मीसाण मिच्छमाईणं।
सहसारंता इगिथावरायवोणं सणंकुमाराई ॥१९॥ गीतिरियम्

(हारि०) व्याख्या–'सामान्यदेवभङ्गकः' पूर्वोक्तश्चतुरग्रशतादिलक्षणः १०४, कयोः? विभक्तिलोपात्सौधर्मेशानयोः, केषाम्? मकारोऽलाक्षणिकः, मिथ्यादृगादीनां भवतीति शेषः। इह यद्यपि 'मिच्छमाईणं' इत्युक्तं तथाऽपि सामान्यमपि द्रष्टव्यम्। ततः सामान्येन चतुरग्रशतं १०४, मिथ्यादृशां त्र्यग्रशतं १०३, सासादनानां षण्णवतिः ९६, मिश्राणां सप्ततिः ७०, अविरतानां द्विसप्तति ७२ रिति। 'सहसारंता' इत्यादियोजना त्वेवं कार्या–सनत्कुमा-

राद्याः सहस्रारान्ता देवा एकेन्द्रियजातिस्थावरातपोनमोघं चतुरग्रशतादिलक्षणं बध्नन्ति। तद्यथा-सामान्येनैकाग्रशतं १०१, मिथ्यादृशः शतं १००, सासादनाः षण्णवतिं ९६, मिश्राः सप्तति ७०, अयता द्विसप्तति ७२ मित्यत्र सासादनादिगुणस्थानकत्रये एकेन्द्रियादिप्रकृतित्रयस्य, "**तित्थोणं तं मिच्छा, साणा छेवट्ठहुंडनपुमिच्छं। एगिंदिथावरायव-**" इति गाथया प्रागेवापनीतत्वान्न कश्चित्सङ्ख्याविशेष इह। इति गाथार्थः ॥१९॥

अथ सनत्कुमारादिसहस्रारान्तदेवा रत्नप्रभादिपृथिवीत्रयनारकाश्च बन्धमाश्रित्य समा इति गाथायाः प्रथमार्द्धेन, तथा पश्चिमार्द्धेनानतादिग्रैवेयकान्तदेवानां सामान्यबन्धं दर्शयन्नाह—

रयणा नारयसरिसा, सहसारंता सणंकुमाराई।
इगिथावरायवतिरितिगुज्जोऊणं तु आणयाईया ॥२०॥ गीतिरियम्।

(हारि०) व्याख्या-'**रयणा**' इति सूचकत्वात्सूत्रमिति न्यायात्पदावयवे पदसमुदायोपचाराद्वा रत्नप्रभोच्यते। उपलक्षणं चैतत् प्रथमपृथिवीत्रयस्य। ततश्च रत्नप्रभाया नारका रत्नप्रभानारकास्तैः सदृशाः=समाः '**रत्नप्रभानारकसदृशाः**'। क एते ? सनत्कुमाराद्याः सहस्रारान्ता देवा इति गम्यते। तद्यथा-सामान्येनैकाग्रशतं १०१, मिथ्यादृशां शतं १००, सासादनानां षण्णवतिः ९६, मिश्राणां सप्ततिः ७०, अयतानां द्विसप्तति ७२ रिति। '**इगि**' इत्यादि, एकेन्द्रियजातिस्थावरनामातपनामतिर्यक्त्रिकोद्द्योतोनं तु चतुरग्रशतं सप्तनवतिर्भवति, तामानताद्या ग्रैवेयकनवकान्ता देवा इति गम्यते, सामान्येन ९७ बध्नन्ति। इति गाथार्थः ॥२०॥

एवमानतादिसामान्यबन्धं प्रतिपाद्य साम्प्रतं तमेव गुणस्थानकविशिष्टं निरूपयन्नाह—

तित्थं [1]नपुचउतिरितियउज्जोऊण [2]पणवीस सनराउं।
मोत्तूण मिच्छमाई, नराउतित्थेहि अजया उ ॥२१॥

(हारि०) व्याख्या-अस्या भावार्थोऽयम्-पूर्वोक्तसप्तनवतेर्मध्यात्तीर्थकरं मुक्त्वेति संबन्धः। एवमुत्तरत्रापि शेषां षण्णवतिं ९६ मिथ्यादृशो बध्नन्ति। तथा षण्णवतेर्मध्यात् 'नपुंसकचतुष्कं' सेवार्तसंहननहुण्डसंस्थाननपुंसकवेदमिथ्यात्वलक्षणं मुक्त्वा शेषां द्विनवतिं ९२ सासादना बध्नन्ति, तथा द्विनवतेर्मध्यात्तिर्यक्त्रिकोद्द्योतोनां '**पञ्चविंशतिं**' एकविंशतिमित्यर्थः, किंविशिष्टाम् ? '**सनरायुषं**' नरायुर्युक्तां द्वाविंशतिमित्यर्थः, '**मुक्त्वा**' त्यक्त्वा शेषां मिश्राः सप्ततिं ७० बध्नन्ति। तथा सप्ततिं च नरायुस्तीर्थकराभ्यां सहाविरता बध्नन्ति ७२। तुशब्दाद्विशेषा-

---

१ "नपुंसचउ" इत्यपि पाठः। २ "पणुवीससनराओ। मुत्तूण" इत्यपि पाठः।

नमिधानेऽपि मिथ्यात्वादिगुणस्थानकत्रयाभावात्पञ्चोत्तरविमानदेवा एतामेवाविरतगुणस्थानकसत्कां द्विसप्ततिं ७२ बध्नन्ति इति गाथार्थः ॥२१॥

इति देवगतौ बन्धस्वामित्वमुक्तम्, तद्भणनाच्च गतिबन्धमार्गणा समाप्ता १ ॥ साम्प्रतमिन्द्रियेषु तदारभ्यते—

तित्थाहारं निरयसुराउं [1]मोत्तुं विउव्विछक्कं च ।
[2]इगविगलिंदी बंधहिँ, नवुत्तरं ओघमिच्छा य ॥२२॥

(हारि०) व्याख्या–'तित्थाहारं' इति, द्विकशब्दो लुप्तो द्रष्टव्यः । ततस्तीर्थंकरा १ ऽऽहारकद्विकं ३, नरकायुः ४, सुरायुः ५, 'वैक्रियषट्कं च' वैक्रियशरीर ६ तदङ्गोपाङ्ग ७ सुरगति ८ सुरानुपूर्वी ९ नरकगति १० नरकानुपूर्वीलक्षणं ११ विंशत्युत्तरशतमध्यादिति शेषः, मुक्त्वा शेषं नवोत्तरं शतमिति गम्यते १०९, 'ओघ' इति प्राकृतत्वात् सामान्यपदिनो मिथ्यादृशश्च १०९ एकेन्द्रियविकलेन्द्रिया बध्नन्ति । इति गाथार्थः ॥२२॥

अथ गाथायाः प्रथमार्द्धेन तेषां सासादने बन्धं समर्थयन्नपरार्द्धेन पञ्चेन्द्रियेषु तमाह—

साणा बंधहिँ सोलस, [3]निरतिगहीणा य [4]मोत्तु छन्नउइं ।
ओघेणं वीसुत्तर–सयं च पंचिंदिया बंधे ॥२३॥

(हारि०) व्याख्या–अत्रापि पदघटनैवं कार्या–नरकत्रिकहीनाश्च षोडश प्रकृतीर्नवोत्तरशतमध्यान्मुक्त्वा शेषां षण्णवतिं ९६ मेकेन्द्रियविकलेन्द्रियाः सासादना बध्नन्ति । पञ्चेन्द्रियाः पुनः चशब्दस्य पुनरर्थस्यात्र योजनात् 'ओघेन' सामान्येन विंशत्युत्तरशतं १२० 'बन्धे' इति प्राकृतत्वाद्बध्नन्तीति, अत्रोपलक्षणत्वान्मिथ्यात्वादिषु च कर्मस्तवोक्तबन्धो द्रष्टव्यः । इति गाथार्थः ॥२३॥

अत्रैवैकेन्द्रियविकलेन्द्रियेषु सासादनमाश्रित्य मतान्तरमाह—

[5]इगिविगलिंदी साणा, तणुपज्जत्तिं न जंति जं तेण ।
नरतिरियाउअबंधा, मयतरेणं तु [6]चउणउइं ॥२४॥

(हारि०) व्याख्या–एकेन्द्रियविकलेन्द्रियाः सासादनाः सन्तः 'तनुपर्याप्तिं' शरीरपर्याप्तिं 'न यान्ति' न गच्छन्ति, 'यद्' यस्माद्धेतोस्तेन ते नरतिर्यगायुरबन्धा इति मतान्तरेण पुनश्चतुर्नवतिं ९४ बध्नन्तीति । अत्र भावार्थः–पूर्वमतेन शरीरपर्याप्त्युत्तरकालमपि सासादनभावस्येष्टत्वादायुर्बन्धो[7]ऽभिप्रेतः । इह तु प्रथममेव तन्निवृत्तेर्नेष्टः । इति गाथार्थः ॥२४॥

---

१ "मुत्तु" इत्यपि पाठः । २ "इगि" इत्यपि पाठः । ३ "निरि" इत्यपि पाठः । ४ "मुत्तु छन्नउई" इत्यपि पाठः । ५ "इग०" इत्यपि पाठः । ६ "चउणउई" इत्यपि पाठः । ७ "ऽभिहितः" इत्यपि पाठः ।

नभिधानेऽपि मिथ्यात्वादिगुणस्थानकत्रयाभावात्पञ्चोत्तरविमानदेवा एतामेवाविरतगुणस्थानकसत्कां द्विसप्ततिं ७२ बध्नन्ति इति गाथार्थः ॥२१॥

इति देवगतौ बन्धस्वामित्वमुक्तम्, तद्भणनाच्च गतिवन्धमार्गणा समाप्ता १ ॥ साम्प्रतमिन्द्रियेषु तदारभ्यते—

तित्थाहारं निरयसुराउं [1]मोत्तुं विउव्विछक्कं च ।
[2]इगविगलिंदी बंधहिँ, नवुत्तरं ओघमिच्छा य ॥२२॥

(हारि०) व्याख्या–'तित्थाहारं' इति, द्विकशब्दो लुप्तो द्रष्टव्यः । ततस्तीर्थंकरा १ ऽऽहारकद्विकं ३, नरकायुः ४, सुरायुः ५, 'वैक्रियषट्कं च' वैक्रियशरीर ६ तदङ्गोपाङ्ग ७ सुरगति ८ सुरानुपूर्वी ९ नरकगति १० नरकानुपूर्वीलक्षणं ११ विंशत्युत्तरशतमध्यादिति शेषः, मुक्त्वा शेषं नवोत्तरं शतमिति गम्यते १०९, 'ओघ' इति प्राकृतत्वात् सामान्यपदिनो मिथ्यादृशश्च १०९ एकेन्द्रियविकलेन्द्रिया बध्नन्ति । इति गाथार्थः ॥२२॥

अथ गाथायाः प्रथमार्द्धेन तेषां सासादने बन्धं समर्थयन्नपरार्द्धेन पञ्चेन्द्रियेषु तमाह—

साणा बंधहिँ सोलस, [3]निरतिगहीणा य [4]मोत्तु छन्नउइं ।
ओघेणं वीसुत्तर–सयं च पंचिंदिया बंधे ॥२३॥

(हारि०) व्याख्या–अत्रापि पदघटनैवं कार्या–नरकत्रिकहीनाश्च षोडश प्रकृतीर्नवोत्तरशतमध्यान्मुक्त्वा शेषां षण्णवतिं ९६ मेकेन्द्रियविकलेन्द्रियाः सासादना बध्नन्ति । पञ्चेन्द्रियाः पुनः चशब्दस्य पुनरर्थस्यात्र योजनात् 'ओघेन' सामान्येन विंशत्युत्तरशतं १२० 'बन्धे' इति प्राकृतत्वाद्बध्नन्तीति, अत्रोपलक्षणत्वान्मिथ्यात्वादिषु च कर्मस्तवोक्तबन्धो द्रष्टव्यः । इति गाथार्थः ॥२३॥

अत्रैवैकेन्द्रियविकलेन्द्रियेषु सासादनमाश्रित्य मतान्तरमाह—

[5]इगिविगलिंदी साणा, तणुपज्जत्तिं न जंति जं तेण ।
नरतिरियाउअबंधा, मयतरेणं तु [6]चउणउइं ॥२४॥

(हारि०) व्याख्या–एकेन्द्रियविकलेन्द्रियाः सासादनाः सन्तः 'तनुपर्याप्तिं' शरीरपर्याप्तिं 'न यान्ति' न गच्छन्ति, 'यद्' यस्माद्धेतोस्तेन ते नरतिर्यगायुरबन्धा इति मतान्तरेण पुनश्चतुर्नवतिं ९४ बध्नन्तीति । अत्र भावार्थः–पूर्वमतेन शरीरपर्याप्त्युत्तरकालमपि सासादनभावस्येष्टत्वादायुर्बन्धो[7]ऽभिप्रेतः । इह तु प्रथममेव तन्निवृत्तेर्नेष्टः । इति गाथार्थः ॥२४॥

---

१ "मुत्तुं" इत्यपि पाठः । २ "इगि" इत्यपि पाठः । ३ "निरि" इत्यपि पाठः । ४ "मुत्तु छन्नउई" इत्यपि पाठः । ५ "इग०" इत्यपि पाठः । ६ "चउणउई" इत्यपि पाठः । ७-"ऽभिहित." इत्यपि पाठः ।

उक्तमिन्द्रियेषु बन्धस्वामित्वम् २ ॥ साम्प्रतं कायेषु तदुच्यते—

भूदगवणकाया एगिंदिसमा मिच्छसाणदिट्ठीओ ।
मणुयतिगुच्चं [1]मोत्तु, सुहुमतसा ओघ थूलतसा ॥२५॥

(हारि०) व्याख्या- अत्रैवं योजना कार्या मिथ्यादृशः सासादनसम्यग्दृशश्च भूदगवनस्पतिकाया एकेन्द्रियसमाः । एकेन्द्रियाणां तु पूर्वमिदमुक्तम्, तद्यथा—ओघतः १०९, मि० १०९, सा० ९६ । प्रागुक्तमतान्तरेण तु चतुर्नवतिरपि ९४ द्रष्टव्या । तथा 'मणुय' इत्यादि, अस्यायमर्थः पूर्वोक्तैकेन्द्रियविकलेन्द्रियसत्कान्नवाग्रशतान्मनुजत्रिकोच्चैर्गोत्रं मुक्त्वा 'सूक्ष्मत्रसाः' तेजोवायुकायजीवः पञ्चोत्तरशतं १०५ बध्नन्ति । तथा 'ओघ' इति, अनुस्वारलोपादोघं विंशत्युत्तरशतादिलक्षणं कर्मस्तवोक्तं 'स्थूलत्रसाः' त्रयकायिका बध्नन्तीति शेषः । अङ्कतः स प्रागेव दर्शितः । इति गाथार्थः ॥२५॥

एवं कायेषु बन्धोऽभिहितः ३ ॥ साम्प्रतं योगेषु तं प्रतिपादयन्नाह—

[2]मणवइजोगचउक्के, ओघो उरलेवि ओघनरभंगो ।
निरतिगसुराउआहारगं [3]च हिच्चा उ [4]तंमीसे ॥२६॥

(हारि०) व्याख्या-' [5]मनोवाग्योगचतुष्के' इति चतुष्कशब्दस्य प्रत्येकमभिसंबन्धान्मनोयोगचतुष्के वाग्योगचतुष्के चेत्यर्थः, सत्य १ मृषा २ मिश्रा ३ ऽसत्यामृषाख्ये ४ । एतत्स्वरूपं संक्षेपत इदम्—'अस्ति जीवः' इत्यादिचिन्तनपरं सत्यम् । एतद्विपरीतं मृषा । तथा धवखदिरादिषु वृक्षेषु सत्सु खदिरवनमिदमिति मिश्रम् । सत्यमृषाविकलमसत्यामृषं आज्ञापनादि, यथा—हे देवदत्त ! घटमानय, धर्मं कुरु, भिक्षां देहीति । विस्तरव्याख्यानं तु ग्रन्थान्तरादवसेयं, गमनिकामात्र[6]त्वात्प्रस्तुतप्रयासस्येति ओघबन्धो विंशत्युत्तरशतादिलक्षणः १२० कर्मस्तवाभिहितो विज्ञेय इति शेषः । तथौदारिकेऽपि 'ओघनरभङ्ग' सामान्यमनुष्यभङ्गको द्रष्टव्य इति शेषः, अङ्कत उभयेऽपि भङ्गकाः प्राक् प्रदर्शिता एव । तथा नरकत्रिकसुरायुराहारकद्विकं विहितसमाहारद्वन्द्वसमासं प्रकृतिषट्कं विंशत्युत्तरशतमध्यादिति शेषः, हित्वा शेषस्य चतुर्दशाधिकशतस्य ११४ 'तन्मिश्रे' त्वौदारिकमिश्रे सामान्येन बन्ध इति शेषः । सुरद्विकभावना [7]सप्तमनरकपृथिव्या नरद्विकभावनावद्द्रष्टव्या । इति गाथार्थः ॥२६॥

अथौदारिकमिश्रेऽपि गुणस्थानकविशिष्टं तमाह—

---

१ "मुत्तु" इत्यपि पाठः । २ "मणवय०" इत्यपि पाठः । ३ "तु" इति मुद्रितप्रतौ । ४ "तम्मिस्से" इत्यपि पाठः । ५ "मनोयोगवा०" इत्यपि । ६ "त्वादेतत्प्र०" इति जे० । ७ "सप्तमनरकपथि"

सुरदुग विउव्वियदुगं, तित्थं हिच्चा सयं नवग्गं तु ।
बंधंति उरलमिस्से, मिच्छा उ सजोगिणो सायं ॥२७॥

(हारि०) व्याख्या—सुरद्विकवैक्रियद्विकं पूर्वोक्तम् , अत्र तत्पुरुषगर्भः समाहारद्वन्द्वः, तीर्थंकरनाम चेति प्रकृतिपञ्चकमनन्तरोक्तसामान्यबन्धाच्चतुर्दशोत्तरशतादिति गम्यते, 'हित्वा' परित्यज्य शेषं नवाग्रशतमौदारिकमिश्रयोगे मिथ्यादृशस्तु बध्नन्ति १०९ । तथा सयोगिन औदारिकमिश्रयोग इति पूर्वेण योगः, केवलिसमुद्घाते सप्तमषष्ठद्वितीयसमयेषु सातमेवैकं १ बध्नन्तीति पूर्वेण संबन्धः । अत्र यदुत्क्रमतः सयोगिग्रहणं तल्लाघवार्थम् । यच्च प्राक्तनगाथायाः 'औदारिकमिश्रे' इति पदेऽनुवर्तमाने पुनस्तत्पदोपादानं तद्भिन्नगाथायां सुखार्थम् । इति गाथार्थः ॥२७॥

अथ सार्द्धगाथयौदारिकमिश्रयोगे बन्धं समर्थयन् गाथार्द्धेन वैक्रिययोगे देवनारकबन्धसमतां दर्शयन्ना(यंश्चा)ह—

निरतिगहीणा सोलस, तिरिनरआउं पि [1]मोत्तु साणा वि ।
तिरियाउविहीणं पणवीसमुज्झित्तु अविरए [3]बंधो ॥२८॥
तित्थं वेउव्विदुगं, सुरदुगसहियं उरलमिस्से ।
साम[4]न्नदेवनारयबंधो नेओ विउव्विजोगे वि ॥२९॥ गीत्युद्गीती एते गाथे

(हारि०) व्याख्या—नरकत्रिकहीनाः षोडश प्रकृतीः तथा तिर्यङ्नरायुषी अपि नवोत्तरशतमध्यादनन्तरोक्तान्मुक्त्वा शेषां चतुर्नवतिं ९४ मौदारिकमिश्रयोग इति पूर्वेणयोगः । 'साणा वि' इति, सासादनसम्यग्दृशोऽपि । अपिशब्दः समुच्चयार्थः । बध्नन्तीति प्राक्तनेन संबन्धः । तथा चतुर्नवतेर्मध्यात्तिर्यगायुर्विहीनां पञ्चविंशतिं 'उज्झित्वा' परित्यज्य शेषायाः सप्ततेः 'तित्थं वेउव्विदुगं सुरदुगसहियं' इति, प्राकृतवशात्तीर्थंकरनाम वैक्रियद्विकं सुरद्विकसहितमिति पञ्चप्रकृतिसहितायाः ७५ औदारिकमिश्रयोगे 'अविरए' इति, अविरतसम्यग्दृष्टिगुणस्थानके बन्धः । एवं गुणस्थानकचतुष्क एवौदारिकमिश्रयोगोऽपि लभ्यते नान्यत्रेति । मिश्रता चात्र कार्मणेनैव [5]सह मन्तव्येति । 'सामन्नदेवनारयबंधो नेओ विउव्विजोगे वि' इति, वैक्रिययोगेऽपि सामान्यदेवनारकबन्धो ज्ञेयः । स च प्रागेव प्रतिपादितः, तद्यथा—देवानां सामान्येन [6]चतुरग्रशतं १०४, मिथ्यादृशां त्र्युत्तरशतं १०३, सासादनसम्यग्दृशां

---

१ "वेउव्विदुगं" इत्यपि पाठः । २ "मुत्तु" इत्यपि पाठः । ३ "बंधे" इति मुद्रितप्रतौ । ४ "ण्णा०" इत्यपि । ५ "सहेति मन्तव्यमिति" इति जे० । ६ "चतुरुत्तरशतम्" इति जे० ।

षण्णवतिः ९६, मिश्राणां सप्ततिः ७०, [1]अविरतसम्यग्दृशां द्विसप्तति ७२ रिति। नारकाणां तु सामान्येनैकाधिकं शतं १०१, मिथ्यादृशां शतं १००, सासादनानां षण्णवतिः ९६, मिश्राणां सप्ततिः ७०, अविरतानां द्विसप्तति ७२ रिति। स्वभावस्थदेवनारकवैक्रिययोगोऽत्र गृहीतः। इति गाथाद्वयार्थः ॥२८-२९॥

साम्प्रतं वैक्रियमिश्रयोगेऽपि देवनारकबन्धातिदेशगर्भं सामान्यपदे मिथ्यात्वसासादनाविरतगुणस्थानकत्रये च तन्निरूपयन्नाह—

वेउव्वियमीसम्मि वि, तिरियनराऊहिँ वज्जिया सेसा।
तित्थोणा ता मिच्छा, बंधहिँ माणा उ चउणउइं ॥३०॥
एगिंदिथावरायवसंढाइचउक्कवज्जिया सेसा।
तिरियाऊणं पणुवीस [2]मोत्तु अजया सतित्था उ ॥३१॥

(हारि०) व्याख्या-वैक्रियमिश्रयोगेऽपि न केवलं वैक्रिययोग इत्यपिशब्दार्थः। अनन्तरं देवनारकवैक्रिययोगोक्ताः प्रकृतीस्तिर्यग्नरायुर्भ्यां वर्जिताः शेषा द्व्युत्तरशतसङ्ख्याः सामान्येन देवाः १०२, नारकास्तु नवनवतिप्रमाणा ९९ बध्नन्ति। [3]इह देवनारका निजायुषः षण्मासावशेषा एवायुर्बध्नन्ति, अतो मिश्रयोगे उत्पत्तिकाले आयुर्द्वयबन्धाभावे ता एव सामान्योक्ताः प्रकृतीस्तीर्थकरोना मिथ्यादृशो देवाः १०१ नारकाश्च ९८ बध्नन्तीति ॥३०॥ अथ 'एगिंदि' इत्यादिगाथा विव्रियते—ता एव पुनरेकेन्द्रियजातिस्थावरातपनामनपुंसकवेदहुण्डसंस्थानसेवार्त्तसंहननमिथ्यात्वरूपनपुंसकचतुष्कवर्जिताः शेषाः सासादनवर्तिनो देवाः ९४, [4]नारका नपुंसकचतुष्केण वर्जिताः शेषाः न त्वेकेन्द्रियादित्रयेण तस्य प्रागेव 'थावरचउ जाईचउ' इत्यादिगाथयाऽपनीतत्वादित्यतश्चतुर्नवति ९४ सङ्ख्या एव बध्नन्ति। तथा तिर्यगायुरूनां 'पणवीस' इति विभक्तिलोपात् पञ्चविंशतिं मुक्त्वा सतीर्थकराः कर्मप्रकृतीरयता अविरतसम्यग्दृष्टिदेवाः ७१, तुशब्दः समुच्चयार्थः। नारकाश्च ७१ बध्नन्ति वैक्रियमिश्रयोग इति पूर्वेण योगः। मिश्रता चात्र प्रथमोत्पत्तौ कार्मणकायेनव सह मन्तव्येति। अयं च मिथ्यात्वसासादना[5]विरति गुणस्थानकत्रय एव लभ्यते नान्यत्र। यत एतेष्वेव गृहीतेषु जीवा म्रियन्ते नान्येषु। तथाहि—"मिच्छे सासाणे वा, अविरयसम्मम्मि अहव गहियमि। जंति जिया परलोए, सेसेक्कारसगुणे मोत्तुं ॥१॥" इति गाथाद्वयार्थः ॥३०-३१॥

---

१ "अविरतानां द्वासप्तति ७२ रिति" इत्यपि॥ २ "मुत्तु" इत्यपि पाठः। ३ "इह देवनारका निजायुषः षण्मासावशेषा एवायु र्बध्नन्ति, अतो मिश्रयोगे उत्पत्तिकाले आयुर्द्वयबन्धाभावे" इति पाठो जे० प्रतौ न दृश्यते। ४ "नारकाश्च नपुंसकादि चतु० इत्यपि। ५ "०विरत०" इत्यपि।

अथ गुणस्थानकदृष्टान्तपूर्वकं किंचिदधिकपादेनाहारकयोगद्वये, तथा सामान्यपदे गुणस्थानचतुष्टये च तदूनगाथात्रयेण कार्मणकाययोगे बन्धमाह—

तेवट्ठाहारदुगे, जहा पमत्तस्स कम्मणे बंधो ।
आउतिगं निरयतिगं, आहारय वज्जिउं ओघो ॥३२॥
[1]सुरदुगतित्थविउव्वियदुगाणि मोत्तूण बंधहिं मिच्छा ।
निरतिगहीणा सोलस, वज्जित्ता सासणा कम्मे ॥३३॥
तिरियाऊणं पणुवीस [2]मोत्तु सुरदुगविउव्विदुगजुत्तं ।
अजया तित्थेण समं, सजोगि सायं समुग्घाए ॥३४॥

(हारि०) व्याख्या—'तेवट्ठा' इति प्राकृतत्वाद्विभक्तिलोपे त्रिषष्टेः ६३ कर्मप्रकृतीनामिति गम्यते आहारकद्विके आहारकशरीर[3]तन्मिश्रलक्षणयोगद्वये बन्धो यथा प्रमत्तस्येति षष्ठीसप्तम्योरर्थं प्रत्यभेदाद्यथा प्रमत्ते प्रमत्तगुणस्थानके बन्धशब्दस्य वक्ष्यमाणस्यात्रापि योजनादेवं संबन्धः । साम्प्रतं कार्मणकाययोगे बन्धमाह—'कम्मणे बंधो आउतिगं' इत्यादि, आयुस्त्रिकं तिर्यङ्नरामरायुष्कलक्षणम् । नरकत्रिकं प्रागुक्तम् । 'आहारय' इति सूचकत्वात्सूत्रस्याहारकशरीरतदङ्गोपाङ्गलक्षणं द्वयं ग्राह्यं, इत्यष्टावोघबन्धाद्विंशत्युत्तरशतलक्षणाद्वर्जयित्वा शेषस्य द्वादशोत्तरशतस्य ११२ सामान्येन कार्मणकाययोगे बन्धः । इति गाथार्थः ॥३२॥ तथा—सुरद्विक २ तीर्थकर १ वैक्रियद्विकानि २ पूर्वोक्तानि, तत्पुरुषगर्भकृतद्वन्द्वसमासानि कर्माणीति शेषः, अनन्तरोक्तसामान्यबन्धद्वादशोत्तरशतमध्यान्मुक्त्वा शेषं सप्तोत्तरशतं १०७ कार्मणकाययोगे मिथ्यादृशो बध्नन्ति । तथा नरकत्रिकहीनाः षोडश प्रकृतीरिति शेषः, अनन्तरोक्तसप्तोत्तरशतमध्याद्वर्जयित्वा शेषां चतुर्नवतिं ९४ सासादनसम्यग्दृष्टयः 'कम्मे' इति कार्मणकाययोगे बध्नन्तीति प्राक्तनेन संबन्ध इति । 'कम्मणे बंधो' इति प्राक्तनगाथाया अनुवर्तमाने कार्मणकाययोगे यत् पुनरिहोक्तम् 'कम्मे' इति तद्गुणस्थानकयोजनार्थमिति न दोषः । इति गाथार्थः ॥३३॥ तथा—तिर्यगायुरूनां 'पणुवीस' इति विभक्तिलोपात्पञ्चविंशतिमनन्तरोक्तचतुर्नवतेर्मध्यान्मुक्त्वा शेषां सप्ततिं सुरद्विकवैक्रियद्विकयुक्तां तीर्थकरेण च 'समं' सार्द्धं पञ्चसप्ततिमित्यर्थः, अयता अविरतसम्यग्दृष्टयः कार्मणकाययोगे बध्नन्तीति ७५ पूर्वेण संबन्धः । अयं च कार्मणकाययोगो विग्रहगतौ गच्छतो जीवस्यानाहारकस्यैतद्गुणस्थानत्रयोपेतस्य लभ्यते । तथाहि—"मिच्छे सासाणे वा, अविरयसम्मम्मि अहव गहियम्मि । जंति जिया परलोए, सेसेका-

१ सुगुण इत्यपि पाठः । २ मुत्तु इत्यपि पाठः । ३ "—तन्मिश्रलक्षणे योगद्वये" इति व्यस्तं क्वचित् ॥

**रसगुणे मोत्तु ॥१॥''** तथा '**सजोगि सायं समुग्घाए**' इति विभक्तिलोपात्सयोगिनस्त्रयोदशगुणस्थानवर्तिनः समुद्घाते केवलिसमुद्घाते तृतीयचतुर्थपञ्चमसमयेषु कार्मणकाययोगे सातमेवैकं १ बध्नन्तीत्यत्रापि प्राक्तनेन संबन्धः । एवं च कार्मणकाययोगो मिथ्यात्वसासादनाविरतसयोगिगुणस्थानकचतुष्टय एव लभ्यते, नान्यत्र । इति गाथार्थः ॥३२-३३-३४॥

एवं योगेषु बन्धस्वामित्वमुक्तम् ४ ॥ साम्प्रतं वेदद्वारे कषायद्वारे च तत्प्रतिपादयन्नाह–

**वेयतिएवोघेणं, बंधो जा बायरो हवइ ताव ।**
**कोहाइसु चउमोघो, मिच्छाओ जाव [1]अनियट्टिं ॥३५॥**

(हारि०) व्याख्या–'**वेदत्रिकेऽपि**' स्त्रीवेदपुरुषवेदनपुंसकवेदरूपे '**ओघेन**' सामान्येन बन्धः कर्मस्तवोक्तो यावदनिवृत्तिबादरगुणस्थानकं तावद्भवति, ततः परं वेदानामभावादिति । तद्यथा–सामान्येन १२० । मि० ११७ । सासादन १०१ । मिश्र ७४ । अविरत ७७ । दे० ६७ । प्र० ६३ ।अ० ५९, ५८। नि० ५८, ५६ २६ ।अ० २२, २१, २०, १९, १८, । इति वेदेषु बन्धस्वामित्वमुक्तम् ५ ॥ तथा क्रोधादिषु चतुर्ष्वोघबन्धो मिथ्यादृष्टेरारभ्य यावदनिवृत्तिबादरगुणस्थानकम् । तद्यथा–सामान्येन १२०, मि० ११७, सा० १०१, इत्यादिकोऽनन्तरोक्तो वेदद्वारवत् । इति गाथार्थः ॥३५॥

इति कषायद्वारे बन्धस्वामित्वमुक्तम् ६॥ साम्प्रतं ज्ञानद्वारे गुणस्थानकगमं यथायोगं तदारभ्यते ।

**अण्णाणतिएवोघो, मिच्छासाणेसु नवसु नाणतिए ।**
**मणपज्जवेवि सत्तसु, ओघं दुसु [2]केवलिस्सावि ॥३६॥**

(हारि०) व्याख्या–'**अज्ञानत्रिकेऽपि**' मत्याज्ञानश्रुताज्ञानविभङ्गरूपे मिथ्यादृष्टिसासादन-[4]गुण-स्थानकयोरुपलक्षणत्वान्मिश्रे चौघबन्धः। तथा '**ज्ञानत्रिके**' मतिज्ञानश्रुतज्ञानावधिज्ञानलक्षणे '**नवसु**' गुणस्थानकेष्वविरतसम्यग्दृष्ट्यादिक्षीणमोहान्तेष्वोघबन्ध इति संबन्धः । तथा मनःपर्यायज्ञानेऽपि सप्तसु गुणस्थानकेषु प्रमत्तसंयतगुणस्थानादिक्षीणमोहान्तेषु '**ओघं**' इति प्राकृतत्वादोघबन्ध इति । तथा केवलिनोऽपि '**द्वयोः**' सयोग्ययोगिगुणस्थानकयोरोघबन्ध इति पूर्वेण योगः । सर्वत्र कर्मस्तवोक्तोऽयमोघबन्धो द्रष्टव्यः । यत्पुनरप्योघशब्दोपादानमेकगाथायां तत्सुखार्थम् । तथा त्रयोऽप्यपिशब्दाः समुच्चयार्थाः । स चाकृत एवम् । अज्ञानत्रिके–सामान्येन

---

१ "अनियट्टी" इत्यपि पाठः। २ "ओघो" इत्यपि पाठः । ३ "केवलस्सावि" इत्यपि पाठः । ४ "–गुणस्थानकं यावदुपल०" इत्यपि ग।

११७ । मि० ११७ । सा० १०१ । मिश्रे ७४ । ज्ञानत्रये—अविरते ७७ । दे० ६७ । प्र० ६३ । अ० ५९. ५८ । नि० ५८, ५६. २६ । अनि० २२, २१, २०, १९, १८ । सू० १७ । उ० १ । क्षी० १ । मनःपर्यवे—प्र० ६३ । अ० ५९ ५८। नि० ५८, ५६, २६ । अ० २२, २१, २०, १९, १८ । सू० १७ । उ० १ । क्षी० १ । केवलिनः स० १ अ०—० । [1]इह ज्ञानद्वारे मिश्रगुणस्थानकेऽप्युपलक्षणत्वादोघबन्धो द्रष्टव्यः ७४ । इति गाथार्थः ॥३६॥

एवं ज्ञानद्वारे सप्रतिपक्षे बन्धस्वामित्वमुक्तम् ७॥ अथ संयमद्वारे यथायोगं गुणस्थानकसन्मिश्रं तत्प्रति[2]पादयन्नाह—

सामाइयछेएसुं, पमत्तमाईसु चउसु ओघोत्ति ।
परिहारस्स पमत्तो, अपमत्तो सुहुम सट्ठाणे ॥३७॥
उवसंताइसु अहखाय देसविरयस्स होइ सट्ठाणे ।
[3]मिच्छाईसु चऊसुं, ओघो अस्संजयस्सावि ॥३८॥



(हारि०) व्याख्या—सामायिकच्छेदोपस्थापनीययोः प्रमत्तादिषु चतुर्ष्वोघबन्धः । 'इतिः वाक्यसमाप्तौ । तथा '**परिहारस्य**' परिहारविशुद्धिकस्य प्रमत्तेऽप्रमत्ते च गुणस्थानकद्वये ओघबन्ध इति योगः, एवमुत्तरत्रापि । '**सुहुम**' इति विभक्तिलोपात्सूक्ष्मसम्परायस्य '**सट्ठाणे**' इति स्वस्थाने सूक्ष्मसम्पराये गुणस्थानक इति ॥३७॥ तथोपशान्तादिषु चतुर्षु गुणस्थानकेषु '**अहखाय**' इति विभक्तिलोपाद्यथाख्यातस्य, तथा देशविरतस्य स्वस्थाने भवति बन्धः । तथा मिथ्यात्वादिषु चतुर्ष्वसंयतस्यापि, न केवलं प्राक्तनेषु इत्यपिशब्दार्थः, ओघबन्धः । तद्यथा प्रथमसंयमयोः—प्र० ६३ । अ० ५९ ५८। नि० ५८, ५६, २६ । अ० २२, २१, २०, १९, १८ । परिहारविशुद्धिकस्य—प्र० ६३ । अप्र० ५९ । सूक्ष्मस्य—सू० १७ । यथाख्यातस्य—उ० १ । क्षी० १ । स० १ । अ०—० । देशविरतस्य—दे० ६७ । असंयतस्य—मिथ्या० ११७ । सा०—१०१ । मि० ७४ । अ० ७७ । इति गाथाद्वयार्थः ॥३७-३८॥

इति संयमद्वारे देशसंयमासंयमाभ्यां युक्ते बन्धस्वामित्वमुक्तम् ८ ॥ साम्प्रतं दर्शनद्वारे [4]सगुणस्थानके तन्निरूपयन्नाह—

चक्खुअचक्खू ओघो, मिच्छाई खीणमोह ओहिस्स ।
अजयाइनवसु केवलदंसण केवलिदुगे चेव ॥३९॥

---

१ "इह ज्ञानद्वारे मिश्रगुणस्थानके बन्धो न चिन्तितः तस्य मिश्ररूपत्वादिति सम्भाव्यत इति गाथार्थः ॥ ३६ ॥" इति जे० । २ "-पादनायाह" इत्यपि ॥ ३ "मिच्छाईसुं चउसु" इत्यपि पाठः । ४ "गुणस्थानकेषु" इत्यपि पाठः ।

(हारि०) व्याख्या-चक्षुरचक्षुर्दर्शनयोर्मिथ्यादृगादि 'खीणमोह' इति प्राकृतवशात्पदैकदेशेऽपि पदावगमात्क्षीणमोहान्तेष्वोघवन्धः। तद्यथा—सामान्यतः १२० । मि० ११७ । सा० १०१ । मि० ७४ । अ० ७७ । दे० ६७ । प्र० ६३ । अ० ५९, ५८ । नि० ५८, ५६, २६, । अ० २२, २१, २०, १९, १८ । सू० १७ । उ० १ । क्षी० १ । तथा 'ओहिस्स' इति विभक्तिव्यत्ययादवधिदर्शने अयतादिष्वविरतसम्यग्दृष्ट्यादिषु नवरिवतिभणनात्क्षीणमोहान्तेष्विति लभ्यते ओघवन्धः। तद्यथा—अविरतस्य सप्तसप्तति ७७ रित्यादिरनन्तरं दर्शित एवेति। 'केवल-दंसण' इति विभक्तिलोपात्केवलदर्शने 'केवलिदुगे चेव' इति केवलिसत्कसयोग्ययोगिगुण-स्थानकद्विके चौघवन्ध इति पूर्वेण संवन्धः। तद्यथा—स० १ । अ०—० । इति गाथार्थः ३९॥

इति दर्शनद्वारे बन्धस्वामित्वं [1]निरूपितम् ९ ॥ साम्प्रतं लेश्याद्वारमभिधीयते, तत्रादौ गुणस्थानकेषु ताः प्रतिपाद्य तत[2]स्तद्गतं बन्धस्वामित्वं भणिष्यते—

छसु चउसु [3]तिण्णि तीसुं, छण्हं सुक्का अजोगि अल्लेसा ।
आहारूणा आइतिलेसी बंधंति सव्वपयडीओ ॥४०॥ गीतिरियम् ॥

(हारि०) व्याख्या—षड् लेश्याश्चतुर्षु आद्यगुणस्थानकेषु ततस्तिस्रो लेश्यास्तेजो-लेश्याद्यास्त्रिषु देशविरतप्रमत्ता[4]प्रमत्तेषु ततः 'छण्हं' इति विभक्तिव्यत्ययात् षट्सु निवृत्तिवादर-गुणस्थानकादिषु सयोग्यन्तेषु । शुक्लैवैका लेश्या, अयोगिनस्त्वलेश्या एवेति। अङ्कतः—मि० ६ । सा० ६ । मि० ६ । अ० ६ । दे० ३ । प्र० ३ । अ० ३ । नि० १ । अ० । १ सू० १ । उ० १ क्षी० १ । स० १ । अ०—० । इति योजिता लेश्या गुणस्थानकेषु । साम्प्रतमुक्त-लेश्यावत्सु गुणस्थानकेषु बंधस्वामित्वं योज्यते—आहारकद्विकोनाः सर्वाः प्रकृतीः 'आइति-लेसी' इति प्राकृतशैलीवशादाद्यत्रिलेश्यावन्तः, इत्याद्यगुणस्थानकचतुष्केऽपि योज्यम् । सामा-न्येन बध्नन्ति ११८ । इति गाथार्थः ॥४०॥

तथा—

मिच्छा तित्थोणा ता, साणा उण सोलसविहूणा ।
सुरनरआऊ [5]पणवीस मोत्तु बंधंति मीसा उ ॥४१॥ उद्गीतिरियम्

(हारि०) व्याख्या-मिथ्यादृशस्तीर्थकरोनास्ता अनन्तरोक्ता अष्टादशाधिकशतसंख्याः प्रकृती-र्बध्नन्तीति योगः। तद्यथा—मि० ११७ । सासादनाः पुनः षोडशविहीनास्ताः पूर्वोक्तसप्तदशा-

---

१ "प्ररूपितम्" इत्यपि । २ "स्तद्द्वारबन्ध०" इत्यपि । ३ "तिन्नि" इत्यपि । ४ "०प्रमत्तान्तेषु इत्यपि । ५ "पणुवीस मुत्तु" इत्यपि ।

धिकशतप्रमाणा बध्नन्तीत्यत्रापि योज्यम् तद्यथा–सा० १०१ । तथा सुरनरायुषी पञ्चविंशतिं च पूर्वोक्तामेकाग्रशतान्मुक्त्वा शेषां चतुःसप्ततिं ७४ मिश्रा बध्नन्ति । इति गाथार्थः ॥४१॥

तथा—

सुरनरआउयसहिया, अविरयसम्मा उ [1]होंति नायव्वा ।
तित्थयरेण जुया तह, तेऊलेसे [2]परं वोच्छं ॥४२॥

(हारि०) व्याख्या–सुरनरायुष्कसहितास्तीर्थकरेण युताश्चतुःसप्ततिसंख्याः प्रकृतय इति शेषः । '**अविरयसम्मा उ**' इति विभक्तिव्यत्ययात्तथाऽविरतसम्यग्दृष्टिषु '**भवन्ति**' ज्ञातव्याः । तुशब्दः समुच्चयार्थः, स च प्राग् योजित एव । तथाशब्दोऽपीत्ययमर्थः–पूर्वोक्तां चतुःसप्ततिमेतत्प्रकृतित्रयसहितामतिरतसम्यग्दृशो बध्नन्ति ७७ इति । अथ गाथाचतुर्थपादेनाग्रेतनग्रन्थसंबन्धमाह '**तेऊलेसे**' इति प्राकृतत्वात्तेजोलेश्यायामतः परं 'वक्ष्ये' अभिधास्ये । इति गाथार्थः ॥४२॥

यथाप्रतिज्ञातमेवाह—

विगलतिगं निरयतिगं सुहुमतिगूणं सयं तु [3]एक्कारं ।
तित्थाहारूणा मिच्छ साण इगितिनपुचउरूणा ॥४३॥

(हारि०) व्याख्या–अनुस्वारयोरलाक्षणिकत्वाद्विकलत्रिकनरकत्रिकसूक्ष्मसाधारणापर्याप्तलक्षणसूक्ष्मत्रिकोनं पुनर्विंशत्युत्तरशतमेकादशाधिकशतं भवति तच्छतमेकादशाग्रं १११ । तुशब्दो योजित एव, सामान्येन तेजोलेश्याका जीवा बध्नन्तीति वक्ष्यमाणेन संबन्धः । '**तित्थाहारूणा**' इति प्राकृतत्वेन द्विकशब्दलोपात्तीर्थकराहारकद्विकोना एकादशोत्तरशतसंख्यप्रकृतीर्मिथ्यादृशस्तेजोलेश्यावन्तो बध्नन्तीति १०८ । '**इगिति**' इति सूचकत्वात्सूत्रस्यैकेन्द्रियजातिस्थावरातपनामेति त्रिकं, '**नपुचउरूणा**' इति प्राकृतत्वादेव नपुंसकवेदहुण्डसंस्थानसेवार्तसंहननमिथ्यात्वलक्षणनपुंसकचतुष्कं, अनयोर्द्वन्द्वः ताभ्यामूना हीना एकेन्द्रियत्रिकनपुंसकचतुष्कोना अनन्तरोक्ता अष्टाधिकशतसङ्ख्याः प्रकृतय एकोत्तरशतसङ्ख्या भवन्ति १०१ । तास्तेजोलेश्याकाः सासादना बध्नन्ति । इति गाथार्थः ॥४३॥

मीसाईपंचगुणा, ओघं बंधंति पम्हलेसा वि ।
विगलतिगं निरयतिगं, सुहुमतिगेगिंदिथावरायावं ॥४४॥
हिच्चा सयमट्ठहियं, तित्थाहारदुगहीण मिच्छाओ ।
संढाइचउक्कोणं, साणा मीसाइ पणगओघं तु ॥४५॥ गीतिद्वयम् ॥

---

१ हुंति" इत्यपि पाठः २ "परे वुच्छं" इत्यपि । ३ "इक्कारं" इत्यपि पाठः ।

(हारि०) व्याख्या-'तात्स्थ्यात्तद्व्यपदेशः' इतिन्यायान्मिश्रादिपञ्चगुणस्था जीवाः कर्मस्तवोक्तमोघं बध्नन्ति। तद्यथा—मिश्र ७४। अ० ७७। दे० ६७। प्र० ६३। अ० ५९, इति तेजोलेश्याकाः। तथा पद्मलेश्याका अपि विकलत्रिकं नरकत्रिकं पूर्वोक्तस्वरूपम्। 'सुहुमतिग' इति सूक्ष्मनामसाधारणनामापर्याप्तकनामलक्षणसूक्ष्मत्रिकमेकेन्द्रियजातिस्थावरनामातपनाम चेति पदद्वयस्य समाहारद्वन्द्वस्तदिति द्वादशप्रकृतीरित्यर्थः, 'हित्वा' त्यक्त्वा विंशत्यधिकशतमध्यादिति शेषः। शेषं शतमष्टाधिकं सामान्येन १०८ बध्नन्तीति प्राक्तनक्रियायोग इति। तथा तीर्थकराहारकद्विकहीनाः पूर्वोक्ताष्टाधिकशतसङ्ख्याः प्रकृतीर्मिथ्यादृशस्तु पद्मलेश्याका बध्नन्तीति योगः १०५। तथा पञ्चोत्तरशतं 'संढाइचउक्कोणं' इति नपुंसकादिचतुष्केण पूर्वोक्तेनोनं हीनं नपुंसकादिचतुष्कोनं पद्मलेश्याकाः सासादना बध्नन्तीति १०१। तथा मिश्रादयः 'पणग' इति पञ्चौघं पद्मलेश्याका बध्नन्तीति योगः। तद्यथा—मिश्र० ७४। अ० ७७। देश० ६७। प्र० ६३। अ० ५९, ५८। तुः' पूरणे समुच्चये वा। इति गाथद्वयार्थः। ॥ ४४-४५ ॥

उक्तः पद्मलेश्यावत्सु गुणस्थानकेषु बन्धः। साम्प्रतं शुक्ललेश्यावत्सु जीवेषु सामान्येन स उच्यते—

बंधंति सुक्कलेसा, नारयतिरिसुहुमविगलजाइतिगं।
इगिथावरायवुज्जोय वज्जिय सयं तु चउरहियं ॥४६॥

(हारि०) व्याख्या—बध्नन्ति शुक्ललेश्याकास्तु सामान्येनेति शेषः। किं तत्? शतं चतुरधिकमिति संबन्धः। तुशब्दो योजित एव। किं कृत्वा? 'वज्जिय' इति वर्जयित्वेति योगः। किं तत्? नारकतिर्यक्त्रिकसूक्ष्मत्रिकविकलजातित्रिकम्। अत्र तत्पुरुषगर्भः समाहारद्वन्द्वः। त्रिकशब्दस्य च प्रत्येकमभिसंबन्धः कार्यः। तथा 'इगिथावरायवुज्जोय' इति विभक्तिलोपादेकेन्द्रियजातिस्थावरनामातपनामोद्द्योतनाम चेति प्रकृतिषोडशकमित्यर्थः, 'वर्जयित्वा' त्यक्त्वा विंशत्यधिकशतमध्यादिति शेष इति। तद्यथा—सामान्येन १०४। इति गाथार्थः ॥४६॥

साम्प्रतं शुक्ललेश्यावतामेव त्रयोदशगुणस्थानकेषु बन्धमाह—

तित्थाहारदुगूणं, एगहियसयं तु बंधही मिच्छा।
संढाइचउक्कोणं, साणा बंधंति [2]सगनउई ॥४७॥

---

१ "इग" इत्यपि। २ "सगणवई" इत्यपि पाठः।

(हारि०) व्याख्या–किंचिदत्र साध्याहारा योजना ततस्तदनन्तरोक्तं चतुरग्रशतं तीर्थकराहारकद्विकोनमेकाग्रशतं भवति, तच्छुक्ललेश्याका मिथ्यादृशो बध्नन्ति १०१ । पुनरेतदेवैकाग्रशतं 'संढाइचउक्कोणं' इति नपुंसकादिचतुष्केण पूर्वोक्तेनोनं हीनं नपुंसकादिचतुष्कोनं [1] सत् सप्तनवतिर्भवति, तां शुक्ललेश्याकाः सासादना बध्नन्ति । यदिह बध्नन्तीति द्विरुपादानं तद्गुणस्थानकद्वययोजनेन सुखार्थम् । इति गाथार्थः ॥४७॥

तथा—

तिरितियउज्जोऊणं पणुवीसं [2]मोत्तु सुरनराउजुयं ।
चउहत्तरिं तु मीसा. बंधहिँ कम्माण पयडीओ ॥४८॥

(हारि०) व्याख्या–तिर्यक्त्रिकोद्द्योतोनां पञ्चविंशतिं सुरनरायुर्युतां सप्तनवतेर्मध्यान्मुक्त्वा चतुःसप्ततिं शुक्ललेश्याका मिश्रा बध्नन्ति ७४ कर्मणां प्रकृतीः । इति गाथार्थः ॥४८॥

साम्प्रतं बन्धमाश्रित्य लेश्याद्वारं गाथायाः पादत्रयेण समर्थयंश्चतुर्थपादेन तु भव्यद्वारे बन्धस्वामित्वमुपदर्शयन्नाह—

तित्थयरसुरनराउयसहिया अजयम्मि होइ सगसयरी ।
देसाइनवसु ओघो, भव्वेसु वि सो अभव्व मिच्छसमा ॥४९॥ गीतिरियम्

(हारि०) व्याख्या–तीर्थकरसुरनरायुष्कसहिता 'अयते' अविरतसम्यग्दृष्टिगुणस्थानके सप्तसप्ततिर्भवति ७७ शुक्ललेश्याकानां बन्धमाश्रित्येति शेषः । तथा 'देसाइ' इति देशविरतादिनवसु गुणस्थानकेष्विति शेषः, ओघबन्धः । तद्यथा–देश० ६७ । प्र० ६३ । अ० ५९, ५८ । नि० ५८, ५६, २६ । अ० २२, २१, २०, १९, १८ । सू० १७ । उ० १ । क्षी० १ । स० १ इति लेश्यासु बन्धस्वामित्वमुक्तम् १० ॥ साम्प्रतं भव्यद्वारे तदभिधीयते– 'भव्वेसु वि' इति भव्येष्वपि न केवलं प्राक्तनपदेष्वित्यपिशब्दार्थः । 'सो' इति यः पूर्वं कर्मस्तवोक्तो बन्धो दृष्टान्तीकृतः स बन्धो भवतीति योगः । तद्यथा–सामान्येन १२० । मि० ११७ । इत्यादिकः । तथा 'अभव्व मिच्छसमा' इति प्राकृतत्वादभव्या मिथ्यादृष्टिसमाः । तद्यथा–मि० ११७ । इति गाथार्थः ॥४९॥

एवं भव्याभव्येषु बन्ध उक्तः ११ ॥ साम्प्रतं [3]सम्यक्त्वद्वारे यथासंभवं गुणस्थानकसम्मिश्रः सम्यक्त्वे उच्यते—

---

१ "तत्सप्त–" इत्यपि पाठः ॥ २ 'मुत्त' इत्यपि पाठः । ३ "सम्यक्त्वद्वारे" इति पाठो नास्ति जे० प्रतौ ।

(हारि०) व्याख्या-'तात्स्थ्यात्तद्व्यपदेशः' इतिन्यायान्मिश्रादिपञ्चगुणस्था जीवाः कर्मस्तवोक्तमोघं बध्नन्ति। तद्यथा–मिश्र ७४। अ० ७७। दे० ६७। प्र० ६३। अ० ५९, इति तेजोलेश्याकाः। तथा पद्मलेश्याका अपि विकलत्रिकं नरकत्रिकं पूर्वोक्तस्वरूपम्। 'सुहुमतिग' इति सूक्ष्मनामसाधारणनामापर्याप्तकनामलक्षणसूक्ष्मत्रिकमेकेन्द्रियजातिस्थावरनामातपनाम चेति पदद्वयस्य समाहारद्वन्द्वस्तदिति द्वादशप्रकृतीरित्यर्थः, 'हित्वा' त्यक्त्वा विंशत्यधिकशतमध्यादिति शेषः। शेषं शतमष्टाधिकं सामान्येन १०८ बध्नन्तीति प्राक्तनक्रियायोग इति। तथा तीर्थकराहारकद्विकहीनाः पूर्वोक्ताष्टाधिकशतसङ्ख्याः प्रकृतीर्मिथ्यादृशस्तु पद्मलेश्याका बध्नन्तीति योगः १०५। तथा पञ्चोत्तरशतं 'संढाइचउक्कोणं' इति नपुंसकादिचतुष्केण पूर्वोक्तेनोनं हीनं नपुंसकादिचतुष्कोनं पद्मलेश्याकाः सासादना बध्नन्तीति १०१। तथा मिश्रादयः 'पणग' इति पञ्चौघं पद्मलेश्याका बध्नन्तीति योगः। तद्यथा–मिश्र० ७४। अ० ७७। देश० ६७। प्र० ६३। अ० ५९, ५८। 'तुः' पूरणे समुच्चये वा। इति गाथाद्वयार्थः। ॥ ४४–४५ ॥

उक्तः पद्मलेश्यावत्सु गुणस्थानकेषु बन्धः। साम्प्रतं शुक्ललेश्यावत्सु जीवेषु सामान्येन स उच्यते—

वंधंति सुक्कलेसा, नारयतिरिसुहुमविगलजाइतिगं।
इगिथावरायवुज्जोय वज्जिय सयं तु चउरहियं ॥४६॥

(हारि०) व्याख्या–बध्नन्ति शुक्ललेश्याकास्तु सामान्येनेति शेषः। किं तत्? शतं चतुरधिकमिति संवन्धः। तुशब्दो योजित एव। किं कृत्वा? 'वज्जिय' इति वर्जयित्वेति योगः। किं तत्? नारकतिर्यक्त्रिकसूक्ष्मत्रिकविकलजातित्रिकम्। अत्र तत्पुरुषगर्भः समाहारद्वन्द्वः। त्रिकशब्दस्य च प्रत्येकमभिसंवन्धः कार्यः। तथा 'इगिथावरायवुज्जोय' इति विभक्तिलोपादेकेन्द्रियजातिस्थावरनामातपनामोद्योतनाम चेति प्रकृतिषोडशकमित्यर्थः, 'वर्जयित्वा' त्यक्त्वा विंशत्यधिकशतमध्यादिति शेष इति। तद्यथा–सामान्येन १०४। इति गाथार्थः ॥४६॥

साम्प्रतं शुक्ललेश्यावतामेव त्रयोदशगुणस्थानकेषु बन्धमाह—

तित्थाहारदुगूणं, एगहियसयं तु बंधही मिच्छा।
संढाइचउक्कोणं, साणा बंधंति [1]सगनउइं ॥४७॥

---

१ "बुग" इत्यपि। २ "सगणवई" इत्यपि पाठः।

(हारि०) व्याख्या-किंचिदत्र साध्याहारा योजना ततस्तदनन्तरोक्तं चतुरग्रशतं तीर्थकराहारकद्विकोनमेकाग्रशतं भवति, तच्छुक्ललेश्याका मिथ्यादृशो बध्नन्ति १०१ । पुनरेतदेवैकाग्रशतं 'संढाइचउक्कोणं' इति नपुंसकादिचतुष्केण पूर्वोक्तेनोनं हीनं नपुंसकादिचतुष्कोनं ¹मत् सप्तनवतिर्भवति, तां शुक्ललेश्याकाः सासादना बध्नन्ति । यदिह बध्नन्तीति द्विरुपादानं तद्गुणस्थानकद्वययोजनेन सुखार्थम् । इति गाथार्थः ॥४७॥

तथा—

तिरितियउज्जोऊणं पणुवीसं ²मोत्तु सुरनराउजुयं ।
चउहत्तरिं तु मीसा बंधहिँ कम्माण पयडीओ ॥४८॥

(हारि०) व्याख्या-तिर्यक्त्रिकोद्द्योतोनां पञ्चविंशतिं सुरनरायुर्युतां सप्तनवतेर्मध्यान्मुक्त्वा चतुःसप्ततिं शुक्ललेश्याका मिश्रा बध्नन्ति ७४ कर्मणां प्रकृतीः । इति गाथार्थः ॥४८॥

साम्प्रतं बन्धमाश्रित्य लेश्याद्वारं गाथायाः पादत्रयेण समर्थयंश्चतुर्थपादेन तु भव्यद्वारे बन्धस्वामित्वमुपदर्शयन्नाह—

तित्थयरसुरनराउयसहिया अजयम्मि होइ सगसयरी ।
देसाइनवसु ओघो, भव्वेसु वि सो अभव्व मिच्छसमा ॥४९॥ गीतिरियम्

(हारि०) व्याख्या-तीर्थकरसुरनरायुष्कसहिता 'अयते' अविरतसम्यग्दृष्टिगुणस्थानके सप्तसप्ततिर्भवति ७७ शुक्ललेश्याकानां बन्धमाश्रित्येति शेषः । तथा 'देसाइ' इति देशविरतादिनवसु गुणस्थानकेष्विति शेषः, ओघबन्धः । तद्यथा-देश० ६७ । प्र० ६३ । अ० ५९, ५८ । नि० ५८, ५६, २६ । अ० २२, २१, २०, १९, १८ । सू० १७ । उ० १ । क्षी० १ । स० १ इति लेश्यासु बन्धस्वामित्वमुक्तम् १० ॥ साम्प्रतं भव्यद्वारे तदभिधीयते-'भव्वेसु वि' इति भव्येष्वपि न केवलं प्राक्तनपदेष्वित्यपिशब्दार्थः । 'सो' इति यः पूर्वं कर्मस्तवोक्तो बन्धो दृष्टान्तीकृतः स बन्धो भवतीति योगः । तद्यथा-सामान्येन १२० । मि० ११७ । इत्यादिकः । तथा **'अभव्व मिच्छसमा'** इति प्राकृतत्वादभव्या मिथ्यादृष्टिसमाः । तद्यथा-मि० ११७ । इति गाथार्थः ॥४९॥

एवं भव्याभव्येषु बन्ध उक्तः ११ ॥ साम्प्रतं ³सम्यक्त्वद्वारे यथासंभवं गुणस्थानकसम्मिश्रः सम्यक्त्वे उच्यते—

---

१ "सत्सप्त-" इत्यपि पाठः ॥ २ 'मुत्त' इत्यपि पाठः । ३ "सम्यक्त्वद्वारे" इति पाठो नास्ति जे० प्रतौ ।

ओघो वेयगसम्मे, अजयाइचउक्क खाइगेवोघो ।
अजयादजोगि जाव उ, ओघो उवसामिए होइ ॥५०॥
[1]उवसम्मे वट्टंता चउण्हमिक्कंपि आउयं [2]नेय ।
बंधंति तेण अजया, सुरनरआऊहिँ ऊणं तु ॥५१॥

(हारि०) व्याख्या–ओघबन्धः कर्मस्तवोक्तः, 'वेयगसम्मे' इति क्षायोपशमिकसम्यक्त्वे गुणस्थानकमाश्रित्य, कस्मिन्? अत आह–'अजयाइचउक्क' इति विभक्तिलोपादविरतसम्य[3]ग्दृष्टि-देशयतप्रमत्ताप्रमत्तसयंतलक्षणगुणस्थानकचतुष्टये भवतीति योगः । तद्यथा–अविरत० ७७ । देश० ६७ । प्रमत्त० ६३ । अप्र० ५९, ५८ । क्षायोपशमिकसम्यक्त्वस्वरूपं तूदीर्णमिथ्यात्वक्षयेऽनुदीर्णोपशमे भवतीति । उक्तं च–"**मिच्छत्तं जमुइन्नं, तं खीणं अणुइयं तु उवसंतं । मीसीभावपरिणयं, वेइज्जंतं खओवसमं ॥१॥**" तथा '**खाइगेवोघो**' इति क्षायिकेऽप्योघबन्धो भवतीति सण्टङ्कः । कस्मिन्? अत आह–अजयादजोगिजाव' इति अयताच्चतुर्थगुणस्थानकादयोगिगुणस्थानकं चतुर्दशं यावत् । तद्यथा–अवि० ७७ । दे० ६७ । इत्यादिकः पूर्ववदिति । क्षायिकसम्यक्त्वस्वरूपं त्विदम्–"**खीणे दंसणमोहे, तिविहम्मि वि भवनियाणभूयम्मि । निप्पच्चवायमउलं, सम्मत्तं खाइयं होइ ॥१॥**" तथौघबन्ध औपशमिके भवतीति ॥५०॥ अत्र किंचिद्विशेषमाह–'**उवसम्मे**' इत्यादिद्वितीयगाथा व्याख्यायते–औपशमिके सम्यक्त्वे वर्तमाना जीवाश्चतुर्णां मध्यादेकमप्यायुष्कं नैव बध्नन्ति, तेन '**अयताः**' अविरतसम्यग्दृष्टयः सुरनरायुर्भ्यां, तुशब्दस्यैवकारार्थत्वात्, ऊनामेव नवरमोघं बध्नन्तीति । तदन्यायुष्कद्वयं प्रागेव मिथ्यात्वसासादनगुणस्थानकद्वयेऽपनीतम्, ततोऽयतानामौपशमिकसम्यक्त्वे पञ्चसप्ततिरेव भवतीति ७५ । अयमाशयः–कर्मस्तवोक्तौघबन्धोऽविरतसम्यग्दृष्टिगुणस्थानके सुरनरायुषोर्बन्धोऽस्ति, औपशमिके नास्ति । इति गाथाद्वयार्थः ॥५०-५१॥

साम्प्रतं गाथायाः पूर्वार्द्धेनौपशमिकसम्यक्त्वेऽपि देशविरताद्युपशान्तमोहान्तगुणस्थानकेषु बन्धं दर्शयन्नपरार्द्धेन तु संज्ञिद्वारे तमेव प्रतिपादयन्नाह—

ओघो देसजयाइसु, सुराउहीणो उ जाव उवसंतो ।
ओघो [4]सण्णिसु नेओ, मिच्छाभंगो असण्णीसु ॥५२॥

(हारि०) व्याख्या–ओघबन्धो देशयतादिषु, किं निःशेष एव? न इत्याह–सुरायुषा हीनः सुरायुर्हीनः, तुशब्दः पुनरर्थे । ओघबन्धे हि देशविरत्याद्यप्रमत्तान्तेषु सुरायुषो बन्धोऽस्ति,

1 "उवसंते" इत्यपि पाठः । 2 "नेय" इत्यपि पाठः । 3 "–ग्दृष्टिप्रभृतिगुणस्थानकचतुष्के भवतीति योगः" इति जे० प्रतौ ॥ 4 "सन्निसु" इत्यपि पाठः ।

औपशमिके सोऽपि नास्तीति भावः। अयं चौघबन्धः कियद्दूरं यावत् ज्ञेयः ? इत्याह–यावत् 'उपशान्तं' उपशान्तमोहवीतरागगुणस्थानकं प्राकृतत्वात्पुँल्लिङ्गनिर्देश इति। अङ्कतः पुनरीदृशः देव० ६६। प्र० २६। अ० ५८। नि० ५८, ५६, २६,। अ० २२, २१, २०, १९, १८। सू० १७। उ० १। अत्र देवायुर्बन्धाभावाद्देशविरतिप्रभृतिगुणस्थानकत्रय एव कर्मस्तवोक्त-बन्धाद्विशेषः. नान्यत्रेति। यदा पुनरुपशमश्रेणिस्थ आयुष्क[1]क्षये देवेषूत्पद्यतेऽसौ तदा त्वग्रति-पन्नौपशमिकसम्यक्त्व एवायुर्बन्धं विधत्त इति। इह सूत्रेऽनुक्तोऽपि सम्यक्त्वविपक्षभूतेषु मिथ्यात्वसासादनमिश्रेषु कर्मस्तवोक्त ओघबन्धो द्रष्टव्यः। स पुनः–मि० ११७। सा० १०१। मि० ७४। इति। अत्राह परः–ननु "**उवसामगसेढीए, पट्ठवओ अप्पमत्तविरओ उ। पज्जवसाणे सो वा, होइ पमत्तो अविरओ वा ॥९॥**" अयमर्थः–उपशमश्रेण्याः '**प्रस्थापकः**' आरोहकः '**अप्रमत्तविरतः**' सप्तमगुणस्थानकस्थः साधुर्भवति। स एवौपश-मिकः '**पर्यवसाने**' उपशमश्रेण्या अद्धाक्षये भवति प्रमत्तोऽविरतो वा। तथा '**सो वा**' इत्यत्र वाशब्दादुपशमश्रेणिस्थो मृतो वा देवेषूत्पन्नोऽविरतो वा भवतीति, सत्यम्, अपराचार्यमतेना-विरतादयोऽपि प्रारम्भका इति। [2]यत उक्तम्–"**अन्ने भणंति अविरयदेसपमत्तविरयाणं। अन्नयरो पडिवज्जइ, दंसणसमणम्मि उ नियट्टी ॥१॥**" चतुर्थपादस्यायमर्थः-दर्शन-त्रिकोपशमे सति निवृत्तिबादरो भवतीति। औपशमिकसम्यक्त्वं तूपशमश्रेण्यां प्रथमसम्यक्त्वलाभे वा भवति जीवस्य। उक्तं च–"**उवसामगसेढिगयस्स होइ उवसामियं तु सम्मत्तं। जो वा अकयतिपुंजो, अखवियमिच्छो लहइ सम्मं ॥१॥**" अत्राह परः–ननु क्षायोपशमिकौ-पशमिकसम्यक्त्वयोः कः प्रतिविशेषः, उच्यते–क्षायोपशमिकसम्यक्त्वमिथ्यात्वदलिकवेदनं विपा-कतो नास्ति, प्रदेशतः पुनर्विधत्ते। औपशमिके तु प्रदेशतोऽपि नास्तीति विशेषः। एवं सप्रपञ्चं सम्यक्त्वद्वारे बन्धस्वामित्वमभिहितमिति १२॥ '**ओघो सण्णि०**' इत्यादि ओघबन्धः कर्म-स्तवोक्तः '**संज्ञिषु**' मनोविज्ञानवत्सु ज्ञेयः। तद्यथा–सामान्येन १२०। मि० ११७। इत्या-दिकः पूर्ववदिति। तथा मिथ्यादृष्टिभङ्गकः '**असंज्ञिषु**' मनोविज्ञानविकलेषु ज्ञेय इति पूर्वेण योगः। तद्यथा–मि० ११७। इति गाथार्थः ॥५२॥

अथ गाथायाः पूर्वार्द्धेन सासादनेऽसंज्ञिबन्धं समर्थयन्नपरार्द्धेनाहारकद्वारे सप्रतिपक्षे तमेवाह–

**साणेवि असण्णिस्सा, भंगा [3]सण्णुब्भवा मुणेयव्वा।**
**आहारगेसु ओघो, इयरेसु य [4]कम्मणो भंगो ॥५३॥**

---

१ "० क्षये सर्वार्थसिद्धावुत्पद्यतेऽसौ तदा" इति जे०। २ "यदुक्तम्" इत्यपि। ३ "सण्णिब्भवा" इत्यपि। ४ "कम्मुणो" इत्यपि पाठः।

(हारि०) व्याख्या--सासादनेऽप्यसंज्ञिनो भङ्गः संज्ञ्युद्भवो मुणितव्यः। तद्यथा-सा० १०१। इह सूत्रे बहुवचनं प्राकृतशैलीवशाद्। इति संज्ञिद्वारे बन्धोऽभिहित इति १३ ॥ 'आहारगेसु ओघो' इति आहारकेष्वोघबन्धः कर्मस्तवोक्तः। तद्यथा--सामान्येन १२०। मि० ११७। इत्यादिकः। तथेतरेषु पुनरनाहारकेषु "कम्मणो' इति कार्मशरीरस्य संबन्धी 'भंगो' [2]भङ्ग-विकल्पो मुणितव्य इति पूर्वेण योगः। तद्यथा--आयुस्त्रिकं नरकत्रिकं, आहारकद्विकम्, इत्यष्टौ प्रकृतीरोघबन्धाद्विंशत्यधिकशतलक्षणान्मुक्त्वा शेषस्य द्वादशोत्तरशतस्यानाहारके सामान्येन बन्धः ११२। तथा सुरद्विकं २ तीर्थकरं १ वैक्रियद्विकं २ च पूर्वोक्तद्वादशोत्तरशतमध्यान्मुक्त्वा शेषस्य सप्तोत्तरशतस्यानाहारके मिथ्यादृष्टेर्बन्धः १०७। तथा नरकत्रिकहीनाः षोडश प्रकृतीः पूर्वोक्ताः सप्तोत्तरशतमध्याद्वर्जयित्वा शेषायाश्चतुर्नवतेः सासादनगुणस्थानकेऽनाहारकजीवे बन्धः ९४। तिर्यगायुरूनां पञ्चत्रिंशतिं पूर्वोक्तां चतुर्नवतेर्मध्यान्मुक्त्वा शेषायाः सप्ततेः सुरद्विकवैक्रियद्विकतीर्थकरयुक्ताया अविरतगुणस्थानकेऽनाहारकजीवे बन्धः ७५। तथा सयोगिनि त्रयोदशगुणस्थानके एकस्याः सातप्रकृतेः समुद्घाते तृतीयचतुर्थपञ्चमसमयेष्वनाहारकजीवे बन्धः। अयं चानाहारकजीवो मिथ्यात्वसासादनाविरतसयोगिगुणस्थानकचतुष्टय एव लभ्यते, नान्यत्रेति। यदिदं बन्धस्वामित्वं कार्मणकाययोगे प्राक् चतुर्थयोगद्वारे प्रतिपादितं तदिहाप्यर्थतः स्मारितं विस्मरणशीलानाम्। नवरं तत्र कार्मणकाययोगाभिलापेनोक्तमिह त्वनाहारकाभिलापेन। इति गाथार्थः ॥५३॥

इत्याहारके बन्धस्वामित्वं प्रतिपादितम् १४ ॥ तत्प्रतिपादनाच्च प्रतिपादितं प्रकरणादौ प्रतिज्ञातं चतुर्दशमार्गणास्थानबन्धस्वामित्वं गुणस्थानकयोजनागर्भं यथासंभवं पर्याप्तकापर्याप्तकजीवस्थानक[3]सन्मिश्रं च। साम्प्रतमौद्धत्यपरिहारपूर्वकं प्रकरणसमर्थनां प्रयरणपरिज्ञानोपायं च प्रचिकटयिषुर्गाथामाह—

इय पुव्वसूरिकय[4]पगरणेसु जडबुद्धिणा [5]मए रइयं।
बंधस्सामित्तमिणं, नेयं कम्मत्थयं सोउं ॥५४॥

॥ बंधसामित्त सम्मत्तं ॥

(हारि०) व्याख्या-इतिशब्दः परिसमाप्तौ। 'पूर्वसूरिकृतप्रकरणेषु' कर्मप्रकृत्यादिषु विषये 'जडबुद्धिना' बालमतिना 'मए' इति ग्रन्थकार आत्मानं निर्दिशति, 'रचितं' निबद्धम्।

१ 'कम्मुणो" इत्यपि पाठः॥ २ "बन्धविकल्पो" इत्यपि। ३ "समन्वितं च" इत्यपि। ४ "०पगरणाउ" इत्यपि पाठः। ५ "मया" इत्यपि।

यद्वा विभक्तिव्यत्ययात्पूर्वसूरिकृतप्रकरणेभ्यः सकाशाद्रचितं स्वभावतः पुनर्जडमतिनेति शेषः। तथैवेति, 'बन्धस्वामित्वमिदं' प्रस्तुतप्रकरणमेतच्च 'ज्ञेयं' बोद्धव्यम्। किं कृत्वा? 'श्रुत्वा' आकर्ण्य, कम्? 'कर्मस्तवं' कर्मस्तवप्रकरणम्, इह बहुषु स्थानेषु तदुक्तबन्धनिर्देशद्वारेण बन्धाभिधानात्। इति गाथार्थः ॥५४॥

•

॥ अथ टीकाकृत्प्रशस्तिः ॥

•

यत्यालये मन्दगुरूपशोभे, सन्मङ्गले सद्बुधराजहंसे ।
तारापथे वा सुकविप्रचारे श्रीमानदेवाभिधसूरिगच्छे ॥१॥
भव्या बभूवुः शुभशस्यशिष्याः, अध्यापकाः श्रीजिनदेवसंज्ञाः ।
तेषां विनेयो गुरुभक्तियुक्तः समस्ति नाम्ना हरिभद्रसूरिः ॥२॥
अणहिल्लपाटकपुरे, श्रीमज्जयसिंहदेवनृपराज्ये ।
आशावरसौवर्णिकवसतौ विहिताधिवासेन ॥३॥
बन्धस्वामित्वाख्यप्रकरणवृत्तिः समासतो रचिता ।
तेनेयं तनुमतिना, प्राक्तनटिप्पनकमवलोक्य ॥४॥
अत्र च यन्मतिमान्द्यादुत्सूत्रं विरचितं कथञ्चिदपि ।
तच्छोध्यं धीमद्भिः, परोपकारैककृतचित्तैः ॥५॥
वर्षशतैकादशके द्वासप्तत्याऽधिके नभोमासे ।
सितपंचम्यां सूर्ये समर्थिता वृत्तिकेयमिति ॥६॥
अस्यामक्षरगणनाजातं शतपंचकं युतं षष्ट्या ।
द्वात्रिंशदक्षरात्मक–सदनुष्टुप्छन्दसां प्रायः ॥७॥

•

॥ इति श्रीमद्धरिभद्रसूरिविहिता बन्धस्वामित्वप्रकरणवृत्तिः समाप्ता ॥

•

॥ ग्रन्थाग्रम् ५६० ॥

समाप्तोऽयं सटीको बन्धस्वामित्वाख्यस्तृतीयः कर्मग्रन्थः

(हारि०) व्याख्या--सासादनेऽप्यसंज्ञिनो भङ्गः संज्ञ्युद्भवो मुणितव्यः। तद्यथा-सा० १०१। इह सूत्रे बहुवचनं प्राकृतशैलीवशाद्। इति संज्ञिद्वारे बन्धोऽभिहित इति १३ ॥ 'आहारगेसु ओघो' इति आहारकेष्वोघबन्धः कर्मस्तवोक्तः। तद्यथा--सामान्येन १२०। मि० ११७। इत्यादिकः। तथेतरेषु पुनरनाहारकेषु "कम्मणो" इति कार्मशरीरस्य संबन्धी 'भंगो' [2]भङ्ग-विकल्पो मुणितव्य इति पूर्वेण योगः। तद्यथा-आयुस्त्रिकं नरकत्रिकं, आहारकद्विकम्, इत्यष्टौ प्रकृतीरोघबन्धाद्विंशत्यधिकशतलक्षणान्मुक्त्वा शेषस्य द्वादशोत्तरशतस्यानाहारके सामान्येन बन्धः ११२। तथा सुरद्विकं २ तीर्थकरं १ वैक्रियद्विकं २ च पूर्वोक्तद्वादशोत्तरशतमध्यान्मु-क्त्वा शेषस्य सप्तोत्तरशतस्यानाहारके मिथ्यादृष्टेर्बन्धः १०७। तथा नरकत्रिकहीनाः षोडश प्रकृतीः पूर्वोक्ताः सप्तोत्तरशतमध्याद्वर्जयित्वा शेषायाश्चतुर्नवतेः सासादनगुणस्थानकेऽनाहार-कजीवे बन्धः ९४। तिर्यगायुरूनां पञ्चविंशतिं पूर्वोक्तां चतुर्नवतेर्मध्यान्मुक्त्वा शेषायाः सप्ततेः सुरद्विकवैक्रियद्विकतीर्थकरयुक्ताया अविरतगुणस्थानकेऽनाहारकजीवे बन्धः ७५। तथा सयो-गिनि त्रयोदशगुणस्थानके एकस्याः सातप्रकृतेः समुद्धाते तृतीयचतुर्थपञ्चमसमयेष्वनाहारकजीवे बन्धः । अयं चानाहारकजीवो मिथ्यात्वसासादनाविरतसयोगिगुणस्थानकचतुष्टय एव लभ्यते, नान्यत्रेति। यदिदं बन्धस्वामित्वं कार्मणकाययोगे प्राक् चतुर्थयोगद्वारे प्रतिपादितं तदिहाप्यर्थतः स्मारितं विस्मरणशीलानाम्। नवरं तत्र कार्मणकाययोगाभिलापेनोक्तमिह त्वनाहारकाभिला-पेन। इति गाथार्थः ॥५३॥

इत्याहारके बन्धस्वामित्वं प्रतिपादितम् १४ ॥ तत्प्रतिपादनाच्च प्रतिपादितं प्रकरणादौ प्रतिज्ञातं चतुर्दशमार्गणास्थानबन्धस्वामित्वं गुणस्थानकयोजनागर्भं यथासंभवं पर्याप्तकापर्याप्तक-जीवस्थानक[3]सन्मिश्रं च। साम्प्रतमौद्धत्यपरिहारपूर्वकं प्रकरणसमर्थनां प्रयरणपरिज्ञानोपायं च प्रचिकटयिषुर्गाथामाह—

इय पुव्वसूरिकय[4]पगरणेसु जडबुद्धिणा [5]मए रइयं।
बंधस्सामित्तमिणं, नेयं कम्मत्थयं सोउं ॥५४॥

॥ बंधसामित्त सम्मत्तं ॥

(हारि०) व्याख्या-इतिशब्दः परिसमाप्तौ। 'पूर्वसूरिकृतप्रकरणेषु' कर्मप्रकृत्यादिषु विषये 'जडबुद्धिना' बालमतिना 'मए' इति ग्रन्थकार आत्मानं निर्दिशति, 'रचितं' निबद्धम्।

१ 'कम्मुणो" इत्यपि पाठः॥ २ "बन्धविकल्पो" इत्यपि । ३ "समन्वितं च" इत्यपि। ४ "०पग-रणाउ" इत्यपि पाठः। ५ "मया" इत्यपि।

यद्वा विभक्तिव्यत्ययात्पूर्वसूरिकृतप्रकरणेभ्यः सकाशाद्रचितं स्वभावतः पुनर्जडमतिनेति शेषः। तथैवेति, 'बन्धस्वामित्वमिदं' प्रस्तुतप्रकरणमेतच्च 'ज्ञेयं' बोद्धव्यम्। किं कृत्वा ? 'श्रुत्वा' आकर्ण्य, कम् ? 'कर्मस्तवं' कर्मस्तवप्रकरणम्, इह बहुषु स्थानेषु तदुक्तबन्धनिर्देशद्वारेण बन्धाभिधानात्। इति गाथार्थः ॥५४॥

•

॥ अथ टीकाकृत्प्रशस्तिः ॥

•

यत्यालये मन्दगुरूपशोभे, सन्मङ्गले सद्बुधराजहंसे ।
तारापथे वा सुकविप्रचारे श्रीमानदेवाभिधसूरिगच्छे ॥१॥
भव्या बभूवुः शुभशस्यशिष्याः, अध्यापकाः श्रीजिनदेवसंज्ञाः ।
तेषां विनेयो गुरुभक्तियुक्तः समस्ति नाम्ना हरिभद्रसूरिः ॥२॥
अणहिल्लपाटकपुरे, श्रीमज्जयसिंहदेवनृपराज्ये ।
आशावरसौवर्णिकवसतौ विहिताधिवासेन ॥३॥
बन्धस्वामित्वाख्यप्रकरणवृत्तिः समासतो रचिता ।
तेनेयं तनुमतिना, प्राक्तनटिप्पनकमवलोक्य ॥४॥
अत्र च यन्मतिमान्द्यादुत्सूत्रं विरचितं कथञ्चिदपि ।
तच्छोध्यं धीमद्भिः, परोपकारैककृतचित्तैः ॥५॥
वर्षशतैकादशके द्वासप्तत्याऽधिके नभोमासे ।
सितपंचम्यां सूर्ये समर्थिता वृत्तिकेयमिति ॥६॥
अस्यामक्षरगणनाज्ञातं शतपंचकं युतं षष्ट्या ।
द्वात्रिंशदक्षरात्मक-सदनुष्टुप्छन्दसां प्रायः ॥७॥

•

॥ इति श्रीमद्धरिभद्रसूरिविरचिता बन्धस्वामित्वप्रकरणवृत्तिः समाप्ता ॥

•

॥ ग्रन्थाग्रम् ५६० ॥

समाप्तोऽयं सटीको बन्धस्वामित्वाख्यस्तृतीयः कर्मग्रन्थः

॥ ॐ ह्रीं श्रीं अर्हं श्रीशंखेश्वरपार्श्वनाथाय नमः ।

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

॥ सकलागमरहस्यवेदिश्रीमदाचार्यविजयदानसूरीश्वरेभ्यो नमः ॥

॥ कर्मसाहित्यनिष्णातश्रीमदाचार्यविजयप्रेमसूरीश्वरेभ्यो नमः ॥

श्रीमज्जिनवल्लभगणिपुङ्गवप्रणीतः

# षडशीतिनामा चतुर्थः कर्मग्रन्थः ।

(अपरनाम—आगमिकवस्तुविचारसारप्रकरणम्)

## श्रीहरिभद्रसूरिविरचितविवृत्त्या श्रीमन्मलयगिरिसूरिविरचितवृत्त्या च समलङ्कृतः



(हारिभद्री वृत्तिः)

नत्वा जिनं विधास्ये, विवृतिं जिनवल्लभप्रणीतस्य ।
आगमिकवस्तुविस्तर—विचारसारप्रकरणस्य ॥१॥

इह जिनवल्लभगणिनामा सूत्रकारो गणधरदेवादिनिबद्धातिगम्भीरशास्त्रार्थावगाहनाऽसमर्थानां विशिष्टसंहननायुर्मेधादिविकलानां कलिकालोत्पन्नमानवानामनुग्रहाय सूक्ष्मार्थ[1]सार्थप्रकाशनार्थं प्रस्तुतप्रकरणं चिकीर्षुर्मङ्गलादिप्रतिपादकमिदमादौ गाथाद्वितयमाह—

(मलयगिरीया वृत्तिः)

प्रणम्य सिद्धिशास्तारं, कर्मवैचित्र्यवेदिनम् ।
जिनेशं विदधे वृत्तिं, षडशीतेर्यथाऽऽगमम् ॥१॥

इह हि शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्तमानाः सन्त इष्टदेवतास्तवाभिधानपुरस्सरमेव प्रवर्तन्ते, न चायमाचार्यो न शिष्ट इति तत्समयपरिपालनार्थं तथा श्रेयांसि बहुविघ्नानि भवन्ति, उक्तं च—"**श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि । अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः ॥१॥**" इति । इदं च प्रकरणं सम्यग्ज्ञानहेतुत्वाच्छ्रेयोभूतमतो मा भूदत्र विघ्न इति विघ्नविनायकोपशान्तये चेष्टदेवतास्तवम् । तथा न प्रेक्षापूर्वकारिणः क्वचिदपि

---

१ "शास्त्रार्थ-०" इत्यपि ।

प्रयोजना[१]दिविरहे प्रवर्तन्ते। ततः प्रेक्षावतां प्रवृत्त्यर्थं प्रयोजनादिकं च प्रतिपिपादयिषुरादाविदं गाथाद्वयमाह—

निच्छिन्नमोहपासं, पसरियविमलोरुकेवलपयासं।
पणयजणपूरियासं, पयओ पणमित्तु जिणपासं॥१॥
वोच्छामि जीवमग्गण–गुणठाणुवओगजोगलेसाई।
किंचि सुगुरूवएसा, सन्नाणसुझाणहेउत्ति ॥२॥

(हारि०) व्याख्या—तत्र विघ्नविनायकोपशान्तये शिष्यजनप्रवर्तनाय वा शिष्टसमयपरिपालनार्थं चेष्टदेवतानमस्काररूपं भावमङ्गलमुपादेयम्। तथा श्रोतृजनप्रवृत्त्यर्थं शिष्टसमयपरिपालनार्थं च संबन्धादित्रयं वाच्यम्। तथाहि-इह श्रेयोभूते वस्तुनि प्रवर्तमानानां प्रायो विघ्नः संभवति, श्रेयोभूतत्वादेव, श्रेयोभूतं चेदं स्वर्गापवर्गसंसर्गहेतुत्वाद्, विघ्नोपहतशक्तेश्च शास्त्रकर्तुश्चिकीर्षितप्रकरणस्यानिष्पत्तिर्मा भूदिति विघ्नविनायकोपशमनाय मङ्गलमुपादेयम्। आह च-"**बहुविग्घाइं सेयाइं तेण कयमङ्गलोवयारेहिं। सत्थे पयट्टियव्वं, विज्जाए महानिहीए व्व ॥१॥**" ननु मानसादिनमस्कारतपश्चरणादिना मङ्गलान्तरेणैव विघ्नोपशमसद्भावादिष्टसिद्धिर्भविष्यतीति किमनेन ग्रन्थगौरवकारिणा वाचनिकनमस्कारेण ? इति, सत्यम्, किन्तु श्रोतृजनप्रवृत्त्यर्थमिदं भविष्यति। तथाहि-यद्यप्युक्तन्यायेन कर्तुरविघ्नेष्टसिद्धिः स्यात्तथाऽपि प्रमादवतः शिष्यस्येष्टदेवतानमस्काररूपमङ्गलं विना प्रक्रान्तप्रकरणाध्ययनश्रवणादिषु प्रवर्तमानस्य विघ्नसंभवादप्रवृत्तिः स्यात्। मङ्गलवाक्योपन्यासे तु मङ्गलवचनाभिधानपूर्वकं प्रवर्तमानस्य मङ्गलवचनापादितदेवता[२]विषयशुभभावव्यपोहितविघ्नत्वेन शास्त्रे प्रवृत्तिरप्रतिहतप्रसरा स्यात्। तथा देवताविशेषनमस्कारोपादाने सति देवताविशेषगदितागमानुसारीदं प्रकरणमत उपादेयमित्येवंविधबुद्धिनिबन्धनत्वेन शिष्यप्रवृत्त्यर्थमिदं भविष्यतीति। आह च-"**मंगलपुव्वपवत्तो, पमत्तसीसो वि पारमिह जाइ। सत्थविसेसन्नाणाउ गोरवाविह पयट्टेज्जा ॥१॥**" शास्त्रविशेषपरिज्ञानात् इत्युक्तगाथायास्तृतीयपादस्यार्थः। ननु मङ्गलविकलानामपि बहुतमशास्त्राणां दृश्यते संसिद्धिः श्रोतृजनप्रवृत्तिश्चेति, ततः किमनेनानैकान्तिकेन शास्त्रगौरवकारिणा मङ्गलेन ? इति सत्यम् शिष्टसमयपरिपालनार्थमिदं भविष्यति। तथाहि—शिष्टाः क्वचिदभीष्टे वस्तुनि प्रवर्तमाना इष्टदेवतानमस्कारपूर्वकं प्रायः प्रवर्तन्ते। शिष्टश्चायमप्या-

१ आदिशब्दात् संबन्धाभिधेयग्रहणम्॥ २ "विशेषनमस्कारोपलब्धशुभ०—" इत्यपि पाठः।

चार्य इति शिष्टसमाचारः परिपालितो भवतु, इति मङ्गलमभिधेयम्। आह च–"**शिष्टाः शिष्टत्वमायान्ति, शिष्टमार्गानुपालनात्। तल्लङ्घनादशिष्टत्वं, तेषां समनुषज्यते॥१॥**" तथा संबन्धादीनि श्रोतृजनप्रवृत्त्यर्थमभिधेयानि। तथाहि–'यदसंबन्धं तत्र न प्रवर्तन्ते प्रेक्षावन्तो दशदाडिमादिवाक्य इव। एवं निरभिधेयेऽपि काकदन्तपरीक्षायामिव। एवं निष्प्रयोजनेऽपि कण्टकशाखामर्दन इवेति। अतः संबन्धादिप्रतिपादनं श्रोतृणां शास्त्रे प्रवृत्त्यङ्गम्। अथासर्वज्ञादीतरागवचनानां व्यभिचारित्वसंभवेन संबन्धादिसद्भावे निश्चयाभावान्नेतः प्रेक्षावतां प्रवृत्तिरत्र भविष्यति। या पुनः संशयात्प्रवृत्तिस्तां संबन्धादिवचनं विनैव भवन्तीं को निवारयितुं पारयतीति न श्रोतृप्रवृत्त्यङ्गं संबन्धादिवचनम्, सत्यम्, किन्तु शिष्टसमयपरिपालनार्थं भविष्यति। शास्त्रकारा ह्येवं प्रवर्तमानाः प्रायः प्रेक्ष्यन्ते। येऽपि किल बौद्धाः सर्वथा वचनस्य प्रामाण्यं नाभ्युपगतास्तेऽपि संबन्धाद्यभिधानपूर्वकमेव प्रवृत्तास्ततः शिष्टसमयानुपालनार्थमिदमिति। इह–"**संहिता च पदं चैव, पदार्थः पदविग्रहः। चालना प्रत्यवस्थानं, व्याख्या तन्त्रस्य षड्विधा॥१॥**" इति व्याख्यालक्षणप्रपञ्चोऽन्यतोऽवधारणीयः। तत्र निच्छिन्नो नितरां त्रोटितो मोह एव पाशो मोहनीयकर्मबन्धनं येन स निच्छिन्नमोहपाशस्तम्। प्रसृतो=विस्तृतो विमलो=निर्मल उरु=बृहत्प्रमाणः केवलप्रकाशः=केवलज्ञानोद्योतो यस्य स प्रसृतविमलोरुकेवलप्रकाशस्तम्। प्रणतजनानां=प्रणिपतितलोकानां पूरिताः=परिपूर्णतां नीता आशा=मनोरथा येन स प्रणतजनपूरिताशस्तम् '**प्रयतः**' आदरपरः '**प्रणम्य**' प्रणिपत्य '**जिनपार्श्वं**' पार्श्वतीर्थकरमिति॥१॥ ततो '**वक्ष्यामि**' अभिधास्ये, स्थानशब्दस्य प्रत्येकमभिसंबन्धाज्जीवस्थानानि च सूक्ष्मापर्याप्तकैकेन्द्रियादीनि, मार्गणास्थानानि च गत्यादीनि, गुणस्थानकानि च मिथ्यादृष्टयादीनि, उपयोगाश्च मतिज्ञानादयः, योगाश्च मनःप्रभृतयः लेश्याश्च कृष्णलेश्याद्याः, ता आदिः=प्रभृतिर्यस्य तत्तथा। आदिशब्दात् कर्मबन्धोदयोदीरणासत्तास्थानाल्पबहुत्वबन्धहेतुपरिग्रहः। किंचिदित्यल्पं न विस्तरतः क्रियाविशेषणमिदम्। '**सुगुरूपदेशात्**' सदाचार्यहेयोपादेयार्थप्रतिपादनलक्षणात्, संज्ञानं च विशिष्टावबोधः सुध्यानं च धर्मध्यानादि संज्ञानसुध्याने तयोर्हेतुः=कारणमितिकृत्वा। तत्र प्रथमगाथया मङ्गलम्, द्वितीयया तु जीवस्थानाद्यभिधेयम्। सुगुरूपदेशादिति पदसूचितो गुरुपर्वक्रमलक्षणः संबन्धः। संज्ञानसुध्यानहेतुरितिवचनाभ्यूहितं प्रयोजनमिति भावनीयम्। इह च जीवस्थानाद्यभिधेयजातं यद्यपि सामान्यतः प्रोक्तं तथाऽपि जीवस्थानेषु गुणस्थान १ योगो २ पयोग ३ लेश्या ४ बन्धो ५ दयो ६ दीरणा ७ सत्तास्थाना ८ ल्याल्पष्टौ। तथा मार्गणास्थानेषु जीवस्थानक १ गुणस्थानक २ योगो ३ पयोग ४ लेश्याऽ ५ ल्पबहुत्व ६ रूपाणि षट्। तथा गुणस्थानकेषु जीवस्थान १ योगो २ पयोग ३ लेश्या ४

१ "यदसंबद्धं" इत्यपि पाठः॥

बन्धहेतु ५ बन्धोदयो ७ दीरणा ८ सत्तास्थाना ९ ऽल्पबहुत्व १० लक्षणानि दश पदान्यभिधेयतया मन्तव्यानि। व्याख्यानतो विशेषप्रतिपत्तेरिति । इहाष्टपदादिसंग्रहार्थमिदं गाथात्रयं श्रोतृजनसुखार्थं कथ्यते । तद्यथा—"चउदसजियठाणेसु, गुणजोगुवओगलेसबंधुदया । [1]उदीरणा य सत्ता, वत्तव्वा अट्ठपयकमसो ॥१॥ चउदसमग्गणठाणेसु मूलएसु बिसइइयरेसु। जियगुणजोगुवओगा, लेसप्पबहुं च छट्ठाणा ॥२॥ चउदसगुणठाणेसु जियजोगुवओगलेसबंधा य । बंधुदउदीरणाओ, [2]संतप्पबहुं च दस ठाणा, ॥३॥" इति गाथाद्वयार्थः ॥२॥

अथ जीवस्थानानि प्रदर्शयन्नाह—

(मल०) इहाद्यगाथयाऽभीष्टदेवतास्तवस्याभिधानम् । इतरया च प्रयोजनादीनाम् स चाभीष्टदेवतास्तवो द्विधा, प्रणामतः स्तोत्रतश्च । तत्र प्रयतः प्रणम्येति प्रणामतः, परिशिष्टपदैः स्तोत्रतः। स्तोत्रमपि [3]स्वपरार्थसंपदतिशयाभिधानेन द्विधा । स्वार्थसंपन्नश्च परार्थं प्रति समर्थो भवतीति प्रथमतः पूर्वार्द्धेन स्वार्थसंपदमाह—नितरामपुनर्भावेन छिन्नो द्विधाकृत आत्मना सह एकीभूतः सन् ततः पृथग्भूतीकृतः, मोहयत्यात्मानमिति मोहो मोहनीयं कर्म, स एव भवचारकविनिर्गमप्रतिबन्धकारितया पाश इव पाशो येन स निच्छिन्नमोहपाशस्तं प्रणम्य । मोहग्रहणं चेह शेषज्ञानावरणीयादिघातिकर्मत्रयोपलक्षणम् । यत आह—'पसरियविमलोरुकेवलपयासं' न ह्यपरिक्षीणमोह इवाक्षीणज्ञानावरणीयादिघातिकर्मा प्रसृतविमलोरुकेवलप्रकाशो भवतीति । तत्र प्रसृतो=विस्तृतो विमलो=निर्मलस्तदावरणमलस्य निःशेषतोऽपगमात् , उरु=विशालः सकललोकालोकविषयत्वात्केवलस्य=केवलज्ञानस्य प्रकाशः=प्रकाशकत्वशक्तिर्यस्य स प्रसृतविमलोरुकेवलप्रकाशः। शक्तेश्च प्रसरः प्रचुरीभावो न पुनर्बहिर्गमनमसंभवात् । इह प्रकाशशब्दस्य केवलमेव प्रकाशः केवलप्रकाश[4] इत्येवं केवलशब्देन सह सामानाधिकरण्यमव्याख्याय यत्प्रकाशकत्वरूपशक्तिवाचकत्वव्याख्यानं तेनेदमावेद्यते यदुत न ज्ञानं क्वापि गच्छति, किंत्वात्मस्थमेव सत्सकलमपि ज्ञेयं भिन्नदेशस्थमपि अचिन्त्यशक्तियुक्ततया प्रकाशयतीति । तेन यत्कैश्चिदुच्यते, इह सकललोकपर्यन्तेऽपि ज्ञानमुदयते तच्च ज्ञानमात्मनो गुणः, गुणाश्च न द्रव्यमन्तरेण क्वापि गच्छन्ति तस्मादाकाशवदात्माऽपि सर्वव्यापी प्रतिपत्तव्य इति तदपास्तं द्रष्टव्यम् । ज्ञानस्याचिन्त्यशक्त्युपेततयास्वभिन्नदेशस्थेऽपि विषये परिच्छेदाय प्रवृत्त्युपपत्तेः, यथा लोहोपलस्य भिन्नदेशस्थस्यापि लोह-

---

१ "उदीरणया" इत्यपि पाठः । २ "अप्पबहुं चेव दसठाणा ॥३॥" इति जे० । ३ स्वश्च परश्च तयोरर्थसंपत् तस्या अतिशयः तस्याभिधानं तेनेति समासः । ४ "इति सामानाधिकरण्यम्—" इत्येवंरूपः क्वचित् पाठः ॥

स्याकर्षणे। तदुक्तम्–"**गंतूण न परिछिंदइ, नाणं नेयं तयंमि देसंमि। आयत्थं चिय नवरं, अचिंतसत्तीओ विन्नेयं॥१॥ लोहोवलस्स सत्ती, आयत्था चेव भिन्नदेसंमि। लोहं आगरिसंती, दीसइ इह कज्जपच्चक्खा॥२॥ एवमिह नाणसत्ती, आयत्था चेव हंदि लोगंतं। जइ परिछिंदइ सव्वं, को णु विरोहो भवे तस्स?॥३॥**" इति। एतेन "**अज्जवि धावइ नाणं अज्जवि ऽलोओ अणंतओ अत्थि**" इत्याद्यपि कुचोद्यमपाकृतमवसेयम्। यतो न केवलज्ञानमलोके गच्छति, द्रव्यमन्तरेण गुणानां प्रवृत्त्यसंभवात् तत्र गत्युपष्टम्भकधर्मास्तिकायाभावाच्च, किन्तूत्पत्तिसमय एवात्मप्रदेशस्थं सदचिन्त्यशक्तियुक्ततया सकलमपि लोकालोकात्मकं ज्ञेयं परिच्छिनत्ति। तदुक्तम्–"**तम्हा सव्वपरिच्छेयसत्तिमंतं तु नायजुत्तमिणं एत्तो च्चिय नीसेसं, जाणइ उप्पत्तिसमयंमि॥१॥**" ततः कथम्? "**अज्जवि धावइ नाणं**" इत्यादि दोषप्रसङ्गः। ननु यो निच्छिन्नमोहपाशः स प्रसृतविमलोरुकेवलप्रकाश एव भवति, ततोऽपार्थकत्वान्नेदं विशेषणमुपादेयमिति न, छद्मस्थावस्थाभाविनिच्छिन्नमोहपाशव्यवच्छेदफलतयाऽस्य सार्थकत्वात्। यद्येवं ततः प्रसृतविमलोरुकेवलप्रकाशमित्येतावदेवास्तामलं निच्छिन्नमोहपाशग्रहणेन न, अस्यापि कुवादिमतव्यवच्छेदफलतया सार्थकत्वात्। तथाहि–इह आजीविकनयमतानुसारिणो गोशालकशिष्याः प्रसृतविमलोरुकेवलप्रकाशमपि न तत्त्वतो निच्छिन्नमोहपाशमभिमन्यन्ते, अवाप्तमुक्तिपदा अपि तीर्थनिकारदर्शनादिहागच्छन्तीतिवचनात्। तत्त्वतो निच्छिन्नमोहपाशस्य चेहागमनासंभवात् ततस्तद्व्यवच्छेदार्थं निच्छिन्नमोहपाशग्रहणम्। [1]एनमेव परार्थसंपदा विशेषयति–'**पणयजणपूरियासं**' प्रणता ये जनाः तेषां पूरिता आशा=मनोरथा येन स प्रणतजनपूरिताशस्तम्। प्रणतजनानां चाशाः पूर्यन्ते भगवता सकलदेवासुरमनुजतिर्यग्गणसाधारण्या वाण्या निःश्रेयसाभ्युदयसाधनोपायप्रदर्शनेन, नान्यथा। यदुक्तम्–"**अरिहंता भगवंतो, अहियं च हियं च नवि इहं किंचि[2]। वारेंति कारवेंति य, घेत्तूण जणं बला हत्थे॥१॥ उवएसं पुण [3]तं दिंति जेण चरिएण कित्तिनिलयाणं। देवाणवि होंति पहू, किमंग पुण मणुयमेत्ताणं?॥२॥**" इत्यादि ननु यो निच्छिन्नमोहपाशः प्रसृतविमलोरुकेवलप्रकाशश्च स प्रणतजनपूरिताश एव भवति, ततः किमनेन विशेषणेन दानादिप्रकारेण?, सामान्यकेवलिव्यवच्छेदार्थत्वात्, ते हि यथोक्तविशेषणद्वयविशिष्टा अपि सन्तो न भगवानिव सकलजगदुपकारकरणैकतानाः, ततस्तद्व्यवच्छेदार्थं प्रणतजनपूरिताशग्रहणम्। यद्येवं तर्हि प्रणतजनपूरिताशमित्येतदेवास्तां अलं निच्छिन्नमोहपाशादिग्रहणेन, तदयुक्तं, माण्डलिकादयोऽपि हि तथाविधतुच्छद्रव्यादिमात्रवितरणैकरसिका लोके प्रणतजनपूरिताशा इति प्रतीताः, ततस्तत्कल्पं भगवन्तं प्रणामार्हं मा ज्ञासिषुरिति तद्व्यवच्छेदार्थं निच्छिन्नमोह-

१ पार्श्वजिनमेव। २ 'किंपि" इत्यपि। ३ "ते" इत्यपि।

पाशादिग्रहणम् । कमेवंभूतम् ? पुनः प्रयतः प्रणम्येत्यतो विशेष्यमाह--'जिनपार्श्वं' पश्यति यथावस्थितं सकलमपि जगदिति पार्श्वः रागद्वेषादिशत्रुजेतृत्वाज्जिनः स चासौ पार्श्वश्च जिनपार्श्वस्तम् । ननु यो जिनपार्श्वः स निच्छिन्नमोहपाशादिविशेषणकलापोपेत एव भवतीति किमेतेषां विशेषणानामुपादानेन ? निरर्थकत्वात्, न, नामादिरूपजिनपार्श्वादिव्यवच्छेदकारितया तेषामपि सफलत्वात् । एवं द्व्यादिसंयोगापेक्षयाऽपि विचित्रनयमताभिज्ञेन यथाशक्ति विशेषणसाफल्यं वाच्यम् । तमेवंभूतं जिनपार्श्वं प्रयतः प्रणम्य ॥१॥ किम् ? इत्याह--इह स्थान-शब्दः प्रत्येकमभिसंबध्यते । जीवस्थानानि मार्गणास्थानानि गुणस्थानानि । तत्र जीवति प्राणान् धारयतीति जीवः । क इत्थंभूतः ? इति चेत्, उच्यते, यो मिथ्यात्वादिकलुषितरूपतया सातादिवेदनीयादिकर्मणाम[1]भिनिर्वर्तकः, तत्फलस्य च विशिष्टसातादेरुपभोक्ता, नारकादि-भवेषु च यथाकर्मविपाकोदयं संसर्ता, सम्यग्दर्शनादिरत्नत्रयाभ्यासप्रकर्षवशाच्चाशेषकर्मांशाऽ[2]प-गमतः [3]परिनिर्वाता स जीव आत्मा । [4]यदुक्तम्--' **यः कर्ता कर्मभेदानां, भोक्ता कर्मफलस्य च । संसर्ता परिनिर्वाता, स ह्यात्मा नान्यलक्षणः ॥१॥''** इति । [5]कथं तत्सिद्धिः ? इति चेत्[6]प्रतिप्राणिस्वसंवेदनप्रमाणसिद्धचैतन्याऽन्यथानुपपत्तेः । तथाहि-नेदं चैतन्यं नाम भूत-धर्मः, तद्धर्मत्वे सति पृथिव्याः काठिन्यस्येव तस्य सर्वदोपलम्भप्रसङ्गात् । कदाचिद[7]नभिव्यक्ति-भावान्न सर्वदोपलम्भ इति चेत्, न, आवरणाभावेनानभिव्यक्तेरेवानुपपद्यमानत्वात् । कथमा-वरणाभावः ? इति चेत्, एते [8]ब्रूमः, विकल्पाभ्यामयोगात् । तथाहि--किं तान्येव भूतान्या-वरणं भवेयुः, अन्यद्वा ? इति विकल्पद्वयी गत्यन्तराभावात्, तत्र न तावत्तान्येव भूतान्यावरणी-भवितुमर्हेयुः, तेषां भूतानां व्यञ्जकत्वप्रतिज्ञानात् । नाप्यन्यद्वाऽऽवरणं विचारपथमवतार्यमाणं घटामटाट्टि, वस्त्वन्तराभ्युपगमप्रसङ्गेन चत्वार्येव पृथिव्यादीनि भूतानीति तत्त्वसंख्याव्याघात-प्रसङ्गात् । न वै पृथिव्यादिभ्योऽन्यद्वस्त्वन्तरमावरणमिति ब्रूमः, किन्तु तेषामेव पृथिव्या-दिभूतानां तथाविधविशिष्टपरिणामाभावः, ततो न कश्चिद्दोषः ? इति चेत्, न, तथाविध विशिष्टपरिणामाभावस्यैकान्ततुच्छरूपत्वेनाऽऽवारकत्वायोगात् । अन्यथा तस्याप्यतुच्छरूपतया भावरूपत्वे सति पृथिव्यादिभूतचतुष्टयान्यतमभूतरूपतापत्तेर्व्यञ्जकत्वाप्रसङ्गः । अथोच्यते--नासौ तथाविधविशिष्टपरिणामाभावस्तुच्छरूपः, किन्तु परिणामान्तरम्, ततः कथमावारकत्व-योगः ? इति, न, तस्यापि भूतपरिणामतया भूतस्वभावत्वाद् भूतवद्व्यञ्जकत्वेऽस्यै (त्वस्यै-) वोपपत्तेर्नावारकत्वस्येति यत्किञ्चिदेतत् । नापि भूतकार्यमिदं चैतन्यम्, अत्यन्तवैलक्षण्येन भूतचैतन्ययोः कारणकार्यभावस्यानुपपत्तेः । तथाहि--प्रत्यक्षत एव काठिन्याबोधस्वरूपाणि

---

१ उपार्जकः । २ विनाशतः । ३ मोक्षं गन्ता । ४ 'तदुक्तम्" इत्यपि । ५ चार्वाको वदति । ६ अस्ति जीव इति पक्षः । ७ अप्रकट- । ८ वयं जैनाः ॥

भूतानि प्रतीयन्ते, चैतन्यं च तद्विलक्षणम्, ततः कथमनयोः कार्यकारणभावः ?, यदाह— **"काठिन्याबोधरूपाणि, भूतान्यध्यक्षसिद्धितः। चेतना च न तद्रूपा, सा कथं तत्फलं भवेत् ? ॥१॥"** तदेवं न भूतधर्मो भूतकार्यं वा चैतन्यम्, अस्ति चैतत्प्रतिप्राणिस्वसंवेदनप्रमाणसिद्धम्। तत एतदन्यथानुपपत्त्या स यथोक्तलक्षणो जीवः प्रतीयते। तस्यैव चिद्रूपाऽमूर्ततया चैतन्यं प्रत्यनुरूपत्वेन तद्धर्मित्वोपपत्तेः, इति कृतं प्रसंगेन, विस्तरार्थिना तु धर्मसंग्रहणिटीकाऽनुसर्तव्या। तेषां जीवानां स्थानानि, सूक्ष्मपर्याप्तैकेन्द्रियत्वादयोऽवान्तरविशेषाः, तिष्ठन्त्येषु जीवा इतिकृत्वा गुणानां स्थानानि। मार्गणं जीवादीनां पदार्थानामन्वेषणं मार्गणा तस्याः स्थानानि आश्रया मार्गणास्थानानि वक्ष्यमाणानि गत्यादीनि। गुणा ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषाः, स्थानं पुनरेतेषां शुद्ध्यशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः, तिष्ठन्त्यस्मिन् गुणा इतिकृत्वा गुणस्थानानि गुणस्थानानि वक्ष्यमाणानि मिथ्यादृष्ट्यादीनि। 'उवओग' इति उपयोजनमुपयोगः, बोधरूपो जीवव्यापारः। कर्मणि वा घञ्। उपयुज्यते वस्तुपरिच्छेदं प्रति व्यापार्यत इत्युपयोगः। करणे वा घः। उपयुज्यते वस्तुपरिच्छेदं प्रति जीवोऽनेनेत्युपयोगः। सर्वत्र जीवस्वतत्त्वभूतोऽवबोध एवोपयोगो मन्तव्यः। 'जोग' इति योजनं योगः, जीवस्य वीर्यं परिस्पन्द इतियावत्। कर्मणि वा घञ्। युज्यते धावनवल्गनादिक्रियासु व्यापार्यत इति योगः। यद्वा युज्यते संबध्यते धावनवल्गनादिक्रियासु जीवोऽनेनेति योगः। पुंनाम्नीति करणे घः प्रत्ययः स च मनोवाक्कायलक्षणसहकारिकारणभेदात्त्रिधा वक्ष्यमाणस्वरूपः। लिश्यते श्लिष्यते कर्मणा सहात्माऽनयेति लेश्या, कृष्णादिद्रव्यसाचिव्यादात्मनः शुभाशुभरूपः परिणामविशेषः। यदुक्तम्—**"कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्रायं लेश्याशब्दः प्रवर्तते ॥१॥"** इति। सा च षोढा, कृष्णलेश्या नीललेश्या, २ कापोतलेश्या ३ तेजोलेश्या ४ पद्मलेश्या ५ शुक्ललेश्या ६। आसां च स्वरूपं जम्बूफलखादकषट्पुरुषीदृष्टान्तेनैवमवसेयम्—**"जह जंबुपायवेगो, सुपक्कफलभरिय नमियसाहग्गो। दिट्ठो छहिं पुरिसेहिं, ते बिंती जंबु भक्खेमो ॥१॥ किह पुण ते बिंतेगो, आरुहणे होज्ज जीवसंदेहो। तो छिंदिऊण मूलाउ भक्खिमो ताइं**[1] **पाडेउं ॥२॥ बीओऽह किमम्हाणं, तरुणा छिन्नेण एम(म्म)हंतेण। छिंदह महल्ल**[2] **साहा, बेई तइओ पसाहाओ ॥३॥ गोच्छे चउत्थओ पुण, पंचमओ बेइ गिण्हह फलाइं। छट्ठो बेइ पडिय त्ति य, खायह त्ति य, छट्ठओ बेइ ॥४॥ दिट्ठंतस्सोवणओ, छिंदइ मूलाउ बेइ जो एवं। वट्टइ सो किण्हाए, नीलाए महल्लसाहाए ॥५॥ काऊ होइ पसाहा, तेऊ गुच्छा फला य पम्हाए। पडिय त्ति सुक्कलेसाए"** इति ॥ आदिशब्दा-

१ "ताहिं" इत्यपि पाठः। २—"साला" इत्यपि पाठः, एवमग्रेऽपि ॥

त्कर्मबन्धहेतुबन्धोदयोदीरणासत्ताल्पबहुत्वपरिग्रहः तत्र क्रियते मिथ्यात्वादिभिर्हेतुभिर्निर्वर्त्यत इति कर्म ज्ञानावरणीयादि वक्ष्यमाणमष्टप्रकारम्। कथमेतत्सिद्धिः? इति चेत्, उच्यते, इह आत्मत्वेनाविशिष्टानामात्मनां यदिदं देवासुरमनुजतिर्यगादिरूपं वैचित्र्यं तत्तावन्न निर्हेतुकमेष्टव्यम्। मा प्रापत्सदा भावादिदोषप्रसङ्गः। **"नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्"** इतिवचनात्। सहेतुकत्वाभ्युपगमे च यदेवास्य हेतुस्तदेवास्माकं कर्मेति मतमिति तत्सिद्धिः। तदुक्तम्–**"आत्मत्वेनाविशिष्टस्य, वैचित्र्य तस्य यद्वशात्। नरादिरूपं तच्चित्रम-दृष्टं कर्मसंज्ञितम् ॥१॥"** इति। तदपि च कर्म पुद्गलस्वरूपं प्रतिपत्तव्यं, नामूर्त्तम्। तथा सति ततः सकाशादात्मनामनुग्रहोपघातासंभवादाकाशादिव। यदाह–**"अन्ने उ अमुत्तं चिय, कम्मं मन्नंति वासणारूवं। तं च न जुज्जइ तत्तो, उवघायाणुग्गहाभावा ॥ ॥ नागासं उवघायं अणुग्गहं वावि कुणइ सत्ताणं"** इत्यादि। इति कृतं प्रसंगेन, गमनिकामात्रफलत्वात्प्रयासस्य। ततस्तैः कर्मपुद्गलैः सहात्मनो वह्न्ययःपिण्डवदन्योऽन्यानुगमलक्षणः संबन्धो बन्धः, तस्य हेतवः सामान्यविशेषरूपा वक्ष्यमाणा मिथ्यात्वतद्भेदादिलक्षणाः। बन्ध उक्तस्वरूप एव। तथा तेषामेव कर्मपुद्गलानां यथास्वस्थितिबद्धानामपवर्तनादिकरणविशेषतः स्वभावतो वा उदयसमयप्राप्तानां विपाकवेदनमुदयः। तेषामेव च कर्मपुद्गलानामकालप्राप्तानां जीवसामर्थ्यविशेषादुदयावलिकायां प्रवेशनमुदीरणा। तथा तेषामेव कर्मपुद्गलानां बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसङ्क्रमकृतस्वरूपप्रच्युत्यभावे सति सद्भावः सत्ता। अल्पबहुत्वं गत्यादिरूपमार्गणास्थानादिषु जीवानां परस्परं स्तोकभूयस्त्वम्, एतत् 'वक्ष्ये' अभिधास्ये। कथम्? इत्याह– **किंचित्'** स्वल्पं न विस्तरवत्। दुःषमानुभावेनापचीयमानमेधायुरादिगुणानामिदानींतनजनानां तथाऽभिधाने सति उपकारासंभवात्, तदुपकारार्थं च एष प्रकरणारम्भप्रयासः। उपकारमेव दर्शयति- **'सन्नाणसुझाणहेउ'** इति संज्ञानं=यथाऽवस्थितवस्तुतत्त्वावबोधात्मकमागमानुसारिविज्ञानं, सुध्यानं=धर्मध्यानं, तयोर्हेतुः=कारणम्। इदं जीवस्थानाद्यभिधानमितिकृत्वा जीवस्थानादिकं किंचिदभिधास्ये। किं स्वमनीषिकया?, न इत्याह- **'सुगुरूवएसाउ'** गृणाति शास्त्रार्थमिति गुरुः, स चानागमिकोऽपि स्यात्, अतस्तद्व्यवच्छेदार्थं सुग्रहणम्। शोभनः सर्वदैव सदागमनिष्णातो गुरुः सुगुरुः, तस्योपदेशो यथाऽवस्थितजीवाजीवादिवस्तुतत्त्वयाथात्म्यनिर्देशस्तस्मात् इह वक्ष्यमाणसकलवक्तव्यतानिबन्धनं जीवा इति प्रथमतस्तेषामुपादानम् ते च प्रपञ्चतो निरूप्यमाणा गत्यादिमार्गणास्थानैरेव निरूपयितुं शक्यन्त इति। तदनन्तरं मार्गणास्थानग्रहणम्। तेषु च मार्गणास्थानेषु वर्तमाना जीवा न कदाचिदपि मिथ्यादृष्ट्याद्यन्यतमगुणस्थानकविकला भवन्तीति प्रतिपत्त्यर्थं मार्गणास्थानकानन्तरं गुणस्थानकग्रहणम्। अमूनि च गुणस्थानकानि ज्ञानादिरूपशुभपरिणामशुद्ध्यशुद्धिप्रकर्षापकर्षरूपाण्युपयोगवतामेवोपपद्यन्ते, नान्येषामाकाशा-

दीनाम्, तेषां ज्ञानादिरूपपरिणामरहितत्वात्, इति ज्ञापनार्थं गुणस्थानकानन्तरमुपयोगग्रहणम्। उपयोगवन्तश्च मनोवाक्कायचेष्टासु वर्तमाना नियमतः कर्मसंबन्धभाजो भवन्तीति ज्ञापनायोपयोगग्रहणानन्तरं योगग्रहणम्। योगवशाच्चोपात्तस्यापि कर्मणो यावच्च कृष्णाद्यन्यतमलेश्यापरिणामो जायते तावच्च तस्य स्थितिपाकविशेषो भवति। **"स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेण"** इतिवचनप्रामाण्यात् ततो योगवशादुपात्तस्य कर्मणो लेश्याविशेषतः स्थितिविपाकविशेषो भवतीति प्रतिपत्त्यै योगानन्तरं लेश्योपादानमिति। यद्यपि चेह सामान्येनोदतं जीवस्थानाद्यभिधास्ये इति, तथाऽप्येवं विशेषतो द्रष्टव्यम्। जीवस्थानकेषु-गुणस्थानक १ योगो २ पयोग ३ लेश्या ४ कर्मबन्धो ५ दयो ६ दीरणा ७ सत्ता ८ वक्ष्ये। मार्गणास्थानकेषु पुनः-जीवस्थानक १ गुणस्थानक २ योगो ३ पयोग ४ लेश्या ५ ल्पबहुत्वमनि ६। गुणस्थानकेषु च-जीवस्थानक १ योगो २ पयोग ३ लेश्या ४ बन्धहेतु ५ बन्धो ६ दयो ७ दीरणा ८ सत्ता ९ ऽल्पबहुत्वानि १०। इति तथैव सूत्रकृता वक्ष्यमाणत्वात् ॥२॥

तत्र **'यथोद्देशं निर्देशः'** इति न्यायात्प्रथमतस्तावज्जीवस्थानानि निरूपयन्नाह—

**इह सुहुमबायरेगिंदिबितिचउअसन्निसन्निपंचिंदी।**
**अपजत्ता पज्जत्ता, कमेण चउदस जियट्ठाणा ॥३॥**

(हारि०) व्याख्या-इह सर्वत्र यथासंभवं लिङ्गव्यत्ययविभक्तिलोपादिकं प्राकृतत्वाद् द्रष्टव्यम्। **'इह'** जीवस्थानादिषु मध्ये सूक्ष्मबादरभेदादेकेन्द्रिया द्विधा, द्वित्रिचतुरिन्द्रियास्त्रयः, असंज्ञिसंज्ञिभेदात्पञ्चेन्द्रिया द्विभेदाः, एवमेते सप्त सप्ताप्यपर्याप्ताः पर्याप्ताश्चैवं क्रमेण तावच्चतुर्दश जीवस्थानानि भवन्तीति शेषः। **इतिगाथार्थः** ॥३॥

साम्प्रतमेतेषु गुणस्थानकानि संबन्धपूर्वकं गाथाद्वयेनाह—

(मल०) **'इह'** अस्मिन् जगति अनेन क्रमेण चतुर्दश जीवस्थानानि प्राग्निरूपितशब्दार्थानि भवन्ति, केन क्रमेण? इति चेत्, आह-सूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरसंज्ञिसंज्ञिपञ्चेन्द्रियाः, एते च सर्वेऽपि प्रत्येकं पर्याप्तका अपर्याप्तकाश्चेति। तत्र एकं स्पर्शनलक्षणमिन्द्रियं येषां ते एकेन्द्रियाः, पृथिव्यप्तेजोवायुवनस्पतयः। ते च प्रत्येकं द्विविधाः, सूक्ष्मा बादराश्च। सूक्ष्मनामकर्मोदयात्सूक्ष्माः, सकललोकव्यापिनः। बादरनामकर्मोदयाद्बादराः. ते च लोकप्रतिनियतदेशवर्तिनः। द्वित्रिचतुरसंज्ञिसंज्ञिपञ्चेन्द्रिया इति। इन्द्रियशब्दः प्रत्येकमभिसंबध्यते। द्वीन्द्रियाः, त्रीन्द्रियाः, चतुरिन्द्रियाः, असंज्ञिसंज्ञिभेदभिन्नाश्च पञ्चेन्द्रियाः। तत्र द्वे स्पर्शनरसनलक्षणे इन्द्रिये येषां ते द्वीन्द्रियाः, शङ्खचन्दनककपर्दजलूकाकृमिगण्डोलपूतरकादयः। त्रीणि स्पर्शनरसनघ्राणलक्षणानीन्द्रियाणि येषां ते त्रीन्द्रियाः, यूकामत्कुणगर्दभेन्द्रगोपककुन्थुमत्कोटा-

१ "चउदसजियठाणेसुं गुणजोगुवओगलेसबंधुदया। उदीरणया सत्ता वत्तव्वा अट्ठपयक्कमसो ॥१॥" इत्यपि गाथाऽधिकतया दृश्यते हस्तलिखितमूलगाथाप्रतौ।

दयः। चत्वारि स्पर्शनरसनघ्राणचक्षुर्लक्षणानीन्द्रियाणि येषां ते चतुरिन्द्रियाः, भ्रमरमक्षिकामशकवृश्चिकादयः। पञ्च स्पर्शनरसनघ्राणचक्षुःश्रोत्रलक्षणानीन्द्रियाणि येषां ते पञ्चेन्द्रियाः, मत्स्यमकरमनुजादयः। ते च द्विभेदाः, संज्ञिनोऽसंज्ञिनश्च। तत्र संज्ञानं संज्ञा, भूतभवद्भाविभावस्वभावपर्यालोचनं 'उपसर्गादातः' इत्यङ्प्रत्ययः, सा विद्यते येषां ते संज्ञिनः, विशिष्टस्मरणादिरूपमनोविज्ञानभाज इतियावत्। तद्विपरीता असंज्ञिनः, यथोक्तमनोविज्ञानविकला इत्यर्थः। एते च सूक्ष्मैकेन्द्रियादयः प्रत्येकं द्विधा, पर्याप्तका अपर्याप्तकाश्च। पर्याप्तिर्नाम पुद्गलोपचयजः पुद्गलग्रहणपरिणमनहेतुः शक्तिविशेषः सा च विषयभेदात्षोढा। तद्यथा—आहारपर्याप्तिः १, शरीरपर्याप्तिः २, इन्द्रियपर्याप्तिः ३, उच्छ्वासपर्याप्तिः ४, भाषापर्याप्तिः ५, मनःपर्याप्ति ६ श्चेति। तत्र यया बाह्यमाहारमादाय खलरसरूपतया परिणमयति साऽऽहारपर्याप्तिः। यया रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्तिः। यया तु धातुरूपतया परिणमितमाहारमिन्द्रियरूपतया परिणमयति सा इन्द्रियपर्याप्तिः। यया पुनरुच्छ्वासप्रायोग्यवर्गणादलिकमादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुञ्चति सा उच्छ्वासपर्याप्तिः। यया तु भाषाप्रायोग्यवर्गणाद्रव्यं गृहीत्वा भाषात्वेन परिणमय्यालम्ब्य च मुञ्चति सा भाषापर्याप्तिः। यया पुनर्मनोयोग्यवर्गणादलिकं गृहीत्वा मनस्त्वेन परिणमय्यालम्ब्य च मुञ्चति सा मनःपर्याप्तिः। एताश्च यथाक्रममेकेन्द्रियाणां संज्ञिवर्जानां द्वीन्द्रियादीनां संज्ञिनां च चतुः—पञ्च-षट्—संख्या भवन्ति। पर्याप्तयो विद्यन्ते येषां ते पर्याप्ताः। 'अभ्रादिभ्यः' इति मत्वर्थीयो[१]ऽप्रत्ययः। ये पुनः स्वयोग्यपर्याप्तिपरिसमाप्तिविकलास्तेऽपर्याप्तकाः। ते च द्विधा, लब्ध्या करणेन च। तत्र येऽपर्याप्तका एव सन्तो म्रियते न पुनः स्वयोग्यपर्याप्तीः सर्वा अपि समर्थयन्ते ते लब्ध्यपर्याप्तकाः। ये पुनः करणानि शरीरेन्द्रियादीनि न तावन्निर्वर्तयन्ति, अथ चावश्यं पुरस्तान्निर्वर्तयिष्यन्ति ते करणापर्याप्तकाः। इह चैवमागमः-लब्ध्यपर्याप्तका अपि नियमादाहारशरीरेन्द्रियपर्याप्तिपरिसमाप्तावेव म्रियन्ते नार्वाग्। यस्मादागामिभवायुर्बद्ध्वा म्रियन्ते सर्वे एव देहिनः। तच्चाहारशरीरेन्द्रियपर्याप्तिपर्याप्तानामेव बध्यत इति ॥३॥

तदेवं निरूपितानि जीवस्थानानि, सांप्रतं यथोद्देशं निर्देश इति न्यायात्क्रमप्राप्तान्यपि मार्गणास्थानानि अनिरूप्य एतेष्वेव जीवस्थानकेषु गुणस्थानकाद्यमिभित्सुर्युक्तिमुपन्यस्यन्नाह-

सव्वभणियव्वमूलेसु तेसु गुणठाणगाइ ता भणिमो।
पढमगुणा दो बायरबितिचउरअसन्नि अपजत्ते ॥४॥

---

१ "अभ्रादिभ्यः" (७।२।४६)इति हैमसूत्रे तथा श्री मलयगिरिसूरिभिरपि स्वकृतव्याकरणे-'अप्रत्ययः,' अङ्गीकृतोऽस्ति॥

**पयत्थेसु । तं पंचविहं मिच्छं, तद्दिट्ठी मिच्छदिट्ठीओ ॥२॥ उवसमअद्धाए ठिओ, मिच्छमपत्तो तमेव गंतुमणो । सम्मं आसायंतो, सासायणगो मुणेयव्वो ॥३॥ जह गुडदहीणि विसमाइभावसहियाणि होंति मीसाणि । भुंजंतस्स तहोभय-दिट्ठीए मीसदिट्ठीओ ॥४॥ तिविहे वि हु सम्मत्ते, थेवावि न विरइ जस्स कम्मवसा । सो अविरउ त्ति भण्णइ, देसे पुण देसविरईओ ॥५॥ विकहाकसाय-निद्दासद्दाइरओ भवे पमत्तो त्ति । पंचसमिओ तिगुत्तो, अपमत्तजई मुणेयव्वो ॥६॥ अप्पुव्वं अप्पुव्वं, जहुत्तरं जो करेइ ठिइकंडं । रसकंडं तग्घायं, सो होइ अपुव्वकरणो त्ति ॥७॥ निनिवट्टंति विसुद्धिं, समगपइट्ठा वि जम्मि अन्नोऽन्नं । तत्तो नियट्टिठाणं, विवरीयमओ य अनियट्टी ॥८॥ थूलाण लोभखंडाण वेयगो बायरो मुणेयव्वो । सुहुमाण होइ सुहुमो, उवसंतेहिं तु उवसंतो ॥९॥ खीणंमि मोहणिज्जे, खीणकसाओ सजोगजोगि त्ति । होइ पउत्ता य तओ, अपउत्ता होइ हु अजोगी ॥१०॥"** एतानि जीवस्थानकेषूपदर्शयन्नाह—पढमेत्यादि । इह पदैकदेशेऽपि पदसमुदायोपचारात् 'गुणाः' इत्युक्ते गुणस्थानकग्रहणम् । प्राकृतत्वाच्च द्वित्वेऽपि बहुवचनम् । यथा '**हत्था पाया**' इत्यादौ । तत्र द्वे प्रथमगुणस्थानके मिथ्यादृष्टिसासादनलक्षणे भवत इति गम्यते । केषु ? इत्याह–'**बादरद्वित्रिचतुरिन्द्रियाऽसंज्ञिनि अपर्याप्ते**' बादरेत्यादिपदानां समाहारो द्वन्द्वः प्राकृतत्वाच्च ततः परस्य सप्तम्येकवचनस्य लुक् अपर्याप्त इति च तस्य विशेषणम् । एवमन्यत्राप्यक्षरगमनिका कार्या । एतदुक्तं भवति—अपर्याप्तबादरैकेन्द्रियं पृथिव्यम्बुवनस्पतिलक्षणे न तेजोवायुरूपे, तन्मध्ये सम्यक्त्वलेशवतामप्युत्पादाभावात् । सम्यक्त्वं चासादयतां सासादनभावाभ्युपगमात् । तथा द्वीन्द्रियत्रीन्द्रियासंज्ञिपञ्चेन्द्रियेषु चापर्याप्तकेषु प्रथमे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके भवतः । नन्वेकेन्द्रियाणामागमे सासादनभावो नेष्यते, यतस्तत्र नियमादेकेन्द्रिया अज्ञानिन एवोक्ताः । द्वीन्द्रियाश्च केचिदपर्याप्तावस्थायां सासादनभावोपगमाज्ज्ञानिनः, केचिच्च तदभावादज्ञानिनः । [1]यदि पुनरेकेन्द्रियाणामपि सासादनभावः स्यात्तर्हि तेऽपि द्वीन्द्रियादिवदुभयथाऽप्युच्येरन् , न चोच्यन्ते, तथाहि–"**एगिंदियाणं भंते ! किं णाणी अन्नाणी ?, गोयमा ! नो नाणी नियमा अण्णाणी । तथा बेंदियाणं भंते ! किं नाणी अण्णाणी ?, गोयमा ! नाणी वि अन्नाणी वि** ।" इत्यादि । तत्कथमिहापर्याप्तबादरैकेन्द्रियेषु पृथिव्यब्वनस्पतिलक्षणेषु सासा-

---

१ तालपत्रपुस्तके तु "अन्यथा तेऽपि द्वीन्द्रियादिवदुभयथाऽप्युच्येरन् , चोच्यन्ते" इत्येतावानेव पाठो दृश्यते ।

सन्नि अपज्जत्ते मिच्छदिट्ठिसासाणअविरया तिन्नि ।
सव्वं सन्नि पज्जत्ते, मिच्छं सेसेसु सत्तसु वि ॥५॥

(हारि०) व्याख्या—'सर्वभणितव्यमूलेषु' समस्तवक्तव्यताद्येषु 'तेसु' इति, यानि पूर्वं प्रतिपादितानि जीवस्थानानि तेषु [1]विषयेषु, गुणस्थानकानि वक्ष्यमाणलक्षणान्यादिः प्रथमं यस्य तत्तथा । आदिशब्दाद्योगोपयो[2]गादिसमस्थानानि ग्राह्याणि । तावच्छब्दः क्रमोपन्यासे । 'भणामः' प्रतिपादयामः । तत्र गुणस्थानकानि तावदाह—प्रथमगुणस्थानके द्वे मिथ्यादृष्टि-सासादनरूपे भवत इति शेषः । केषु ? इत्याह—"बायरबितिचउरअसन्नि" इति विभक्ति-लोपात् बादरद्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु, इति द्वन्द्वः । कीदृशेषु ? 'अपज्जत्ते' इति वचनव्यत्ययादपर्याप्तकेषु । कर्मग्रन्थाभिप्रायेण बादरैकेन्द्रियेष्वपि सासादनस्यापि सद्भावादिति ॥४॥ सन्नीत्यादिद्वितीयगाथा व्याख्यायते—

संज्ञिपञ्चेन्द्रिये अपर्याप्ते मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिगुणस्थानकानि त्रीणि भवन्तीति शेषः । एवं सर्वत्र यत्र क्रिया नास्ति तत्र स्वयं योज्या । तथा 'सर्वाणि' गुणस्था-नकानि संज्ञिपञ्चेन्द्रिये पर्याप्ते । तथा मिथ्यात्वगुणस्थानकं शेषेषु 'सप्तस्वपि' पर्याप्ता-पर्याप्तक सूक्ष्म १–२ पर्याप्तकबादर ३ द्वि ४ त्रि ५ चतुरिन्द्रिया ६ ऽसंज्ञिपञ्चेन्द्रियेषु ७ । इति गाथाद्वयार्थः ॥५॥

इति जीवस्थानेषूक्तानि गुणस्थानानि । अथैतेष्वेव योगान् योजयन्नाह—

(मल०) यद्यपि वक्तुमवसरप्राप्तानि मार्गणास्थानानि तथाऽपि प्रथमतस्तावत् 'तेषु' एवानन्तरोद्दिष्टेषु जीवस्थानकेषु वयं गुणस्थानकादि 'भणामः' भणिष्यामः=प्रतिपादयिष्यामः "वर्तमानसामीप्ये वर्तमानवद्वा" इति भविष्यति [3]वर्तमाना । किं कारणम् ? इत्यत आह-'सर्वभणितव्यमूलेषु' इति "निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्श-नम्" इति न्यायाद्धेताविय सप्तमी । ततोऽयमर्थः—यतः सकलवक्ष्यमाणमार्गणास्थानकादिवक्तव्य-तानिबन्धनमेते जीवास्तत एतेष्वेव तावद्गुणस्थानकादि वक्ष्यामः न हि गुणस्थानकादिप्रपञ्चे-नानिर्ज्ञातस्वरूपा जीवा मार्गणास्थानादिषु निरूप्यमाणा अपि यथावत्प्रत्येतु शक्यन्त इति । तत्र गुणस्थानकानि यद्यप्याचार्येण स्वयमेवाग्रे वक्ष्यन्ते, तथाऽपीह नाविज्ञातस्वरूपाणि सन्ति तानि जीवस्थानकेषु चिन्त्यमानानि सम्यगवगन्तु शक्यन्ते । ततो विनेयजनानुग्रहाय तानि संक्षे-पतः प्रदर्श्यन्ते—'जीवाइपयत्थेसुं, जिणोवइट्ठेसु जा असद्दहणा । सद्दहणावि य मिच्छा, विवरीयपरूवणा जा य ॥१॥ संसयकरणं जंपि य, जो तेसु अणायरो

१ 'विषये' इति जे० । २ "०गाष्टौ स्था०" इति जे० । ३ "लट् प्रत्ययः" इत्यपि पाठः ।

**पर्याप्तेसु । नं पंचविहं मिच्छं, तद्दिट्ठी मिच्छदिट्ठीओ ॥२॥ उवसमअद्धाए ठिओ, मिच्छमपत्तो तमेव गंतुमणो । सम्मं आसायंतो, सासायणगो मुणेयव्वो ॥३॥ जह गुडदहीणि विसमाइभावसहियाणि होंति मीसाणि । भुंजंतस्स तहोभय-दिट्ठीए मीसदिट्ठीओ ॥४॥ तिविहे वि हु सम्मत्ते, थेवावि न विरइ जस्स कम्मवसा । सो अविरय त्ति भण्णइ, देसे पुण देसविरईओ ॥५॥ विकहाकसाय-निद्दासद्दाइरओ भवे पमत्तो त्ति । पंचसमिओ तिगुत्तो, अपमत्तजई मुणेयव्वो ॥६॥ अप्पुव्वं अप्पुव्वं, जहुत्तरं जो करेइ ठिइकंडं । रसकंडं तग्घायं, सो होइ अपुव्वकरणो त्ति ॥७॥ निनिवट्टंति विसुद्धिं, समगपइट्ठा वि जम्मि अन्नोऽन्नं । तत्तो नियट्टिठाणं, विवरीयमओ य अनियट्टी ॥८॥ थूलाण लोभखंडाण वेयगो बायरो मुणेयव्वो । सुहुमाण होइ सुहुमो, उवसंतेहि तु उवसंतो ॥९॥ खीणंमि मोहणिज्जे, खीणकसाओ सजोगजोगि त्ति । होइ पउत्ता य तओ, अपउत्ता होइ हु अजोगी ॥१०॥"** एतानि जीवस्थानकेषूपदर्शयन्नाह–पढमेत्यादि । इह पदैकदेशे-ऽपि पदसमुदायोपचारात् 'गुणाः' इत्युक्ते गुणस्थानकग्रहणम् । प्राकृतत्वाच्च द्वित्वेऽपि बहु-वचनम् । यथा '**हत्था पाया**' इत्यादौ । तत्र द्वे प्रथमगुणस्थानके मिथ्यादृष्टिसासादनलक्षणे भवत इति गम्यते । केषु ? इत्याह–'**बादरद्वित्रिचतुरिन्द्रियाऽसंज्ञिनि अपर्याप्ते**' वादरे-त्यादिपदानां समाहारो द्वन्द्वः प्राकृतत्वाच्च ततः परस्य सप्तम्येकवचनस्य लुक् अपर्याप्त इति च तस्य विशेषणम् । एवमन्यत्राप्यक्षरगमनिका कार्या । एतदुक्तं भवति–अपर्याप्तबादरैकेन्द्रिये पृथिव्यम्बुवनस्पतिलक्षणे न तेजोवायुरूपे, तन्मध्ये सम्यक्त्वलेशवतामप्युत्पादाभावात् । सम्यक्त्वं चासादयतां सासादनभावाभ्युपगमात् । तथा द्वीन्द्रियत्रीन्द्रियासंज्ञिपञ्चेन्द्रियेषु चापर्याप्तकेषु प्रथमे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके भवतः । नन्वेकेन्द्रियाणामागमे सासादनभावो नेष्यते, यतस्तत्र नियमादेकेन्द्रिया अज्ञानिन एवोक्ताः । द्वीन्द्रियाश्च केचिद-पर्याप्तावस्थायां सासादनभावोपगमाज्ज्ञानिनः, केचिच्च तदभावादज्ञानिनः । [1]यदि पुनरे-केन्द्रियाणामपि सासादनभावः स्यात्तर्हि तेऽपि द्वीन्द्रियादिवदुभयथाऽप्युच्येरन्, न चोच्यन्ते, तथाहि–"**एगिंदियाणं भंते ! किं णाणी अन्नाणी ?, गोयमा ! नो नाणी नियमा अण्णाणी । तथा बेइंदियाणं भंते ! किं नाणी अण्णाणी ?, गोयमा ! नाणी वि अन्नाणी वि ।**" इत्यादि । तत्कथमिहापर्याप्तबादरैकेन्द्रियेषु पृथिव्यबूवनस्पतिलक्षणेषु सासा-

१ तालपत्रपुस्तके तु "अन्यथा तेऽपि द्वीन्द्रियादिवदुभयथाऽप्युच्येरन्, चोच्यन्ते" इत्येतावानेव पाठो दृश्यते ।

दनगुणस्थानकभाव उक्तः ?, सत्यमेतत् . किन्तु मा त्वरिष्ठाः, स्वयमेतदाचार्य एवाग्रे प्रतिविधास्यतीति ॥४॥ संज्ञिनि अपर्याप्तके **त्रीणि'** गुणस्थानकानि भवन्ति । कानि ? इत्यत आह–**'मिच्छद्दिट्ठिसासाणअविरया'** इति, मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिलक्षणानि, न शेषाणि सम्यग्मिथ्यादृष्ट्यादीनि, तेषां पर्याप्तावस्थायामेव भावात् । **'सव्वे सन्निपजत्ते'** इति, [1]सर्वाण्यपि मिथ्यादृष्ट्यादीन्ययोगिपर्यन्तानि गुणस्थानकानि संज्ञिनि पर्याप्ते भवन्ति, संज्ञिनः सर्वपरिणामसंभवात् । अथ कथं संज्ञिनः सयोग्ययोगिरूपगुणस्थानकद्वयसंभवः ? तद्भावे तस्यामनस्कतया संज्ञित्वायोगात्, न, तदानीमपि हि तस्य द्रव्यमनःसंबन्धोऽस्ति, समनस्काश्चाविशेषेण संज्ञिनो व्यवह्रियन्ते, ततो न तस्य संज्ञित्वव्याघातः । उक्तं च–**"मणकरणं केवलिणो वि अत्थि, तेण सण्णिणो भन्नंति । मणोविन्नाणं पडुच्च ते सन्निणो न भवंति"** इति ॥ **'मिच्छं सेसेसु सत्तसु वि'** इति शेषेषु पर्याप्तापर्याप्तसूक्ष्मपर्याप्तबादरद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियलक्षणेषु सप्तस्वपि जीवस्थानकेषु मिथ्यादृष्टिलक्षणमेकं गुणस्थानकं भवति, न सासादनलक्षणमपि कथम् ? इति चेत्, उच्यते–इह संज्ञिशेषेसु जीवस्थानकेषु परभवादागच्छतामेव घण्टालालान्यायेन सम्यक्त्वलेशमास्वादयतामुत्पत्तिकाल एव सासादनभावो लभ्यते, तदानीं चैतेषामपर्याप्तावस्था । तत्रापि चापर्याप्ते सूक्ष्मैकेन्द्रिये न सासादनभावसंभवः, तस्य मनाक् शुभपरिणामरूपत्वात्, महासंक्लिष्टपरिणामस्य च सूक्ष्मैकेन्द्रियमध्ये उत्पादाभिधानादिति । तदेवं निरूपितानि जीवस्थानकेषु गुणस्थानकानि, [2]सांप्रतं यद्यप्युपयोगा वक्तुमवसरप्राप्तास्तथाऽपि बहुवक्तव्यत्वाद्योगा एव तावद्वक्ष्यन्ते । **'ते च'** इत्यादि । ते च पञ्चदश । तद्यथा–सत्यवाग्योगः १, असत्यवाग्योगः २, सत्यमृषावाग्योगः ३, असत्यमृषावाग्योगः ४, । तत्स्वरूपं चेदम्–**"सच्चा हिया सतामिह, संतो मुणओ गुणा पयत्था वा । तव्विवरीया मोसा, मीसा जा तदुभयसहावा ॥१॥ अणहिगया जा तीसु वि, सद्दो च्चिय केवलो असच्चमुसा ।"** एवं मनोयोगोऽपि चतुर्धा द्रष्टव्यः । काययोगः सप्तधा । औदारिकं १, औदारिकमिश्रं २, वैक्रियं ३, वैक्रियमिश्रं ४, आहारकं ५, आहारकमिश्रं ६, कार्मणं ७, च । तत्रौदारिककाययोगस्तिर्यङ्मनुष्ययोस्तयोरेवापर्याप्तयोरौदारिकमिश्रकाययोगः । वैक्रियकाययोगो देवनारकयोस्तिर्यङ्मनुष्ययोर्वा वैक्रियलब्धिमतोः । वैक्रियमिश्रकाययोगोऽपर्याप्तयोर्देवनारकयोस्तिर्यङ्मनुष्ययोर्वा वैक्रियारम्भकाले परित्यागकाले च । आहारककाययोगश्चतुर्दशपूर्वविदः । आहारक-

---

१ तालपत्रपुस्तके स्थितः परम्–"इह प्राकृतत्वाल्लिङ्गव्यत्ययः । यदाह पाणिनिः प्राकृतलक्षणे–'लिङ्गं व्यभिचारी' इति । ततश्च 'सर्वे' इति ।" इत्येतत्पाठोऽधिक उपलभ्यते । २ इतः परं तालपत्रपुस्तके तु "सांप्रतं योगाः प्राप्तावसराः । ते च पञ्चदश । तद्यथा" इत्येतावानेव पाठो दृश्यते ।

मिश्रकाययोगः आहारकस्य प्रारम्भसमये परित्यागकाले च । कार्मणकाययोगः अष्टप्रकारकर्म-विकाररूपशरीरचेष्टास्वरूपोऽपान्तरालगतावुत्पत्तिप्रथमसमये केवलिसमुद्घातवस्थायां च ॥५॥

तानेतान् योगान् जीवस्थानकेषु चिन्तयन्नाह—

जोगा छसु अप्पज्जत्तएसु कम्मइगउरलमिस्सा दो ।
वेउव्वियमीसजुया सन्नि अपज्जत्तए तिन्नि ॥६॥

(हारि०) व्याख्या-'योगौ' वक्ष्यमाणलक्षणौ कार्मणौदारिकमिश्रकाययोगौ द्वौ । केषु ? इत्याह-'षट्स्वपर्याप्तकेषु' संज्ञिपञ्चेन्द्रियवर्जितेषु । तत्र विग्रहगतावनाहारकस्य यथासंभव-मेकद्वित्रिसमयान् यावत्कार्मणकाययोगः, तदन्यत्रौदारिकमिश्रयोग इति । मिश्रता च कार्मणेनैव सह मन्तव्येति । तथा वैक्रियमिश्रयुतौ तावेव पूर्वोक्तौ द्वौ । क ? इत्याह-संज्ञिन्यपर्याप्तके त्रय एवंरूपा भवन्ति । अत्र तु देवनारकेषूत्पद्यमानस्य वैक्रियमिश्रकाययोगो द्रष्टव्यः । अत्रापि मिश्रता कार्मणेनैव सह मन्तव्या । इति गाथार्थः ॥६॥

अथात्रैव गाथार्द्धेन मतान्तरं दर्शयन् पर्याप्तेषु तानेवाह—

(मल०) संज्ञिपञ्चेन्द्रियापर्याप्तकवर्जितेषु षट्स्वपर्याप्तकेषु द्वौ कार्मणौदारिकमिश्रलक्षणौ योगौ भवतः । तत्र कार्मणकाययोगोऽपान्तरालगतावुत्पत्तिप्रथमसमये च । शेषकालं त्वौदारिक-मिश्रकाययोगः । **'सन्निअपज्जत्तए तिन्नि'** इति संज्ञिन्यपर्याप्तके त्रयो योगा भवन्ति । के ते ? इत्याह-**'वेउव्वियमीसजुया'** तावेवानन्तरोक्तावौदारिकमिश्रकार्मणयोगौ वैक्रियमिश्र-युतौ, तथा च त्रयो योगा भवन्ति । वैक्रियमिश्रकाययोगश्च संज्ञिनोऽपर्याप्तस्य देवनारकेषूत्पद्य-मानस्य द्रष्टव्यो न शेषस्य, असंभवात् । मिश्रता च कार्मणेन सह द्रष्टव्या ॥६॥

अत्रैव मतान्तरमुपदर्शयन्नाह—

बिंति अपज्जत्ताण वि तणुपज्जत्ताण केइ ओरालं ।
बायरपज्जत्ते तिन्नि उरल वेउव्वियदुगं च ॥७॥

(हारि०) व्याख्या-अत्रैवं योजना कार्या । केचनाचार्याः शेषपर्याप्त्यपेक्षयाऽपर्याप्ता-नामपि **'तणुपज्जत्ताण'** इति तनुपर्याप्तानां शरीरपर्याप्त्या पर्याप्तानामौदारिकशरीरं **'ब्रुवते'** प्रतिपादयन्तीति । नन्वेवं सति वैक्रियमपि प्राप्नोति, न्यायस्य समानत्वादिति, सत्यम् , लब्ध्य-पर्याप्तानां शरीरपर्याप्तौ सत्यां यावदद्यापीन्द्रियपर्याप्तिं न समापयन्ति तावत्तिर्यग्मनुष्याणा-मौदारिकयोगोऽभिप्रेतः । सुरनारकाणां तु लब्ध्यपर्याप्तत्वं नास्त्येवेति न तेषां वैक्रिययोगः प्रतिपादित इति । करणापर्याप्तानां त्वौदारिकयोगो वैक्रिययोगश्च न विवक्षितः, अन्यथाऽपर्या-

दनगुणस्थानकभाव उक्तः ? सत्यमेतत् . किन्तु मा त्वरिष्ठाः, स्वयमेतदाचार्य एवाग्रे प्रतिविधास्यतीति ।।४।। संज्ञिनि अपर्याप्तके 'त्रीणि' गुणस्थानकानि भवन्ति। कानि ? इत्यत आह–'मिच्छदिट्ठिसासाणअविरया' इति, मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिलक्षणानि, न शेषाणि सम्यग्मिथ्यादृष्ट्यादीनि, तेषां पर्याप्तवस्थायामेव भावात्। 'सव्वे सन्निपजत्ते' इति, [1]सर्वाण्यपि मिथ्यादृष्ट्यादीन्ययोगिपर्यन्तानि गुणस्थानकानि संज्ञिनि पर्याप्ते भवन्ति, संज्ञिनः सर्वपरिणामसंभवात् । अथ कथं संज्ञिनः सयोग्ययोगिरूपगुणस्थानकद्वयसंभवः ? तद्भावे तस्यामनस्कतया संज्ञित्वायोगात्, न, तदानीमपि हि तस्य द्रव्यमनःसंबन्धोऽस्ति, समनस्काश्चाविशेषेण संज्ञिनो व्यवह्रियन्ते, ततो न तस्य संज्ञित्वव्याघातः। उक्तं च–"मणकरणं केवलिणो वि अत्थि, तेण सण्णिणो भन्नंति। मणोविन्नाणं पडुच्च ते सन्निणो न भवंति" इति ।। 'मिच्छं सेसेसु सत्तसु वि' इति शेषेषु पर्याप्तापर्याप्तसूक्ष्मपर्याप्तबादरद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियलक्षणेषु समस्तस्वपि जीवस्थानकेषु मिथ्यादृष्टिलक्षणमेकं गुणस्थानकं भवति, न सासादनलक्षणमपि कथम् ? इति चेत्, उच्यते–इह संज्ञिशेषेषु जीवस्थानकेषु परभवादागच्छतामेव घण्टालालान्यायेन सम्यक्त्वलेशमास्वादयतामुत्पत्तिकाल एव सासादनभावो लभ्यते, तदानीं चैतेषामपर्याप्तावस्था। तत्रापि चापर्याप्ते सूक्ष्मैकेन्द्रिये न सासादनभावसंभवः, तस्य मनाक् शुभपरिणामरूपत्वात्, महासंक्लिष्टपरिणामस्य च सूक्ष्मैकेन्द्रियमध्ये उत्पादाभिधानादिति। तदेवं निरूपितानि जीवस्थानकेषु गुणस्थानकानि, [2]सांप्रतं यद्यप्युपयोगा वक्तुमवसरप्राप्तास्तथाऽपि बहुवक्तव्यत्वाद्योगा एव तावद्वक्ष्यन्ते। 'ते च' इत्यादि। ते च पञ्चदश । तद्यथा–सत्यवाग्योगः १, असत्यवाग्योगः २, सत्यमृषावाग्योगः ३, असत्यमृषावाग्योगः ४, । तत्स्वरूपं चेदम्–"सब्भा हिया सतामिह, संतो मुणओ गुणा पयत्था वा । तव्विवरीया मोसा, मीसा जा तदुभयसहावा ।।१।। अणहिगया जा तीसु वि, सद्दो च्चिय केवलो असच्चमुसा ।" एवं मनोयोगोऽपि चतुर्धा द्रष्टव्यः। काययोगः सप्तधा। औदारिकं १, औदारिकमिश्रं २, वैक्रियं ३, वैक्रियमिश्रं ४, आहारकं ५, आहारकमिश्रं ६, कार्मणं ७, च। तत्रौदारिककाययोगस्तिर्यङ्मनुष्ययोस्तयोरेवापर्याप्तयोरौदारिकमिश्रकाययोगः। वैक्रियकाययोगो देवनारकयोस्तिर्यङ्मनुष्ययोर्वा वैक्रियलब्धिमतोः । वैक्रियमिश्रकाययोगोऽपर्याप्तयोर्देवनारकयोस्तिर्यङ्मनुष्ययोर्वा वैक्रियारम्भकाले परित्यागकाले च। आहारककाययोगश्चतुर्दशपूर्वविदः। आहारक-

---

१ तालपत्रपुस्तके त्वितः परम्–"इह प्राकृतत्वाल्लिङ्गव्यत्ययः। यदाह पाणिनिः प्राकृतलक्षणे–'लिङ्गं व्यभिचारी' इति। ततश्च 'सर्वे' इति।" इत्येतत्पाठोऽधिक उपलभ्यते। २ इतः परं तालपत्रपुस्तके तु "सांप्रतं योगाः प्राप्तावसराः। ते च पञ्चदश। तद्यथा" इत्येतावानेव पाठो दृश्यते।

मिश्रकाययोगः आहारकस्य प्रारम्भसमये परित्यागकाले च । कार्मणकाययोगः अष्टप्रकारकर्मविकाररूपशरीरचेष्टास्वरूपोऽपान्तरालगतावुत्पत्तिप्रथमसमये केवलिसमुद्घातावस्थायां च ॥५॥

तानेतान् योगान् जीवस्थानकेषु चिन्तयन्नाह—

जोगा छसु अप्पज्जत्तएसु कम्मइगउरलमिस्सा दो ।
वेउव्वियमीसजुया सन्नि अपज्जत्तए तिन्नि ॥६॥

(हारि०) व्याख्या-'योगौ' वक्ष्यमाणलक्षणौ कार्मणौदारिकमिश्रकाययोगौ द्वौ । केषु ? इत्याह-'षट्स्वपर्याप्तकेषु' संज्ञिपञ्चेन्द्रियवर्जितेषु । तत्र विग्रहगतावनाहारकस्य यथासंभवमेकद्वित्रिसमयान् यावत्कार्मणकाययोगः, तदन्यत्रौदारिकमिश्रयोग इति । मिश्रता च कार्मणेनैव सह मन्तव्येति । तथा वैक्रियमिश्रयुतौ तावेव पूर्वोक्तौ द्वौ । क्व ? इत्याह-संज्ञिन्यपर्याप्तके त्रय एवंरूपा भवन्ति । अत्र तु देवनारकेषूत्पद्यमानस्य वैक्रियमिश्रकाययोगो द्रष्टव्यः । अत्रापि मिश्रता कार्मणेनैव सह मन्तव्या । इति गाथार्थः ॥६॥

अथात्रैव गाथार्द्धेन मतान्तरं दर्शयन् पर्याप्तेषु तानेवाह—

(मल०) संज्ञिपञ्चेन्द्रियापर्याप्तकवर्जितेषु षट्स्वपर्याप्तकेषु द्वौ कार्मणौदारिकमिश्रलक्षणौ योगौ भवतः । तत्र कार्मणकाययोगोऽपान्तरालगतावुत्पत्तिप्रथमसमये च । शेषकालं त्वौदारिकमिश्रकाययोगः । 'सन्निअपज्जत्तए तिन्नि' इति संज्ञिन्यपर्याप्तके त्रयो योगा भवन्ति । के ते ? इत्याह-'वेउव्वियमीसजुया' तावेवानन्तरोक्तावौदारिकमिश्रकार्मणयोगौ वैक्रियमिश्रयुतौ, तथा च त्रयो योगा भवन्ति । वैक्रियमिश्रकाययोगश्च संज्ञिनोऽपर्याप्तस्य देवनारकेषूत्पद्यमानस्य द्रष्टव्यो न शेषस्य, असंभवात् । मिश्रता च कार्मणेन सह द्रष्टव्या ॥६॥

अत्रैव मतान्तरमुपदर्शयन्नाह—

बिंति अपज्जत्ताण वि तणुपज्जत्ताण केइ ओरालं ।
बायरपज्जत्ते तिन्नि उरल वेउव्वियदुगं च ॥७॥

(हारि०) व्याख्या-अत्रैवं योजना कार्या । केचनाचार्याः शेषपर्याप्त्यपेक्षयाऽपर्याप्तानामपि 'तणुपज्जत्ताण' इति तनुपर्याप्तानां शरीरपर्याप्त्या पर्याप्तानामौदारिकशरीरं 'ब्रुवते' प्रतिपादयन्तीति । नन्वेवं सति वैक्रियमपि प्राप्नोति, न्यायस्य समानत्वादिति, सत्यम् , लब्ध्यपर्याप्तानां शरीरपर्याप्तौ सत्यां यावदद्यापीन्द्रियपर्याप्तिं न समापयन्ति तावत्तिर्यग्मनुष्याणामौदारिकयोगोऽभिप्रेतः । सुरनारकाणां तु लब्ध्यपर्याप्तत्वं नास्त्येवेति न तेषां वैक्रिययोगः प्रतिपादित इति । करणापर्याप्तानां त्वौदारिकयोगो वैक्रिययोगश्च न विवक्षितः, अन्यथाऽपर्या-

प्तानामौदारिकयोगवद्वै क्रिययोगोऽप्यभिहितः स्यादिति । लब्धिकरणापर्याप्तकपर्याप्तिमतां पुनरयं विशेषः- लब्ध्यपर्याप्तास्त उच्यन्ते ये निजपर्याप्तीरसमाप्य म्रियन्ते, लब्धिपर्याप्ताः पुनः समाप्य म्रियन्त इति । करणापर्याप्तास्ते भण्यन्ते ये निजपर्याप्तीर्नाद्यापि पूरयन्ति परं पूरयिष्यन्ति । करणपर्याप्ताः पुनस्ते भण्यन्ते यैर्निजपर्याप्तयः पूरिता भवन्ति । अतो देवनारका असंख्यातवर्षायुषस्तिर्यङ्नरा जिनादयश्च लब्धिपर्याप्ता एव भवन्ति न तु लब्ध्यपर्याप्ताः तेषां निरुपक्रमायुष्कत्वेनापर्याप्तकावस्थायां मरणाभावात् । तथा चोक्तम्-' **देवा नेरइया वा, असंखवासाउया य तिरिमणुया । उत्तमपुरिसा य तहा, चरमसरीरा य निरुवकमा ।।१।।**" इति । करणत उभयथाऽपि भवन्ति । संख्यातवर्षायुषो नरतिर्यञ्चो लब्धितः करणतश्चापर्याप्ताः पर्याप्तकाश्च भवन्ति । संख्यातवर्षायुषस्तिर्यङ्नरास्तु ते गीयन्ते[1] येषां पूर्वकोट्यायुः, येषां पुनस्तदधिकं तेऽसंख्यातवर्षायुषो[2]ऽभिधीयन्ते आगमपरिभाषया । इत्युक्तं प्रासङ्गिकं साम्प्रतं प्रस्तुतमभिधीयत इति '**बायरपज्जत्ते**' इत्यादि बादरपर्याप्ते किम् ? इत्याह—औदारिकं वैक्रियद्विकं च वैक्रियशरीरतन्मिश्रलक्षणमिति त्रयो भवन्तीति शेषः । वैक्रियद्विकस्य हि बादरपर्याप्तकवायुकायिकेषु सद्भावात् । इति गाथार्थः ।।७।।

अथ गाथार्द्धेन योगान् समर्थयन् जीवेष्वेवोपयोगानाह—

(मल०) केचिदाचार्याः शीलाङ्कादयः शेषपर्याप्त्यपेक्षयाऽपर्याप्तानां '**तणुपज्जत्ताणं**' इति तनुपर्याप्त्या पर्याप्तानामौदारिकं शरीरं '**ब्रुवते**' प्रतिपादयन्ति । शरीरपर्याप्त्या हि परिसमाप्तवत्या किल तेषां शरीरं परिपूर्णं निष्पन्नमितिकृत्वा । तथा च तद्ग्रन्थः-"**औदारिककाययोगस्तिर्यङ्मनुजयोः शरीरपर्याप्तेरूर्ध्वं, तदारतस्तु मिश्रः**" इति । नन्वनया युक्त्या संज्ञिनोऽपर्याप्तस्य देवनारकेषूत्पद्यमानस्य तनुपर्याप्त्या पर्याप्तस्य वैक्रियमपि शरीरमुपपद्यत एव तत्किमिह तन्नोक्तम् ?, इत्युच्यते, उपलक्षणत्वादेतदपि द्रष्टव्यमित्यदोषः । यद्वा इहापर्याप्ता लब्ध्यपर्याप्तका एवान्तर्मुहूर्तायुषो विवक्षितास्ते च तिर्यङ्मनुष्या एव घटन्ते तेषामेवान्तर्मुहूर्तायुष्कत्वसंभवात्, न देवनारकाः, तेषां जघन्यतोऽपि दशवर्षसहस्रप्रमाणायुष्कत्वात् । लब्ध्यपर्याप्तकाश्च जघन्यतोऽपीन्द्रियपर्याप्तौ परिसमाप्तायामेव म्रियन्ते नार्वाग्, इत्युक्तागमाभिप्रायेण । ततस्तेषां लब्ध्यपर्याप्तकानां शरीरपर्याप्त्या पर्याप्तानामौदारिकमेव शरीरमुपपद्यते, न वैक्रियमित्यदोषः । केचिदिति ब्रुवाणस्य चाचार्यस्यायमभिप्रायो लक्ष्यते—यद्यपि तेषां शरीरपर्याप्तिरभूत्तथाऽपि इन्द्रियोच्छ्वासादीनामप्यद्याप्यनिष्पन्नत्वेन शरीरस्यासंपूर्णत्वात्, अत एव कार्मणस्याप्यद्यापि व्याप्रियमाणत्वादौदारिकमिश्रमेव तेषां युक्त्युपपन्नमिति । '**बायर**' इत्यादि बादर एकेन्द्रियपर्याप्तके त्रयो योगा भवन्ति । के ते ? इत्याह—

१ "०स्ते भण्यन्ते" इत्यपि । २ 'भण्यन्ते" इत्यपि ।

औदारिकं वैक्रियद्विकं च। तत्रौदारिकं पृथिव्यादीनाम्। वैक्रियद्विकं तु वैक्रियतन्मिश्रलक्षणं वायुकायिकस्य ॥७॥

**उरलं सुहुमे चउसु य, भासजुयं पनरसावि सन्निम्मि।**
**उवओगा दससु तओ, अचक्खुदंसणमनाणदुगं ॥८॥**

(हारि०) व्याख्या–औदारिकशरीरं, क्व? इत्याह–सूक्ष्मे पर्याप्त इति पूर्वेण संबन्धः। तथा 'चतुर्षु' द्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु, पर्याप्तेषु अत्रापि पूर्वेण योगः। किम्? इत्यत आह–तदौदारिकं पूर्वोक्तं भाषयाऽसत्यामृषारूपया युतं समन्वितं भाषायुतं योगद्वयमित्यर्थः। तथा 'पञ्चदशापि' योगा वक्ष्यमाणस्वरूपाः संज्ञिनि पर्याप्ते इति प्राक्तनेन संटङ्कः। इति योजिता जीवस्थानेषु योगाः पञ्चदशापि, साम्प्रतं तेष्वेवोपयोगान् प्रतिपिपादयिषुराह–'**उवओगा दससु तओ**' इत्यादि। उपयोगा वक्ष्यमाणलक्षणास्त्रयः, किंरूपाः? इत्याह–'**अचक्षुर्दर्शनम्**' चक्षुरहितशेषेन्द्रियोपयोगलक्षणम्। तथा '**अज्ञानद्विकं च**' मत्यज्ञानश्रुताज्ञानस्वरूपमिति। केषु? इत्याह–दशसु जीवस्थानेषु पर्याप्तापर्याप्तसूक्ष्म २ बादर २ द्वि २ त्रीन्द्रिया२ऽपर्याप्तकचतुरिन्द्रिया१ऽसंज्ञिपञ्चेन्द्रिय१रूपेषु। इति गाथार्थः॥८॥

तथा—

(मल०) पर्याप्त इत्यनुवर्तते। '**औदारिकं**' औदारिककाययोगः सूक्ष्मैकेन्द्रिये पर्याप्ते भवति। तथा '**चउसु य भासजुयं**' इति चतुर्षु द्वि १ त्रि २ चतुरिन्द्रिया ३ ऽसंज्ञिपञ्चेन्द्रियेषु ४ पर्याप्तेषु तदेवौदारिकं '**भाषायुतं**' वाग्योगसहितं द्रष्टव्यम्। भाषा चेह असत्यामृषारूपाऽवगन्तव्या। तदुक्तम्–"**विगलेसु असच्चमोसेव**" इति। '**पनरसावि 'सन्निम्मि'** इति संज्ञिनि पर्याप्तके पञ्चदशापि योगाः संभवन्ति। चतुर्धा मनोयोगः चतुर्धा वाग्योगः, सप्तधा च काययोग इति। नन्वौदारिकमिश्रवैक्रियमिश्रकार्मणकाययोगाः कथमस्योपपद्यन्ते? तेषामपर्याप्तावस्थामात्रित्वात्, उच्यते, वैक्रियमिश्रं संयतादेर्वैक्रियं प्रारभमाणस्य प्राप्यते। औदारिकमिश्रकाययोगौ तु केवलिनः समुद्घातगतस्य। उक्तं च "**औदारिकप्रयोक्ता, प्रथमाष्टमसमययोरसाविष्टः। मिश्रौदारिकयोक्ता, सप्तमषष्ठद्वितीयेषु ॥१॥ कार्मणशरीरयोगी, चतुर्थके पञ्चमे तृतीये च ॥**" तदेवं निरूपिता जीवस्थानकेषु योगाः, सांप्रतमुपयोगा निरूपणावसरप्राप्तास्ते च द्वादश। तद्यथा–मतिज्ञानादीनि पञ्च ज्ञानानि, मत्यज्ञानादीनि त्रीण्यज्ञानानि, चक्षुर्दर्शनादीनि च चत्वारि दर्शनानि। एतान् जीवस्थानेषु चिन्तयन्नाह–'**उवओगा**' इत्यादि। '**दससु**' जीवस्थानकेषु पर्याप्ता–ऽपर्याप्त–सूक्ष्म–बादर–एकेन्द्रिय ४ द्वीन्द्रिय ६ त्रीन्द्रिया ८ ऽपर्याप्त चतुरिन्द्रिया ९ऽसंज्ञिपञ्चेन्द्रिय १० लक्षणेषु त्रय उपयोगा भवन्ति।

सानामौदारिकयोगवद्वै क्रिययोगोऽप्यभिहितः स्यादिति । लब्धिकरणापर्याप्तकपर्याप्तमतां पुनरयं विशेषः- लब्ध्यपर्याप्तास्त उच्यन्ते ये निजपर्याप्तीरसमाप्य म्रियन्ते, लब्धिपर्याप्ताः पुनः समाप्य म्रियन्त इति । करणापर्याप्तास्ते भण्यन्ते ये निजपर्याप्तीर्नाद्यापि पूरयन्ति परं पूरयिष्यन्ति । करणपर्याप्ताः पुनस्ते भण्यन्ते यैर्निजपर्याप्तयः पूरिता भवन्ति । अतो देवनारका असंख्यातवर्षायुषस्तिर्यङ्नरा जिनादयश्च लब्धिपर्याप्ता एव भवन्ति न तु लब्ध्यपर्याप्ताः तेषां निरुपक्रमायुष्कत्वेनापर्याप्तकावस्थायां मरणाभावात् । तथा चोक्तम्-' देवा नेरइया वा, असंखवासाउया य तिरिमणुया । उत्तमपुरिसा य तहा, चरमसरीरा य निरुवकमा ।१।।" इति । करणत उभयथाऽपि भवन्ति । संख्यातवर्षायुषो नरतिर्यञ्चो लब्धितः करणतश्चापर्याप्ताः पर्याप्तकाश्च भवन्ति । संख्यातवर्षायुषस्तिर्यङ्नरा[1]स्तु ते गीयन्ते येषां पूर्वकोट्यायुः, येषां पुनस्तदधिकं तेऽसंख्यातवर्षायुषो[2]ऽभिधीयन्ते आगमपरिभाषया । इत्युक्तं प्रासङ्गिकं साम्प्रतं प्रस्तुतमभिधीयत इति 'बायरपज्जत्ते' इत्यादि बादरपर्याप्ते किम् ? इत्याह–औदारिकं वैक्रियद्विकं च वैक्रियशरीरतन्मिश्रलक्षणमिति त्रयो भवन्तीति शेषः । वैक्रियद्विकस्य हि बादरपर्याप्तकवायुकायिकेषु सद्भावात् । इति गाथार्थः ।।७।।

अथ गाथार्द्धेन योगान् समर्थयन् जीवेष्वेवोपयोगानाह—

(मल०) केचिदाचार्याः शीलाङ्कादयः शेषपर्याप्त्यपेक्षयाऽपर्याप्तानां 'तणुपज्जत्ताणं' इति तनुपर्याप्त्या पर्याप्तानामौदारिकं शरीरं 'ब्रुवते' प्रतिपादयन्ति । शरीरपर्याप्त्या हि परिसमाप्तवत्या किल तेषां शरीरं परिपूर्णं निष्पन्नमितिकृत्वा । तथा च तद्ग्रन्थः–"औदारिककाययोगस्तिर्यङ्मनुजयोः शरीरपर्याप्तेरूर्ध्वं, तदारतस्तु मिश्रः" इति । नन्वनया युक्त्या संज्ञिनोऽपर्याप्तस्य देवनारकेषूत्पद्यमानस्य तनुपर्याप्त्या पर्याप्तस्य वैक्रियमपि शरीरमुपपद्यत एव तत्किमिह नोक्तम् ?, इत्युच्यते, उपलक्षणत्वादेतदपि द्रष्टव्यमित्यदोषः । यद्वा इहापर्याप्ता लब्ध्यपर्याप्तका एवान्तर्मुहूर्तायुषो विवक्षितास्ते च तिर्यङ्मनुष्या एव घटन्ते तेषामेवान्तर्मुहूर्तायुष्कत्वसंभवात् , न देवनारकाः, तेषां जघन्यतोऽपि दशवर्षसहस्रप्रमाणायुष्कत्वात् । लब्ध्यपर्याप्तकाश्च जघन्यतोऽपीन्द्रियपर्याप्तौ परिसमाप्तायामेव म्रियन्ते नार्वाग् , इत्युक्तागमाभिप्रायेण । ततस्तेषां लब्ध्यपर्याप्तकानां शरीरपर्याप्त्या पर्याप्तानामौदारिकमेव शरीरमुपपद्यते, न वैक्रियमित्यदोषः । केचिदिति ब्रुवाणस्य चाचार्यस्यायमभिप्रायो लक्ष्यते–यद्यपि तेषां शरीरपर्याप्तिरभूत्तथाऽपि इन्द्रियोच्छ्वासादीनामप्यद्याप्यनिष्पन्नत्वेन शरीरस्यासंपूर्णत्वात् , अत एव कार्मणस्याप्यद्यापि व्याप्रियमाणत्वादौदारिकमिश्रमेव तेषां युक्त्युपपन्नमिति । 'बायर' इत्यादि बादर एकेन्द्रियपर्याप्तके त्रयो योगा भवन्ति । के ते ? इत्याह–

१ "०स्ते भण्यन्ते" इत्यपि । २ "भण्यन्ते" इत्यपि ।

पर्याप्तकेषु । 'मणनाण' इत्यादि संज्ञिनि अपर्याप्ते मनःपर्यवज्ञानचक्षुर्दर्शनकेवलज्ञानकेवलदर्शन-रूपकेवलद्विकरहिताः शेषा अष्टावपि ज्ञानात्रिकाज्ञानत्रिकाचक्षुर्दर्शनावधिदर्शनरूपा उपयोगा भवन्ति ॥९॥

**सव्वे सन्निसु एत्तो, लेसाओ छावि दुविह सन्निंमि ।**
**चउरो पढमा बायर अपजत्ते तिन्नि सेसेसु ॥१०॥**

(हारि०) व्याख्य.– **सर्वे** उपयोगाः '**संज्ञिषु**' पर्याप्तष्विति शेषः । एवं प्रतिपादिता जीवस्थानेषूपयोगाः, इतो लेश्यास्तेष्वेव प्रतिपाद्यन्त इति शेषः । '**छावि दुविह सन्निंमि**' इति षडपि कृष्णलेश्याद्याः । क ? **द्विविधे संज्ञिनि**' पर्याप्तापर्याप्तकलक्षणे । तथा '**चतस्रः प्रथमाः**' कृष्णनीलकापोततैजसीरूपाः । क ? **बादर**' इति बादरेऽपर्याप्ते देवेभ्यश्च्युतस्य भूदकतरुपूत्पन्नस्य तेजोलेश्यायाः सद्भावात् । तथा **तिस्रः**' प्रथमाः कृष्णनीलकापोताख्या', केषु ? शेषेषु प्राक्तनद्विविधसंज्ञ्यपर्याप्तबादरवर्जितेष्वेकादशसु जीवस्थानेषु । इति गाथार्थः ॥१०॥

इति प्रतिपादिता लेश्या जीवस्थानेषु, सांप्रतं तेष्वेव बन्धोदयोदीरणासत्ताख्यस्थानचतुष्टयमेकगाथया प्रतिपादयन्नाह—

(मल०) सर्वेऽपि द्वादशाप्युपयोगाः संज्ञिषु पर्याप्तेषु द्रष्टव्याः ते च क्रमेणैव न तु युगपत्, उपयोगानां तथाजीवस्वभावत्वतो यौगपद्यासंभवात् । तदुक्तम्–"**समए दो उवओगा**" इति । तदेवं निरूपिता जीवस्थानकेषूपयोगाः । '**एत्तो**' इति इत ऊर्ध्वमेतेष्वेव लेश्या अपि निरूप्यन्ते '**छावि दुविह सन्निम्मि**' इति द्विविधेऽपि संज्ञिनि पर्याप्तापर्याप्तलक्षणे षडपि कृष्णनीलकापोततेजःपद्मशुक्लरूपा लेश्या भवन्ति । '**चउरो पढमा बायर अपजत्ते**' इति बादरैकेन्द्रियेऽपर्याप्तके प्रथमाश्चतस्रः कृष्णनीलकापोततेजोरूपा भवन्ति । तेजोलेश्या कथमवाप्यते ?, इति चेदुच्यते, यदा देवभवाच्च्युतः सन् कश्चनापि बादरैकेन्द्रियतया भूदकतरुषु मध्ये समुत्पद्यते तदा तस्य घण्टालालान्यायेन साऽवाप्यते इत्यदोषः '**तिन्नि सेसेसु**' इति । अत्र प्रथमा इत्यनुवर्तते । प्रथमास्तिस्रः कृष्णनीलकापोताख्याः शेषेषु प्राक्तनद्विविधसंज्ञ्यपर्याप्तबादरैकेन्द्रियवर्जितेष्वेकादशसु जीवस्थानकेषु लभ्यन्ते नान्याः, तेषां सदैवाशुभपरिणामभावात् । शुभपरिणामरूपाश्च तेजोलेश्यादयः । इति ॥१०॥

तदेवं जीवस्थानकेषु लेश्या अभिधाय, साम्प्रतमेतेष्वेव बन्धोदयोदीरणासत्ताख्यस्थानचतुष्टयमभिधित्सुराह—

**सत्तट्ठ १ अट्ठ २ सत्तट्ठ ३ अट्ठ ४ बंधु १दयु २दीरणा ३संता[१]४ ।**
**तेरससु जीवठाणेसु सन्निपज्जत्तए ओघो ॥११॥**

१ "सत्ता" इत्यपि पाठः ।

पर्याप्तकेषु । 'मणनाण' इत्यादि संज्ञिनि अपर्याप्ते मनःपर्यवज्ञानचक्षुर्दर्शनकेवलज्ञानकेवलदर्शन-रूपकेवलद्विकरहिताः शेषा अष्टावपि ज्ञानत्रिकाज्ञानत्रिकाचक्षुर्दर्शनावधिदर्शनरूपा उपयोगा भवन्ति ॥९॥

सव्वे सन्निसु एत्तो, लेसाओ छावि दुविह सन्निंमि ।
चउरो पढमा बायर अपजत्ते तिन्नि सेसेसु ॥१०॥

(हारि०) व्याख्या.- सर्वे उपयोगाः 'संज्ञिषु' पर्याप्तष्विति शेषः । एवं प्रतिपादिता जीवस्थानेषूपयोगाः, इतो लेश्यास्तेष्वेव प्रतिपाद्यन्त इति शेषः । 'छावि दुविह सन्निंमि' इति षडपि कृष्णलेश्याद्याः । क्व ? द्विविधे संज्ञिनि' पर्याप्तापर्याप्तकलक्षणे । तथा 'चतस्रः प्रथमाः' कृष्णनीलकापोततैजसीरूपाः । क्व ? बादर' इति बादरेऽपर्याप्ते देवेभ्यश्च्युतस्य भूदकतरुषूत्प-न्नस्य तेजोलेश्यायाः सद्भावात् । तथा तिस्रः' प्रथमाः कृष्णनीलकापोताख्याः, केषु ? शेषेषु प्राक्तनद्विविधसंज्ञ्यपर्याप्तबादरवर्जितेष्वेकादशसु जीवस्थानेषु । इति गाथार्थः ॥१०॥

इति प्रतिपादिता लेश्या जीवस्थानेषु, सांप्रतं तेष्वेव बन्धोदयोदीरणासत्ताख्यस्थानचतुष्ट-यमेकगाथया प्रतिपादयन्नाह—

(मल०) सर्वेऽपि द्वादशाप्युपयोगाः संज्ञिषु पर्याप्तेषु द्रष्टव्याः ते च क्रमेणैव न तु युगपत्, उपयोगानां तथाजीवस्वभावत्वतो यौगपद्यासंभवात् । तदुक्तम्-"समए दो णुव-ओगा" इति । तदेवं निरूपिता जीवस्थानकेषूपयोगाः । 'एत्तो' इति इत ऊर्ध्वमेतेष्वेव लेश्या अपि निरूप्यन्ते 'छावि दुविह सन्निम्मि' इति द्विविधेऽपि संज्ञिनि पर्याप्तापर्याप्तलक्षणे षडपि कृष्णनीलकापोततेजःपद्मशुक्लरूपा लेश्या भवन्ति । 'चउरो पढमा बायर अपजत्ते' इति बादरैकेन्द्रियेऽपर्याप्तके प्रथमाश्चतस्रः कृष्णनीलकापोततेजोरूपा भवन्ति । तेजोलेश्या कथमवा-प्यते ?, इति चेदुच्यते, यदा देवभवाच्च्युतः सन् कश्चनापि बादरैकेन्द्रियतया भूदकतरुषु मध्ये समुत्पद्यते तदा तस्य घण्टालालान्यायेन साऽवाप्यते इत्यदोषः 'तिन्नि सेसेसु' इति । अत्र प्रथमा इत्यनुवर्तते । प्रथमास्तिस्रः कृष्णनीलकापोताख्याः शेषेषु प्राक्तनद्विविधसंज्ञ्यपर्याप्त-बादरैकेन्द्रियवर्जितेष्वेकादशसु जीवस्थानकेषु लभ्यन्ते नान्याः, तेषां सदैवाशुभपरिणामभावात् । शुभपरिणामरूपाश्च तेजोलेश्यादयः । इति ॥१०॥

तदेवं जीवस्थानकेषु लेश्या अभिधाय, साम्प्रतमेतेष्वेव बन्धोदयोदीरणसत्ताख्यस्थान-चतुष्टयमभिधित्सुराह—

सत्तट्ठ १ अट्ठ २ सत्तट्ठ ३ अट्ठ ४ बंधु १दयु २दीरणा ३संता[1]४ ।
तेरससु जीवठाणेसु सन्निपज्जत्तए ओघो ॥११॥

१ "सत्ता" इत्यपि पाठः ।

के ते ? इत्याह–अचक्षुर्दर्शनमज्ञानद्विकं च मत्यज्ञानश्रुताज्ञानलक्षणम् । ननु स्पर्शनेन्द्रियावरणक्षयोपशमसंभवाद्भवतु मतिरेकेन्द्रियाणां, यत्तु श्रुतं तत्कथमुपपद्यते ? भाषालब्धिश्रोत्रेन्द्रियलब्धिविकलत्वात्, भाषाश्रोत्रेन्द्रियलब्धिमतो हि तदुपपद्यते नान्यस्य । तदुक्तम्— "**भावसुयं भासासोयलद्धिणो जुज्जए न इयरस्स । भासाभिमुहस्स सुयं, सोऊण व जं हविज्जाहि ॥१॥**" उच्यते, इह तावदेकेन्द्रियाणामाहारादिसंज्ञा विद्यते, तथा सूत्रेऽभिधानात् । संज्ञा चाभिलाष उच्यते । यदुक्तमावश्यकटीकायाम्–"**आहारसंज्ञा आहाराभिलाषः क्षुद्वेदनीयप्रभवः खल्वात्मपरिणामविशेषः**" इति । अभिलापश्च ममैवंरूपं वस्तु पुष्टिकारि तद्यदीदमवाप्यते ततः समीचीनं भवति इत्येवंशब्दार्थोल्लेखानुविद्धः स्वपुष्टिनिमित्तभूतप्रतिनियतवस्तुप्राप्त्यध्यवसायरूपः, स च श्रुतमेव शब्दार्थालोचनानुसारित्वात् श्रुतस्य चैतल्लक्षणत्वात्, उक्तं च–**इंदियमणोनिमित्तं, जं विन्नाणं सुयाणुसारेण । निययत्थोत्तिसमत्थं तं भावसुयं मई सेसं ॥१॥**" इति 'सुयाणुसारेण' इति शब्दार्थालोचनानुसारेण केवलमेकेन्द्रियाणामव्यक्त एव कश्चनापि अनिर्वचनीयः शब्दार्थोल्लेखो द्रष्टव्यः, अन्यथाऽऽहारादिसंज्ञानुपपत्तेः । यदप्युक्तं भाषालब्धिश्रोत्रेन्द्रियलब्धिविकलत्वादेकेन्द्रियाणां श्रुतमनुपपन्नमिति, तदप्यसमीक्षिताभिधानम्, तथाहि–बकुलादेः स्पर्शनेन्द्रियातिरिक्तद्रव्येन्द्रियविकलत्वेऽपि किमपि सूक्ष्मं भावेन्द्रियपञ्चकविज्ञानमभ्युपगम्यते, "**पचेंदिउ व्व (ओ उ) बउलो**" इत्यादिजिनवचनप्रामाण्यात्, तथा भाषाश्रोत्रेन्द्रियलब्धिविकलत्वेऽपि तेषां किमपि सूक्ष्मं श्रुतमपि भविष्यति, अन्यथा आहारादिसंज्ञानुपपत्तेः, तदुक्तम्–"**जह सुहुमं भाविंदियणाणं दव्विंदियाण विरहे वि । दव्वसुयाभावंमि वि, भावसुयं पत्थिवाईणं ॥१॥**" इति कृतं प्रसंगेन गमनिकामात्रफलत्वात्प्रयासस्य ॥८॥

**चक्खुजुया चउरिंदियअसन्नि पज्जत्तएसु ते चउरो ।**
**मणनाणचक्खुकेवलदुगरहिया सन्नि अपजत्ते ॥९॥**

(हारि०) व्याख्या–ते पूर्वगाथोक्तास्त्रय उपयोगाः '**चक्षुर्युताः**' चक्षुरिन्द्रियोपयोगान्विताश्चत्वारो भवन्तीत्यर्थः। केषु ? '**चउरिंदियअसन्नि**' इति विभक्तिलोपाच्चतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु, कीदृशेषु ? पर्याप्तकेषु । तथा मनःपर्यायज्ञानचक्षुर्दर्शनकेवलद्विकरहिताः । केवलद्विकं तु केवलज्ञानकेवलदर्शनरूपम् । शेषा अष्टावुपयोगाः संज्ञिन्यपर्याप्तके भवन्ति । इति गाथार्थः ॥९॥

अथ किंचिदूनपादेनोपयोगान् समर्थयन् संबन्धपूर्वकं लेश्यास्तेष्वेव दर्शयन्नाह—

(मल०) त एव पूर्वोक्तास्त्रय उपयोगाः '**चक्षुर्युताः**' चक्षुर्दर्शनोपयोगसहिताः सन्तश्चत्वार उपयोगा भवन्ति, केषु ? इत्याह–'**चउरिंदियअसन्नि पज्जत्तएसु**' चतुरिन्द्रियेषु असंज्ञिषु च

पर्याप्तकेषु । 'मणनाण' इत्यादि संज्ञिनि अपर्याप्ते मनःपर्यवज्ञानचक्षुर्दर्शनकेवलज्ञानकेवलदर्शन-रूपकेवलद्विकरहिताः शेषा अष्टावपि ज्ञानात्रिकाज्ञानत्रिकाचक्षुर्दर्शनावधिदर्शनरूपा उपयोगा भवन्ति ॥९॥

मव्वे सन्निसु एत्तो, लेसाओ छावि दुविह सन्निंमि ।
चउरो पढमा बायर अपजत्ते तिन्नि सेसेसु ॥१०॥

(हारि०) व्याख्या- सर्वे उपयोगाः 'संज्ञिषु' पर्याप्तष्विति शेषः । एवं प्रतिपादिता जीवस्थानेषूपयोगाः, इतो लेश्यास्तेष्वेव प्रतिपाद्यन्त इति शेषः । 'छावि दुविह सन्निंमि' इति षडपि कृष्णलेश्याद्याः । क १ द्विविधे संज्ञिनि' पर्याप्तापर्याप्तकलक्षणे । तथा 'चतस्रः प्रथमाः' कृष्णनीलकापोततैजसीरूपाः । क १ बादर' इति बादरेऽपर्याप्ते देवेभ्यश्च्युतस्य भूदकतरुपूत्पन्नस्य तेजोलेश्यायाः सद्भावात् । तथा तिस्रः' प्रथमाः कृष्णनीलकापोताख्या', केषु १ शेषेषु प्राक्तनद्विविधसंज्ञ्यपर्याप्तबादरवर्जितेष्वेकादशसु जीवस्थानेषु । इति गाथार्थः ॥१०॥

इति प्रतिपादिता लेश्या जीवस्थानेषु, सांप्रतं तेष्वेव बन्धोदयोदीरणासत्ताख्यस्थानचतुष्टयमेकगाथया प्रतिपादयन्नाह—

(मल०) सर्वेऽपि द्वादशाप्युपयोगाः संज्ञिषु पर्याप्तेषु द्रष्टव्याः ते च क्रमेणैव न तु युगपत्, उपयोगानां तथाजीवस्वभावत्वतो यौगपद्यासंभवात् । तदुक्तम्—"समए दो णुवओगा" इति । तदेवं निरूपिता जीवस्थानकेषूपयोगाः । 'एत्तो' इति इत ऊर्ध्वमेतेष्वेव लेश्या अपि निरूप्यन्ते 'छावि दुविह सन्निम्मि' इति द्विविधेऽपि संज्ञिनि पर्याप्तापर्याप्तलक्षणे षडपि कृष्णनीलकापोततेजःपद्मशुक्लरूपा लेश्या भवन्ति । 'चउरो पढमा बायर अपजत्ते' इति बादरैकेन्द्रियेऽपर्याप्तके प्रथमाश्चतस्रः कृष्णनीलकापोततेजोरूपा भवन्ति । तेजोलेश्या कथमवाप्यते १, इति चेदुच्यते, यदा देवभवाच्च्युतः सन् कश्चनापि बादरैकेन्द्रियतया भूदकतरुषु मध्ये समुत्पद्यते तदा तस्य घण्टालालान्यायेन साऽवाप्यते इत्यदोषः 'तिन्नि सेसेसु' इति । अत्र प्रथमा इत्यनुवर्तते । प्रथमास्तिस्रः कृष्णनीलकापोताख्याः शेषेषु प्राक्तनद्विविधसंज्ञ्यपर्याप्तबादरैकेन्द्रियवर्जितेष्वेकादशसु जीवस्थानकेषु लभ्यन्ते नान्याः, तेषां सदैवाशुभपरिणामभावात् । शुभपरिणामरूपाश्च तेजोलेश्यादयः । इति ॥१०॥

तदेवं जीवस्थानकेषु लेश्या अभिधाय, साम्प्रतमेतेष्वेव बन्धोदयोदीरणासत्ताख्यस्थानचतुष्टयमभिधित्सुराह—

सत्तट्ठ १ अट्ठ २ सत्तट्ठ ३ अट्ठ ४ बंधु १दयु २दीरणा ३संता'४ ।
तेरससु जीवठाणेसु सन्निपज्जत्तए ओघो ॥११॥

१ "सत्ता" इत्यपि पाठः ।

के ते ? इत्याह–अचक्षुर्दर्शनमज्ञानद्विकं च मत्यज्ञानश्रुताज्ञानलक्षणम् । ननु स्पर्शनेन्द्रियावरणक्षयोपशमसंभवाद्भवतु मतिरेकेन्द्रियाणां, यत्तु श्रुतं तत्कथमुपपद्यते ? भाषालब्धिश्रोत्रेन्द्रियलब्धिविकलत्वात्, भाषाश्रोत्रेन्द्रियलब्धिमतो हि तदुपपद्यते नान्यस्य । तदुक्तम्–"**भावसुयं भासासोयलद्धिणो जुज्जए न इयरस्स । भासाभिमुहस्स सुयं, सोऊण व जं हविज्जाहि ॥१॥**" उच्यते, इह तावदेकेन्द्रियाणामाहारादिसंज्ञा विद्यते, तथा सूत्रेऽभिधानात् । संज्ञा चाभिलाष उच्यते । यदुक्तमावश्यकटीकायाम्–"**आहारसंज्ञा आहाराभिलाषः क्षुद्वेदनीयप्रभवः खल्वात्मपरिणामविशेषः**" इति । अभिलाषश्च ममैवंरूपं वस्तु पुष्टिकारि तद्यदीदमवाप्यते ततः समीचीनं भवति इत्येवंशब्दार्थोल्लेखानुविद्धः स्वपुष्टिनिमित्तभूतप्रतिनियतवस्तुप्राप्त्यध्यवसायरूपः, स च श्रुतमेव शब्दार्थालोचनानुसारित्वात् श्रुतस्य चैतल्लक्षणत्वात्, उक्तं च–"**इंदियमणोनिमित्तं, जं विन्नाणं सुयाणुसारेण । निययत्थोत्तिसमत्थं तं भावसुयं मई सेसं ॥१॥**" इति '**सुयाणुसारेण**' इति शब्दार्थालोचनानुसारेण केवलमेकेन्द्रियाणामव्यक्त एव कश्चनापि अनिर्वचनीयः शब्दार्थोल्लेखो द्रष्टव्यः, अन्यथाऽऽहारादिसंज्ञानुपपत्तेः । यदप्युक्तं भाषालब्धिश्रोत्रेन्द्रियलब्धिविकलत्वादेकेन्द्रियाणां श्रुतमनुपपन्नमिति, तदप्यसमीक्षिताभिधानम्, तथाहि–वकुलादेः स्पर्शनेन्द्रियातिरिक्तद्रव्येन्द्रियविकलत्वेऽपि किमपि सूक्ष्मं भावेन्द्रियपञ्चकविज्ञानमभ्युपगम्यते, "**पचेंदिउ व्व (ओ उ) बउलो**" इत्यादिजिनवचनप्रामाण्यात्, तथा भाषाश्रोत्रेन्द्रियलब्धिविकलत्वेऽपि तेषां किमपि सूक्ष्मं श्रुतमपि भविष्यति, अन्यथा आहारादिसंज्ञानुपपत्तेः, तदुक्तम्–"**जह सुहुमं भाविंदियनाणं दव्विंदियाण विरहे वि । दव्वसुयाभावंमि वि, भावसुयं पत्थिवाईणं ॥१॥**" इति कृतं प्रसंगेन गमनिकामात्रफलत्वात्प्रयासस्य ॥८॥

**चक्खुजुया चउरिंदियअसन्नि पज्जत्तएसु ते चउरो ।**
**मणनाणचक्खुकेवलदुगरहिया सन्नि अपजत्ते ॥९॥**

(हारि०) व्याख्या–ते पूर्वगाथोक्तास्त्रय उपयोगाः '**चक्षुर्युताः**' चक्षुरिन्द्रियोपयोगान्विताश्चत्वारो भवन्तीत्यर्थः। केषु ? '**चउरिंदियअसन्नि**' इति विभक्तिलोपाच्चतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु, कीदृशेषु ? पर्याप्तकेषु । तथा मनःपर्यायज्ञानचक्षुर्दर्शनकेवलद्विकरहिताः । केवलद्विकं तु केवलज्ञानकेवलदर्शनरूपम् । शेषा अष्टावुपयोगाः संज्ञिन्यपर्याप्तके भवन्ति । इति गाथार्थः ॥९॥

अथ किंचिदूनपादेनोपयोगान् समर्थयन् संबन्धपूर्वकं लेश्यास्तेष्वेव दर्शयन्नाह—

(मल०) त एव पूर्वोक्तास्त्रय उपयोगाः '**चक्षुर्युताः**' चक्षुर्दर्शनोपयोगसहिताः सन्तश्चत्वार उपयोगा भवन्ति, केषु ? इत्याह–'**चउरिंदियअसन्नि पज्जत्तएसु**' चतुरिन्द्रियेषु असंज्ञिषु च

पर्याप्तकेषु । 'मणनाण' इत्यादि संज्ञिनि अपर्याप्ते मनःपर्यवज्ञानचक्षुर्दर्शनकेवलज्ञानकेवलदर्शनरूपकेवलद्विकरहिताः शेषा अष्टावपि ज्ञानत्रिकाज्ञानत्रिकाचक्षुर्दर्शनावधिदर्शनरूपा उपयोगा भवन्ति ॥९॥

सव्वे सन्निसु एत्तो, लेसाओ छावि दुविह सन्निंमि ।
चउरो पढमा बायर अपजत्ते तिन्नि सेसेसु ॥१०॥

(हारि०) व्याख्या– सर्वे उपयोगाः 'संज्ञिषु' पर्याप्तेष्विति शेषः । एवं प्रतिपादिता जीवस्थानेषूपयोगाः, इतो लेश्यास्तेष्वेव प्रतिपाद्यन्त इति शेषः । 'छावि दुविह सन्निंमि' इति षडपि कृष्णलेश्याद्याः । क्व ? 'द्विविधे संज्ञिनि' पर्याप्तापर्याप्तकलक्षणे । तथा 'चतस्रः प्रथमाः' कृष्णनीलकापोततैजसीरूपाः । क्व ? 'बादर' इति बादरेऽपर्याप्ते देवेभ्यश्च्युतस्य भूदकतरुपूत्पन्नस्य तेजोलेश्यायाः सद्भावात् । तथा 'तिस्रः' प्रथमाः कृष्णनीलकापोताख्याः, केषु ? शेषेषु प्राक्तनद्विविधसंज्ञ्यपर्याप्तबादरवर्जितेष्वेकादशसु जीवस्थानेषु । इति गाथार्थः ॥१०॥

इति प्रतिपादिता लेश्या जीवस्थानेषु, सांप्रतं तेष्वेव बन्धोदयोदीरणासत्ताख्यस्थानचतुष्टयमेकगाथया प्रतिपादयन्नाह—

(मल०) सर्वेऽपि द्वादशाप्युपयोगाः संज्ञिषु पर्याप्तेषु द्रष्टव्याः ते च क्रमेणैव न तु युगपत्, उपयोगानां तथाजीवस्वभावत्वतो यौगपद्यासंभवात् । तदुक्तम्–"समए दो णुवओगा" इति । तदेवं निरूपिता जीवस्थानकेषूपयोगाः । 'एत्तो' इति इत ऊर्ध्वमेतेष्वेव लेश्या अपि निरूप्यन्ते 'छावि दुविह सन्निम्मि' इति द्विविधेऽपि संज्ञिनि पर्याप्तापर्याप्तलक्षणे षडपि कृष्णनीलकापोततेजःपद्मशुक्लरूपा लेश्या भवन्ति । 'चउरो पढमा बायर अपजत्ते' इति बादरैकेन्द्रियेऽपर्याप्तके प्रथमाश्चतस्रः कृष्णनीलकापोततेजोरूपा भवन्ति । तेजोलेश्या कथमवाप्यते ?, इति चेदुच्यते, यदा देवभवाच्च्युतः सन् कश्चनापि बादरैकेन्द्रियतया भूदकतरुषु मध्ये समुत्पद्यते तदा तस्य घण्टालालान्यायेन साऽवाप्यते इत्यदोषः 'तिन्नि सेसेसु' इति । अत्र प्रथमा इत्यनुवर्तते । प्रथमास्तिस्रः कृष्णनीलकापोताख्याः शेषेषु प्राक्तनद्विविधसंज्ञ्यपर्याप्तबादरैकेन्द्रियवर्जितेष्वेकादशसु जीवस्थानकेषु लभ्यन्ते नान्याः, तेषां सर्वत्राशुभपरिणामभावात् । शुभपरिणामरूपाश्च तेजोलेश्यादयः । इति ॥१०॥

तदेवं जीवस्थानकेषु लेश्या अभिधाय, साम्प्रतमेतेष्वेव बन्धोदयोदीरणासत्ताख्यस्थानचतुष्टयमभिधित्सुराह—

सत्तट्ठ १ अट्ठ २ सत्तट्ठ ३ अट्ठ ४ बंधु १दयु २दीरणा ३संता[१] ४ ।
तेरससु जीवठाणेसु सन्निपज्जत्तए ओघो ॥११॥

१ "सत्ता" इत्यपि पाठः ।

के ते ? इत्याह—अचक्षुर्दर्शनमज्ञानद्विकं च मत्यज्ञानश्रुताज्ञानलक्षणम् । ननु स्पर्शनेन्द्रियावरणक्षयोपशमसंभवाद्भवतु मतिरेकेन्द्रियाणां, यत्तु श्रुतं तत्कथमुपपद्यते ? भाषालब्धिश्रोत्रेन्द्रियलब्धिविकलत्वात्, भाषाश्रोत्रेन्द्रियलब्धिमतो हि तदुपपद्यते नान्यस्य । तदुक्तम्— **"भावसुयं भासासोयलद्धिणो जुज्जए न इयरस्स । भासाभिमुहस्स सुयं, सोऊण व जं हविज्जाहि ॥१॥"** उच्यते, इह तावदेकेन्द्रियाणामाहारादिसंज्ञा विद्यते, तथा सूत्रेऽभिधानात् । संज्ञा चाभिलाष उच्यते । यदुक्तमावश्यकटीकायाम्—**"आहारसंज्ञा आहाराभिलाषः क्षुद्वेदनीयप्रभवः खल्वात्मपरिणामविशेषः"** इति । अभिलापश्च ममैवंरूपं वस्तु पुष्टिकारि तद्यदीदमवाप्यते ततः समीचीनं भवति इत्येवंशब्दार्थोल्लेखानुविद्धः स्वपुष्टिनिमित्तभूतप्रतिनियतवस्तुप्राप्त्यध्यवसायरूपः, स च श्रुतमेव शब्दार्थालोचनानुसारित्वात् श्रुतस्य चैतल्लक्षणत्वात्, उक्तं च—**इंदियमणोनिमित्तं, जं विन्नाणं सुयाणुसारेण । निययत्थोत्तिसमत्थं तं भावसुयं मई सेसं ॥१॥"** इति **'सुयाणुसारेण'** इति शब्दार्थालोचनानुसारेण केवलमेकेन्द्रियाणामव्यक्त एव कश्चनापि अनिर्वचनीयः शब्दार्थोल्लेखो द्रष्टव्यः, अन्यथाऽऽहारादिसंज्ञानुपपत्तेः । यदप्युक्तं भाषालब्धिश्रोत्रेन्द्रियलब्धिविकलत्वादेकेन्द्रियाणां श्रुतमनुपपन्नमिति, तदप्यसमीक्षिताभिधानम्, तथाहि—बकुलादेः स्पर्शनेन्द्रियातिरिक्तद्रव्येन्द्रियविकलत्वेऽपि किमपि सूक्ष्मं भावेन्द्रियपञ्चकविज्ञानमभ्युपगम्यते, **"पचेंदिउ व्व (ओ उ) बउलो"** इत्यादिजिनवचनप्रामाण्यात्, तथा भाषाश्रोत्रेन्द्रियलब्धिविकलत्वेऽपि तेषां किमपि सूक्ष्मं श्रुतमपि भविष्यति, अन्यथा आहारादिसंज्ञानुपपत्तेः, तदुक्तम्—**"जह सुहुमं भाविंदियणाणं दव्विंदियाण विरहे वि । दव्वसुयाभावंमि वि, भावसुयं पत्थिवाईणं ॥१॥"** इति कृतं प्रसंगेन गमनिकामात्रफलत्वात्प्रयासस्य ॥८॥

चक्खुजुया चउरिंदियअसन्नि पज्जत्तएसु ते चउरो ।
मणनाणचक्खुकेवलदुगरहिया सन्नि अपजत्ते ॥९॥

(हारि०) व्याख्या—ते पूर्वगाथोक्तास्त्रय उपयोगाः **'चक्षुर्युताः'** चक्षुरिन्द्रियोपयोगान्विताश्चत्वारो भवन्तीत्यर्थः। केषु ? **'चउरिंदियअसन्नि'** इति विभक्तिलोपाच्चतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु, कीदृशेषु ? पर्याप्तकेषु । तथा मनःपर्यायज्ञानचक्षुर्दर्शनकेवलद्विकरहिताः । केवलद्विकं तु केवलज्ञानकेवलदर्शनरूपम् । शेषा अष्टावुपयोगाः संज्ञिन्यपर्याप्तके भवन्ति । इति गाथार्थः ॥९॥

अथ किंचिदूनपादेनोपयोगान् समर्थयन् संबन्धपूर्वकं लेश्यास्तेष्वेव दर्शयन्नाह—

(मल०) त एव पूर्वोक्तास्त्रय उपयोगाः **'चक्षुर्युताः'** चक्षुर्दर्शनोपयोगसहिताः सन्तश्चत्वार उपयोगा भवन्ति, केषु ? इत्याह—**'चउरिंदियअसन्नि पज्जत्तएसु'** चतुरिन्द्रियेषु असंज्ञिषु च

षट् ६, वेदनीयायुर्मोहवर्जाः पञ्च ५, नामगोत्रे एव द्वे २, इति पञ्चप्रकारोदीरणा ५। सत्ता पुनरुदयवत्। इति गाथार्थः ॥११॥

इत्युक्तानि जीवस्थानेषु गुणस्थानकादीन्यष्टौ पदानि, सांप्रतं मार्गणास्थानानि प्ररूपयन्नाह—

(मल०) सप्त वाऽष्टौ वा सप्ताष्टाः, सप्ताष्टाश्चाष्टौ चेत्यादिद्वन्द्वः। बन्धोदयादिपदानामपि द्वन्द्वः। ततः षष्ठीतत्पुरुषसमासः। समाननिर्देशत्वाच्चात्र यथासंख्यम्, एतदुक्तं भवति—संज्ञिपर्याप्तवर्जितेषु शेषेषु त्रयोदशसु जीवस्थानकेषु बन्धः सप्तानामष्टानां वा कर्मणां ज्ञातव्यः। तथाहि—यदाऽनुभूयमानभवायुषस्त्रिभागनवभागादिरूपे शेषे सति परभवायुर्बध्यते, तदाऽष्टानामपि कर्मणां बन्धः। शेषकालं त्वायुषो बन्धाभावात्सप्तानामेव उदयः पुनरेतेषु त्रयोदशसु जीवस्थानकेषु सर्वकालमष्टानामेव कर्मणाम्। यतः सूक्ष्मसंपरायगुणस्थानकं यावदष्टानामपि कर्मणामुदयोऽवाप्यते, एतेषु च जीवस्थानकेषु उत्कर्षतोऽपि यथासंभवमविरतसम्यग्दृष्टिगुणस्थानकसंभव इति। उदीरणा सप्तानामष्टानां वा। तत्र यदाऽनुभूयमानभवायुरुदयावलिकान्तः प्रविष्टं भवति तदा सप्तानाम्, अनुभूयमानभवायुषोऽनुदीरणात्, आवलिकावशेषस्योदीरणानर्हत्वात्। उदीरणा हि उदयावलिकाबहिर्वर्तिनीभ्यः स्थितिभ्यः सकाशात्कषायसहितेनासहितेन वा योगकरणेन दलिकमाकृष्योदयसमयप्राप्तेन दलिकेन सहानुभवनम्। तथा चोक्तम्—"**उदयावलियबाहिरिल्लठिईहिंतो कसायसहियासहिएणं जोगकरणेणं दलियमाकड्ढिय पत्तदलिएण समं अणुभवणमुदीरणा**" इति। ततः कथमावलिकागतस्योदीरणा भवति? इति, न च परभवायुषस्तदानीमुदीरणासंभवस्तस्योदयाभावात्, अनुदितस्य चोदीरणानर्हत्वात्। शेषकालं त्वष्टानामुदीरणेति। सत्ताऽप्येतेषु जीवस्थानकेष्वष्टानामपि कर्मणां द्रष्टव्या। तथाहि—अष्टानामपि कर्मणां सत्ता उपशान्तमोहगुणस्थानकं यावदनुवर्तते। एते च जीवा उत्कर्षतोऽपि यथासंभवमविरतसम्यग्दृष्टिगुणस्थानकवर्तिन एवेति। '**सन्निपज्जत्तए ओघो**' इति संज्ञिनि पर्याप्ते ओघः, सामान्यं द्रष्टव्यम्। तच्च यद्यप्यग्रे स्वयमेवाचार्यो गुणस्थानकेषु बन्धादिमार्गणायामभिधास्यति तथाऽपीह स्थानाऽशून्यार्थं संक्षेपतः किंचिदुच्यते—तत्र सूक्ष्मसंपरायगुणस्थानकादर्वाग्वर्तिनो यथासंभवं यदायुर्बध्नन्ति तदाऽष्टानामपि कर्मणां बन्धकाः शेषकालं तु सप्तानाम्। सूक्ष्मसंपरायगुणस्थानकवर्तिनस्तु मोहायुर्वर्जानां षण्णां कर्मणाम्। उपशान्तमोहादयः पुनः सयोगिकेवलिपर्यन्ताः सातवेदनीयस्यैवैकस्येति। तथा सूक्ष्मसंपरायगुणस्थानकं यावदष्टानामपि कर्मणामुदयः। उपशान्तमोहगुणस्थानके क्षीणमोहगुणस्थानके च मोहनीयवर्जानां सप्तकर्मप्रकृतीनाम्। सयोगिकेवलिगुणस्थानकेऽयोगिकेवलिगुणस्थानके

(हारि०) व्याख्या—सप्ताष्टौ चाष्टौ च सप्ताष्टौ चाष्टौ च सप्ताष्टाष्टसप्ताष्टाष्टौ। एतत्संख्यानि कानि भवन्ति ? इत्याह—'बंधुदयुदीरणा 'संता' इति बन्धश्च उदयश्च उदीरणा च स[2]च्च बन्धोदयोदीरणा[3]संति भवन्तीति शेषः । क ? इत्याह—'अयोदशसु जीवस्थानेषु' सूक्ष्मापर्याप्तादिषु । तथा 'सन्निपज्जत्तए ओघो' इति संज्ञिपर्याप्ते पर्यन्तवर्तिनि चतुर्दशजीवस्थानके ओघः सामान्यं भवति। इति गाथाऽक्षरघटना । भावना त्वेवम्—सप्तायुर्वर्जाः प्रकृतयोऽष्टौ तद्युक्ता बन्धे । तथाऽष्टावुदये । तथा सप्ताष्टौ कथितस्वरूपा उदीरणायाम् । तथाऽष्टौ सत्तायाम् । इति यथासंख्येन योजना कार्या । बन्धादीनां स्वरूपं त्विदम्—मिथ्यात्वादिभिर्बन्धहेतुभिरञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरं पुद्गलनिचिते लोके कर्मयोग्यवर्गणापुद्गलैरात्मनो वह्न्ययःपिण्डवदन्योऽन्यानुगमाभेदात्मकः संबन्धो बन्धः । तेषां च यथास्वस्थितिवद्धानां कर्मपुद्गलानां करणविशेषकृते स्वाभाविके वा स्थित्यपचये सत्युदयसमयप्राप्तानां विपाकवेदनमुदयः । करणानि पुनरिमान्युक्तानि । तथाहि—''**बंधण १ संकमणु २ व्वट्टणा ३ य ओवट्टणा ४ उईरणया ५ । उवसामणा ६ निहत्ती, ७ निकायणा ८ च त्ति करणाइं** ॥१॥'' अस्याः सुखार्थं लेशतो व्याख्यानमिदम्—बन्धनं प्रकृतिस्थित्यनुभागप्रदेशरूपम् १ । संक्रमणं प्रकृतेः प्रकृत्यन्तरनयनम् २ । उद्वर्तनं स्थितिरसवृद्ध्युत्पादनम् ३ । अपवर्तनं स्थितिरसह्रापनम् ४ । उदीरणाऽप्राप्तकालस्य कर्मदलिकस्योदये प्रवेशनम् ५ । [4]उपशमना सर्वकरणायोग्यत्वसंपादनं, दर्शनत्रिके तु संक्रमणमेकं प्रवर्तते ६ । निधत्तिरुदयोदीरणासंक्रमरूपैस्त्रिभिः करणैर्यदन्यथा कर्तुं न शक्यते ७ । निकाचना पुनः सर्वकरणायोग्यत्वमिति ८ । तथा कर्मपुद्गलानामेव करणविशेषजनिते स्थित्यपचये सत्युदयावलिकायां प्रवेशनमुदीरणा । बन्धसंक्रमाभ्यां लब्धात्मलाभानां कर्मणां निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावे सद्भावः सत्ता 'सन्निपज्जत्तए ओघो' इति । अस्य पदस्यार्थं स्वयमेव ग्रन्थकारो गुणस्थानकेषु बन्धादिमार्गणायामग्रे वक्ष्यति । स्थानाऽशून्यार्थं सामान्यतो, न गुणस्थानकयोजनया बन्धादिस्थानसंख्या गाथाद्वयेनोच्यते—''**बन्धेऽट्ठ सत्त छाउग ७ छविहममोहाउ ६ इगविहं सायं १ । सत्तोदयेसु अट्ठ उ ८, सत्त अमोहा ७ चउ अघाई ॥१॥ अट्ठ उदीरइ ८ सत्त उ, अणाउ ७ छव्विहमवेयणियआऊ ६ । पण अवियणमोहाउग ५ अकसाई नामगोत्तदुगं २ ॥२॥**'' अयमर्थः—अष्टौ सर्वा अपि मूलप्रकृतयः ८, आयुर्वर्जाः सप्त ७, मोहायुर्वर्जाः षट् ६, एकमेव वेदनीयम्, इत्येवं चतुर्धा बन्धः । तथाऽष्टौ [5]तथैव ८, मोहवर्जाः सप्त ७, घातिकर्मवर्जाश्चतस्रः ४, इत्युदयस्त्रिधा । तथाऽष्टौ पूर्ववत् ८, आयुर्वर्जाः सप्त ७, आयुर्वेदनीयवर्जाः

---

१-२-३ "सत्ता" इत्यपि पाठः । ४ "उपशामना" इत्यपि पाठः । ५ "पूर्ववत्" इत्यपि पाठः ।

षट् ६, वेदनीयायुर्मोहवर्जाः पञ्च ५, नामगोत्रे एव द्वे २, इति पञ्चप्रकारोदीरणा ५। सत्ता पुनरुदयवत्। इति गाथार्थः ॥११॥

इत्युक्तानि जीवस्थानेषु गुणस्थानकादीन्यष्टौ पदानि, सांप्रतं मार्गणास्थानानि प्ररूपयन्नाह—

(मल०) सप्त वाऽष्टौ वा सप्ताष्टाः, सप्ताष्टाश्चाष्टौ चेत्यादिद्वन्द्वः। बन्धोदयादिपदानामपि द्वन्द्वः। ततः षष्ठीतत्पुरुषसमासः। समाननिर्देशत्वाच्चात्र यथासंख्यम्, एतदुक्तं भवति—संज्ञिपर्याप्तवर्जितेषु शेषेषु त्रयोदशसु जीवस्थानकेषु बन्धः सप्तानामष्टानां वा कर्मणां ज्ञातव्यः। तथाहि—यदाऽनुभूयमानभवायुषस्त्रिभागनवभागादिरूपे शेषे सति परभवायुर्बध्यते, तदाऽष्टानामपि कर्मणां बन्धः। शेषकालं त्वायुषो बन्धाभावात्सप्तानामेव उदयः पुनरेतेषु त्रयोदशसु जीवस्थानकेषु सर्वकालमष्टानामेव कर्मणाम्। यतः सूक्ष्मसंपरायगुणस्थानकं यावदष्टानामपि कर्मणामुदयोऽवाप्यते, एतेषु च जीवस्थानकेषु उत्कर्षतोऽपि यथासंभवमविरतसम्यग्दृष्टिगुणस्थानकसंभव इति। उदीरणा सप्तानामष्टानां वा। तत्र यदाऽनुभूयमानभवायुरुदयावलिकान्तः प्रविष्टं भवति तदा सप्तानाम्, अनुभूयमानभवायुषोऽनुदीरणात्, आवलिकावशेषस्योदीरणानर्हत्वात्। उदीरणा हि उदयावलिकाबहिर्वर्तिनीभ्यः स्थितिभ्यः सकाशात्कषायसहितेनासहितेन वा योगकरणेन दलिकमाकृष्योदयसमयप्राप्तेन दलिकेन सहानुभवनम्। तथा चोक्तम्—"**उदयावलियबाहिरिल्लठिईहिंतो कसायसहियासहिएणं जोगकरणेणं दलियमाकड्ढिय पत्तवलिएण समं अणुभवणमुदीरणा**" इति। ततः कथमावलिकागतस्योदीरणा भवति? इति, न च परभवायुषस्तदानीमुदीराणासंभवस्तस्योदयाभावात्, अनुदितस्य चोदीरणानर्हत्वात्। शेषकालं त्वष्टानामुदीरणेति। सत्ताऽप्येतेषु जीवस्थानकेष्वष्टानामपि कर्मणां द्रष्टव्या। तथाहि—अष्टानामपि कर्मणां सत्ता उपशान्तमोहगुणस्थानकं यावदनुवर्तते। एते च जीवा उत्कर्षतोऽपि यथासंभवमविरतसम्यग्दृष्टिगुणस्थानकवर्तिन एवेति। '**सन्निपज्जत्तए ओघो**' इति संज्ञिनि पर्याप्ते ओघः, सामान्यं द्रष्टव्यम्। तच्च यद्यप्यग्रे स्वयमेवाचार्यो गुणस्थानकेषु बन्धादिमार्गणायामभिधास्यति तथाऽपीह स्थानाऽशून्यार्थं संक्षेपतः किंचिदुच्यते—तत्र सूक्ष्मसंपरायगुणस्थानकादर्वाग्वर्तिनो यथासंभवं यदायुर्बध्नन्ति तदाऽष्टानामपि कर्मणां बन्धकाः शेषकालं तु सप्तानाम्। सूक्ष्मसंपरायगुणस्थानकवर्तिनस्तु मोहायुर्वर्जानां षण्णां कर्मणाम्। उपशान्तमोहादयः पुनः सयोगिकेवलिपर्यन्ताः सातवेदनीयस्यैवैकस्येति। तथा सूक्ष्मसंपरायगुणस्थानकं यावदष्टानामपि कर्मणामुदयः। उपशान्तमोहगुणस्थानके क्षीणमोहगुणस्थानके च मोहनीयवर्जानां सप्तकर्मप्रकृतीनाम्। सयोगिकेवलिगुणस्थानकेऽयोगिकेवलिगुणस्थानके

च घातिकर्मचतुष्टयरहितशेषकर्मचतुष्टस्येति। तथा मिथ्यादृष्टिगुणस्थानकात्प्रभृति यावत्प्रमत्तसंयतगुणस्थानकं तावद्यदि अनुभूयमानभवायुरावलिकावशेषं न भवति तदाऽष्टानामपि कर्मणामुदीरणा यदा त्वनुभूयमानभवायुरावलिकावशेषं तदा तथास्वभावत्वेन तस्यानुदीर्यमाणत्वात्सप्तानामुदीरणा। सम्यग्मिथ्यादृष्टिगुणस्थानके तु सदैवाष्टानामेव कर्मणामुदीरणा, आयुष आवलिकावशेषे सम्यग्मिथ्यादृष्टिगुणस्थानकस्यैवाभावात्। तथाऽप्रमत्तगुणस्थानकात्प्रभृति यावत्सूक्ष्मसंपरायगुणस्थानकस्यावलिकावशेषो न भवति तावद्वेदनीयायुर्वर्जानां षण्णां कर्मणामुदीरणा तदानीमतिविशुद्धत्वेन वेदनीयायुरुदीरणायोग्याध्यवसायाभावात्। आवलिकावशेषे तु मोहनीयस्याप्यावलिकाप्रविष्टत्वेनोदीरणाया असंभवाज्ज्ञान १ दर्शनावरण २ नाम ३ गोत्रा ४ऽन्तराया ५ णामेवोदीरणा। एतेषामेव चोपशान्तमोहगुणस्थानकेऽपि उदीरणा। क्षीणमोहगुणस्थानकेऽप्येतेषामेव यावदावलिकामात्रावशेषो न भवति। आवलिकावशेषे तु ज्ञानावरणदर्शनावरणान्तरायाणामप्यावलिका प्रविष्टत्वान्नोदीरणेति द्वयोरेव नामगोत्रयोरुदीरणा। [1]एवं सयोगिकेवलिगुणस्थानकेऽपि। अयोगिकेवलिगुणस्थानके तु वर्तमानो जीवः सर्वथाऽनुदीरक एव। ननु तदानीमप्येष सयोगिकेवलिगुणस्थानक इव भवोपग्राहिकर्मचतुष्टयोदये वर्तते ततः कथं तदापि तयोर्नामगोत्रयोरुदीरको न भवति? इति, नैष दोषः, उदये सत्यपि योगसव्यपेक्षत्वादुदीरणायास्तदानीं च तस्य योगासंभवादिति। तथा उपशान्तमोहगुणस्थानकं यावदष्टानामपि कर्मणां सत्ता। क्षीणमोहावस्थायां तु मोहरहितानां सप्तानां कर्मणाम्। सयोगिकेवल्याद्यवस्थायां चाघातिकर्मणां चतुर्णाम्। इति ॥११॥

तदेवं जीवस्थानकेषु गुणस्थानकाद्यभिधाय साम्प्रतं मार्गणास्थानेषु जीवस्थानकादि विवक्षुस्तान्येव तावन्निर्दिशन्नाह—

**एत्तो गइ १ इंदिय २ काय ३ जोय ४ वेए ५ कसाय णाणेसु।**
**संजम ८ दंसण ९ लेसा १० भव ११ सम्मे १२ सन्नि १२ आहारे १४॥१२॥**

(हारि०) व्याख्या–'**इतः**' जीवस्थानविचारानन्तरं मार्गणास्थानान्युच्यन्त इति शेषः। तान्येवाह–**गतीन्द्रियकाययोगवेदे**' इति समाहारद्वन्द्वः। '**कषायज्ञानेषु**' अत्रेतरेतरद्वन्द्वः '**सयमदर्शनलेश्याभव्यसम्यक्त्वे**' इत्यत्रापि समाहारद्वन्द्वः। '**सज्ञा(ज्ञ्या)ह्ारे**' इत्यत्रापि स एव। इति गाथार्थः ॥१२॥

इति मूलभेदापेक्षया मार्गणास्थानानि चतुर्दश १४, उत्तरभेदापेक्षया तु द्विषष्टिः, तत्प्रतिपादनाय गाथापञ्चकमाह—

---

१ एवमिति कोऽर्थः? सयोगिकेवलिगुणस्थानकेऽपि द्वयोरेव नामगोत्रयोरुदीरणा।

(मल०) 'इतः' जीवस्थानेषु गुणस्थानकाद्यभिधानादनन्तरं मार्गणास्थानकेषु जीवस्थानाद्युच्यत इति शेषः । तानि च मार्गणास्थानान्यमूनि–'गइ' इत्यादि । तत्र गम्यते तथाविधकर्मसचिवैर्जीवैः प्राप्यते गतिर्नारकत्वादिपर्यायपरिणतिः, सा च चतुर्धा-नरकगतिः १ तिर्यग्गतिः २ मनुष्यगतिः ३ देवगतिश्च ४ 'इंदिय' इति इन्दनादिन्द्र आत्मा ज्ञानैश्वर्ययोगात्तस्येदमिन्द्रियम्, तच्च स्पर्शन १ रसन २ घ्राण ३ चक्षुः ४ श्रोत्र ५ भेदात्पञ्चधा । इन्द्रियग्रहणेन च तदुपलक्षिता एकेन्द्रियद्वीन्द्रियादयो गृह्यन्ते तेष्वेवाग्रे जीवस्थानकादीनां चिन्तयिष्यमाणत्वात् । 'काय' इति चीयत इति कायः, 'चित्युपसमाधानावासदेहे कश्चादेः' इति घञ्प्रत्ययः, चकारस्य च ककारः, स च षोढा–पृथिवी १ अप् २ तेजो ३ वायु ४ वनस्पति ५ त्रस ६ काययोगात् । 'जोग' इति योगशब्दः प्राग्निरूपितशब्दार्थः, स च मनो १ वाक् २ काय ३ सहकारिभेदात्संक्षेपतस्त्रिधा । 'वेय' इति वेद्यत इति वेदः, स च त्रिधा–स्त्रीवेदः १ पुरुषवेदः २ नपुंसकवेदश्च ३ । तत्र स्त्रियाः पुंस्यभिलाषः स्त्रीवेदः १ । पुंसः स्त्रियामभिलाषः पुंवेदः २ । नपुंसकस्योभयं प्रत्यभिलाषो नपुंसकवेदः ३ । 'कसाय' इति कष्यन्ते हिंस्यन्ते परस्परमस्मिन् प्राणिन इति कषः–संसारः तमयन्ते गच्छन्त्येभिर्जन्तव इति कषायाः क्रोध १ मान २ माया ३ लोभाः ४ 'णाण' इति ज्ञायतेऽनेनेति ज्ञानम्–सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मकोऽवबोधः । तच्च पञ्चधा, तद्यथा–मतिज्ञानं १ श्रुतज्ञानं १ अवधिज्ञानं ३ मनःपर्यायज्ञानं ४ केवलज्ञानं ५ च । ज्ञानग्रहणेन चाज्ञानमपि तत्प्रतिपक्षभूतमुपलक्ष्यते । तच्च त्रिविधम्–मत्यज्ञानं १ श्रुताज्ञानं २ विभङ्गज्ञानम् ३ च । वक्ष्यति च ज्ञानभेदाभिधानावसरे–"**मइसुयओहीणकेवलाणि मइसुयअनाणविब्भंगा**" इति । 'संजम' इति संयमनं संयमः सम्यगुपरमः, '**यमः संन्युपवेः**" इति भावेऽच्प्रत्ययः, चारित्रमित्यर्थः । तच्च पञ्चधा सामायिकं १ छेदोपस्थापनं २ परिहारविशुद्धिकं ३ सूक्ष्मसंपरायं ४ यथाख्यातं ५ च । संयमग्रहणेन च तत्प्रतिपक्षभूतो देशसंयमोऽसंयमश्च सूच्यते । वक्ष्यति च "**सामइयछेयपरिहारसुहुमअहक्खायदेसजयअजया**" इति । 'दंसण' इति दृष्टिर्दर्शनं सामान्यविशेषात्मके वस्तुनि सामान्यावबोधः। तच्चतुर्विधम्, तद्यथा–चक्षुर्दर्शनं १ अचक्षुर्दर्शनं २ अवधिदर्शनं ३ केवलदर्शनं च ४ । 'लेसा' इति लेश्या प्राङ्निरूपितशब्दार्था, सा षोढा–कृष्णलेश्या १ नीललेश्या २ कापोतलेश्या ३ तेजोलेश्या ४ पद्मलेश्या ५ शुक्ललेश्या ६ (च)। 'भव' इति भव्यः–तथारूपानादिपारिणामिकभावात्सिद्धिगमनयोग्यः । भव्यग्रहणेन च तत्प्रतिपक्षभूतोऽभव्योऽपि गृह्यते । यद्वक्ष्यति भव्यद्वारभेदव्याख्यायाम्–'**भव्वाभव्व**' इति । 'सम्मे' इति सम्यक्त्वम् । सम्यक्शब्दः प्रशंसार्थोऽविरुद्धार्थो वा । सम्यग् जीवस्तद्भावः सम्यक्त्वम्, प्रशस्तो मोक्षाविरोधी वा आत्मधर्म इति यावत् । तच्च त्रिधा-क्षयोपशमिकं १ औपशमिकं २ क्षायिकं ३ च । उक्तं च "**सम्मत्तंपि य**

**तिविहं खओवसमियं तहोवसमियं य । खइयं च"** इति । सम्यक्त्वग्रहणेन च तत्प्रतिपक्षभूतं मिश्रं १ सास्वादनं २ मिथ्यात्वं ३ च परिगृह्यते । तथा चैतद् द्वारं व्याख्यानयन् वक्ष्यति- **"खओवसमखइयउवसमियमोससासाणं मिच्छो य"** इति । **'सन्नि'** इति संज्ञी प्राङ्निर्दिष्टस्वरूपः, तत्प्रतिपक्षभूतः सर्वोऽप्येकेन्द्रियादिरसंज्ञी, सोऽपि संज्ञिग्रहणेन सूचितो द्रष्टव्यः, । **'आहार'** इति आहारयति ओजोलोमप्रक्षेपाहाराणामन्यतममाहाराणामित्याहारकः, तत्प्रतिपक्षभूतोऽनाहारकः ॥१२॥

तदेवमुक्तानि मार्गणास्थानानि, साम्प्रतमेतेषामेव विनेयजनानुग्रहायोक्तस्वरूपानेव भेदान् दर्शयन्नाह—

**सुरनरतिरिनरयगई ४, [1]इगबितिचउरिंदिया य [2]पंचिंदी ५ ।**
**पुढवीआऊतेऊवाऊवणसइतसा काया ६ ॥ १३ ॥**

(हारि०) व्याख्या-सुराश्च भवनपत्याद्याः, नराश्च कर्मभूमिजादयः, तिर्यञ्चश्च जलचरादयः, नारकाश्च रत्नप्रभाद्याः, अत्र समासस्तेषां गतयः सुरनरतिर्यग्नारकगतयश्चतस्रः ४ । तथैकद्वित्रिचतुरिन्द्रियाः पञ्चेन्द्रियश्चेति पञ्च । पृथिव्यप्तेजोवायुवनस्पतित्रसाः कायाः षट् । इति प्राग्वत्सर्वपदेषु समासः कार्यः । इति गाथार्थः ॥१३॥

**मणव[3]इकायाजोगा ३, इत्थी पुरिसो [4]नपुंसगो वेया ४ ।**
**कोहो माणो माया, लोभो चउरो कसायत्ति ४ ॥१४॥**

(हारि०) व्याख्या-मनोवाक्काययोगत्रयः । स्त्री पुरुषो नपुंसकमिति वेदास्त्रयः । क्रोधो मानो माया लोभ इति चत्वारः कषायाः । इतिशब्दो वाक्यसमाप्तौ । इति गाथार्थः ॥१४॥

(मल०) **'सुरगाहा' 'मणगाहा'** एते निगदसिद्धे ॥१३॥१४॥

**मइसुयओहीमणके-वलाणि मइसुयअनाणविब्भंगा ८ ।**
**सामइयछेयपरिहा-रसुहुमअहखायदेसजयअजया ७ ॥१५॥**

(हारि०) व्याख्या-मतिश्रुतावधिमनःपर्यायकेवलानीति पञ्च ज्ञानानि । मतिश्रुताज्ञानविभङ्गनामानि त्रीण्यज्ञाना[5]न्युपलक्षणत्वाद् गृह्यन्ते । एवमन्यत्रापि यत्र विपक्षभूतं पदं दृश्यते तत्रायमेव हेतुर्वक्तव्य इति । अत एवोत्तरभेदापेक्षया द्विषष्टिरित्युक्तं प्रागिति । सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातदेशसंयतासंयताख्यानि सप्त पदानि । इति गाथार्थः ॥१५॥

---

१ "इगि" इति जे० । २ "पंचेंदी" इति जे० । ३ "वय" इत्यपि पाठः । ४ "नपुंसगो" इत्यपि पाठः । ५ "न्यप्यु०" इति जे० ।

(मल०) मतिश्रुतावधिमनःपर्यवकेवललक्षणानि पञ्च ज्ञानानि । मतिश्रुताज्ञानविभङ्गलक्षणानि च त्रीणि अज्ञानानि । तत्र **"मनज्ञाने"** मननं मतिः । यद्वा मन्यते इन्द्रियमनोद्वारेण नियतं वस्तु परिच्छिद्यतेऽनयेति मतिः, योग्यदेशावस्थितवस्तुविषय इन्द्रियमनोनिमित्तकोऽवगमविशेषः । तथा श्रवणं श्रुतम्, अभिलापप्लावितार्थग्रहणप्रत्यय उपलब्धिविशेषः । एवमाकारं वस्तु जलधारणाद्यर्थक्रियासमर्थं घटशब्दाभिलाप्यम्, इत्यादिरूपतया प्रधानीकृतत्रिकालसाधारणसमानपरिणामः शब्दार्थपर्यालोचनानुसारी इन्द्रियमनोनिमित्तो ज्ञानविशेष इति यावत् । तदुक्तम्—**"जं पुण तिकालविसयं, आगमगथाणुसारि विन्नाणं । इंदियमणोनिमित्तं, तं सुयनाणं जिणा बिंति ॥१॥"** तथाऽवशब्दोऽधःशब्दार्थः । ततश्च अव=अधोऽधो विस्तृतं वस्तु धीयते=परिच्छिद्यतेऽनेनेत्यवधिः । यद्वाऽवधि=र्मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा तदुपलक्षितं ज्ञानमप्यवधिः । तथा परि=सर्वतो भावे अवनं अवः । **"तुदादिभ्योऽनक्कौ"** इत्यधिकारे, **"अक्तितो वा"** इत्यनेनाकारः प्रत्ययः । यथा भवनं भव इत्यादिषु अवनं गमनं वेदनमिति पर्यायाः । परि=अवः पर्यवः, मनसि मनसो वा पर्यवः मनःपर्यवः, सर्वतस्तत्परिच्छेद इत्यर्थः । इदं च मनःपर्यवज्ञानमर्द्धतृतीयद्वीपसमुद्रान्तर्वर्तिसंज्ञिमनोगतद्रव्यालम्बनं मनःपर्यायज्ञानमित्येवमप्येतदभिधीयते । तत्र मनसः पर्याया बाह्यवस्त्वालोचनप्रकारा धर्मा मनःपर्यायाः तेषु तेषां वा संबन्धि ज्ञानं मनःपर्यायज्ञानमिति पदैकदेशे पदसमुदायोपचाराद्व मन इत्युक्तेऽपि मनःपर्यव इति मनःपर्यायज्ञानमिति व्याख्यातम् । तथा केवलमेकं, मत्यादिज्ञानरहितत्वात् । **"उप्पण्णंमि अणंते, नट्ठंमि उ छाउमत्थिए नाणे ।"** इतिवचनात् । शुद्धं वा केवलं, तदावरणमलकलङ्कापगमात् । सकलं वा केवलं, तत्प्रथमतयैवाशेषतदावरणविगमतः संपूर्णोत्पत्तेः । असाधारणं वा केवलं, अनन्यसदृशत्वात् । अनन्तं वा केवलं ज्ञेयानन्तत्वात् । यथावस्थिताशेषभूतभवद्भाविभावस्वभावावभासि ज्ञानमितिभावना । तथा मतिश्रुतावधिज्ञानान्येव मिथ्यात्वकलुषिततया यथाक्रमं मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानव्यपदेशभाञ्जि भवन्ति । तदुक्तमाद्यत्रयं ज्ञानमज्ञानमपि भवति मिथ्यात्वसंयुक्तमिति । **'विभंगे'** इति विपरीतो भङ्गः परिच्छित्तिप्रकारो यस्मिंस्तद्विभङ्गम्, विपर्यस्तमवधिज्ञानम् **'सामइय'** इत्यादि । समानां ज्ञानदर्शनचारित्राणामायः समायः, समाय एव सामायिकम् । विनयादेराकृतिगणतया **"विनयादिभ्यः"** इति स्वार्थे इकण् । तच्च सर्वसावद्यविरतिरूपं चारित्रम् । यद्यपि च सर्वमपि चारित्रमविशेषतः सामायिकं तथाऽपि च्छेदादिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते । प्रथमं पुनरविशेषणात्सामान्यशब्द एवावतिष्ठते । तच्च द्विधा—इत्वरं यावत्कथिकं च । तत्रेत्वरं भरतैरावतेषु प्रथमपश्चिमतीर्थकरतीर्थेष्वनारोपितव्रतस्य शैक्षकस्य विज्ञेयम् । यावत्कथिकमाभवव्रति । तच्च भरतैरावतभाविमध्यमद्वाविंशतितीर्थकरविदेहतीर्थकरतीर्थान्तर्गतसाधूनामवसेयम्,

तेषामुत्थापनाया अभावात् । 'छेद' इति छेदोपस्थापनम् । तत्र छेदः पूर्वपर्यायस्य, उपस्थापना च महाव्रतेषु यस्मिन् चारित्रे तच्छेदोपस्थापनम् । तच्च द्विधा–सातिचारं निरतिचारं च । तत्र निरतिचारं यदित्वरसामायिकवतः शैक्षकस्यारोप्यते तीर्थान्तरसंक्रान्तौ वा, यथा पार्श्वनाथतीर्थाद्वर्धमानस्वामितीर्थे संक्रामतः पञ्चयामधर्मप्रतिपत्तौ । सातिचारं यन्मूलगुणघातिनः पुनर्व्रतोच्चारणम् । 'परिहार' इति परिहारविशुद्धिकम् । परिहरणं परिहारस्तपोविशेषः तेन विशुद्धिर्यस्मिन् चारित्रे तत्परिहारविशुद्धिकम् । तच्च द्विधा–निर्विशमानकं निर्विष्टकायिकं च । तत्र निर्विशमानका विवक्षितचारित्रसेवकाः । निर्विष्टकायिका आसेवितविवक्षितचारित्रकाः । तदव्यतिरेकाच्चारित्रमप्येवमुच्यते । इह नवको गणः, तत्रैको वाचनाचार्यः चत्वारो निर्विशमानकाः, चत्वारश्चानुचारिणः । निर्विशमानकानां चायं परिहारः–"परिहारियाण उ तवो, जहन्न मज्झो तहेव उक्कोसो । सीउण्हवासकाले, भणिओ । धीरेहि पत्तेयं ॥१॥ तत्थ जहन्नो गिम्हे, चउत्थ १ छट्ठो २ उ होइ मज्झिमओ । अट्ठम ३ मिह उक्कोसो, एत्तो सिसिरे पवक्खामि ॥२॥ सिसिरे उ जहन्नाई, छट्ठाई दसम ४ चरिमगो होइ । वासासु अट्ठमाई, बारस ५ पज्जंतगो नेओ ॥३॥ पारणगे आयामं, पंचसु गहो दोसु (स) भिग्गहो भिक्खे । कप्पट्ठिया वि पइदिण, करेंति एमेव आयामं ॥४॥ एवं छम्मासतवं, चरिउं परिहारिगा अणुचरंति । अणुचरिगे परिहारिय–पइट्ठिए जाव छम्मासा ॥५॥ कप्पट्ठिओ वि एवं, छम्मासतवं करेइ सेसाओ । अणुपरिहारिगभावं, वयंति कप्पट्ठिगत्तं च ॥६॥ एवं सो अट्ठारसमासपमाणो उ वण्णिओ कप्पो । संखेवओ विसेसो, सुत्तादेसाओ (विसेससुत्ताउ) नायव्वो ॥७॥ कप्पस्स समत्ते, तयं जिणकप्पं वा उवेंति गच्छं वा । पडिवज्जमाणगा पुण, जिणस्सगासे पवज्जंति ॥८॥ तित्थयरसमीवासे–वगस्स पासे व नो उ (न उण) अन्नस्स । एएसिं जं चरणं, परिहारविसुद्धिगं तं तु ॥९॥ तथा 'सुहुम' इति सूक्ष्मसंपरायम् । सूक्ष्मो लोभांशावशेषत्वात् संपरायः कषायोदयो यत्र तत्सूक्ष्मसंपरायम् । तच्च द्विधा-विशुद्धयमानकं संक्लिश्यमानकं च । तत्र विशुद्धयमानकं क्षपकश्रेणिमुपशमश्रेणिं वा समारोहतः । संक्लिश्यमानकं तूपशमश्रेणितः प्रच्यवमानस्य । 'अहखाय' इति यथाख्यातं यथा सर्वस्मिन् जीवलोके ख्यातं प्रसिद्धं अकषायं भवति चारित्रमिति तथैव यत्तद्यथाख्यातम् । 'देस' इति देशयतो देशविरतः । 'अजय' इति अयतोऽविरतो विरतिहीन इति ॥१५॥

अचक्खुचक्खुओही केवलदंसण ४ मओ य छल्लेसा ६ ।
किण्हा नीला काऊ, तेऊ पम्हा य सुक्का य ॥१६॥

(हारि०) व्याख्या–अचक्षुश्चक्षुरवधिकेवलदर्शनानि चत्वारि । अतश्च षड्लेश्या उच्यन्ते ति शेषः । कास्ताः ? इत्याह–कृष्णा नीला कापोता तैजसी पद्मा शुक्ला चेति षड् लेश्याः । इति गाथार्थः ॥१६॥

(मल०) दर्शनशब्दः प्रत्येकमभिसंबध्यते । अचक्षुर्दर्शनं चक्षुर्दर्शनमवधिदर्शनं केवलदर्शनं च । तत्र सामान्यविशेषात्मके अचक्षुषा चक्षुर्वर्जशेषेन्द्रियमनोभिर्दर्शनं स्वस्वविषयसामान्यग्रहणमचक्षुर्दर्शनम् । चक्षुषा दर्शनं रूपसामान्यग्रहणं चक्षुर्दर्शनम् । अवधिरेव दर्शनं रूपिद्रव्यसामान्यग्रहणमवधिदर्शनम् । केवलमेव दर्शनं सकलजगद्भाविवस्तुसामान्यपरिच्छेदरूपं केवलदर्शनम् । **'भओ य छक्केसा'** इत्यादि निगदसिद्धम् ॥१६॥

**भव्व १ अभव्वा २ [१]खउवसम १ खइय २ उवसमिय ३ मीस ४ [१]सासाणं ५ ।**
**मिच्छो य ६ [२]सन्न १ सन्नी २, आहार १ णहार २ इय भेया ॥१७॥**

(हारि०) व्याख्या–भव्याभव्यौ द्वौ । क्षायोपशमिकक्षायिकौपशमिकमिश्रसासादनानि **'मिच्छो य'** इति मिथ्यात्वं चेति षट् । तथा संज्ञ्यसंज्ञिनौ द्वौ । तथाऽऽहारकानाहारकौ द्वौ । **'इति'** अमुना प्रकारेण **'भेदाः'** द्विषष्टिप्रमाणा उत्तरभेदा मूलभेदानां भवन्तीति शेषः । एतेषां व्याख्यानमावश्यकादिग्रन्थेभ्योऽवसेयम् , गमनिकामात्रत्वात्प्रस्तुतप्रयासस्य । इति गाथार्थः ॥१७॥ साम्प्रतमेतेष्वेव जीवस्थानान्याह—

(मल०) भव्याभव्यौ प्रागुक्तस्वरूपौ **'खउवसम'** इत्यादि । क्षायोपशमिकं क्षायिकं औपशमिकं च । तत्र उदीर्णस्य मिथ्यात्वस्य क्षयेणानुदीर्णस्य चोपशमेन सम्यक्त्वरूपतापत्तिलक्षणेन विष्कम्भितोदयत्वरूपेण च यन्निर्वृत्तं तत्क्षायोपशमिकम् । तथा त्रिविधस्यापि दर्शनमोहनीयस्य क्षयेणात्यन्तोच्छेदेन निर्वृत्तं क्षायिकम् । तथोदीर्णस्य मिथ्यात्वस्य क्षये सत्यनुदीर्णस्य य उपशमो विपाकप्रदेशवेदनरूपस्य द्विविधस्याप्युदयस्य विष्कम्भणं तेन निर्वृत्तमौपशमिकम् । **'मीससासाणं मिच्छो य'** इति मिश्रं सासादनं मिथ्यात्वं च, एतानि गुणस्थानकव्याख्यायां यथास्थानं वक्ष्यन्ते । शेषं सुगमम् ॥१७॥

तदेवमुक्ता अवान्तरगत्यादिमार्गणास्थानभेदाः, साम्प्रतमेतेष्वेव जीवस्थानानि चिन्तयन्नाह—

**सुरनिरए सन्निदुगं, नरेसु तइओ असन्निअपजत्तो ।**
**तिरियगईए चउदस, एगिंदिसु आइमा चउरो ॥१८॥**

(हारि०) व्याख्या–सुरनारकयोः **'सन्निदुगं'** इति पर्याप्तापर्याप्तकलक्षणं संज्ञिपञ्चेन्द्रियद्विकम् । तथा **'नरेसु तइओ'** इति नरेषु पुरुषेषु पूर्वोक्तं द्वयं तृतीयोऽसंज्ञ्यपर्याप्त इति । आह अन्यत्र बन्धस्वामित्वशतकादिग्रन्थेषु नरेषु जीवस्थानकद्वयमेवोक्तं तत्कथमत्र तृतीयमप्य-

१ "सासाणा" इत्यपि पाठस्तदनुसारेण श्रीहरिभद्रसूरिणा व्याख्यातम् । २ "सन्नि" इत्यपि पाठ ॥

पर्याप्तासंज्ञिपञ्चेन्द्रियलक्षणं जीवस्थानकमुक्तम् ?, सत्यम्, तेषु तस्य तिर्यग्ग्रहणेन गृहीतत्वादिति । तथा तिर्यग्गतौ चतुर्दशापि जीवस्थानानि भवन्तीति शेषः । इति गतिषु मार्गितानि जीवस्थानानि, साम्प्रतमिन्द्रियेषु तान्येवाह—एकेन्द्रियेषु 'आइमा' इति आदिमानि प्रथमानि पर्याप्तापर्याप्तसूक्ष्मबादरलक्षणानि चत्वारि जीवस्थानानि भवन्ति । इति गाथार्थः ॥१८॥

तथा—

(मल०) सुरगतौ नरकगतौ च 'संज्ञिद्विक' पर्याप्तापर्याप्तलक्षणम् । अपर्याप्तकश्चेह करणापर्याप्तको गृह्यते, न लब्ध्यपर्याप्तकः, तस्य देवनारकगत्योरुत्पादाभावात् । 'नरेसु' इत्यादि । 'नरेसु' मनुष्येषु पूर्वोक्तं संज्ञिद्विकं तावल्लभ्यत एव, किन्तु तृतीयोऽपि जीवजातिभेदोऽसंज्ञ्यपर्याप्तको लभ्यते । कथम् ? इति चेदुच्यते, इह द्वये मनुष्या गर्भव्युत्क्रान्ताः संमूर्छिमाश्च । तत्र ये गर्भव्युत्क्रान्तास्तेषु यथोक्तं संज्ञिद्विकं लभ्यते, ये तु वान्तपित्तादिषु संमूर्छन्ति तेऽन्तर्मुहूर्तायुषोऽसंज्ञिनो लब्ध्यपर्याप्तकाश्चेति तेषु तृतीयः प्रकारो लभ्यत इति । 'तिरियगईए चउदस' इति तिर्यग्गतौ चतुर्दशापि जीवस्थानानि भवन्ति । यतस्तस्यामेकेन्द्रिया विकलेन्द्रियाः संज्ञ्यसंज्ञिपञ्चेन्द्रियाश्च प्राप्यन्ते । उक्तानि गतिषु जीवस्थानानि, साम्प्रतमिन्द्रियेषु तान्येवाह—'एगिंदिएसु आइमा चउरो' एकेन्द्रियेष्वादिमानि पर्याप्तापर्याप्तसूक्ष्मबादरलक्षणानि चत्वारि जीवस्थानानि भवन्ति, शेषस्यासंभवात् ॥१८॥

बितिचउरिंदिसु दो दो, अंतिम चउरो पणिंदिसु [1]भवंति ।
थावरपणगे पढमा, चउरो चरमा दस तसेसु ॥१९॥

(हारि०) व्याख्या—द्वित्रिचतुरिन्द्रियेषु प्रत्येकं 'दुवे दुवे' पर्याप्तापर्याप्तकलक्षणे जीवस्थानके । तथा 'अन्तिमानि' पर्यन्तवर्तीनि 'चत्वारि' पर्याप्तापर्याप्तकासंज्ञिसंज्ञिरूपाणि जीवस्थानानि भवन्तीति संबन्धः । केषु ? इत्याह—पञ्चेन्द्रियेषु । इत्येवमिन्द्रियेषु मार्गितानि जीवस्थानानि, सम्प्रति कायेषु तान्येवाह— स्थावरपञ्चके' पृथिव्यप्तेजोवायुवनस्पतिलक्षणे प्रथमानि' पूर्वाण्येकेन्द्रियरूपतानि पूर्वोक्तानि चत्वारि जीवस्थानानि भवन्ति । तथा 'चरमाणि' अन्त्यवर्तीनि दश जीवस्थानानि पूर्वोक्तैकेन्द्रियसत्कवर्जितानि, केषु ? 'त्रसेसु' द्वीन्द्रियादिषु भवन्ति । इति गाथार्थः ॥१९॥

इति कायेषु जीवस्थानान्युक्तानि, साम्प्रतं योगेषु तान्येवाह—

(मल०) द्वीन्द्रियेषु त्रीन्द्रियेषु चतुरिन्द्रियेषु च प्रत्येकं 'द्वे द्वे' पर्याप्तापर्याप्तलक्षणे जीवस्थानके भवतः । तथा पञ्चेन्द्रियेषु 'अन्तिमानि' पर्यन्तवर्तीनि पर्याप्तापर्याप्तसंज्ञ्यसंज्ञिलक्षणानि चत्वारि जीवस्थानानि न शेषाणि, असंभवात् । कायेष्वेतानि चिन्तयन्नाह—'थावर' इत्यादि ।

---

१ हवन्ति ।

**'स्थावरपञ्चके'** पृथिव्यप्तेजोवायुवनस्पतिलक्षणे प्रत्येकं **'प्रथमानि'** पर्याप्तापर्याप्तसूक्ष्मबादरै-केन्द्रियलक्षणानि चत्वारि जीवस्थानानि भवन्ति, स्थावरपञ्चकस्यैकेन्द्रियत्वेन तत्संबन्धिनामेव जीवस्थानानां तत्र संभवात् । तथा **'चरमाणि'** एकेन्द्रियसंबन्धीनि चत्वारि जीवस्थानानि वर्जयित्वा शेषाणि द्वीन्द्रियादिसंबन्धीनि दश जीवस्थानानि त्रसेषु लभ्यन्ते, द्वीन्द्रियादीनामेव त्रसत्वात् ॥१९॥

इदानीं योगादिष्वेतानि जीवस्थानानि यथालाघवमुपदिदर्शयिषुराह—

**विगलतिअसन्निसन्नी, पज्जत्ता पंच होंति [१]वइजोगे ।**
**मणजोगे [२]सन्निक्को, पुमित्थिवेए चरम चउरो ॥२०॥**

(हारि०) व्याख्या—इह प्राकृतशैलीवशात्पुंल्लिङ्गनिर्देशः । ततश्च विकलत्रिकासंज्ञिसंज्ञिलक्षणानि पर्याप्तकजीवस्थानानि पञ्च भवन्ति, क ? इत्याह—वाग्योगे । तथा मनोयोगे पर्याप्तसंज्ञ्येकं जीवस्थानकम् । काययोगे पुनरग्रे वक्ष्यतीति । साम्प्रतं वेदेषु तान्याह—वेदशब्दस्य प्रत्येकमभिसंबन्धात् पुरुषवेदस्त्रीवेदयोः **'चरमाणि'** पर्यन्तवर्तीनि जीवस्थानानि पञ्चेन्द्रियसत्कानि चत्वारि भवन्तीति प्राक्तनेन योगः । इह अपर्याप्तश्च करणेन गृह्यते, न लब्ध्या, लब्ध्यपर्याप्तकस्य सर्वस्यैव नपुंसकत्वात् । अन्यच्च यदत्रासंज्ञिनि स्त्रीपुंसाभिधानं तत्कार्मग्रन्थिकमतेनैव द्रष्टव्यम् । सैद्धान्तिकानां त्वसंज्ञी पर्याप्तोऽपर्याप्तो वा नपुंसक एव । तथा च प्रज्ञप्तिः—"**असन्निपुच्छा गोयमा ! नपुंसगवेयगा**" मनुष्यासंज्ञिनस्तु लब्ध्यपर्याप्ता एव भवन्तीत्यतस्ते निर्विवादं नपुंसका एव । इति गाथार्थः ॥२०॥

उक्तानि वेदेषु जीवस्थानानि । अथ पूर्वायोजितकाययोगनपुंसकवेदयोरग्रेतनपदपञ्चदशके च सर्वजीवस्थानानि । लाघवार्थं संगृह्य तत्प्रतिपादयन्नाह—

(मल०) विकलत्रिकं द्वीन्द्रिय १ त्रीन्द्रिय २ चतुरिन्द्रिय ३ लक्षणं, असंज्ञी ४ संज्ञी ५ च पर्याप्तः, इत्येतानि पञ्च जीवस्थानानि वाग्योगे भवन्ति न शेषाणि, तेषु वाग्योगासंभवात् । **'मणजोगे सन्निक्को'** इति पर्याप्त इत्यनुवर्तते, मनोयोगे पर्याप्तः संज्ञ्येको लभ्यते नान्यः, तत्र मनःसद्भावायोगात् । तथा पुंवेदे स्त्रीवेदे च चरमाणि पर्याप्तापर्याप्तसंज्ञ्यसंज्ञिलक्षणानि चत्वारि जीवस्थानानि भवन्ति । यद्यपि च सिद्धान्तेऽसंज्ञी पर्याप्तोऽपर्याप्तो वा सर्वथा नपुंसक एवोक्तः । तथा चोक्तं प्रज्ञप्तौ—"**तेणं भंते ! असन्निपंचिंदियतिरिक्खजोणिया किं इत्थिवेयगा पुरिसवेयगा नपुंसगवेयगा ? गोयमा ! नो इत्थिवेयगा नो-पुरिसवेयगा नपुंसकवेयगा**" इति । तथाऽपीह स्त्रीपुंसलिङ्गाकारमात्रमङ्गीकृत्य स्त्रीवेदे पुंवेदे वाऽसंज्ञीनिर्दिष्ट इत्यदोषः । तदुक्तं पञ्चसंग्रहमूलटीकायाम्—"**यद्यपि चासंज्ञिपर्याप्तापर्याप्तौ नपुंसकौ तथा-**

१ "वय०" इत्यपि पाठः । २ "सन्नेक्को" इति जे० ।

ऽपि स्त्रीपुंसलिङ्गाकारमात्रमङ्गीकृत्य स्त्रीपुंसावुक्ताविति ।" अपर्याप्तकश्चेह करणापर्याप्तको गृह्यते न लब्ध्यपर्याप्तकः, लब्ध्यपर्याप्तकस्य सर्वस्यैव नपुंसकत्वात् ॥२०॥

काओगिनपुंसकसायमइसुयअनाणअविरयअचक्खू ।
आइतिलेसा भव्वियरमिच्छ आहारगे सव्वे ॥२१॥

(हारि०) व्याख्या—काययोगे १ नपुंसकवेदे २ कषायचतुष्के ६ अज्ञानशब्दस्य प्रत्येकमभिसंबन्धात् मत्यज्ञाने ७ श्रुताज्ञाने ८ अविरते ९ अचक्षुर्दर्शने १० [1]"आइतिलेसा' इति कृष्णलेश्यायां ११ नीललेश्यायां १२ कापोतलेश्यायां १३ 'भव्वियर' इति भव्येषु १४ अभव्येषु १५ मिथ्यादृष्टिषु १६ आहारके १७ चेति सप्तदशस्थानेषु सर्वाणि जीवस्थानानि भवन्तीति शेषः । इति गाथार्थः ॥२१॥

इत एकादशस्थानेषु लाघवार्थमेव संगृह्य पर्याप्तापर्याप्तसंज्ञिपञ्चेन्द्रियरूपं जीवस्थानकद्वयं निरूपयन्नाह—

(मल०) काययोगे नपुंसकवेदे 'कषाये' क्रोधादिचतुष्टयरूपे अज्ञानशब्दस्य प्रत्येकमभिसंबन्धान्मत्यज्ञाने श्रुताज्ञाने 'अविरत' इति विरतिहीने अचक्षुर्दर्शने 'आदित्रिलेश्यासु' कृष्णनीलकापोतरूपासु 'भव्येतरेषु' इति भव्येष्वभव्येषु च तथा मिथ्यात्वे आहारके च सर्वाण्यपि जीवस्थाना न भवन्ति, जीवस्थानव्यापकत्वात्काययोगादीनाम् ॥२१॥

मइसुयओहिदुगविभंगपम्हसुक्कासु तिसु [2]य सम्मेसु ।
सन्निम्मि [3]य दो ठाणा, सन्निअपज्जत्तपज्जत्ता ॥२२॥

(हारि०) व्याख्या—मतिज्ञाने १ श्रुतज्ञाने २ 'ओहिदुग' इति अवधिज्ञाने ३ अवधिदर्शने ४ च विभङ्गज्ञाने ५ पद्मलेश्यायां ६ शुक्ललेश्यायां ७ चेति, तथा 'तिसु य सम्मेसु' इति त्रिषु च सम्यक्त्वेषु, तद्यथा—क्षायिके ८ क्षायोपशमिके ९ औपशमिके १० च, संज्ञिनि ११ च, 'दो ठाणा' इति द्वे जीवस्थानके पर्याप्तापर्याप्तकसंज्ञिपञ्चेन्द्रियलक्षणे इत्येकादशस्थानेषु जीवस्थानकद्वयमित्याह । इह भावना चैवम्—मतिश्रुतावधिद्विकविभङ्गपद्मशुक्ललेश्यावतां देवादिभ्यश्च्युतानां संज्ञिपञ्चेन्द्रियेषूत्पन्नानां प्रथममपर्याप्तकसंज्ञिलक्षणं जीवस्थानकं प्राप्यते । पर्याप्तं च जीवस्थानकमेतेषु सुज्ञानमेव । तथा 'तिसु य सम्मेसु' इति त्रिषु च सम्यक्त्वेषु क्षायिकक्षायोपशमिकौपशमिकलक्षणेषु पर्याप्तापर्याप्तकसंज्ञिपञ्चेन्द्रियलक्षणं जीवस्थानकद्वयं भवतीत्युक्तम् । तत्र क्षायिकसम्यग्दृष्टिः संज्ञिपञ्चेन्द्रियः पर्याप्तकः करणापर्याप्तकश्च सर्वगतिषु तावल्लभ्यते । कथमत्रापर्याप्तको लभ्यते ? इति चेत्, उच्यते, इहकश्चित्पूर्वं बद्धायुष्कः क्षायिकसम्य-

---

१ "आइतिलेस० त्ति" इति जे० । २ "वि" इत्यपि पाठः । ३ "उ" इत्यपि पाठः ।

क्त्वमुत्पाद्य गतिचतुष्टयस्यान्यतरस्यां गतावुत्पद्यमानः प्रथममपर्याप्तकः क्षायिकसम्यग्दृष्टिर्लभ्यते पर्याप्तः सुप्रतीत एव । क्षायोपशमिकसम्यग्दृष्टिस्तु देवादिभ्योऽनन्तरमिहोत्पद्यमानस्तीर्थंकरादिरपर्याप्तकः प्राप्यते । पर्याप्तकः पुनरत्रापि सुज्ञान एव । औपशमिकसम्यक्त्वे पर्याप्तकसंज्ञिपञ्चेन्द्रिय एव लभ्यते, अपर्याप्तकसंज्ञिपञ्चेन्द्रियस्य पुनरौपशमिकसम्यक्त्वाभावात् । अन्ये तु संज्ञिपञ्चेन्द्रियस्यापर्याप्तस्यापि व्यवहारनयमताभिप्रायेणौपशमिकसम्यक्त्वं वर्णयन्ति, तच्च नावगच्छामः । तथाहि–अपर्याप्तावस्थायां तावदेतत्सम्यक्त्वं नोत्पादयति, तथाविधशुद्ध्यभावात् । पारभविकं तर्हि भविष्यति ? इति चेत्, तदपि न युक्तिक्षमम्, तथाहि–यो मिथ्यादृष्टिः संस्तत्प्रथमतयौपशमिकसम्यक्त्वमवाप्नोति स तद्भावमापन्नः कालं न करोत्येव । यत उक्तम्-"अणबंधो १ दय २ माउगबंधं ३ कालंपि ४ सासणे कुणइ । उवसमसम्मद्दिट्ठी, चउण्हमेगंपि नो कुणइ ॥१॥" उपशमश्रेणिमृत्वाऽनुत्तरसुरेषूत्पन्नस्यापर्याप्तकस्यैतल्लभ्यते इति चेत्, एतदपि न मन्यामहे, तस्य प्रथमसमय एव सम्यक्त्वपुद्गलोदयात् । उक्तं च शतकचूर्ण्यामस्मिन्नेव विचारे-"जो उवसमसम्मद्दिट्ठी उवसमसेढीए कालं करेइ, सो पढमसमए चेव सम्मत्तपुंजं उदयावलियाए छोढूण सम्मत्तपोग्गले वेएइ, तेण न उवसमसम्मद्दिट्ठी अपज्जत्तगो लब्भइ ।" इत्यादि । तस्मात्पर्याप्तकसंज्ञिलक्षणमेकमेव जीवस्थानकमत्र प्राप्यते इति स्थितम् । इह तु ग्रन्थे[1] मतान्तरमाश्रित्यौपशमिकसम्यक्त्वे जीवस्थानकद्वयमुक्तम् । इति गाथार्थः ॥२२॥

साम्प्रतं दशसु स्थानेषु लाघवार्थमेव पर्याप्तसंज्ञिरूपमेकजीवस्थानकं चक्षुर्दर्शने च सविकल्पजीवस्थानकानि निरूपयन्नाह—

(मल०) मतौ श्रुते अवधिद्विके इति–अवधिज्ञाने अवधिदर्शने च तथा विभङ्गज्ञाने पद्मलेश्यायां शुक्ललेश्यायां 'त्रिषु च सम्यक्त्वेषु' क्षायोपशमिकक्षायिकौपशमिकेषु संज्ञिनि च प्रत्येकं द्वे द्वे जीवस्थानके पर्याप्तापर्याप्तसंज्ञिलक्षणे भवतः न शेषाणि, तेषु मिथ्यात्वादिकारणतो मतिज्ञानादीनामसंभवात् । अत एव च हेतोरिहापर्याप्तकः करणापर्याप्तको गृह्यते न लब्ध्यपर्याप्तकः, तस्य मिथ्यादृष्टित्वा[2]दिति । आह क्षायिकक्षायोपशमिकौपशमिकेषु कथं संज्ञी अपर्याप्तको लभ्यते ? उच्यते, इह कश्चित् पूर्वबद्धायुष्कः क्षपकश्रेणिमारभ्यानन्तानुबन्ध्यादिसप्तकक्षयं कृत्वा क्षायिकसम्यक्त्वमुत्पाद्य यदा गतिचतुष्टयस्यान्यतरस्यां गतावुत्पद्यते तदाऽसौ अपर्याप्तकः क्षायिकसम्यक्त्वे प्राप्यते । क्षायोपशमिकसम्यक्त्वयुक्तश्च देवादिभ्योऽनन्तरमिहोत्पद्यमानस्ती-

---

१ इतोऽग्रे-'व्यवहारनय-' इत्यधिकः पाठः । २ इतः परम्-"पद्मशुक्ललेश्याकत्वादसंज्ञित्वाच्चेति" इत्येतत्पाठः क्वचित्पुस्तकेऽधिको लभ्यते ॥

ऽपि स्त्रीपुंसलिङ्गाकारमात्रमङ्गीकृत्य स्त्रीपुंसावुक्ताविति ।" अपर्याप्तकश्चेह करणापर्याप्तको गृह्यते न लब्ध्यपर्याप्तकः, लब्ध्यपर्याप्तकस्य सर्वस्यैव नपुंसकत्वात् ॥२०॥

काओगिनपुंसकसायमइसुयअनाणअविरयअचक्खू ।
आइतिलेसा भव्वियरमिच्छ आहारगे सव्वे ॥२१॥

(हारि०) व्याख्या—काययोगे १ नपुंसकवेदे २ कपायचतुष्के ६ अज्ञानशब्दस्य प्रत्येकमभिसंवन्धात् मत्यज्ञाने ७ श्रुताज्ञाने ८ अविरते ९ अचक्षुर्दर्शने १० "'आइतिलेसा' इति कृष्णलेश्यायां ११ नीललेश्यायां १२ कापोतलेश्यायां १३ 'भव्वियर' इति भव्येषु १४ अभव्येषु १५ मिथ्यादृष्टिषु १६ आहारके १७ चेति सप्तदशस्थानेषु सर्वाणि जीवस्थानानि भवन्तीति शेषः । इति गाथार्थः ॥२१॥

इत एकादशस्थानेषु लाघवार्थमेव संगृह्य पर्याप्तापर्याप्तसंज्ञिपञ्चेन्द्रियरूपं जीवस्थानकद्वयं निरूपयन्नाह—

(मल०) काययोगे नपुंसकवेदे 'कषाये' क्रोधादिचतुष्टयरूपे अज्ञानशब्दस्य प्रत्येकमभिसंबन्धान्मत्यज्ञाने श्रुताज्ञाने 'अविरत' इति विरतिहीने अचक्षुर्दर्शने 'आदित्रिलेश्यासु' कृष्णनीलकापोतरूपासु 'भव्येतरेषु' इति भव्येष्वभव्येपु च तथा मिथ्यात्वे आहारके च सर्वाण्यपि जीवस्थाना न भवन्ति, जीवस्थानव्यापकत्वात्काययोगादीनाम् ॥२१॥

मइसुयओहिदुगविभंगपम्हसुक्कासु तिसु 2य सम्मेसु ।
सन्निम्मि 3य दो ठाणा, सन्निअपज्जत्तपज्जत्ता ॥२२॥

(हारि०) व्याख्या—मतिज्ञाने १ श्रुतज्ञाने २ 'ओहिदुग' इति अवधिज्ञाने ३ अवधिदर्शने ४ च विभङ्गज्ञाने ५ पद्मलेश्यायां ६ शुक्ललेश्यायां ७ चेति, तथा 'तिसु य सम्मेसु' इति त्रिषु च सम्यक्त्वेषु, तद्यथा—क्षायिके ८ क्षायोपशमिके ९ औपशमिके १० च, संज्ञिनि ११ च, 'दो ठाणा' इति द्वे जीवस्थानके पर्याप्तापर्याप्तकसंज्ञिपञ्चेन्द्रियलक्षणे इत्येकादशस्थानेषु जीवस्थानकद्वयमित्याह । इह भावना चैवम्—मतिश्रुतावधिद्विकविभङ्गपद्मशुक्ललेश्यावर्ता देवादिभ्यश्च्युतानां संज्ञिपञ्चेन्द्रियेषूत्पन्नानां प्रथममपर्याप्तकसंज्ञिलक्षणं जीवस्थानकं प्राप्यते । पर्याप्तं च जीवस्थानकमेतेषु सुज्ञानमेव । तथा 'तिसु य सम्मेसु' इति त्रिषु च सम्यक्त्वेषु क्षायिकक्षायोपशमिकौपशमिकलक्षणेषु पर्याप्तापर्याप्तकसंज्ञिपञ्चेन्द्रियलक्षणं जीवस्थानकद्वयं भवतीत्युक्तम् । तत्र क्षायिकसम्यग्दृष्टिः संज्ञिपञ्चेन्द्रियः पर्याप्तकः करणापर्याप्तकश्च सर्वगतिषु तावल्लभ्यते । कथमत्रापर्याप्तको लभ्यते ? इति चेत्, उच्यते, इहकश्चित्पूर्वं बद्धायुष्कः क्षायिकसम्य-

१ "आइतिलेस० त्ति" इति जे० । २ "वि" इत्यपि पाठ । ३ "च" इत्यपि पाठ ।

चक्षुर्दर्शने त्रीणि जीवस्थानानि पर्याप्तकचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियरूपाणि भवन्तीति। अत्रैवं विकल्पमाह–"छ व पज्जियर चरमा" इति षड् वा पर्याप्तापर्याप्तरूपाणि चरमाणि जीवस्थानानि चतुरिन्द्रियप्रभृतीनां भवन्तीति शेषः। इह कैश्चिदिन्द्रियपर्याप्तिपर्याप्तावस्थायामपि चक्षुर्दर्शनाभ्युपगमात्। इति गाथार्थः ॥२३॥

तथा—

(मल०) मनःपर्यायज्ञाने '**केवलद्विके**' केवलज्ञानकेवलदर्शनरूपे '**संयतेषु**' सामायिकादिपञ्चप्रकारसंयमवत्सु देशयते मिश्रदृष्टौ च संज्ञिपर्याप्तलक्षणमेकं जीवस्थानं प्राप्यते नान्यत्। तथाहि–न तावन्मनःपर्यायज्ञाने केवलद्विके पञ्चप्रकारे च सामायिकादौ संयमे देशसंयमे चान्यज्जीवस्थानकं संभवति, तत्र सर्वदेशविरत्योरभावात्। सम्यग्मिथ्यादृष्टिता च पर्याप्तसंज्ञिव्यतिरेकेण शेषेषु जीवस्थानकेषु तथाविधपरिणामाभावाच्च संभवतीति। '**चक्खुंमि तिन्नि**' इति चक्षुर्दर्शने त्रीणि जीवस्थानकानि पर्याप्तचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियलक्षणानि भवन्ति नान्यानि, तेषु तदसंभवात्। अत्रैव मतान्तरेण विकल्पमाह–'**छ व पज्जियर चरमा**' इति षड्वा पर्याप्तापर्याप्तरूपाणि चरमाणि जीवस्थानकानि चक्षुर्दर्शने भवन्ति, चतुरिन्द्रियादीनामिन्द्रियपर्याप्त्या पर्याप्तानां शेषपर्याप्त्यपेक्षयाऽपर्याप्तानामपि आचार्यान्तरैश्चक्षुर्दर्शनाभ्युपगमात्। तदुक्तं पञ्चसंग्रहमूलटीकायाम्–"**करणापर्याप्तकेषु चतुरिन्द्रियादिष्विन्द्रियपर्याप्तौ सत्यां चक्षुर्दर्शनं भवति**"। इति ॥२३॥

सत्त उ सासाणे बायराइ छ अपज्ज सन्निपज्जो य।
तेउल्लेसे बायरअपजत्तो दुविह सन्नी य ॥२४॥

(हारि०) व्याख्या–सप्तैव तुशब्दस्यैवकारार्थत्वात् जीवस्थानानि, क्व? इत्याह–'**सासादने**' कानि तानि? इत्याह–बादरादीनि षडपर्याप्तानि। अयमर्थः–सासादनभावे मृतस्य बादरादिषूत्पन्नस्य तेषु तत्प्राप्यते, अतः सासादने तानि षट् प्राप्यन्त इति। तथा संज्ञि पर्याप्तश्च[1] सासादने सप्तम इति। तथा '**तेउल्लेसे**' इति तेजोलेश्यायामपर्याप्तबादरजीवस्थानकमेकम्[2], देवेभ्यश्च्युतस्य भूदकतरुषूत्पन्नस्यापर्याप्तावस्थायां प्राक्तनी तेजोलेश्या प्राप्यते इत्याशयः। तथा द्विविधः संज्ञी पर्याप्तापर्याप्तरूप इति द्वयमिति तेजोलेश्यायां त्रीणि जीवस्थानानि। इति गाथार्थः ॥२४॥

तथा—

(मल०) '**सासादने**' सासादनसम्यक्त्वे सप्त जीवस्थानकानि भवन्ति, कानि? इत्यत आह–'**बादरादयः**' बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाः षट् अपर्याप्तकाः

१ "०मश्चि" इति जे०। २ "क्ति" जे०।

श्वङ्करादिरपर्याप्तकः सुप्रतीत एव । औपशमिकसम्यक्त्वं पुनरपर्याप्तावस्थायामनुत्तरसुरस्य द्रष्टव्यम् । इह केचिदपर्याप्तावस्थायामौपशमिकं सम्यक्त्वं नेच्छन्ति । तथा च ते आहुः—न तावदस्यामेवापर्याप्तावस्थायामिदं सम्यक्त्वमुपजायते, तदानीं तस्य तथाविधविशुद्ध्यभावात् । अथै तत्तदानीं मोत्पादि यत्तु पारभविकं तद्भवत्केन विनिवार्यत इतिमन्येथाः, तदपि न युक्तम्, यतो यो मिथ्यादृष्टिस्तत्प्रथमतया सम्यक्त्वमौपशमिकमवाप्नोति स तावत्तद्भावमापन्नः सन् कालं न करोत्येव । यदुक्तमागमे—"**अणबंधो १ दय २ माउगबंधं ३ कालं ४ च सासणो कुणइ उवसमसम्मद्दिट्ठो, चउण्हमेक्कंपि नो कुणइ ॥१॥**" यस्तूपशमश्रेणिमारूढः सन् मृत्वाऽनुत्तरसुरेषूत्पद्यते तस्य प्रथमसमय एव सम्यक्त्वपुद्गलोदयात् क्षायोपशमिकं सम्यक्त्वं भवति न त्वौपशमिकम् । उक्तं च शतकबृहच्चूर्णौ—"**जो उवसमसम्मद्दिट्ठी उवसमसेढीए कालं करेइ सो पढमसमए चेव सम्मत्तपुंजं उदयावलियाए छोढूण सम्मत्तपोग्गले वेयइ, तेण न उवसमसम्मद्दिट्ठी अपज्जत्तगो लब्भइ**" इत्यादि । अपरे पुनराहुः—भवत्येवापर्याप्तावस्थायामप्यौपशमिकं सम्यक्त्वम्, सप्ततिचूर्ण्यादिषु तथाऽभिधानात् । सप्ततिचूर्णौ हि गुणस्थानकेषु नामकर्मणो बन्धोदयादिमार्गणावसरेऽविरतसम्यग्दृष्टेरुदयस्थानचिन्तायां पञ्चविंशत्युदयः सप्तविंशत्युदयश्च देवनारकानधिकृत्योक्तः । तत्र नारकाः क्षायिकवेदकसम्यग्दृष्टयः, देवाश्च त्रिविधसम्यग्दृष्टयोऽपि । तथा च तद्ग्रन्थः—"**पणवीस सत्तावीसोदया देवनेरइए पडुच्च नेरइगो खइगवेयगसम्मद्दिट्ठी देवो तिविहसम्मद्दिट्ठी वि**" इति । पञ्चविंशत्युदयश्च शरीरपर्याप्तिं निर्वर्तयतः । सप्तविंशत्युदयश्च शरीरपर्याप्त्या पर्याप्तस्य शेषपर्याप्तिभिः पुनरपर्याप्तस्य । ततोऽपर्याप्तावस्थायामपीहौपशमिकं सम्यक्त्वमुक्तम् । तथा पञ्चसंग्रहेऽपि मार्गणास्थानकेषु जीवस्थानकचिन्तायामौपशमिकसम्यक्त्वे—[2]"**उवसमसम्मंमि दो सण्णी**" इत्यनेन ग्रन्थेन संज्ञिद्विकमुक्तम् । ततश्चाचार्येणापीहोक्तम्—"**तिसु य सम्मेसु**" इति । तत्त्वं पुनः केवलिनो विदन्तीति ॥२२॥

मणपज्जवकेवलदुगसंजयदेसजयमीसदिट्ठीसु ।
सन्नीपज्जो चक्खुम्मि तिन्नि छ व पज्जि[3]यर चरमा ॥२३॥

(हारि०) व्याख्या—मनःपर्यायज्ञाने १ 'केवलदुग' [4]इति केवलज्ञाने २ केवलदर्शने च ३ 'संजय' [5]इति गुणगुणिनोरभेदोपचारेण संयमो गृहीतस्ततः सामायिके ४ छेदोपस्थापनीये ५ परिहारविशुद्धिके ६ सूक्ष्मसंपराये ७ यथाख्याते ८ 'देशविरतौ ९ मिश्रदृष्टौ १० च संज्ञिपर्याप्तकपञ्चेन्द्रियरूपमेकं जीवस्थानकं दशसु स्थानेषु भवतीति शेषः । तथा

---

१ सप्ततिका चूर्णिः । २ "सन्नी सम्मंमि दोण्णि" इत्यपि पाठः । ३ "अर" इत्यपि पाठः । ४-५ "स्ति" इति जे० । "देशयतौ" इति जे० ।

चक्षुर्दर्शने त्रीणि जीवस्थानानि पर्याप्तकचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियरूपाणि भवन्तीति। अत्रैवं विकल्पमाह—"छ व पज्जियर चरमा" इति षड् वा पर्याप्तापर्याप्तरूपाणि चरमाणि जीवस्थानानि चतुरिन्द्रियप्रभृतीनां भवन्तीति शेषः। इह कैश्चिदिन्द्रियपर्याप्तिपर्याप्तावस्थायामपि चक्षुर्दर्शनाभ्युपगमात्। इति गाथार्थः ॥२३॥

तथा—

(मल०) मनःपर्यायज्ञाने 'केवलद्विके' केवलज्ञानकेवलदर्शनरूपे 'संयतेषु' सामायिकादिपञ्चप्रकारसंयमवत्सु देशयते मिश्रदृष्टौ च संज्ञिपर्याप्तलक्षणमेकं जीवस्थानं प्राप्यते नान्यत्। तथाहि—न तावन्मनःपर्यायज्ञाने केवलद्विके पञ्चप्रकारे च सामायिकादौ संयमे देशसंयमे चान्यजीवस्थानकं संभवति, तत्र सर्वदेशविरत्योरभावात्। सम्यग्मिथ्यादृष्टिता च पर्याप्तसंज्ञिव्यतिरेकेण शेषेषु जीवस्थानकेषु तथाविधपरिणामाभावाच्च संभवतीति। 'चक्खुंमि तिन्नि' इति चक्षुर्दर्शने त्रीणि जीवस्थानकानि पर्याप्तचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियलक्षणानि भवन्ति नान्यानि, तेषु तदसंभवात्। अत्रैव मतान्तरेण विकल्पमाह—'छ व पज्जियर चरमा' इति षड्वा पर्याप्तापर्याप्तरूपाणि चरमाणि जीवस्थानकानि चक्षुर्दर्शने भवन्ति, चतुरिन्द्रियादीनामिन्द्रियपर्याप्त्या पर्याप्तानां शेषपर्याप्त्यपेक्षयाऽपर्याप्तानामपि आचार्यान्तरैश्चक्षुर्दर्शनाभ्युपगमात्। तदुक्तं पञ्चसंग्रहमूलटीकायाम्—"करणापर्याप्तकेषु चतुरिन्द्रियादिष्विन्द्रियपर्याप्तौ सत्यां चक्षुर्दर्शनं भवति"। इति ॥२३॥

सत्त उ सासाणे बायराइ छ अपज्ज सन्निपज्जो य।
तेउल्लेसे बायरअपजत्तो दुविह सन्नी य ॥२४॥

(हारि०) व्याख्या—सप्तैव तुशब्दस्यैवकारार्थत्वात् जीवस्थानानि, क? इत्याह—'सासादने' कानि तानि? इत्याह—बादरादीनि षडपर्याप्तानि। अयमर्थः—सासादनभावे मृतस्य बादरादिषूत्पन्नस्य तेषु तत्प्राप्यते, अतः सासादने तानि षट् प्राप्यन्त इति। तथा संज्ञि पर्याप्तश्च सासादने सप्तम इति। तथा 'तेउल्लेसे' इति तेजोलेश्यायामपर्याप्तबादरजीवस्थानकमेकम्[1], देवेभ्यश्च्युतस्य भूदकतरुषूत्पन्नस्यापर्याप्तावस्थायां प्राक्तनी तेजोलेश्या प्राप्यते इत्याशयः। तथा द्विविधः संज्ञी पर्याप्तापर्याप्तरूप इति त्रयमिति तेजोलेश्यायां त्रीणि जीवस्थानानि। इति गाथार्थः ॥२४॥

तथा—

(मल०) 'सासादने' सासादनसम्यक्त्वे सप्त जीवस्थानकानि भवन्ति, कानि? इत्यत आह—'बादरादयः' बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाः षट् अपर्याप्तकाः[2]

१ "०मपि" इति जे०। २ "प्ति" जे०।

र्थङ्करादिरपर्याप्तकः सुप्रतीत एव । औपशमिकसम्यक्त्वं पुनरपर्याप्तावस्थायामनुत्तरसुरस्य द्रष्टव्यम् । इह केचिदपर्याप्तावस्थायामौपशमिकं सम्यक्त्वं नेच्छन्ति । तथा च ते आहुः—न तावदस्यामेवापर्याप्तावस्थायामिदं सम्यक्त्वमुपजायते, तदानीं तस्य तथाविधविशुद्ध्यभावात् । अथैतत्तदानीं मोत्पादि यत्तु पारभविकं तद्भवत्केन विनिवार्यत इतिमन्येथाः, तदपि न युक्तम्, यतो यो मिथ्यादृष्टिस्तत्प्रथमतया सम्यक्त्वमौपशमिकमवाप्नोति स तावत्तद्भावमापन्नः सन् कालं न करोत्येव । यदुक्तमागमे—"**अणबंधो १ दय २ माउगबंधं ३ कालं ४ च सासणो कुणइ उवसमसम्मद्दिट्ठी, चउण्हमेक्कंपि नो कुणइ ॥१॥**" यस्तूपशमश्रेणिमारूढः सन् मृत्वाऽनुत्तरसुरेषूत्पद्यते तस्य प्रथमसमय एव सम्यक्त्वपुद्गलोदयात् क्षायोपशमिकं सम्यक्त्वं भवति न त्वौपशमिकम् । उक्तं च शतकबृहच्चूर्णौ—"**जो उवसमसम्मद्दिट्ठी उवसमसेढीए कालं करेइ सो पढमसमए चेव सम्मत्तपुंजं उदयावलियाए छोढूण सम्मत्तपोग्गले वेयइ, तेण न उवसमसम्मद्दिट्ठी अपज्जत्तगो लब्भइ**" इत्यादि । अपरे पुनराहुः—भवत्येवापर्याप्तावस्थायामप्यौपशमिकं सम्यक्त्वम्, सप्ततिचूर्ण्यादिषु तथाऽभिधानात् । सप्ततिचूर्णौ हि गुणस्थानकेषु नामकर्मणो बन्धोदयादिमार्गणावसरेऽविरतसम्यग्दृष्टेरुदयस्थानचिन्तायां पञ्चविंशत्युदयः सप्तविंशत्युदयश्च देवनारकानधिकृत्योक्तः । तत्र नारकाः क्षायिकवेदकसम्यग्दृष्टयः, देवाश्च त्रिविधसम्यग्दृष्टयोऽपि । तथा च तद्ग्रन्थः—"**पणुवीस सत्तावीसोदया देवनेरइए पडुच्च नेरइगो खइगवेयगसम्मद्दिट्ठी देवो तिविहसम्मद्दिट्ठी वि**" इति । पञ्चविंशत्युदयश्च शरीरपर्याप्तिं निर्वर्तयतः । सप्तविंशत्युदयश्च शरीरपर्याप्त्या पर्याप्तस्य शेषपर्याप्तिभिः पुनरपर्याप्तस्य । ततोऽपर्याप्तावस्थायामपीहौपशमिकं सम्यक्त्वमुक्तम् । तथा पञ्चसंग्रहेऽपि मार्गणास्थानकेषु जीवस्थानकचिन्तायामौपशमिकसम्यक्त्वे—[२]"**उवसमसम्मंमि दो सण्णी**" इत्यनेन ग्रन्थेन संज्ञिद्विकमुक्तम् । ततश्चाचार्येणापीहोक्तम्—"**तिसु य सम्मेसु**" इति । तत्त्वं पुनः केवलिनो विदन्तीति ॥२२॥

मणपज्जवकेवलदुगसंजयदेसजयमीसदिट्ठीसु ।
सन्नीपज्जो चक्खुम्मि तिन्नि छ व पज्जि[३]यर चरमा ॥२३॥

(हारि०) व्याख्या—मनःपर्यायज्ञाने १ '**केवलदुग**' [४]इति केवलज्ञाने २ केवलदर्शने च ३ '**संजय**' [५]इति गुणगुणिनोरभेदोपचारेण संयमो गृहीतस्ततः सामायिके ४ छेदोपस्थापनीये ५ परिहारविशुद्धिके ६ सूक्ष्मसंपराये ७ यथाख्याते ८ [६]देशविरतौ ९ मिश्रदृष्टौ १० च संज्ञिपर्याप्तकपञ्चेन्द्रियरूपमेकं जीवस्थानकं दशसु स्थानेषु भवतीति शेषः । तथा

---

१ सप्ततिका चूर्णिः । २ "सन्नी सम्मंमि दोण्णि" इत्यपि पाठः । ३ "अर" इत्यपि पाठः । ४-५ "त्ति" इति जे० । "देशयतौ" इति जे० ।

चक्षुर्दर्शने त्रीणि जीवस्थानानि पर्याप्तकचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियरूपाणि भवन्तीति । अत्रैवं विकल्पमाह—"**छ व पज्जियर चरमा**" इति षड् वा पर्याप्तापर्याप्तरूपाणि चरमाणि जीवस्थानानि चतुरिन्द्रियप्रभृतीनां भवन्तीति शेषः । इह कैश्चिदिन्द्रियपर्याप्तिपर्याप्तावस्थायामपि चक्षुर्दर्शनाभ्युपगमात् । इति गाथार्थः ॥२३॥

तथा—

(मल०) मनःपर्यायज्ञाने '**केवलद्विके**' केवलज्ञानकेवलदर्शनरूपे '**संयतेषु**' सामायिकादिपञ्चप्रकारसंयमवत्सु देशयते मिश्रदृष्टौ च संज्ञिपर्याप्तलक्षणमेकं जीवस्थानं प्राप्यते नान्यत् । तथाहि—न तावन्मनःपर्यायज्ञाने केवलद्विके पञ्चप्रकारे च सामायिकादौ संयमे देशसंयमे चान्यज्जीवस्थानकं संभवति, तत्र सर्वदेशविरत्योरभावात् । सम्यग्मिथ्यादृष्टिता च पर्याप्तसंज्ञिव्यतिरेकेण शेषेषु जीवस्थानकेषु तथाविधपरिणामाभावान्न संभवतीति । '**चक्खुंमि तिन्नि**' इति चक्षुर्दर्शने त्रीणि जीवस्थानकानि पर्याप्तचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियलक्षणानि भवन्ति नान्यानि, तेषु तदसंभवात् । अत्रैव मतान्तरेण विकल्पमाह—'**छ व पज्जियर चरमा**' इति षड्वा पर्याप्तापर्याप्तरूपाणि चरमाणि जीवस्थानकानि चक्षुर्दर्शने भवन्ति, चतुरिन्द्रियादीनामिन्द्रियपर्याप्त्या पर्याप्तानां शेषपर्याप्त्यपेक्षयाऽपर्याप्तानामपि आचार्यान्तरैश्चक्षुर्दर्शनाभ्युपगमात् । तदुक्तं पञ्चसंग्रहमूलटीकायाम्—"**करणापर्याप्तकेषु चतुरिन्द्रियादिष्विन्द्रियपर्याप्तौ सत्यां चक्षुर्दर्शनं भवति**" । इति ॥२३॥

**सत्त उ सासाणे बायराइ छ अपज्ज सन्निपज्जो य ।**
**तेउल्लेसे बायरअपजत्तो दुविह सन्नी य ॥२४॥**

(हारि०) व्याख्या—सप्तैव तुशब्दस्यैवकारार्थत्वात् जीवस्थानानि, क ? इत्याह—'**सासादने**' कानि तानि ? इत्याह—बादरादीनि षडपर्याप्तानि । अयमर्थः—सासादनभावे मृतस्य बादरादिषूत्पन्नस्य तेषु तत्प्राप्यते, अतः सासादने तानि षट् प्राप्यन्त इति । तथा संज्ञि पर्याप्तश्च सासादने सप्तम इति । तथा '**तेउल्लेसे**' इति तेजोलेश्यायामपर्याप्तबादरजीवस्थानकमेकम्, देवेभ्यश्च्युतस्य भूदकतरुषूत्पन्नस्यापर्याप्तावस्थायां प्राक्तनी तेजोलेश्या प्राप्यते इत्याशयः । तथा द्विविधः संज्ञी पर्याप्तापर्याप्तरूप इति द्वयमिति तेजोलेश्यायां त्रीणि जीवस्थानानि । इति गाथार्थः ॥२४॥

तथा—

(मल०) '**सासादने**' सासादनसम्यक्त्वे सप्त जीवस्थानकानि भवन्ति, कानि ? इत्यत आह—'**बादरादयः**' बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाः षट् अपर्याप्तकाः

१ "०मप्वि" इति जे० । २ "प्वि" जे० ।

संज्ञी पर्याप्तकश्च । नन्वेकेन्द्रियाणामागमे सासादनभावो नेष्यते तत्कथमिहापर्याप्तबादरैकेन्द्रियलक्षणं जीवस्थानकं सासादनेऽभिहितम् ? इति, सत्यमेतत्, किन्तु मा त्वरिष्ठाः, सर्वमेतदाचार्य एवाग्रे निर्णेष्यतीति । तेजोलेश्यायां त्रीणि जीवस्थानकानि भवन्ति, किम्[1] ? इत्याह—बादरोऽपर्याप्तो, द्विविधश्च पर्याप्तापर्याप्तभेदेन संज्ञीति । बादरोऽपर्याप्तकः कथमवाप्यते ? इति चेद्, इह भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवाः पृथिवीजलवनस्पतिषु मध्ये उत्पद्यन्ते ते च तेजोलेश्यावन्तः । यल्लेश्यश्च म्रियते अग्रेऽपि तल्लेश्य एवोत्पद्यते—"**जल्लेसे मरइ तल्लेसे उववज्जइ**" इतिवचनात् । अतो बादरापर्याप्तावस्थायांकियत्कालं तेजोलेश्याऽवाप्यते ? इति न कश्चिद्दोषः ॥२४॥

अस्सन्नि आइ बारस, अणहारे अट्ठ सत्तअपजत्ता ।
सन्नी पज्जत्तो तह, इय गइ[2]याइसु जियट्ठाणा ॥२५॥

(हारि०) व्याख्या—असंज्ञिनि मनोविज्ञानविकले, किम् ? इत्याह— 'आइ' [3]इति विभक्तिलोपादाद्यानि द्वादश जीवस्थानानि संज्ञिपञ्चेन्द्रियसत्कजीवस्थानकद्वयवर्जितानि । तथाऽनाहारकेऽष्टौ जीवस्थानानि, कथम् ? सप्तापर्याप्तजीवस्थानानि संज्ञिपर्याप्तकं च जीवस्थानकमष्टममिति । तच्च केवलिसमुद्घाते तृतीयचतुर्थपञ्चमसमयेषु कार्मणकाययोगे प्राप्यते । तथा चोक्तम् "**कार्मणशरीरयोगी, चतुर्थके पञ्चमे तृतीये च । समयत्रयेऽपि तस्मिन्, भवत्यनाहारको नियमात्** ॥१॥" इह यद्यपि केवली मनोविज्ञानविकल्परहितस्तथाऽपि द्रव्यमनः समाश्रित्य संज्ञिग्रहणेन गृहीतः । इति गत्यादिषु जीवस्थानान्युक्तानीति शेषः । इति गाथार्थः ॥२५॥

इति मार्गितानि मार्गणास्थानेषु चतुर्दशापि जीवस्थानानि, साम्प्रतमेतेष्वेव गुणस्थानकान्यभिधित्सुस्तन्नामसूचामाह—

(मल०) '**असंज्ञिनि**' संज्ञिव्यतिरिक्ते '**आइ बारस**' इति आदिमानि द्वादश जीवस्थानकानि भवन्ति, सर्वेषामपि विशिष्टमनोविकलतया संज्ञिप्रतिपक्षत्वाविशेषात्, संज्ञिप्रतिपक्षस्य चाऽसंज्ञित्वेन व्यवहारात् । तथाऽनाहारकेऽष्टौ जीवस्थानकानि भवन्ति, कानि ? इत्यत आह—सप्तापर्याप्तकाः सूक्ष्मैकेन्द्रियादयः विग्रहगतावेकं द्वौ त्रीन् वा समयान् यावत्तेषामाहारासंभवात्, संज्ञी च पर्याप्तकः, स च केवलिसमुद्घातावस्थायां तृतीयचतुर्थपञ्चमसमयेषु । तदुक्तम्—"**चतुर्थपञ्चमतृतीयेष्वनाहारकः**" इति । उपसंहारमाह—'**इय**' इत्यादि । इतिरेवमुक्तेन प्रकारेण '**गत्यादिषु**' मार्गणास्थानकेषु जीवस्थानकानि भवन्तीति ॥२५॥

---

१ "कानि ? इत्याह—" इत्यपि पाठः । २ "आइसु" इत्यपि पाठः । ३ "त्ति" इति जे० ।

तदेवमुक्तानि मार्गणास्थानेषु जीवस्थानकानि, साम्प्रतमेतेष्वेव गुणस्थानकान्यभिधित्सुस्तान्येव तावत्स्वरूपतो निर्दिशति—

**मिच्छे १ सासण २ [1]मिस्से ३ अविरय ४ देसे ५ पमत्त ६ अपमत्ते ७ ।**
**नियट्टि ८ अनियट्टि ९ सुहुम १० वसम ११ खीण**
**१२ सजोगि १३ अजोगि १४ गुणा ॥२६॥**

(हारि०) व्याख्या-सूचकत्वात्सूत्रमितिन्यायात्पदावयवेषु पदसमुदायोपचाराद्वा । तथा एकारान्ताः शब्दाः प्रथमान्ता ज्ञेयाः प्राकृतशैलीवशात् । "कयरे आगच्छइ दित्तरूवे" इत्यादिवदिति यथायोगं शब्दसंस्कारा[2]दि कार्यम् । तत्र मिथ्यादृष्टिगुणस्थानम् १, सासादनसम्यग्दृष्टिगुणस्थानम् २, सम्यग्मिथ्यादृष्टिगुणस्थानम् ३, अविरतसम्यग्दृष्टिगुणस्थानम् ४, देशविरतिगुणस्थानम् ५, प्रमत्तसंयतगुणस्थानम् ६, अप्रमत्तसंयतगुणस्थानम् ७, अपूर्वकरणगुणस्थानम् ८, अनिवृत्तिबादरसंपरायगुणस्थानम् ९, सूक्ष्मसंपरायगुणस्थानम् १०, उपशान्तकषायवीतरागच्छद्मस्थगुणस्थानम् ११, क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम् १२, सयोगिकेवलिगुणस्थानम् १३, अयोगिकेवलिगुणस्थानम् १४ 'गुणाः' इति गुणस्थानकानि । एवं गुणस्थानकपदसंस्कारः । पदार्थस्तु कर्मस्तवटीकातोऽवधारणीयः । स्थानाशून्यार्थं कश्चिद्गाथाभिः कथ्यते । ताश्चेमाः-"**जीवाइपयत्थेसुं, जिणोवइट्ठेसु जा असद्दहणा । सद्दहणावि य मिच्छा, विवरीयपरूवणा जा य ॥१॥ संसयकरणं जंपि य, जो तेसु अणायरो पयत्थेसु । तं पञ्चविहं मिच्छं, तद्दिट्ठी मिच्छदिट्ठी य ॥२॥ उवसमअद्धाए ठिओ, मिच्छमपत्तो तमेव गंतुमणो । सम्मं आसायंतो, सासायणमो मुणेयव्वो ॥३॥ जह गुडदहीणि विसमाइभावसहियाणि हुंति मिस्साणि । भुंजंतस्स तहोभय, तद्दिट्ठी मीसदिट्ठी य ॥४॥ तिविहे वि हु सम्मत्ते, थेवा वि न विरइ जस्स कम्मवसा । सो अविरओ त्ति भण्णइ, देसो पुण देसविरईए ॥५॥ विकहाकसायनिद्दासद्दाइरओ भवे पमत्तो त्ति । पंचसमिओ तिगुत्तो, अपमत्तजई मुणेयव्वो ॥६॥ अप्पुव्वं अप्पुव्वं जहुत्तरं जो करेइ ठिइखंडं । रसखंडं तग्घायं सो होइ अपुव्वकरणो त्ति ॥७॥ विणिवट्टंति विसुद्धिं, समयपइट्ठा वि जत्थ अन्नोन्नं । तत्तो नियट्टिठाणं, विवरीयमओ य अनियट्टी ॥८॥ थूलाण लोभखंडाण वेयगो बायरो मुणेयव्वो । सुहुमाण होइ सुहुमो, उवसंतेहिं तु उवसंतो ॥९॥ खीणंमि मोहणीए, खीणकसाओ सजोगिजोगि त्ति । होइ पउत्ता य तओ, अपउत्ता होइ हु अजोगी ॥१०॥** इति संक्षेपतो

---

१ "मीसे" इत्यपि पाठः । २ "०दिति कार्यम्" इत्यपि पाठः ।

गुणस्थानकीर्तनम् । अथैतेषामेव शिष्यजनहितार्थं कालप्रमाणं गाथाभिरेव कथ्यते—"**मिच्छत्तमभव्वाणं, अणाइयमणंतयं मुणेयव्वं । भव्वाणं तु अणाइयसपज्जवसियं च सम्मत्ते ॥१॥ छावलियं सासाणं, समहियतेत्तीससागर चउत्थं । देसूणपुव्वकोडी पचमगं तेरसं च पुहो ॥ लहुपंचक्खरचरमं, तइयं छट्ठाइबारस जाव । इय अट्ठगुणट्ठाणा, अन्तमुहुत्ता य पत्तेयं ॥३॥**" अथैतेषु गुणस्थानकेषु गृहीतेषु जीवो भवान्तरं याति उत न ? इत्याह—"**मिच्छे सासाणे वा अविरयसम्मंमि अहव गहियंमि । जंति जिया परलोए, सेसेक्कारसगुणे मोत्तुं ॥१॥**" अथ केषु म्रियन्ते केषु च न ? इति कथ्यते—"**मीसे १ खीणि २ सजोगा ३ न मरंतेक्कारसेसु उ मरंति । तेसु वि तिसु गहिएसुं, परलोगगमो न अट्ठेसुं ॥१॥**" इति गाथार्थः ॥२६॥

साम्प्रतमेतानि मार्गणास्थानेष्वभिधित्सुः पूर्वं तावद्गतीन्द्रियेषु मार्गयन्नाह—

(मल०) सूचनात्सूत्रमितिन्यायात्पदैकदेशेऽपि पदसमुदायोपचाराद्वा । इहैवं गुणस्थानकनिर्देशो द्रष्टव्यः । तद्यथा—मिथ्यादृष्टिगुणस्थानम् १, सासादनसम्यग्दृष्टिगुणस्थानम् २, सम्यग्मिथ्यादृष्टिगुणस्थानम् ३, अविरतसम्यग्दृष्टिगुणस्थानम् ४, देशविरतगुणस्थानम् ५, प्रमत्तसंयतगुणस्थानम् ६, अप्रमत्तसंयतगुणस्थानम् ७, अपूर्वकरणगुणस्थानम् ८, अनिवृत्तिबादरसंपरायगुणस्थानम् ९, सूक्ष्मसंपरायगुणस्थानम् १०, उपशान्तकषायवीतरागच्छद्मस्थगुणस्थानम् ११, क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम् १२, सयोगिकेवलिगुणस्थानम् १३, अयोगिकेवलिगुणस्थानम् १४ इति । तत्र मिथ्या विपर्यस्ता दृष्टिर्जीवाजीवादिवस्तुप्रतिपत्तिर्यस्य भक्षितहृत्पूरपुरुषस्य सिते पीतप्रतिपत्तिवत्स मिथ्यादृष्टिः, गुणस्थानशब्दः प्राग्निरूपितशब्दार्थः, मिथ्यादृष्टेर्गुणस्थानं मिथ्यादृष्टिगुणस्थानम् । ननु यदि मिथ्यादृष्टिस्ततः कथं तस्य गुणस्थानसंभवः ?, गुणा हि ज्ञानदर्शनचारित्ररूपाः, तत्कथं ते दृष्टौ विपर्यस्तायां भवेयुः ? इति, उच्यते, इह यद्यपि तत्त्वार्थश्रद्धानलक्षणात्मगुणसर्वघातिप्रबलमिथ्यात्वमोहनीयविपाकोदयाद्वस्तुप्रतिपत्तिरूपा दृष्टिरसुमतो विपर्यस्ता भवति, । तथापि काचिन्मनुष्यपश्वादिप्रतिपत्तिरन्ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिप्रत्तिरविपर्यस्ताऽपि भवति । यथाऽतिबहलघनपटलसमाच्छादितायामपि चन्द्रार्कप्रभायां काचित्प्रभा, तथाहि—समुन्नतातिबहलजीमूतपटलेन दिवाकररजनिकरकरनिकरतिरस्कारेऽपि नैकान्तेन तत्प्रभानाशः संपद्यते, प्रतिप्राणिप्रसिद्धदिनरजनीविभागाभावप्रसङ्गात् । उक्तं च—"**सुट्ठु वि मेहसमुदए, होइ पहा चंदसूराणं ।**" इति । एवमिहापि प्रबलमिथ्यात्वोदयेऽपि काचिदविपर्यस्तापि दृष्टिर्भवतीति तदपेक्षया मिथ्यादृष्टेरपि गुणस्थानकसंभवः । यद्येवं ततः कथमसौ मिथ्यादृष्टिरेव ? मनुष्यपश्वादिप्रतिपत्त्यपेक्षया अन्ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिपत्त्यपेक्षया वा सम्यग्दृष्टित्वात्,

नैष दोषः, यतो भगवदर्हत्प्रणीतं सकलमपि द्वादशाङ्गार्थमभिरोचयमानोऽपि यदि तद्गतमेकमप्यक्षरं न रोचयति तदानीमप्येष मिथ्यादृष्टिरेवोच्यते, तस्य भगवति सर्वज्ञे प्रत्ययनाशात् । तदुक्तम्–'**सूत्रोक्तस्यैकस्याऽप्यरोचनादक्षरस्य भवति नरः । मिथ्यादृष्टिः सूत्रं, हि न प्रमाणं जिनाभिहितम् ॥१॥**' इति । किं पुनः शेषो भगवदर्हदभिहितयथावज्जीवाजीवादिवस्तुतत्त्वप्रतिपत्तिविकल इति यत्किंचिदेवैतत् । मिथ्यात्वं च पञ्चधा तच्चोपरिष्टाद्वक्ष्यामः । आयमौपशमिकसम्यक्त्वलाभलक्षणं सादयति अपनयतीति आसादनं अनन्तानुबन्धिकषायवेदनम् । अत्र पृषोदरादित्वाद्यशब्दलोपः । "कृद्बहुलं" इतिवचनाच्च कर्तरि अनट् । सति हि अस्मिन् परमानन्दरूपानन्तसुखफलदो निःश्रेयसतरुबीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयमात्रेण उत्कर्षतः षड्भिरावलिकाभिरपगच्छतीति । ततः सह आसादनेन वर्तत इति सासादनः । सम्यग् अविपर्यस्ता दृष्टिर्जिनप्रणीतवस्तुप्रतिपत्तिर्यस्य स सम्यग्दृष्टिः, सासादनश्चासौ सम्यग्दृष्टिश्च सासादनसम्यग्दृष्टिः तस्य गुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानम् । सास्वादनसम्यग्दृष्टिगुणस्थानमिति वा पाठः । तत्र सह सम्यक्त्वलक्षणरसास्वादनेन वर्तत इति सास्वादनः । यथा हि भुक्तक्षीरान्नविषयव्यलीकचित्तः पुरुषस्तद्वमनकाले क्षीरान्नरसमास्वादयति तथैषोऽपि मिथ्यात्वाभिमुखतया सम्यक्त्वस्योपरि व्यलीकचित्तः सम्यक्त्वमुद्वमन् तद्रसमास्वादयति । ततः स चासौ सम्यग्दृष्टिश्च तस्य गुणस्थानं सास्वादनसम्यग्दृष्टिगुणस्थानम् । एतच्चैवं भवति, इह गम्भीरापारसंसारपारावारमध्यमध्यासीनो जन्तुर्मिथ्यादर्शनमोहनीयादिप्रत्ययमनन्तपुद्गलपरावर्तान् यावदनेकशारीरिकमानसिकदुःखलक्षाण्यनुभूय कथमपि तथाभव्यत्वपरिपाकवशतो गिरिसरिदुपलघोलनाकल्पेनानाभोगनिर्वर्तितेन यथाप्रवृत्तकरणेन करणं परिणामोऽत्रेतिवचनादध्यवसायविशेषरूपेण ज्ञानावरणीयादिकर्माण्यायुर्वर्जानि सर्वाण्यपि पल्योपमासंख्येयभागन्यूनैकसागरोपमकोटीकोटीस्थितिकानि करोति । अत्र चान्तरे जीवस्य कर्मपरिणामजनितो घनरागद्वेषपरिणामरूपः कर्कशनिबिडचिरप्ररूढगुपिलवल्कग्रन्थिवद्दुर्भेदोऽभिन्नपूर्वो ग्रन्थिर्भवति । तदुक्तम्–'**तहि अंतरंमि जीवस्स । हवइ हु अभिन्नपुव्वो, गंठी एवं जिणा बेंति ॥ गंठित्ति सुदुब्भेओ, कक्खडघणरूढगूढगंठि व्व । जीवस्स कम्मजणिओ, घणरागद्दोसपरिणामो ॥१॥**" इति । इमं च ग्रन्थिं यावदभव्या अपि यथाप्रवृत्तकरणेन कर्म क्षपयित्वाऽनन्तशः समागच्छन्ति । यदुक्तमावश्यकटीकायाम्–"**अभव्यस्यापि कस्यचिद्यथाप्रवृत्तकरणतो ग्रन्थिमासाद्यार्हदादिविभूतिदर्शनतः प्रयोजनान्तरतो वा प्रवर्तमानस्य श्रुतसामायिकलाभो भवति न शेषलाभ इति ।**" एतदनन्तरं पुनः कश्चिदेव महात्मा समासन्नपरमनिर्वृतिसुखः समुल्लसितप्रचुरदुर्निवारवीर्यप्रसरो निशितकुठारधारयेव परमविशुद्ध्या यथोक्तस्वरूपस्य ग्रन्थेर्भिदां विधाय

मिथ्यात्वमोहनीयकर्मस्थितेरन्तर्मुहूर्तमुदयक्षणादुपरि अतिक्रम्यानिवृत्तिकरणसंज्ञितेन विशुद्धिविशेषेणान्तर्मुहूर्तकालप्रमाणमन्तरकरणं करोति । अत्र यथाप्रवृत्तकरणापूर्वकरणानिवृत्तिकरणानामयं क्रमः–"**जा गंठो ता पढमं, गंठि समइच्छओ हवइ बीय । अनियट्टीकरणं पुण, सम्मत्तपुरक्खडे जीवे ॥१॥**" '**गंठि समइच्छओ**' इति ग्रन्थिं समतिक्रामतो भिन्दानस्येति यावत्, '**सम्मत्त पुरक्खडे**' इति सम्यक्त्वं पुरस्कृतं येन तस्मिन् आसन्नसम्यक्त्वे जीवेऽनिवृत्तिकरणं भवतीत्यर्थः । तस्मिंश्चान्तरकरणे कृते सति कर्मणः स्थितिद्वयं भवति । अन्तरकरणादधस्तनी प्रथमा स्थितिरन्तर्मुहूर्तप्रमाणा । तस्मादेव चान्तरकरणादुपरितनी द्वितीया । स्थापना चेयम्–△▭ । तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव । अन्तर्मुहूर्तेन पुनस्तस्यामपगतायामन्तरकरणप्रथमसमय एवौपशमिकं सम्यक्त्वमवाप्नोति मिथ्यात्वदलिकवेदनाभावात् । यथा हि वनदावानलः पूर्वदग्धेन्धनं वनमूषरं वा देशमवाप्य विध्यायति तथा मिथ्यात्ववेदनवनदवोऽपि अन्तरकरणमवाप्य विध्यायति, तथा च सति तस्यौपशमिकसम्यक्त्वलाभः । उक्तं च–"**ऊसरदेसं दड्ढिल्लयं च विज्झाइ वणदवो पप्प । इय मिच्छस्स अणुदए, उवसमसम्मं लहइ जीवो ॥१॥**" इति । तस्यां चान्तर्मौहूर्तिक्यामुपशान्ताद्धायां परमनिधिलाभकल्पायां जघन्येन समयमात्रशेषायामुत्कर्षतः षडावलिकाशेषायां सत्यां कस्यचिन्महाविभीषिकोत्थानकल्पोऽनन्तानुबन्धिकषायोदयो भवति, तदुदये च सासादनसम्यग्दृष्टिगुणस्थानके वर्तते, उपशमश्रेणिप्रतिपतितो वा कश्चित्सासादनत्वं याति । तदुत्तरकालं चावश्यं मिथ्यात्वोदयादसौ मिथ्यादृष्टिर्भवतीति ॥ तथा सम्यक् च मिथ्या च दृष्टिर्यस्यासौ सम्यग्मिथ्यादृष्टिः तस्य गुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानम् । इहानन्तराभिहितविधिना लब्धेनौपशमिकसम्यक्त्वेनौषधविशेषकल्पेन मदनकोद्रवस्थानीयमिथ्यात्वमोहनीयं कर्म शोधयित्वा त्रिधा करोति । तद्यथा–शुद्धम् १, अर्द्धविशुद्धम् २, अविशुद्धं ३ चेति । स्थापना–△△△ ॥ तत्र त्रयाणां पुञ्जानां मध्ये यदाऽर्द्धविशुद्धः पुञ्ज उदेति तदा तदुदयवशाज्जीवस्यार्द्धविशुद्धमर्हदभिहिततत्त्वश्रद्धानं भवति, तेन तदाऽसौ सम्यग्मिथ्यादृष्टिगुणस्थानमन्तर्मुहूर्तकालं स्पृशति । तत ऊर्ध्वमवश्यं सम्यक्त्वं मिथ्यात्वं वा गच्छतीति ॥ तथा विरमति स्म सावद्ययोगेभ्यो निवर्तते स्मेति विरतः । "**गत्यर्थकर्मण्याधारे च**" इति कर्तरि क्तप्रत्ययः । यथा शयितो देवदत्त इति । अत्र न विरतोऽविरतः । यद्वा '**नपुंसके भावे क्तः**' इति नपुंसके भावे क्तप्रत्यये विरमणं विरतं सावद्ययोगप्रत्याख्यानम्, नास्य विरतमस्तीत्यविरतः स चासौ सम्यग्दृष्टिश्चेत्यविरतसम्यग्दृष्टिः । एष हि अविरतिप्रत्ययं दुरन्तनरकादिदुःखफलं कर्मबन्धम् । सावद्ययोगविरतिं च परममुनिप्रणीतां सिद्धिसौधाध्यारोहणनिःश्रेणिकल्पां जानन्नपि न विरतिमभ्युपगच्छति, न च तत्पालनाय यतते अप्रत्याख्यानावरणकषायोदयविघ्नितत्वात् । उक्तं च–

"**बंधं अविरइहेउं, जाणंतो रागदोसदुक्खं च । विरइसुह इच्छंतो, विरइं काउं च असमत्थो ॥१॥ एस असंजयसम्मो, निंदंतो पावकम्मकरणं च । अहिगय-जीवाजीवो, अचलियदिट्ठी चलियमोहो ॥२॥**" सम्यग्दृष्टित्वं चास्य पूर्वव्यावर्णितान्तरकरणकालसंभविनि औपशमिकसम्यक्त्वे विशुद्धदर्शनमोहपुञ्जोदयसंभविनि क्षायोपशमिकसम्यक्त्वे वा सर्वदर्शनमोहनीयक्षयसमुत्थक्षायिकसम्यक्त्वे वा सति द्रष्टव्यम्, तस्य गुणस्थानमविरतसम्यग्दृष्टिगुणस्थानम् ॥ तथा सर्वसावद्ययोगस्य देशे एकव्रतविषयस्थूलसावद्ययोगादौ सर्वव्रतविषयानुमतिवर्जसावद्ययोगान्ते विरतं विरतिर्यस्यासौ देशविरतः । सर्वसावद्ययोगविरतिस्त्वस्य नास्ति प्रत्याख्यानावरणकषायोदयात् । सर्वविरतिरूपं हि प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणाः । उक्तं च—"**सम्मद्दंसणसहिओ, गिण्हंतो विरइमप्पसत्तीए । एगव्वयाइचरिमो, अणुमइमित्तो त्ति देसजई ॥१॥ परिमियमुवसेवंतो, अपरिमियमणंतयं परिहरंतो । पावइ परम्मि लोए, अपरिमियमणंतयं सोक्खं ॥२॥** देशविरतस्य गुणस्थानं देशविरतगुणस्थानम् ॥ तथा संयच्छति स्म सम्यगुपरमति स्मेति संयतः । "**गत्यर्थाकर्मकपिबभुजेः**" इति कर्तरि क्तप्रत्ययः । प्रमाद्यति स्म संयमयोगेषु सीदति स्मेति प्रमत्तः, पूर्ववत्कर्तरि क्तप्रत्ययः । यद्वा प्रमदनं प्रमत्तं प्रमादः, मदिराकषायविषयादिभेदात्पञ्चप्रकारः, प्रमत्तमस्यास्तीति प्रमत्तः प्रमादवान्, "**अभ्रादिभ्यः**" इति मत्वर्थीयोऽप्रत्ययः । प्रमत्तश्चासौ संयतश्च प्रमत्तसंयतः तस्य गुणस्थानं प्रमत्तसंयतगुणस्थानम् । विशुद्ध्यविशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः । तथाहि—देशविरतगुणापेक्षयैतद्गुणानां विशुद्धिप्रकर्षोऽविशुद्ध्यपकर्षश्च । अप्रमत्त संयतगुणस्थानापेक्षया तु विपर्ययः । एवमन्येष्वपि गुणस्थानकेषु पूर्वोत्तरापेक्षया विशुद्ध्यविशुद्धिप्रकर्षापकर्षयोजना द्रष्टव्या ॥ तथा न प्रमत्तोऽप्रमत्तः, यद्वा नास्ति प्रमत्तमस्येत्यप्रमत्तः स चासौ संयतश्च तस्य गुणस्थानमप्रमत्तसंयतगुणस्थानम् ॥

तथा अपूर्वमभिनवं प्रथममिति यावत्करणं स्थितिघात १ रसघात २ गुणश्रेणि ३ गुणसंक्रम ४ स्थितिबन्धानां ५ पञ्चानामर्थानां निर्वर्तनं यस्यासावपूर्वकरणः । तथाहि—बृहत्प्रमाणाया ज्ञानावरणीयादिकर्मस्थितेरपवर्तनाकरणेन खण्डनमल्पीकरणं स्थितिघात उच्यते । रसस्यापि च प्रचुरीभूतस्य सतोऽपवर्तनाकरणेन खण्डनमल्पीकरणं रसघातः । एतौ च द्वावपि पूर्वगुणस्थानकेषु विशुद्धेरल्पत्वादल्पावेव कृतवान् । अत्र पुनर्विशुद्धेरतीवप्रकृष्टत्वात् बृहत्प्रमाणतयाऽपूर्वाविमौ करोति । तथोपरितनस्थितेर्विशुद्धिवशादपवर्तनाकरणेनावतारितस्य दलिकस्यान्तर्मुहूर्तप्रमाणमुदयक्षणादुपरि क्षिप्रतरक्षपणाय प्रतिक्षणमसंख्येयगुणवृद्ध्या यद्विरचनं सा गुणश्रेणिः । स्थापना चेयम्—★ ॥ इमां च पूर्वगुणस्थानकेष्वविशुद्धत्वात्कालतो द्राघीयसीमप्रथीयसीं च दलिकस्यापवर्तनाद्विरचितवान् । इह पुनर्विशुद्धतरत्वादपूर्वां कालतो ह्रस्वतरां पृथुतरां च प्रभूततरदलिक-

स्यापवर्तनाद्विरचयतीति । तथा बध्यमानशुभप्रकृतिष्वबध्यमानाशुभप्रकृतिदलिकस्य प्रतिसमयमसंख्येयगुणवृद्धया विशुद्धिवशान्नयनं गुणसंक्रमः, तमपीह पूर्वं करोति । तथा स्थितिं कर्मणां प्राग् अशुद्धत्वाद्द्राघीयसीं बद्धवान्, इह तु तामपूर्वां विशुद्धिवशाद् ह्रसीयसीं बध्नातीति । एषं चापूर्वकरणो द्विधा, क्षपक उपशमकश्च । क्षपणोपशमार्हत्वाच्चैवमुच्यते । राज्यार्हकुमारराजवत् । न पुनरसौ क्षपयति उपशमयति वा, तस्य गुणस्थानमपूर्वकरणगुणस्थानम् । अस्मिंश्च गुणस्थानके कालत्रयवर्तिनो नानाजीवानाश्रित्य प्रतिसमयं यथोत्तरमधिकवृद्धयाऽसंख्येयलोकाकाशप्रमाणान्यध्यवसायस्थानानि भवन्ति । तथाहि—येऽस्य गुणस्थानकस्य प्रथमसमयं प्रतिपद्यन्ते प्रतिपत्स्यन्ते च तान् सर्वानपेक्ष्य जघन्यादीन्युत्कृष्टान्तान्यसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि लभ्यन्ते. कचित्कदाचित्केषांचित्तेषां प्रथमसमयवर्तिनां परस्परमध्यवसायस्थाननानात्वस्यापि भावात् । तस्य च नानात्वस्यैतावत एव केवलवेदिनोपलब्धत्वात् । अत एव चेदमपि न वाच्यम्, कालत्रयवर्तिनामेतद्गुणस्थानकप्रथमसमयप्रतिपत्तृणामानन्त्यात्परस्परमध्यवसायस्थाननानात्वाच्चानन्तान्यध्यवसायस्थानानि प्राप्नुवन्तीति बहूनां प्राय एकाध्यवसायस्थानवर्तित्वाद्द्वितीयसमये तदन्यान्यधिकतराण्यध्यवसायस्थनानि लभ्यन्ते तृतीयसमये तदन्यान्यधिकतराणी चतुर्थसमये तदन्यान्यधिकतराणीत्येवं यावच्चरमसमयः । एतानि च स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति । स्थापना ॥

| | |
|---|---|
| ० | ० ० ० ० ० ० |
| ० | ० ० ० ० ० |
| ० | ० ० ० ० |
| ० | ० ० ० |

ननु द्वितीयादिसमयेष्वध्यवसायस्थानानां वृद्धौ किं कारणम् ?, उच्यते, तथास्वभावविशेषः । एतद्गुणस्थानकं प्रविपत्तारो हि प्रतिसमयं विशुद्धिप्रकर्षमासादयन्तः खलु स्वभावत एव ऊर्ध्वमूर्ध्वतरं गच्छन्तो बहवो विभिन्नेषु विभिन्नेष्वध्यवसायस्थानेषु वर्तन्त इति । अत्र च प्रथमसमयजघन्याध्यवसायस्थानात्प्रथमसमयोत्कृष्टमध्यवसायस्थानमनन्तगुणविशुद्धम् । प्रथमसमयोत्कृष्टाध्यवसायस्थानाद्द्वितीयसमये जघन्यमध्यवसायस्थानमनन्तगुणविशुद्धमिति । तस्मात्तदुत्कृष्टमनन्तगुणविशुद्धमित्येवं यावद्द्विचरमसमयोत्कृष्टाध्यवसायस्थानाच्चरमसमयजघन्यमध्यवसायस्थानमनन्तगुणविशुद्धम् । तस्मादपि तदुत्कृष्टमनन्तगुणविशुद्धम् । इत्येकसमयगतानि चामून्यध्यवसायस्थानानि परस्परमनन्तभागवृद्धा १ ऽसंख्यातभागवृद्ध २ संख्यातभागवृद्ध ३ संख्येयगुणवृद्धा ४ ऽसंख्येयगुणवृद्धा ५ ऽनन्तगुणवृद्ध ६ रूपषट्स्थानकपतितानि । युगपदेतद्गुणस्थानकप्रविष्टानां च परस्परमध्यवसायस्थानस्य व्यावृत्तिलक्षणा निवृत्तिरप्यस्ति, यथोक्तमनन्तरमितिकृत्वा निवृत्तिगुणस्थानकमप्येतदुच्यते । उक्तं च—'**नियट्टि अनियट्टि बायरे सुहुमे**' इति इदानीमनिवृत्तिबादरसंपरायगुणस्थानकमुच्यते—तत्र युगपद्गुणस्थानकं प्रतिपन्नानां बहूनामपि जीवानामन्योऽन्यमध्यवसायस्थानस्य व्यावृत्तिर्निवृत्तिः सा नास्त्यस्येत्यनिवृत्तिः । समकालमेतद्गुणस्थानकमारूढस्यापरस्य यस्मिन् समये यदध्यवसायस्थानमसावपि विवक्षितः

पुरुषस्यास्मिन् समये तदेवाध्यवसायस्थानमनुवर्तत इति यावत् । संपरैति पर्यटति संसारमनेनेति संपरायः कषायोदयः, बादरः सूक्ष्मकिट्टीकृतसंपरायापेक्षया स्थूरः संपरायो यस्य स बादरसंपरायः, अनिवृत्तिश्चासौ बादरसंपरायश्च तस्य गुणस्थानं अनिवृत्तिबादरसंपरायगुणस्थानम् । तस्यां चानिवृत्तिबादरसंपरायगुणस्थानकाद्धायामान्तर्मौहूर्तिक्या प्रथमसमयादारभ्य प्रतिसमयमनन्तगुणविशुध्दं यथोत्तरमध्यवसायस्थानं भवति । यावन्तश्चान्तर्मुहूर्ते समयास्तावन्त्येवाध्यवसायस्थानानि तत्प्रविष्टानां भवन्ति नाधिकानि, एकसमयप्रविष्टानां सर्वेषामप्येकाध्यवसायस्थानत्वात् । स चानिवृत्तिबादरो द्वेधा, क्षपक उपशमकश्च । क्षपयत्युपशमयति वा मोहनीयं कर्मेतिकृत्वा ॥ तथा सूक्ष्मः किट्टीकृतः संपरायो लोभकषायोदयरूपो यस्य स सूक्ष्मसंपरायः । स द्विधा, क्षपक उपशमकश्च । क्षपयति उपशमयति वा लोभमेकमितिकृत्वा तस्य गुणस्थानं सूक्ष्मसंपरायगुणस्थानम् ॥ तथा छादयति ज्ञानादिगुणमात्मन इति छद्म ज्ञानावरणीयादिघातिकर्मोदयः। छद्मनि तिष्ठतीति च्छद्मस्थः । च स सरागोऽपि भवतीति तद्व्यवच्छेदार्थं वीतरागग्रहणम् । वीतो विगतो रागो मायालोभकषायोदयरूप उपलक्षणत्वादस्य द्वेषोऽपि क्रोधमानोदयरूपो यस्यासौ वीतरागः स चासौ छद्मस्थश्च वीतरागच्छद्मस्थः । स च क्षीणकषायोऽपि भवति तस्यापि यथोक्तरागापगमात्, अतस्तद्व्यवच्छेदार्थमुपशान्तकषायग्रहणम् । उपशान्ता उपशमिता विद्यमाना एव सन्तः संक्रमणोद्वर्तनादिकरणविपाकप्रदेशोदयायोग्यत्वेन व्यवस्थापिताः कषायाः प्राङ्निरूपितशब्दार्था येन स उपशान्तकषायः स चासौ वीतरागच्छद्मस्थश्च तस्य गुणस्थानमुपशान्तकषायवीतरागच्छद्मस्थगुणस्थानम् । एतद्विनेयजनानुग्रहाय विशेषतो मूलत एव भाव्यते । तत्र प्रथमतोऽनन्तानुबन्धिकषायानविरतो देशविरतः प्रमत्तोऽप्रमत्तो वोपशमय्य ततो दर्शनमोहनीयत्रितयमुपशमयति । कथमनन्तानुबन्धिनामुपशमनम् ? इति चेत्, उच्यते, योऽविरतादीनामन्यतमोऽनन्तानुबन्धिन उपशमयितुं प्रयतते सोऽन्यतमस्मिन् योगे वर्तमानोऽवश्यं तेजःपद्मशुक्ललेश्याऽन्यतमलेश्यायुक्तः साकारोपयोगोपयुक्तोऽन्तःसागरोपमकोटीकोटीस्थितिसत्कर्मा प्रकृतीश्च बध्नाति परिवर्तमानाः शुभा एव। प्रतिसमयं चाशुभानां कर्मणामनुभागमनन्तगुणहान्या करोति, शुभानां चानन्तगुणवृद्ध्या । स्थितिबन्धेऽपि च पूर्णे पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमासंख्येयभागन्यूनं करोति । करणकालात्पूर्वमपि चान्तर्मुहूर्तं कालं यावदवदायमानचित्तसंततिरवतिष्ठते । स्थित्वा च तावन्तं कालमान्तर्मौहूर्तिकानि त्रीणि करणानि करोति । तद्यथा— यथाप्रवृत्तकरणं १ मपूर्वकरणं २ मनिवृत्तिकरणं ३ च । चतुर्थी तूपशान्ताद्धा । तत्र यथाप्रवृत्तकरणे प्रविशन् प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रविशति, न च तत्र स्थितिघातं रसघातं गुणश्रेणिं गुणसंक्रमणं वा करोति तद्योग्यविशुद्ध्यभावात् । तस्यां चान्तर्मौहूर्तिक्यां यथाप्रवृत्तकरणाद्धायां कालत्रयवर्तिनानाजीवापेक्षया प्रतिसमयमसंख्येयलोकाकाशप्रदेशप्रमाणानि विशुद्धि-

स्थानानि भवन्ति । प्रतिसमयं चैतानि सर्वाण्यपि षट्स्थानपतितानि । तत्र प्रथमसमये या जघन्या विशुद्धिः सा सर्वस्तोका । ततो द्वितीयसमये जघन्या विशुद्धिरनन्तगुणा । ततोऽपि तृतीयसमये जघन्या विशोधिरनन्तगुणा । एवं तावद्द्रष्टव्यं यावत्तस्य यथाप्रवृत्तकरणस्यासंख्येयो भागो गतो भवति । ततोऽसंख्येयभागगतचरमसमयजघन्यविशुद्धेः सकाशात्प्रथमसमये उत्कृष्टा विशुद्धिरनन्तगुणा । ततोऽपि यतो जघन्यविशुद्धिस्थानाभिवृत्तस्तत उपरितनं जघन्यं स्थानमनन्तगुणम् । ततो द्वितीयसमये उत्कृष्टा विशुद्धिरनन्तगुणा । तत उपरितनं जघन्यं स्थानमनन्तगुणम् । ततस्तृतीयसमये उत्कृष्टा विशुद्धिरनन्तगुणा । एवमुपदर्शितक्रमेण जघन्यमुत्कृष्टं चामुञ्चता सताऽनन्तगुणवृद्धया श्रेण्या तावज्ज्ञातव्यं यावद्यथाप्रवृत्तकरणस्यान्तिमं जघन्यं विशुद्धिस्थानम् । ततः शेषाण्युत्कृष्टानि स्थानानि सर्वाण्यप्यनन्तगुणवृद्धया श्रेण्या नेतव्यानि यावद्यथाप्रवृत्तकरणस्य चरमसमये उत्कृष्टं विशुद्धिस्थानम् । भणितं यथाप्रवृत्तकरणम् ॥ इदानीमपूर्वकरणमुच्यते-

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १२ | ० | ० | ० | ० | ० | ० | ० | ० | १६ |
| १० | ० | ० | ० | ० | ० | ० | ० | ० | १५ |
| ८ | ० | ० | ० | ० | ० | ० | ० | ० | १४ |
| ६ | ० | ० | ० | ० | ० | ० | ० | | १३ |
| ४ | ० | ० | ० | ० | ० | ० | | | ११ |
| ३ | ० | ० | ० | ० | ० | | | | ९ |
| २ | ० | ० | ० | ० | | | | | ७ |
| १ | ० | ० | ० | | | | | | ५ |

तत्रापूर्वकरणस्य प्रतिसमयमसंख्येयलोकाकाशप्रदेशप्रमाणानि विशुद्धिस्थानानि भवन्ति, तानि च प्रतिसमयं षट्स्थानपतितानि । तत्र प्रथमसमये जघन्या विशुद्धिः सर्वस्तोका, सा च यथाप्रवृत्तकरणचरमसमयोत्कृष्टविशुद्धिस्थानादनन्तगुणा । ततोऽपि चापूर्वकरणस्य प्रथमसमय एवोत्कृष्टा विशुद्धिरनन्तगुणा । ततोऽपि च द्वितीयसमये जघन्या विशुद्धिरनन्तगुणा । एवं जघन्यमुत्कृष्टं चानन्तगुणवृद्धया श्रेण्या तावन्नेतव्यं यावदपूर्वकरणस्य चरमसमये जघन्यविशुद्धित उत्कृष्टा विशुद्धिरनन्तगुणा । स्थापना चेयम्-

९००००००००१०
७०००००००८
५००००००६
३०००००४
१००००२

॥ अस्मिंश्चापूर्वकरणे प्रविशन् स्थितिघातं रसघातं गुणश्रेणिं गुणसंक्रमं स्थितिबन्धं च युगपदारभते । तत्र स्थितिघातो नाम सत्कर्मणोऽग्रिमभागादुत्कर्षेण सागरोपमशतपृथक्त्वमात्रां जघन्यतः पल्योपमासंख्येयभागमात्रां स्थितिं खण्डयति तद्दलिकं चाधस्ताद्याः स्थितीर्न खण्डयिष्यति तत्र प्रक्षिपति । अन्तर्मुहूर्तमात्रकालेन तद्दलिकं खण्डयते । ततः पुनरपि ततोऽधस्तादुपदर्शितक्रमेणैव पल्योपमासंख्येयभागमात्रं स्थितिखण्डमुत्किरति निक्षिपति च । एवमपूर्वकरणाद्धायामनेकानि स्थितिखण्डसहस्राणि भवन्ति । तस्य चापूर्वकरणस्य प्रथमसमये यत्स्थितिसत्कर्मासीत्तत्तस्यैव चरमसमये संख्येयगुणहीनं जातम् । अधुनाऽनुभागघातो भण्यते-तत्र यदशुभप्रकृतीनामनुभागसत्कर्म तस्यानन्ततमभागमपहाय शेषस्य प्रतिसमयमनन्ताननुभागभागान् विनाशयन् साकल्यतोऽन्तर्मुहूर्तमात्रेण विनाशमापादयति । ततः पुनरपि तस्यानन्तरमुक्तस्यानन्ततमभागस्यानन्तभागं विमुच्य शेषं प्रतिसमयमनन्ताननुभागभागान् विनाशयन् साकल्यतोऽनन्तर्मुहूर्तमात्रेण विनाशयति । ततः पुनरपि प्रागुक्तस्यानन्तभागस्यानन्तभागं मुक्त्वा शेषमन्तर्मुहूर्तमात्रेण पूर्वोक्तविधिना साकल्येन विनाशयति ।

कस्थितिखण्डोत्किरणकालेऽनेकान्यनुभागखण्डसहस्राणि व्यतिक्रामन्ति । स्थितिखण्डसहस्रैस्त्वपूर्वकरणं परिसमाप्यते । तथा गुणश्रेणिं कालतोऽपूर्वकरणकालतोऽनिवृत्तिकरणकालतश्च विशेषाधिकां करोति । तत्रोदयक्षणादन्तर्मुहूर्तप्रमाणाभ्यः स्थितिभ्य उपरितनीनां स्थितीनां संबन्धिदलिकमादायोदयावलिकात उपरि वर्तमानासु स्थितिष्वन्तर्मुहूर्तप्रमाणासु मध्ये निक्षिपति । यच्च प्रथमसमयगृहीतं दलिकं निक्षिप्यते तत्प्रथमस्थितौ स्तोकम्, द्वितीयस्थितावसंख्येयगुणम्, तृतीयस्थितावसंख्येयगुणम्, एवं यावन्निक्षेपविषयभूतान्तर्मुहूर्तचरमस्थितिः । द्वितीयसमयेऽपि यद्दलिकमन्तर्मुहूर्तादुपरितनस्थितिभ्यो गृह्यते, ततः प्रथमसमयगृहीतदलिकादसंख्येयगुणम्, तदपि निक्षिप्यमाणं पूर्ववदेवावगन्तव्यम् । एवं तृतीयादिसमयेष्वपि ग्रहणनिक्षेपौ द्रष्टव्यौ । विपाकानुभवतश्च क्षीयमाणास्वधस्तनस्थितिषु तत उपर्युपरितरमारभ्योदयावलिकात ऊर्ध्वं शेषासु स्थितिषु शेषसमयगृहीतं दलिकं निक्षिप्यते इति । अधुना गुणसंक्रमो भण्यते—तत्रापूर्वकरणस्य प्रथमसमये यदनन्तानुबन्धिकषायसंबन्धिदलिकं परप्रकृतौ संक्रमयति तत्स्तोकम् । ततो द्वितीयसमये संक्रम्यमाणमसंख्येयगुणम् । तृतीयसमयेऽसंख्येयगुणम् । एवं यावदपूर्वकरणाद्धायाश्चरमसमयः । तथाऽपूर्वकरणस्य प्रथमसमयेऽन्य एव स्थितिबन्ध आरभ्यते । स्थितिबन्धस्थितिखण्डे च युगपदारभ्येते युगपदेव च निष्ठां यातः । एवमेते पञ्च पदार्था अस्मिन्नपूर्वकरणे युगपदारभ्यन्ते । गतमपूर्वकरणम् । इदानीमनिवृत्तिकरणमुच्यते-अनिवृत्तिशब्दार्थभावना प्राग्वदवगन्तव्या । अत्रापि पूर्वोक्ताः स्थितिघातादयः पञ्च पदार्था युगपदारभ्यन्ते । तस्याश्चानिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्स्वनन्तानुबन्धिनां कषायाणामन्तरकरणं करोति । तच्चैवम्-अधस्तादावलिकामात्रं मुक्त्वा तत उपरिष्टादन्तर्मुहूर्तमात्रं स्थितिखण्डमुत्किरति । उत्कीर्यमाणं च दलिकं बध्यमानासु परप्रकृतिषु संक्रमयति । अन्तर्मुहूर्तमात्रकालेन च स्थितिबन्धकालसमेन तदन्तरकरणं परिसमाप्यते । तस्मिन्नेव च समये प्रथमस्थित्यावलिकागतं च दलिकं स्तिबुक[1]-संक्रमेण वेद्यमानासु परप्रकृतिषु प्रक्षिपति । उपरितनस्थितिगतं च [2]दलिकमेवमुपशमयति-प्रथमसमये स्तोकम् । द्वितीयसमये ततोऽसंख्येयगुणम् । तृतीयसमये ततोऽसंख्येयगुणम् । एवमन्तर्मुहूर्तमात्रेणानन्तानुबन्धिनः साकल्येनोपशमयति ।

अन्ये पुनराहुः—नैवानन्तानुबन्धिनामुपशमना भवति, किन्तु विसंयोजनैव, सा पुनरेवम्—इहाविरतादयः क्षायोपशमिकसम्यग्दृष्टयश्चातुर्गतिका अपि । तद्यथा—नारका देवा अविरतसम्यग्दृष्टयः, तिर्यञ्चोऽविरतसम्यग्दृष्टयो देशविरता वा, मनुजा अविरतसम्यग्दृष्टयो देशविरताः सर्वविरता वा, यथासंभवं विशुद्धिपरिणामेन परिणममाना अनन्तानुबन्धिनां विसंयोजनार्थं यथाप्रवृत्तादीनि

---

१ अनुदीर्णमुदीर्णान्तस्तुल्यकालं प्रतिपक्षणम् । दलिकं संक्रमं याति येन स स्तिबुको मतः ॥१॥ २ "दलिकमुपशमयितुमारमते । तच्चैवम्" इत्यपि पाठः ॥

त्रीणि करणानि कुर्वन्ति। तत्र यथाप्रवृत्तमपूर्वं च प्राग्वत्। अनिवृत्तिकरणं पुनः प्राप्तः सन् अनन्तानुबन्धिनां स्थितिमुद्वलनासंक्रमेणोद्वलयन् तावदुद्वलयति यावत्पल्योपमासंख्येयभागामात्रं स्थितम्। तदपि च बध्यमानासु मोहनीयप्रकृतिषु परिणमयति प्रथमसमये स्तोकम्, द्वितीयसमयेऽसंख्येयगुणम्। एवं यावच्चरमसमये आवलिकागतं मुक्त्वा शेषं सर्वं संक्रमेण द्विचरमसमयपरिणमितादसंख्येयगुणं परिणमयति। आवलिकागतं पुनः स्तिबुकसंक्रमेण वेद्यमानासु प्रकृतिषु संक्रमयति। भणिता अनन्तानुबन्धिनां विसंयोजना। साम्प्रतं दर्शनत्रिकस्योपशमना भण्यते—तत्र मिथ्यात्वस्योपशमको द्विधा, मिथ्यादृष्टिः क्षायोपशमिकसम्यग्दृष्टिश्च। इतरयोस्तु द्वयोरपि क्षायोपशमिकसम्यग्दृष्टिरेव। तत्र मिथ्यादृष्टेर्मिथ्यात्वोपशमना यथा कर्मप्रकृतिसंग्रहण्याम् इह तु ग्रन्थगौरवभयान्नोच्यते। क्षायोपशमिकसम्यग्दृष्टेर्दर्शनत्रिकोपशमनाविधिः पुनरयम्—इह क्षायोपशमिकसम्यग्दृष्टिः संयमे वर्तमानः सन्नन्तर्मुहूर्तमात्रेण दर्शनत्रिकमुपशमयति। उपशमयतश्च करणत्रिकविधिः पूर्ववत्तावद्वक्तव्यः यावदनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्स्वन्तरकरणम्। अन्तरकरणं च कुर्वन् वेदकसम्यक्त्वस्य प्रथमस्थितिमन्तर्मुहूर्तमात्रां स्थापयति। मिथ्यात्वमिश्रयोश्चावलिकामात्राम्। उत्कीर्यमाणं च दलिकं त्रयाणामपि सम्यक्त्वस्य प्रथमस्थितौ प्रक्षिपति। मिथ्यात्वमिश्रयोः प्रथमस्थितिदलिकं सम्यक्त्वस्य प्रथमस्थितिदलिकमध्ये स्तिबुकसंक्रमेण संक्रमयति। सम्यक्त्वस्य पुनः प्रथमस्थितौ विपाकानुभवतः क्रमेण क्षीणायां सत्यामुपशमसम्यग्दृष्टिर्भवति। उपरितनदलिकस्य चोपशमना त्रयाणामपि मिथ्यात्वादीनामनन्तानुबन्धिनामुपरितनस्थितिदलिकस्येवावसेया। एवमुपशान्तदर्शनमोहनीयत्रिकश्चारित्रमोहनीयमुपशमयितुकामः पुनरपि यथाप्रवृत्तादीनि त्रीणि करणानि करोति। करणानां च स्वरूपं प्राग्वदवगन्तव्यम्। केवलमिह यथाप्रवृत्तकरणमप्रमत्तगुणस्थाने भवति। अपूर्वकरणमपूर्वकरणगुणस्थानके। अत्रापि स्थितिघातादयः पूर्ववदेव। अपूर्वकरणाद्धायाश्च संख्येयभागे गते सति निद्राप्रचलयोर्बन्धव्यवच्छेदः। ततः प्रभूतेषु स्थितिखण्डसहस्रेषु गतेषु सत्स्वपूर्वकरणाद्धायाः संख्येया भागा गता भवन्ति। अस्मिश्चान्तरे देवगति १ देवानुपूर्वी २ पञ्चेन्द्रियजाति ३ वैक्रिया ४ ऽऽहारक ५ तैजस ६ कार्मण ७ समचतुरस्र ८ वैक्रिया ९ ऽऽहारकाङ्गोपाङ्ग १० वर्णादिचतुष्का १४ ऽगुरुलघू १५ पघात १६ पराघातो १७ च्छ्वास १८ त्रस १९ बादर २० पर्याप्त २१ प्रत्येक २२ प्रशस्तविहायोगति २३ स्थिर २४ शुभ २५ सुभग २६ सुस्वरा २७ ऽऽदेय २८ निर्माण २९ तीर्थकर ३० संज्ञितानां त्रिंशतः प्रकृतीनां बन्धव्यवच्छेदः। ततः स्थितिखण्डपृथक्त्वे गते सत्यपूर्वकरणाद्धायाश्चरमसमये हास्यरतिभयजुगुप्सानां बन्धव्यवच्छेदः। उदयव्यवच्छेदश्च सर्वकर्मणां देशोपशमनानिधत्तिनिकाचनाकरणव्यवच्छेदश्च। ततोऽनन्तरसमयेऽनिवृत्तिकरणे प्रविशति। तत्रापि स्थितिघातादीनि पूर्व-

वत्करोति। ततोऽनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु दर्शनसप्तकशेषाणामेकविंशतेर्मोहनीयप्रकृतीनामन्तरकरणं करोति। तत्र यस्य वेदस्य संज्वलनस्य चोदयोऽस्ति तयोः स्वोदयकालप्रमाणां प्रथमस्थितिं करोति शेषाणां त्वेकादशकषायाणामष्टानां च नोकषायाणामावलिकामात्राम्। वेदत्रिकसंज्वलनचतुष्टयस्य तूदयकालप्रमाणमिदम्—स्त्रीवेदनपुंसकवेदयोरुदयकालः सर्वस्तोकः, स्वस्थाने तु परस्परं तुल्यः, ततः पुरुषवेदस्यासंख्येयगुणः, तस्मादपि संज्वलनक्रोधस्योदयकालो विशेषाधिकः, तस्मादपि मानस्य विशेषाधिकः एवं यथोत्तरं मायालोभयोरुदयकालो विशेषाधिको वाच्यः। अत एवान्तरकरणमुपरितनभागापेक्षया समम्, अधोभागापेक्षया तूक्तनीत्या विषमम्। अन्तरकरणविधानकालश्च स्थितिघाताभिनवकर्मबन्धकालसमानः। अन्तरकरणगतस्य चोत्कीर्यमाणस्य दलिकस्य प्रक्षेपविधिरयम्—यस्य कर्मणस्तदानुभवनं बन्धश्च भवति तस्यान्तरकरणसत्कप्रदेशाग्रं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, यथा पुरुषवेदोदयारूढः पुरुषवेदस्य। यस्य पुनरनुभवनमस्ति, न तु बन्धः, तस्यान्तरकरणसत्कं दलिकं प्रथमस्थितौ प्रक्षिपति, यथा स्त्रीनपुंसकवेदोदयारूढः स्त्रीनपुंसकवेदयोः। यस्य पुनरुदयो नास्ति, बन्धः पुनरस्ति, तस्यान्तरकरणसत्कं दलिकं द्वितीयस्थितौ प्रक्षिपति, यथा संज्वलनक्रोधोदयारूढः शेषसंज्वलनानां। यस्य पुनरुदयो बन्धश्च नास्ति तस्यान्तरकरणसत्कं प्रदेशाग्रं परप्रकृतिषु प्रक्षिपति, यथा द्वितीयतृतीयकषायाणाम्। इहानिवृत्तिकरणे बहु वक्तव्यं तद्ग्रन्थगौरवभयान्नोच्यते। केवलं विशेषार्थिना कर्मप्रकृतिसंग्रहणिर्निरीक्षितव्या। अन्तरकरणं च कृत्वा ततो नपुंसकवेदमन्तर्मुहूर्तमात्रेणोपशमयति। उपशमनाविधिः प्राग्वत्। ततोऽन्तर्मुहूर्तमात्रेण स्त्रीवेदम्। ततोऽन्तर्मुहूर्तेन हास्यादिषट्कम्। तस्मिंश्चोपशान्ते तत्समयमेव पुरुषवेदस्य बन्धोदयव्यवच्छेदः। ततः समयोनावलिकाद्विकेन पुरुषवेदमुपशमयति, ततो युगपदन्तर्मुहूर्तमात्रेणाप्रत्याख्यानावरणप्रत्याख्यानावरणक्रोधौ। तदुपशान्तौ च तत्समयमेव संज्वलनक्रोधस्य बन्धोदयोदीरणाव्यवच्छेदः। ततः समयोनावलिकाद्विकेन संज्वलनक्रोधमुपशमयति। ततोऽन्तर्मुहूर्तमात्रेणाप्रत्याख्यानावरणप्रत्याख्यानावरणौ मानौ युगपदुपशमयति। तदुपशान्तौ च तत्समयमेव संज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेदः। ततः समयोनावलिकाद्विकेन संज्वलनमानमुपशमयति। ततो युगपदन्तर्मुहूर्तमात्रेणाप्रत्याख्यानावरणप्रत्याख्यानावरणे माये उपशमयति। तदुपशान्तौ च तत्समयमेव संज्वलनमायाया बन्धोदयोदीरणाव्यवच्छेदः। ततोऽसौ लोभवेदको जातः। लोभवेदकाद्धायाश्च द्वयोस्त्रिभागयोर्वर्तमानो द्वितीयस्थितेः सकाशाद्दलिकमानीय प्रथमस्थितिं करोति वेदयति च। तत्र प्रथमस्त्रिभागोऽश्वकर्णकरणाद्धा तत्र विशुद्धया वर्द्धमानोऽपूर्वस्पर्द्धकानि करोति। अपूर्वस्पर्द्धकशब्दार्थं चाग्रे वक्ष्यामः। संज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने सति ततः

समयोनावलिकाद्विकेन संज्वलनमायामुपशमयति। एवमश्वकर्णकरणाद्धायां गतायां ततो द्वितीये लोभवेदकाद्धायास्त्रिभागे वर्तमानो लोभस्य द्वितीयस्थितिगतस्य किट्टीः करोति। किट्टीकरणाद्धायाश्चरमसमये युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणलोभावुपशमयति। तदुपशान्तौ च तत्समयमेव संज्वलनलोभबन्धव्यवच्छेदः बादरलोभोदयव्यवच्छेदश्च। ततोऽसौ सूक्ष्मसंपरायो भवति। तदा चोपरितनस्थितौ यत्किट्टीकृतं दलिकं तत्कतिपयं ततः समानीय प्रथमस्थितिं करोति वेदयति च, सा च सूक्ष्मसंपरायाद्धान्तर्मुहूर्तप्रमाणा। तदानीं च सूक्ष्मकिट्टीकृतं दलिकं समयोनावलिकाद्विकबद्धं चोपशमयति सूक्ष्मसंपरायाद्धायाश्चरमसमये संज्वलनलोभ उपशान्तो भवति, तत्समयमेव च ज्ञानावरणपञ्चक ५ दर्शनावरणचतुष्का ९ ऽन्तरायपञ्चक १४ यशःकीर्त्यु १५ च्चैर्गोत्राणां १६ बन्धव्यवच्छेदः। ततोऽनन्तरसमयेऽसावुपशान्तकषायो भवति, स च जघन्येनैकसमयमात्रमुत्कर्षतोऽन्तर्मुहूर्तं कालं यावल्लभ्यते। तत ऊर्ध्वं नियमादसौ प्रतिपतति। प्रतिपातश्च द्विधा, भवक्षयेण अद्धाक्षयेण च। तत्र भवक्षयो म्रियमाणस्य। अद्धाक्षय उपशान्ताद्धायां समाप्तायाम्। अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति। यत्र यत्र बन्धोदयो व्यवच्छिन्नास्तत्र तत्र प्रतिपतता सता ते आरभ्यन्त इति यावत्। प्रतिपतंश्च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकम्। कश्चित् पुनस्ततोऽप्यधस्तनं गुणस्थानकद्विकं याति। कोऽपि सासादनभावमपि। यः पुनर्भवक्षयेण प्रतिपतति स प्रथमसमय एव सर्वाण्यपि बन्धानादीनि करणानि प्रवर्तयतीत्येष विशेषः। उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते। यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभावः। यः पुनरेकं वारं प्रतिपद्यते। तस्य क्षपकश्रेणिर्भवेदपि इत्येष कार्मग्रन्थिकाभिप्रायः। सिद्धान्ताभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते। यत उक्तं कल्पाध्ययने—"**अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं**"। '**सव्वाइं**' इति सर्वाणि सम्यक्त्वदेशविरत्यादीनि। अन्यत्राप्युक्तम्—**मोहोपशम एकस्मिन्, भवे द्विः स्यादसंततः। यस्मिन् भवे तूपशमः, क्षयो मोहस्य तत्र न॥१॥**" इति॥ '**क्षीणकषायवीतरागच्छद्मस्थगुणस्थानमिति**' क्षीणा अभावमापन्नाः कषाया यस्य स क्षीणकषायः, तत्रान्येष्वपि गुणस्थानकेषु वक्ष्यमाणयुक्त्या क्वापि कियतामपि कषायाणां क्षीणत्वसंभवात्क्षीणकषायव्यपदेशः संभवति, ततस्तद्व्यवच्छेदार्थं वीतरागग्रहणम्। क्षीणकषायवीतरागत्वं च केवलिनोऽप्यस्तीति तद्व्यवच्छेदार्थं छद्मस्थग्रहणम्। यद्वा छद्मस्थः सरागोऽपि भवतीति तदपनोदार्थं वीतरागग्रहणम्। वीतरागश्चासौ छद्मस्थश्चेति वीतरागच्छद्मस्थः, स चोपशान्तकषायोऽपि भवतीति तन्निरासार्थं क्षीणकषायग्रहणम्। क्षीणकषायश्चासौ वीतरागच्छद्मस्थश्च तस्य गुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम्। इदं च यथाऽवाप्यते तथा मूलत एव भाव्यते। इह यः क्षपकश्रेणिमारभते सोऽवश्यं मनुष्यो वर्षाष्टकाच्चोपरि वर्तमानः, स च प्रथममनन्तानुबन्धिनो विसंयोजयति। तद्विसंयोजना च प्रागेव भणिता। ततो दर्शनमोहक्षपणार्थं यथाप्रवृत्तादीनि त्रीणि करणानि करोति। तत्र यावदपूर्वकरणं तावत्पूर्ववदेव वक्तव्यम्। अनिवृत्तिकरणा-

द्धायां च वर्तमानो दर्शनत्रिकस्य स्थितिसत्कर्म तावदुद्वलनासंक्रमेणोद्वलयति यावत्पल्योपमासंख्येयभागमात्रमवतिष्ठते। ततो मिथ्यात्वदलिकं सम्यक्त्वमिश्रयोः प्रक्षिपति, तच्चैवम्—प्रथमसमये स्तोकम्, द्वितीयसमये ततोऽसंख्येयगुणम्। एवं यावदन्तर्मुहूर्तचरमसमये आवलिकागतं मुक्त्वा शेषं द्विचरमसमयसंक्रमिताद्दलिकादसंख्येयगुणं संक्रमयति। आवलिकागतं तु स्तिबुकसंक्रमेण सम्यक्त्वे संक्रमयति। एवं मिथ्यात्वं क्षपितम्। ततोऽन्तर्मुहूर्तमात्रेण सम्यग्मिथ्यात्वमप्यनेनैव क्रमेण सम्यक्त्वे प्रक्षिपति। ततः सम्यग्मिथ्यात्वमपि क्षपितम्। ततः सम्यक्त्वमपवर्तयितुं तथा लग्नो यथाऽन्तर्मुहूर्तमात्रेण तदप्यन्तर्मुहूर्तमात्रस्थितिकं जातम्, तच्च क्रमेणानुभूयमानमनुभूयमानं सत्समयाधिकावलिकाशेषं जातम्। ततोऽनन्तरसमये तस्योदीरणाव्यवच्छेदः। ततो विपाकानुभवनेनैव केवलेन वेदयति यावच्चरमसमयः। ततोऽनन्तरसमयेऽसौ क्षायिकसम्यग्दृष्टिर्जायते। उक्तो दर्शनत्रिकक्षपणाविधिः। इह यदि बद्धायुष्कः क्षपकश्रेणिमारभते, तत एतावत्येवावतिष्ठते। अथाबद्धायुष्कस्ततोऽन्तर्मुहूर्तमात्रे गते सति पुनरपि चारित्रमोहनीयक्षपणार्थं यथाप्रवृत्तादीनि त्रीणि करणान्यारभते, तेषां च स्वरूपं पूर्ववदेव वक्तव्यम्। तत्रापूर्वकरणे स्थितिघातादिभिरप्रत्याख्यानावरणक्रोधादीन्यष्टौ कर्माणि तथा क्षपयति स्म यथाऽनिवृत्तिकरणाद्धाप्रथमसमये तानि पल्योपमासंख्येयभागमात्रस्थितिकानि जातानि। अनिवृत्तिकरणाद्धायाश्च संख्येयेषु भागेषु गतेषु सत्सु स्त्यानर्द्धित्रिक ३ नरकगति ४ तिर्यग्गति ५ एक ६ द्वि ७ त्रि ८ चतुरिन्द्रियजाति ९ नरकानुपूर्वी १० तिर्यगानुपूर्वी ११ स्थावरा १२ ऽऽतपो १३ द्युद्योत १४ सूक्ष्म १५ साधारणा १६ नां षोडशप्रकृतीनां प्रतिसमयमुद्वलनासंक्रमेणोद्वल्यमानानां पल्योपमासंख्येयभागमात्रा स्थितिर्जाता। ततो बध्यमानासु प्रकृतिषु गुणसंक्रमेण प्रतिसमयं प्रक्षिप्यमाणानि तानि षोडश कर्माणि निःशेषतोऽपि क्षीणानि भवन्ति। इहाप्रत्याख्यानावरणप्रत्याख्यानावरणकषायाष्टकं पूर्वमेव क्षपयितुमारब्धं परं नाद्यापि क्षीणं केवलमपान्तराल एव पूर्वोक्तं प्रकृतिषोडशकं क्षपितम्। ततः पश्चात्तदपि कषायाष्टकमुद्वलनविधिनाऽन्तर्मुहूर्तमात्रेण क्षपयति, एष सूत्रादेशः। अन्ये पुनराहुः—षोडश कर्माण्येव पूर्वं क्षपयितुमारभते। केवलमपान्तरालेऽष्टौ कषायान् क्षपयति, पश्चात् षोडश कर्माणीति। ततोऽन्तर्मुहूर्तमात्रेण नवानां नोकषायाणां चतुर्णां च संज्वलनानामन्तरकरणं करोति, तच्च कृत्वा नपुंसकवेदमुद्वलनविधिना क्षपयितुमारभते। तत्रान्तरकरणस्योपरितनस्थितिदलिकमुद्वलनासंक्रमेणोद्वल्यमानमुद्वल्यमानं पल्योपमासंख्येयभागमात्रं जातम्। ततः प्रभृति बध्यमानप्रकृतिषु गुणसंक्रमेण तद्दलिकं प्रक्षिपति। तच्चैवं प्रक्षिप्यमाणं प्रक्षिप्यमाणमन्तर्मुहूर्तमात्रेण निःशेषं क्षीणम्। अधस्तनस्थितिदलिकं च यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्ततोऽनुभवतः क्षपयति, अन्यथा त्वावलिकामात्रम्। तच्च वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति। तदेवं क्षपितो नपुंसकवेदः। ततोऽन्तर्मुहूर्तमा-

समयोनावलिकाद्विकेन संज्वलनमायामुपशमयति । एवमश्वकर्णकरणाद्धायां गतायां ततो द्वितीये लोभवेदकाद्धायास्त्रिभागे वर्तमानो लोभस्य द्वितीयस्थितिगतस्य किट्टीः करोति । किट्टीकरणाद्धायाश्चरमसमये युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणलोभावुपशमयति । तदुपशान्तौ च तत्समयमेव संज्वलनलोभबन्धव्यवच्छेदः बादरलोभोदयव्यवच्छेदश्च । ततोऽसौ सूक्ष्मसंपरायो भवति। तदा चोपरितनस्थितौ यत्किट्टीकृतं दलिकं तत्कतिपयं ततः समानीय प्रथमस्थितिं करोति वेदयति च, सा च सूक्ष्मसंपरायाद्धान्तर्मुहूर्तप्रमाणा । तदानीं च सूक्ष्मकिट्टीकृतं दलिकं समयोनावलिकाद्विकबद्धं चोपशमयति सूक्ष्मसंपरायाद्धायाश्चरमसमये संज्वलनलोभ उपशान्तो भवति, तत्सममेव च ज्ञानावरणपञ्चक ५ दर्शनावरणचतुष्का ९ ऽन्तरायपञ्चक १४ यशःकीर्त्यु १५ च्चैर्गोत्राणां १६ बन्धव्यवच्छेदः। ततोऽनन्तरसमयेऽसावुपशान्तकषायो भवति, स च जघन्येनैकसमयमात्रमुत्कर्षतोऽन्तर्मुहूर्तं कालं यावल्लभ्यते । तत ऊर्ध्वं नियमादसौ प्रतिपतति । प्रतिपातश्च द्विधा, भवक्षयेण अद्धाक्षयेण च । तत्र भवक्षयो म्रियमाणस्य । अद्धाक्षय उपशान्ताद्धायां समाप्तायाम् । अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति । यत्र यत्र बन्धोदयो व्यवच्छिन्नास्तत्र तत्र प्रतिपतता सता ते आरभ्यन्त इति यावत् । प्रतिपतंश्च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकम् । कश्चित् पुनस्ततोऽप्यधस्तनं गुणस्थानकद्विकं याति । कोऽपि सासादनभावमपि । यः पुनर्भवक्षयेण प्रतिपतति स प्रथमसमय एव सर्वाण्यपि बन्धानादीनि करणानि प्रवर्तयतीत्येष विशेषः । उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते । यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभावः। यः पुनरेकं वारं प्रतिपद्यते । तस्य क्षपकश्रेणिर्भवेदपि इत्येष कार्मग्रन्थिकाभिप्रायः । सिद्धान्ताभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते । यत उक्तं कल्पाध्ययने—"**अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं**" । '**सव्वाइं**' इति सर्वाणि सम्यक्त्वदेशविरत्यादीनि । अन्यत्राप्युक्तम्—**मोहोपशम एकस्मिन् , भवे द्विः स्यादसंततः । यस्मिन् भवे तूपशमः, क्षयो मोहस्य तत्र न ॥१॥**" इति ॥ '**क्षीणकषायवीतरागच्छद्मस्थगुणस्थानमिति**' क्षीणा अभावमापन्नाः कषाया यस्य स क्षीणकषायः, तत्रान्येष्वपि गुणस्थानकेषु वक्ष्यमाणयुक्त्या क्वापि कियतामपि कषायाणां क्षीणत्वसंभवात्क्षीणकषायव्यपदेशः संभवति, ततस्तद्व्यवच्छेदार्थं वीतरागग्रहणम् । क्षीणकषायवीतरागत्वं च केवलिनोऽप्यस्तीति तद्व्यवच्छेदार्थं छद्मस्थग्रहणम् । यद्वा छद्मस्थः सरागोऽपि भवतीति तदपनोदार्थं वीतरागग्रहणम् । वीतरागश्चासौ छद्मस्थश्चेति वीतरागच्छद्मस्थः, स चोपशान्तकषायोऽपि भवतीति तन्निरासार्थं क्षीणकषायग्रहणम् । क्षीणकषायश्चासौ वीतरागच्छद्मस्थश्च तस्य गुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम् । इदं च यथाऽवाप्यते तथा मूलत एव भाव्यते । इह यः क्षपकश्रेणिमारभते सोऽवश्यं मनुष्यो वर्षाष्टकाद्योपरि वर्तमानः, स च प्रथममनन्तानुबन्धिनो विसंयोजयति । तद्विसंयोजना च प्रागेव भणिता । ततो दर्शनमोहक्षपणार्थं यथाप्रवृत्तादीनि त्रीणि करणानि करोति । तत्र यावदपूर्वकरणं तावत्पूर्ववदेव वक्तव्यम् । अनिवृत्तिकरणा-

द्धायां च वर्तमानो दर्शनत्रिकस्य स्थितिसत्कर्म तावदुद्वलनासंक्रमेणोद्वलयति यावत्पल्योपमासंख्येयभागमात्रमवतिष्ठते। ततो मिथ्यात्वदलिकं सम्यक्त्वमिश्रयोः प्रक्षिपति, तच्चैवम्–प्रथमसमये स्तोकम्, द्वितीयसमये ततोऽसंख्येयगुणम्। एवं यावदन्तमुहूर्तचरमसमये आवलिकागतं मुक्त्वा शेषं द्विचरमसमयसंक्रमिताद्दलिकादसंख्येयगुणं संक्रमयति। आवलिकागतं तु स्तिबुकसंक्रमेण सम्यक्त्वे संक्रमयति। एवं मिथ्यात्वं क्षपितम्। ततोऽन्तमुहूर्तमात्रेण सम्यग्मिथ्यात्वमप्यनेनैव क्रमेण सम्यक्त्वे प्रक्षिपति। ततः सम्यग्मिथ्यात्वमपि क्षपितम्। ततः सम्यक्त्वमपवर्तयितुं तथा लग्नो यथाऽन्तमुहूर्तमात्रेण तदप्यन्तमुहूर्तमात्रस्थितिकं जातम्, तच्च क्रमेणानुभूयमानमनुभूयमानं सत्समयाधिकावलिकाशेषं जातम्। ततोऽनन्तरसमये तस्योदीरणाव्यवच्छेदः। ततो विपाकानुभवनेनैव केवलेन वेदयति यावच्चरमसमयः। ततोऽनन्तरसमयेऽसौ क्षायिकसम्यग्दृष्टिर्जायते। उक्तो दर्शनत्रिकक्षपणाविधिः। इह यदि बद्धायुष्कः क्षपकश्रेणिमारभते, तत एतावत्येवावतिष्ठते। अथाबद्धायुष्कस्ततोऽन्तमुहूर्तमात्रे गते सति पुनरपि चारित्रमोहनीयक्षपणार्थं यथाप्रवृत्तादीनि त्रीणि करणान्यारभते, तेषां च स्वरूपं पूर्ववदेव वक्तव्यम्। तत्रापूर्वकरणे स्थितिघातादिभिरप्रत्याख्यानावरणक्रोधादीन्यष्टौ कर्माणि तथा क्षपयति स्म यथाऽनिवृत्तिकरणाद्धाप्रथमसमये तानि पल्योपमासंख्येयभागमात्रस्थितिकानि जातानि। अनिवृत्तिकरणाद्धायाश्च संख्येयेषु भागेषु गतेषु सत्सु स्त्यानर्द्धित्रिक ३ नरकगति ४ तिर्यग्गति ५ एक ६ द्वि ७ त्रि ८ चतुरिन्द्रियजाति ९ नरकानुपूर्वी १० तिर्यगानुपूर्वी ११ स्थावरा १२ ऽऽतपो १३ द्द्योत १४ सूक्ष्म १५ साधारणा १६ नां षोडशप्रकृतीनां प्रतिसमयमुद्वलनासंक्रमेणोद्वल्यमानानां पल्योपमासंख्येयभागमात्रा स्थितिर्जाता। ततो बध्यमानासु प्रकृतिषु गुणसंक्रमेण प्रतिसमयं प्रक्षिप्यमाणानि तानि षोडश कर्माणि निःशेषतोऽपि क्षीणानि भवन्ति। इहाप्रत्याख्यानावरणप्रत्याख्यानावरणकषायाष्टकं पूर्वमेव क्षपयितुमारब्धं परं नाद्यापि क्षीणं केवलमपान्तराल एव पूर्वोक्तं प्रकृतिषोडशकं क्षपितम्। ततः पश्चात्तदपि कषायाष्टकमुद्वलनविधिनाऽन्तमुहूर्तमात्रेण क्षपयति, एष सूत्रादेशः। अन्ये पुनराहुः–षोडश कर्माण्येव पूर्वं क्षपयितुमारभते। केवलमपान्तरालेऽष्टौ कषायान् क्षपयति, पश्चात् षोडश कर्माणीति। ततोऽन्तमुहूर्तमात्रेण नवानां नोकषायाणां चतुर्णां च संज्वलनानामन्तरकरणं करोति, तच्च कृत्वा नपुंसकवेदमुद्वलनविधिना क्षपयितुमारभते। तत्रान्तरकरणस्योपरितनस्थितिदलिकमुद्वलनासंक्रमेणोद्वल्यमानमुद्वल्यमानं पल्योपमासंख्येयभागमात्रं जातम्। ततः प्रभृति बध्यमानप्रकृतिषु गुणसंक्रमेण तद्दलिकं प्रक्षिपति। तच्चैवं प्रक्षिप्यमाणं प्रक्षिप्यमाणमन्तमुहूर्तमात्रेण निःशेषं क्षीणम्। अधस्तनस्थितिदलिकं च यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्ततोऽनुभवतः क्षपयति, अन्यथा त्वावलिकामात्रम्। तच्च वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति। तदेवं क्षपितो नपुंसकवेदः। ततोऽन्तमुहूर्तमा-

समयोनावलिकाद्विकेन संज्वलनमायामुपशमयति । एवमश्वकर्णकरणाद्धायां गतायां ततो द्वितीये लोभवेदकाद्धायास्त्रिभागे वर्तमानो लोभस्य द्वितीयस्थितिगतस्य किट्टीः करोति । किट्टीकरणाद्धायाश्चरमसमये युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणलोभावुपशमयति । तदुपशान्तौ च तत्समयमेव संज्वलनलोभबन्धव्यवच्छेदः बादरलोभोदयव्यवच्छेदश्च । ततोऽसौ सूक्ष्मसंपरायो भवति। तदा चोपरितनस्थितौ यत्किट्टीकृतं दलिकं तत्कतिपयं ततः समानीय प्रथमस्थितिं करोति वेदयति च, सा च सूक्ष्मसंपरायाद्धान्तर्मुहूर्तप्रमाणा । तदानीं च सूक्ष्मकिट्टीकृतं दलिकं समयोनावलिकाद्विकबद्धं चोपशमयति सूक्ष्मसंपरायाद्धायाश्चरमसमये संज्वलनलोभ उपशान्तो भवति, तत्समयमेव च ज्ञानावरणपञ्चक ५ दर्शनावरणचतुष्का ९ ऽन्तरायपञ्चक १४ यशःकीर्त्यु १५ च्चैर्गोत्राणां १६ बन्धव्यवच्छेदः। ततोऽनन्तरसमयेऽसावुपशान्तकषायो भवति, स च जघन्येनैकसमयमात्रमुत्कर्षतोऽन्तर्मुहूर्तं कालं यावल्लभ्यते । तत ऊर्ध्वं नियमादसौ प्रतिपतति । प्रतिपातश्च द्विधा, भवक्षयेण अद्धाक्षयेण च । तत्र भवक्षयो म्रियमाणस्य । अद्धाक्षय उपशान्ताद्धायां समाप्तायाम् । अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति । यत्र यत्र बन्धोदयो व्यवच्छिन्नास्तत्र तत्र प्रतिपतता सता ते आरभ्यन्त इति यावत् । प्रतिपतंश्च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकम् । कश्चित् पुनस्ततोऽप्यधस्तनं गुणस्थानकद्विकं याति । कोऽपि सासादनभावमपि । यः पुनर्भवक्षयेण प्रतिपतति स प्रथमसमय एव सर्वाण्यपि बन्धानादीनि करणानि प्रवर्तयतीत्येष विशेषः । उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते । यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभावः। यः पुनरेकं वारं प्रतिपद्यते । तस्य क्षपकश्रेणिर्भवेदपि इत्येष कार्मग्रन्थिकाभिप्रायः । सिद्धान्ताभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते । यत उक्तं कल्पाध्ययने—"**अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं**" । '**सव्वाइं**' इति सर्वाणि सम्यक्त्वदेशविरत्यादीनि । अन्यत्राप्युक्तम्—**मोहोपशम एकस्मिन् , भवे द्विः स्यादसंततः । यस्मिन् भवे तूपशमः, क्षयो मोहस्य तत्र न ॥१॥**" इति ॥ '**क्षीणकषायवीतरागच्छद्मस्थगुणस्थानमिति**' क्षीणा अभावमापन्नाः कषाया यस्य स क्षीणकषायः, तत्रान्येष्वपि गुणस्थानकेषु वक्ष्यमाणयुक्त्या क्वापि कियतामपि कषायाणां क्षीणत्वसंभवात्क्षीणकषायव्यपदेशः संभवति, ततस्तद्व्यवच्छेदार्थं वीतरागग्रहणम्। क्षीणकषायवीतरागत्वं च केवलिनोऽप्यस्तीति तद्व्यवच्छेदार्थं छद्मस्थग्रहणम् । यद्वा छद्मस्थः सरागोऽपि भवतीति तदपनोदार्थं वीतरागग्रहणम् । वीतरागश्चासौ छद्मस्थश्चेति वीतरागच्छद्मस्थः, स चोपशान्तकषायोऽपि भवतीति तन्निरासार्थं क्षीणकषायग्रहणम् । क्षीणकषायश्चासौ वीतरागच्छद्मस्थश्च तस्य गुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम् । इदं च यथाऽवाप्यते तथा मूलत एव भाव्यते । इह यः क्षपकश्रेणिमारभते सोऽवश्यं मनुष्यो वर्षाष्टकाच्चोपरि वर्तमानः, स च प्रथममनन्तानुबन्धिनो विसंयोजयति । तद्विसंयोजना च प्रागेव भणिता । ततो दर्शनमोहक्षपणार्थं यथाप्रवृत्तादीनि त्रीणि करणानि करोति । तत्र यावदपूर्वकरणं तावत्पूर्ववदेव वक्तव्यम् । अनिवृत्तिकरणा-

द्धायां च वर्तमानो दर्शनत्रिकस्य स्थितिसत्कर्म तावदुद्वलनासंक्रमेणोद्वलयति यावत्पल्योपमासंख्येयभागमात्रमवतिष्ठते । ततो मिथ्यात्वदलिकं सम्यक्त्वमिश्रयोः प्रक्षिपति, तच्चैवम्–प्रथमसमये स्तोकम्, द्वितीयसमये ततोऽसंख्येयगुणम् । एवं यावदन्तमुहूर्तचरमसमये आवलिकागतं मुक्त्वा शेषं द्विचरमसमयसंक्रमितादलिकादसंख्येयगुणं संक्रमयति । आवलिकागतं तु स्तिबुकसंक्रमेण सम्यक्त्वे संक्रमयति । एवं मिथ्यात्वं क्षपितम् । ततोऽन्तमुहूर्तमात्रेण सम्यग्मिथ्यात्वमप्यनेनैव क्रमेण सम्यक्त्वे प्रक्षिपति । ततः सम्यग्मिथ्यात्वमपि क्षपितम् । ततः सम्यक्त्वमपवर्तयितुं तथा लग्नो यथाऽन्तमुहूर्तमात्रेण तदप्यन्तमुहूर्तमात्रस्थितिकं जातम्, तच्च क्रमेणानुभूयमानमनुभूयमानं सत्समयाधिकावलिकाशेषं जातम्। ततोऽनन्तरसमये तस्योदीरणाव्यवच्छेदः । ततो विपाकानुभवनेनैव केवलेन वेदयति यावच्चरमसमयः। ततोऽनन्तरसमयेऽसौ क्षायिकसम्यग्दृष्टिर्जायते । उक्तो दर्शनत्रिकक्षपणाविधिः । इह यदि बद्धायुष्कः क्षपकश्रेणिमारभते, तत एतावत्येवावतिष्ठते । अथाबद्धायुष्कस्ततोऽन्तमुहूर्तमात्रे गते सति पुनरपि चारित्रमोहनीयक्षपणार्थं यथाप्रवृत्तादीनि त्रीणि करणान्यारभते, तेषां च स्वरूपं पूर्ववदेव वक्तव्यम् । तत्रापूर्वकरणे स्थितिघातादिभिरप्रत्याख्यानावरणक्रोधादीन्यष्टौ कर्माणि तथा क्षपयति स्म यथाऽनिवृत्तिकरणाद्धाप्रथमसमये तानि पल्योपमासंख्येयभागमात्रस्थितिकानि जातानि । अनिवृत्तिकरणाद्धायाश्च संख्येयेषु भागेषु गतेषु सत्सु स्त्यानर्द्धित्रिक ३ नरकगति ४ तिर्यग्गति ५ एक ६ द्वि ७ त्रि ८ चतुरिन्द्रियजाति ९ नरकानुपूर्वी १० तिर्यगानुपूर्वी ११ स्थावरा १२ ऽऽतपो १३ द्द्योत १४ सूक्ष्म १५ साधारणा १६ नां षोडशप्रकृतीनां प्रतिसमयमुद्वलनासंक्रमेणोद्वल्यमानानां पल्योपमासंख्येयभागमात्रा स्थितिर्जाता । ततो बध्यमानासु प्रकृतिषु गुणसंक्रमेण प्रतिसमयं प्रक्षिप्यमाणानि तानि षोडश कर्माणि निःशेषतोऽपि क्षीणानि भवन्ति । इहाप्रत्याख्यानावरणप्रत्याख्यानावरणकषायाष्टकं पूर्वमेव क्षपयितुमारब्धं परं नाद्यापि क्षीणं केवलमपान्तराल एव पूर्वोक्तं प्रकृतिषोडशकं क्षपितम् । ततः पश्चात्तदपि कषायाष्टकमुद्वलनविधिनाऽन्तमुहूर्तमात्रेण क्षपयति, एष सूत्रादेशः । अन्ये पुनराहुः–षोडश कर्माण्येव पूर्वं क्षपयितुमारभते । केवलमपान्तरालेऽष्टौ कषायान् क्षपयति, पश्चात् षोडश कर्माणीति । ततोऽन्तमुहूर्तमात्रेण नवानां नोकषायाणां चतुर्णां च संज्वलनानामन्तरकरणं करोति, तच्च कृत्वा नपुंसकवेदमुद्वलनविधिना क्षपयितुमारभते । तत्रान्तरकरणस्योपरितनस्थितिदलिकमुद्वलनासंक्रमेणोद्वल्यमानमुद्वल्यमानं पल्योपमासंख्येयभागमात्रं जातम् । ततः प्रभृति बध्यमानप्रकृतिषु गुणसंक्रमेण तद्दलिकं प्रक्षिपति । तच्चैवं प्रक्षिप्यमाणं प्रक्षिप्यमाणमन्तमुहूर्तमात्रेण निःशेषं क्षीणम् । अधस्तनस्थितिदलिकं च यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्ततोऽनुभवतः क्षपयति, अन्यथा त्वावलिकामात्रम् । तच्च वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति । तदेवं क्षपितो नपुंसकवेदः । ततोऽन्तमुहूर्तमा-

समयोनावलिकाद्विकेन संज्वलनमायामुपशमयति। एवमश्वकर्णकरणाद्धायां गतायां ततो द्वितीये लोभवेदकाद्धायास्त्रिभागे वर्तमानो लोभस्य द्वितीयस्थितिगतस्य किट्टीः करोति। किट्टीकरणाद्धायाश्चरमसमये युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणलोभावुपशमयति। तदुपशान्तौ च तत्समयमेव संज्वलनलोभबन्धव्यवच्छेदः बादरलोभोदयव्यवच्छेदश्च। ततोऽसौ सूक्ष्मसंपरायो भवति। तदा चोपरितनस्थितौ यत्किट्टीकृतं दलिकं तत्कतिपयं ततः समानीय प्रथमस्थितिं करोति वेदयति च, सा च सूक्ष्मसंपरायाद्धान्तर्मुहूर्तप्रमाणा। तदानीं च सूक्ष्मकिट्टीकृतं दलिकं समयोनावलिकाद्विकबद्धं चोपशमयति सूक्ष्मसंपरायाद्धायाश्चरमसमये संज्वलनलोभ उपशान्तो भवति, तत्समयमेव च ज्ञानावरणपञ्चक ५ दर्शनावरणचतुष्का ९ ऽन्तरायपञ्चक १४ यशःकीर्त्यु १५ च्चैर्गोत्राणां १६ बन्धव्यवच्छेदः। ततोऽनन्तरसमयेऽसावुपशान्तकषायो भवति, स च जघन्येनैकसमयमात्रमुत्कर्षतोऽन्तर्मुहूर्तं कालं यावल्लभ्यते। तत ऊर्ध्वं नियमादसौ प्रतिपतति। प्रतिपातश्च द्विधा, भवक्षयेण अद्धाक्षयेण च। तत्र भवक्षयो म्रियमाणस्य। अद्धाक्षय उपशान्ताद्धायां समाप्तायाम्। अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति। यत्र यत्र बन्धोदयो व्यवच्छिन्नास्तत्र तत्र प्रतिपतता सता ते आरभ्यन्त इति यावत्। प्रतिपतंश्च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकम्। कश्चित् पुनस्ततोऽप्यधस्तनं गुणस्थानकद्विकं याति। कोऽपि सासादनभावमपि। यः पुनर्भवक्षयेण प्रतिपतति स प्रथमसमय एव सर्वाण्यपि बन्धानादीनि करणानि प्रवर्तयतीत्येष विशेषः। उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते। यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभावः। यः पुनरेकं वारं प्रतिपद्यते। तस्य क्षपकश्रेणिर्भवेदपि इत्येष कार्मग्रन्थिकाभिप्रायः। सिद्धान्ताभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते। यत उक्तं कल्पाध्ययने—"**अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं**"। '**सव्वाइं**' इति सर्वाणि सम्यक्त्वदेशविरत्यादीनि। अन्यत्राप्युक्तम्—**मोहोपशम एकस्मिन्, भवे द्विः स्यादसंततः। यस्मिन् भवे तूपशमः, क्षयो मोहस्य तत्र न॥१॥**" इति॥ '**क्षीणकषायवीतरागच्छद्मस्थगुणस्थानमिति**' क्षीणा अभावमापन्नाः कषाया यस्य स क्षीणकषायः, तत्रान्येष्वपि गुणस्थानकेषु वक्ष्यमाणयुक्त्या क्वापि कियतामपि कषायाणां क्षीणत्वसंभवात्क्षीणकषायव्यपदेशः संभवति, ततस्तद्व्यवच्छेदार्थं वीतरागग्रहणम्। क्षीणकषायवीतरागत्वं च केवलिनोऽप्यस्तीति तद्व्यवच्छेदार्थं छद्मस्थग्रहणम्। यद्वा छद्मस्थः सरागोऽपि भवतीति तदपनोदार्थं वीतरागग्रहणम्। वीतरागश्चासौ छद्मस्थश्चेति वीतरागच्छद्मस्थः, स चोपशान्तकषायोऽपि भवतीति तन्निरासार्थं क्षीणकषायग्रहणम्। क्षीणकषायश्चासौ वीतरागच्छद्मस्थश्च तस्य गुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम्। इदं च यथाऽवाप्यते तथा मूलत एव भाव्यते। इह यः क्षपकश्रेणिमारभते सोऽवश्यं मनुष्यो वर्षाष्टकाद्योपरि वर्तमानः, स च प्रथममनन्तानुबन्धिनो विसंयोजयति। तद्विसंयोजना च प्रागेव भणिता। ततो दर्शनमोहक्षपणार्थं यथाप्रवृत्तादीनि त्रीणि करणानि करोति। तत्र यावदपूर्वकरणं तावत्पूर्ववदेव वक्तव्यम्। अनिवृत्तिकरणा-

द्धायां च वर्तमानो दर्शनत्रिकस्य स्थितिसत्कर्म तावदुद्वलनासंक्रमेणोद्वलयति यावत्पल्योपमासंख्येयभागमात्रमवतिष्ठते। ततो मिथ्यात्वदलिकं सम्यक्त्वमिश्रयोः प्रक्षिपति, तच्चैवम्–प्रथमसमये स्तोकम्, द्वितीयसमये ततोऽसंख्येयगुणम्। एवं यावदन्तर्मुहूर्तचरमसमये आवलिकागतं मुक्त्वा शेषं द्विचरमसमयसंक्रमिताद्दलिकादसंख्येयगुणं संक्रमयति। आवलिकागतं तु स्तिबुकसंक्रमेण सम्यक्त्वे संक्रमयति। एवं मिथ्यात्वं क्षपितम्। ततोऽन्तर्मुहूर्तमात्रेण सम्यग्मिथ्यात्वमप्यनेनैव क्रमेण सम्यक्त्वे प्रक्षिपति। ततः सम्यग्मिथ्यात्वमपि क्षपितम्। ततः सम्यक्त्वमपवर्तयितुं तथा लग्नो यथाऽन्तर्मुहूर्तमात्रेण तदप्यन्तर्मुहूर्तमात्रस्थितिकं जातम्, तच्च क्रमेणानुभूयमानमनुभूयमानं सत्समयाधिकावलिकाशेषं जातम्। ततोऽनन्तरसमये तस्योदीरणाव्यवच्छेदः। ततो विपाकानुभवनेनैव केवलेन वेदयति यावच्चरमसमयः। ततोऽनन्तरसमयेऽसौ क्षायिकसम्यग्दृष्टिर्जायते। उक्तो दर्शनत्रिकक्षपणाविधिः। इह यदि बद्धायुष्कः क्षपकश्रेणिमारभते, तत एतावत्येवावतिष्ठते। अथाबद्धायुष्कस्ततोऽन्तर्मुहूर्तमात्रे गते सति पुनरपि चारित्रमोहनीयक्षपणार्थं यथाप्रवृत्तादीनि त्रीणि करणान्यारभते, तेषां च स्वरूपं पूर्ववदेव वक्तव्यम्। तत्रापूर्वकरणे स्थितिघातादिभिरप्रत्याख्यानावरणक्रोधादीन्यष्टौ कर्माणि तथा क्षपयति स्म यथाऽनिवृत्तिकरणाद्धाप्रथमसमये तानि पल्योपमासंख्येयभागमात्रस्थितिकानि जातानि। अनिवृत्तिकरणाद्धायाश्च संख्येयेषु भागेषु गतेषु सत्सु स्त्यानर्द्धित्रिक ३ नरकगति ४ तिर्यग्गति ५ एक ६ द्वि ७ त्रि ८ चतुरिन्द्रियजाति ९ नरकानुपूर्वी १० तिर्यगानुपूर्वी ११ स्थावरा १२ ऽऽतपो १३ द्द्योत १४ सूक्ष्म १५ साधारणा १६ नां षोडशप्रकृतीनां प्रतिसमयमुद्वलनासंक्रमेणोद्वल्यमानानां पल्योपमासंख्येयभागमात्रा स्थितिर्जाता। ततो बध्यमानासु प्रकृतिषु गुणसंक्रमेण प्रतिसमयं प्रक्षिप्यमाणानि तानि षोडश कर्माणि निःशेषतोऽपि क्षीणानि भवन्ति। इहाप्रत्याख्यानावरणप्रत्याख्यानावरणकषायाष्टकं पूर्वमेव क्षपयितुमारब्धं परं नाद्यापि क्षीणं केवलमपान्तराल एव पूर्वोक्तं प्रकृतिषोडशकं क्षपितम्। ततः पश्चात्तदपि कषायाष्टकमुद्वलनविधिनाऽन्तर्मुहूर्तमात्रेण क्षपयति, एष सूत्रादेशः। अन्ये पुनराहुः–षोडश कर्माण्येव पूर्वं क्षपयितुमारभते। केवलमपान्तरालेऽष्टौ कषायान् क्षपयति, पश्चात् षोडश कर्माणीति। ततोऽन्तर्मुहूर्तमात्रेण नवानां नोकषायाणां चतुर्णां च संज्वलनानामन्तरकरणं करोति, तच्च कृत्वा नपुंसकवेदमुद्वलनविधिना क्षपयितुमारभते। तत्रान्तरकरणस्योपरितनस्थितिदलिकमुद्वलनासंक्रमेणोद्वल्यमानमुद्वल्यमानं पल्योपमासंख्येयभागमात्रं जातम्। ततः प्रभृति बध्यमानप्रकृतिषु गुणसंक्रमेण तद्दलिकं प्रक्षिपति। तच्चैवं प्रक्षिप्यमाणं प्रक्षिप्यमाणमन्तर्मुहूर्तमात्रेण निःशेषं क्षीणम्। अधस्तनस्थितिदलिकं च यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्ततोऽनुभवतः क्षपयति, अन्यथा त्वावलिकामात्रम्। तच्च वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति। तदेवं क्षपितो नपुंसकवेदः। ततोऽन्तर्मुहूर्तमा-

त्रेण स्त्रीवेदोऽप्यनेनैव क्रमेण क्षिप्यते । ततः षड् नोकषायान् युगपत्क्षपयितुमारभते । ततः प्रभृति च तेषामुपरितनस्थितिदलिकं न पुरुषवेदे संक्रमयति किन्तु संज्वलनक्रोध एव, एतेऽपि च पूर्वोक्तविधिना क्षिप्यमाणा अन्तर्मुहूर्तमात्रेण निःशेषाः क्षीणाः । तत्समयमेव च पुरुषवेदस्य बन्धोदयोदीरणाव्यवच्छेदः समयोनावलिकाद्विकबद्धं मुक्त्वा शेषदलिकस्य क्षयश्च । ततोऽसाविदानीमवेदको जातः । क्रोधं च वेदयतः सतस्तस्य क्रोधाद्धायास्त्रयो विभागा भवन्ति । तद्यथा–अश्वकर्णकरणाद्धा १, किट्टिकरणाद्धा २, किट्टिवेदनाद्धा ३ च । तत्राश्वकर्णकरणाद्धायां वर्तमानः प्रतिसमयमनन्तान्यपूर्वस्पर्द्धकानि चतुर्णामपि संज्वलनानामन्तरकरणादुपरितनस्थितौ करोति । अथ किमिदं स्पर्द्धकम् ? इति, उच्यते, इह तावदनन्तानन्तैः परमाणुभिर्निष्पन्नान् स्कन्धान् जीवः कर्मतया गृह्णाति । तत्र चैकैकस्मिन् स्कन्धे यः सर्वजघन्यरसः परमाणुः तस्यापि रसः केवलिप्रज्ञया छिद्यमानः सर्वजीवेभ्योऽनन्तगुणान् रसभागान् प्रयच्छति । अपरस्तु तानप्येकाधिकान् । अन्यस्तु द्वयधिकान् । एवमेकोत्तरया वृद्ध्या तावन्नेयं यावदन्यः परमाणुः सिद्धानन्तभागाधिकान् रसविभागान् प्रयच्छति । तत्र जघन्यरसा ये केचन परमाणवस्तेषां समुदायः समानजातीयत्वादेका वर्गणा इत्युच्यते । अन्येषां त्वेकाधिकरसभागयुक्तानां समुदायो द्वितीया वर्गणाः अपरेषां तु द्वयधिकरसभागयुक्तानां समुदायस्तृतीया । एवमनया दिशैकैकरसभागवृद्धानामणूनां समुदायरूपा वर्गणाः सिद्धानामनन्तभागकल्पा अभव्येभ्योऽनन्तगुणा वाच्याः । एतासां च समुदायः स्पर्द्धकमित्युच्यते । स्पर्द्धन्त इवोत्तरोत्तरवृद्ध्या परमाणुवर्गणा अत्रेति कृत्वा । इत ऊर्द्ध्वमेकोत्तरया निरन्तरवृद्ध्या प्रवर्द्धमानो रसो न लभ्यते, किन्तु सर्वजीवानन्तगुणैरेव रसभागैः । ततस्तेनैव क्रमेण ततः प्रभृति द्वितीयं स्पर्द्धकमारभ्यते । एवमेव च तृतीयम् । एवं तावद्वाच्यं यावदनन्तानि स्पर्द्धकानि । एतेभ्य एव च इदानीं प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादनन्तगुणहीनरसाः कृत्वा पूर्ववत्स्पर्द्धकानि करोति । न चैवंभूतानि कदाचनापि पूर्वं कृतानि ततोऽपूर्वाणीत्युच्यन्ते । अस्यांचाश्वकर्णकरणाद्धायां वर्तमानः पुरुषवेदं समयोनावलिकाद्विकेन क्रोधे गुणसंक्रमेण संक्रमयन् चरमसमये सर्वसंक्रमेण संक्रमयति, तदेवं क्षीणः पुरुषवेदः । किट्टिकरणाद्धायां पुनर्वर्तमानश्चतुर्णामपि संज्वलनानामुपरितनस्थितिगतदलिकस्य किट्टीः करोति । अथ किमिदं किट्टिः ? इति, उच्यते, पूर्वस्पर्द्धकेभ्योऽपूर्वस्पर्द्धकेभ्यश्च प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादत्यन्तहीनरसाः कृत्वा तासामेकैकोत्तरवृद्धित्यागेन बृहदन्तरालतया व्यवस्थापनम् । यथा यासामेव वर्गणानामसत्कल्पनयाऽनुभागभागानां शतमेकोत्तरादि चासीत्, तासामेव विशुद्धिवशादनुभागभागानां दशकस्य पञ्चदशकादेश्च व्यवस्थापनमिति । एताश्च किट्टयः परमार्थतोऽनन्ता अपि स्थूलजातिभेदापेक्षया द्वादश कल्प्यन्ते एकैकस्य कषायस्य तिस्रस्तिस्रः । तद्यथा–प्रथमा द्वितीया तृतीया च । एवं क्रोधेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यम् ।

यदा तु मानेन प्रतिपद्यते तदोद्वलनविधिना पूर्वोक्तेन क्रोधे क्षपिते सति शेषाणां त्रयाणां पूर्वक्रमेण नवकिट्टीः करोति । मायया चेत्प्रतिपन्नस्तर्हि क्रोधमानयोरुद्वलनविधिना क्षपितयोः सतोः शेषद्विकस्य पूर्वक्रमेण षट् किट्टीः करोति । यदि पुनर्लोभेन प्रतिपद्यते तत उद्वलनविधिना क्रोधादित्रिके क्षपिते सति लोभस्य किट्टित्रिकं करोति । एष किट्टीकरणविधिः । किट्टीकरणाद्धायां निष्ठितायां क्रोधेन प्रतिपन्नः सन् क्रोधस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावद् यावत्समयाधिकावलिकामात्रमवशिष्यते । ततोऽन्तरसमये द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावद् यावत्समयाधिकावलिकामात्रमवशिष्यते । ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावद् यावदिहापि समयाधिकावलिकामात्रं शेषः, तिसृष्वपि चामूषु किट्टिवेदनाद्धासूपरितनस्थितिगतं दलिकं गुणसंक्रमेणापि प्रतिसमयमसंख्येयगुणवृद्धिलक्षणेन संज्वलनमाने प्रक्षिपति । तृतीयकिट्टिवेदनाद्धायाश्चरमसमये संज्वलनक्रोधस्य बन्धोदयोदीरणानां युगपद्व्यवच्छेदः । सत्कर्मापि च तस्य समयोनावलिकाद्विकबद्धं मुक्त्वाऽन्यन्नास्ति, सर्वस्य माने प्रक्षिप्तत्वात् । ततोऽनन्तरसमये मानस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावद् यावदन्तर्मुहूर्तम् । क्रोधस्यापि च बन्धादौ व्यवच्छिन्ने सति तस्य संबन्धि दलिकं समयोनावलिकाद्विकमात्रेण कालेन माने गुणसंक्रमेण संक्रमयति । मानस्यापि च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं समयाधिकावलिकाशेषं जातम् । ततोऽनन्तरसमये मानस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावद् यावत्समयाधिकावलिकामात्रं शेषः । ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावद् यावत्समयाधिकावलिकामात्रं शेषः । तस्मिन्नेव च समये मानस्य बन्धोदयोदीरणानां युगपद्व्यवच्छेदः । सत्कर्मापि च तस्य समयोनावलिकाद्विकबद्धमेव,शेषस्य क्रोधशेषस्येव माने मायायां प्रक्षिप्तत्वात् । ततो मायायाः प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावद् यावदन्तर्मुहूर्तमात्रम् । संज्वलनमानस्य च बन्धादौ व्यवच्छिन्ने तस्य संबन्धि दलिकं समयोनावलिकाद्विकमात्रेण कालेन गुणसंक्रमेण मायायां प्रक्षिपन् चरमसमये सर्वसंक्रमेण संक्रमयति । ततो मायायां च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं समयाधिकावलिकाशेषं जातम् । ततोऽनन्तरसमये मायाया द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावत् यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावद् यावत्समयाधिकावलिकामात्रं शेषः । तस्मिन्नेव च समये मायाया बन्धोदयोदीरणानां युगपद्व्यवच्छेदः । सत्कर्मापि च तस्याः समयोनावलिकाद्विकबद्धमात्रमेव, शेषस्य गुणसंक्रमेण लोभे प्रक्षिप्तत्वात् । ततोऽनन्तरसमये लोभस्य

प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तावद् यावदन्तर्मुहूर्तमात्रं संज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने सति तस्याः संबन्धि दलिकं समयोनावलिकाद्विकमात्रेण कालेन गुणसंक्रमेण लोभे प्रक्षिपन् चरमसमये सर्वसंक्रमेण संक्रमयति । संज्वलनलोभस्य च तदानीं प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं समयाधिकावलिकामात्रशेषं जातम् । ततोऽनन्तरसमये लोभस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति, तां च वेदयन् तृतीयकिट्टिदलिकं गृहीत्वा सूक्ष्मकिट्टीः करोति तावद् यावद्द्वितीयकिट्टिदलिकस्य प्रथमस्थितीकृतस्य समयाधिकावलिकामात्रं शेषः । तस्मिन्नेव च समये संज्वलनलोभस्य बन्धव्यवच्छेदः, बादरकषायोदयोदीरणाव्यवच्छेदः अनिवृत्तिगुणस्थानककालव्यवच्छेदश्च युगपज्जायते । ततोऽनन्तरसमये सूक्ष्मकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयति च तदानीमसौ सूक्ष्मसंपराय उच्यते । पूर्वोक्ताश्चावलिकाः द्वितीयतृतीयकिट्टिगताः शेषीभूताः सर्वा अपि वेद्यमानासु परप्रकृतिषु स्तिवुकसंक्रमेण संक्रमयति । प्रथमद्वितीयकिट्टिगताश्च यथास्वं द्वितीयतृतीयकिट्टयन्तर्गता एव वेद्यन्ते । सूक्ष्मसंपरायश्च लोभस्य सूक्ष्मकिट्टीर्वेदयन् सूक्ष्मकिट्टिदलिकं समयोनावलिकाद्विकबद्धं च प्रतिसमयं स्थितिघातादिभिस्तावत्क्षपयति यावत्सूक्ष्मसंपरायाद्धायाः संख्येयभागा गता भवन्ति, एकोऽवशिष्यते । ततस्तस्मिन् संख्येये भागे संज्वलनलोभं सर्वापवर्तनयाऽपवर्त्य सूक्ष्मसंपरायाद्धासमं करोति, सा च सूक्ष्मसंपरायाद्धा अद्याप्यन्तर्मुहूर्तप्रमाणा, ततः प्रभृति च मोहस्य स्थितिघातादयो निवृत्ताः । शेषकर्मणां तु प्रवर्तन्त एव । तां च लोभस्यापवर्तितां स्थितिमुदयोदीरणाभ्यां वेदयन् तावद्गतः यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये उदीरणा स्थिता । तत उदयेनैव केवलेन तां वेदयति यावच्चरमसमयः । तस्मिंश्चरमसमये ज्ञानावरणपञ्चकदर्शनावरणचतुष्कयशःकीर्त्युच्चैर्गोत्रान्तरायपञ्चकानां षोडशकर्मणां बन्धव्यवच्छेदः, मोहनीयस्योदयसत्ताव्यवच्छेदश्च भवति । ततोऽसावनन्तरसमये क्षीणकषायो जातः, तस्य च शेषकर्मणां स्थितिघातादयः पूर्ववत्प्रवर्तन्ते, यावत्क्षीणकषायाद्धायाः संख्येया भागा गता भवन्ति, एकः संख्येयो भागोऽवतिष्ठते । तस्मिंश्च ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्कनिद्राद्विकरूपाणां षोडशकर्मणां स्थितिसत्कर्मसर्वापवर्तनयाऽपवर्त्य क्षीणकषायाद्धासमं करोति । केवलं निद्राद्विकस्य दलिकापेक्षया समयन्यूनं कालतस्तु तुल्यं करोति । सा च क्षीणकषायाद्धाऽद्याप्यन्तर्मुहूर्तप्रमाणा, ततः प्रभृति चैतेषां स्थितिघातादयः स्थिताः, शेषाणां तु भवन्त्येव । तानि च षोडश कर्माणि निद्राद्विकवर्जितान्युदयोदीरणाभ्यां वेदयन् तावद्गतः यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये तेषां निद्राद्विकवर्जितानां चतुर्दशकर्मणामुदीरणा निवृत्ता । तत आवलिकामात्रं कालं यावदुदयेनैव केवलेन तानि वेदयति यावत्क्षीणकषायाद्धाया द्विचरमसमयः ।

तस्मिंश्च द्विचरमसमये निद्राद्विकं स्तिबुकसंक्रमेणान्यत्र संक्रमयति । एवं निद्राद्विकं स्वरूपसत्ताऽपेक्षया क्षीणम् । चतुर्दशानां च प्रकृतीनां चरमसमये क्षयः । ततोऽनन्तरसमये केवली जायत इति ।। **'सयोगिकेवलिगुणस्थानम्'** इति योगो वीर्यं परिस्पन्द इत्यनर्थान्तरम् सह योगेन वर्तन्ते ये ते सयोगा मनोवाक्कायाः ते यस्य विद्यन्त इति सयोगी । तत्र भगवतः काययोगश्चङ्क्रमणनिमेषोन्मेषादिः, वाचिको देशनादिः, मानसिको मनःपर्यायज्ञानिभिरनुत्तरसुरादिभिर्वा पृष्टस्य सतो मनसैव देशनात् । ते हि भगवत्प्रयुक्तानि मनोद्रव्याणि मनःपर्यायज्ञानेनावधिज्ञानेन च पश्यन्ति, दृष्ट्वा च ते विवक्षितवस्त्वालोचनाकारान्यथाऽनुपपत्त्याऽलोकस्वरूपादिकमपि बाह्यमर्थं पृष्टमवगच्छन्तीति । केवलं ज्ञानं दर्शनं चोक्तस्वरूपं विद्यते यस्य स केवली, सयोगी चासौ केवली च सयोगिकेवली तस्य गुणस्थानं सयोगिकेवलिगुणस्थानम् । सयोगिकेवली च जघन्येनान्तर्मुहूर्तम्, उत्कर्षतो देशोनां पूर्वकोटीं विहृत्य कश्चित् कर्मणां समीकरणार्थं समुद्घातं गच्छति, यस्य वेदनीयादिकमायुषः सकाशादधिकतरम् । अन्यस्तु न गच्छत्येव । गत्वा चागत्वा च समुद्घातमघातिकर्मक्षपणाय लेश्यातीतमत्यन्ताप्रकम्पं परमनिर्जराकारणं ध्यानं प्रतिपित्सुर्योगनिरोधायोपक्रमत एव । तत्र पूर्वं बादरकाययोगेन बादरमनोयोगं निरुणद्धि, ततो वाग्योगम्, ततः सूक्ष्मकाययोगेन बादरकाययोगम्, ततस्तेनैव सूक्ष्ममनोयोगम्, ततः सूक्ष्मवाग्योगम्, ततः सूक्ष्मकाययोगं निरुन्धानः सूक्ष्मक्रियाप्रतिपातिध्यानमारोहति । तत्सामर्थ्याच्च वदनोदरादिविवरपूरणेन संकुचितदेहत्रिभागवर्तिप्रदेशो भवति । योगनिरोधश्चैष विस्तरतरकेणास्माभिर्द्दृष्टधर्मसारटीकायामभिहित इति नेह पुनः प्रतायते । तस्मिंश्च ध्याने वर्तमानः स्थितिघातादिभिरायुर्वर्जानि सर्वाण्यपि अघातिकर्माणि तावदपवर्तयति यावत्सयोग्यवस्थाचरमसमयः तस्मिंश्च चरमसमये सर्वाण्यपि कर्माण्ययोग्यवस्थासमस्थितिकानि जातानि । येषां च कर्मणामयोग्यवस्थायामुदयाभावः तेषां स्थितिं च स्वरूपं प्रतीत्य समयोना विधत्ते । सामान्यतः सत्ताकालं त्वाश्रित्यायोग्यवस्थासमानामेव । तस्मिंश्च सयोग्यवस्थाचरमसमये औदारिक १ तैजस २ कार्मणशरीर ३ संस्थानषट्क ६ प्रथमसंहननौ १० दारिकाङ्गोपाङ्ग ११ वर्णादिचतुष्का १५ ऽगुरुलघू १६ पघात १७ पराघात १८ शुभाशुभविहायोगति १९ २० प्रत्येक २१ स्थिरा २२ ऽस्थिर २३ शुभा २४ ऽशुभ २५ निर्माण २६ नाम्नामुदयोदीरणाव्यवच्छेदः, अन्यतरवेदनीयस्य २७ च उच्छ्वास २८ सुस्वर २९ दुःस्वराणां ३० च ततोऽनन्तरसमयेऽयोगिकेवली भवति ।। **'अयोगिकेवलिगुणस्थानकम्'** इति योगः पूर्वोक्तो विद्यते यस्यासौ योगी, न योगी अयोगी, अयोगी चासौ केवली चायोगिकेवली, तस्य गुणस्थानं अयोगिकेवलिगुणस्थानम् । तस्मिंश्च वर्तमानः कर्मक्षपणाय व्युपरतक्रियमप्रतिपातिध्यानमारोहति । एवमसावयोगिकेवली स्थितिघातादिरहितो यान्युदयवन्ति कर्माणि तानि स्थितिक्षयेणानुभवन् क्षप-

यति। यानि पुनरुदयवन्ति तदानीं न सन्ति तानि वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयन् वेद्यमानप्रकृतिरूपतया च वेदयन् तावद्याति यावदयोग्यवस्थाद्विचरमसमयः तस्मिंश्च द्विचरमसमये देवगति १ देवानुपूर्वी २ शरीरपञ्चक ७ बन्धनपञ्चक १२ संघातपञ्चक १७ संस्थानपञ्चका २३ ऽङ्गोपाङ्गत्रय २६ संहननषट्क ३२ वर्णादिविंशति ५२ पराघातो ५३ पघाता ५४ ऽगुरुलघू ५५ छ्वास ५६ प्रशस्ता ५७ ऽप्रशस्त ५८ विहायोगति स्थिरा ५९ ऽस्थिर ६० शुभा ६१ ऽशुभ ६२ सुस्वर ६३ दुःस्वर ६४ दुर्भग ६५ प्रत्येका ६६ ऽनादेया ६७ ऽयशःकीर्ति ६८ निर्माणा ६९ ऽपर्याप्तक ७० नीचैर्गोत्रा ७१ ऽसातासातान्यतरा ७२ नुदितवेदनीयानि द्विसप्ततिसंख्यानि स्वरूपसत्तामधिकृत्य क्षयमुपगच्छन्ति। चरमसमये तेषां सर्वात्मना स्तिबुकसंक्रमेणोदयवतीषु प्रकृतिषु मध्ये संक्रमयिष्यमाणतया न स्वरूपसत्ता संभवति। संक्रमश्च सर्वोऽप्युक्तस्वरूपो मूलप्रकृत्यभिन्नासु परप्रकृतिषु द्रष्टव्यः। मूलप्रकृत्यभिन्नाः संक्रमयति गुणत उत्तराः प्रकृतीः' इतिवचनात्। चरमसमये सातासातान्यतरोदितवेदनीय १ मनुष्यगति-२ मनुष्यानुपूर्वी ३ मनुष्यायुः ४ पञ्चेन्द्रियजाति ५ त्रस ६ सुभगा ७ ऽऽदेय ८ यशःकीर्ति ९ पर्याप्तक १० बादर ११ तीर्थकरो १२ च्चैर्गोत्राणां १३ त्रयोदशप्रकृतीनां सत्ताव्यवच्छेदः। अन्ये पुनराहुः—मनुष्यानुपूर्व्या द्विचरमसमये व्यवच्छेदः, उदयाभावात्। उदयवतीनां हि स्तिबुकसंक्रमाभावात्स्वरूपेण चरमसमये दलिकं दृश्यत एवेति युक्तस्तासां चरमसमये सत्ताव्यवच्छेदः। आनुपूर्वीनाम्नां तु चतुर्णामपि क्षेत्रविपाकतया भवापान्तरालगतावेवोदयस्तेन न भवस्थस्य तदुदयसंभवः। तदसंभवाच्चायोग्यवस्थाद्विचरमसमय एव मनुष्यानुपूर्व्याः सत्ताव्यवच्छेद इति। तन्मतेन द्विचरमसमये त्रिसप्ततिप्रकृतीनां सत्ताव्यवच्छेदः, चरमसमये द्वादशानामिति। ततोऽनन्तरसमये कोशबन्धविमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषादेरण्डफलमिव भगवानपि कर्मसंबन्धविमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषसंभवादूर्ध्वं गच्छति। स चोर्ध्वं गच्छन् ऋजुश्रेण्या यावत्स्वाकाशप्रदेशेष्विहावगाढस्तावत एव प्रदेशान् ऊर्ध्वमप्यवगाहमानो विवक्षितसमयाच्चान्यत्समयान्तरमस्पृशन् लोकान्ते गच्छति। तदुक्तमावश्यकचूर्णौ—जेत्तिए जीवोऽवगाढो तावइयाए ओगाहणाए उड्ढं उज्जगं गच्छइ न वंकं बिइयं समयं च न फुसए" इति। तत्र गतः सन् भगवान् शाश्वतं कालमवतिष्ठते। इति ॥२६॥

तदेवमुक्तानि प्रसक्तानुप्रसक्तप्रतिपादनेन सप्रपञ्चं गुणस्थानकानि। साम्प्रतमेतानि मार्गणास्थानेषु चिन्तयन्नाह—

चत्तारि देवनरएसु पंच तिरिएसु चउदस नरेसु।
इगिविगलेसु दो दो पंचिंदीसु चउदस वि ॥२७॥

(हारि०) व्याख्या–'चत्वारि' मिथ्यादृष्ट्यादीनि गुणस्थानकानीति गम्यते । क ? इत्याह–देवनारकेषु प्रत्येकं भवन्तीति शेषः । तथा पञ्च तिर्यक्ष्वाद्यान्येव । तथा चतुर्दश नरेषु । इति मार्गितानि गतिषु गुणस्थानकानि, साम्प्रतमिन्द्रियेषु तान्याह–'इगिविगलेसु' इति एकेन्द्रियविकलेन्द्रियेषु द्वे द्वे गुणस्थानके मिथ्यादृष्टिसासादनलक्षणे भवतः । एकेन्द्रियेषु सासादनं प्राग्वत् । तथा पञ्चेन्द्रियेषु चतुर्दशापि गुणस्थानकानि भवन्ति । इति गाथार्थः ।।२७।।

इत्युक्तानि गुणस्थानकानीन्द्रियेषु, इतः कायादिषु चतुर्षु मार्गणास्थानेषु तान्येवाह—

(मल०) देवेषु नारकेषु च प्रत्येकमाद्यानि मिथ्यादृष्ट्यादीन्यविरतसम्यग्दृष्टिपर्यन्तानि चत्वारि गुणस्थानकानि भवन्ति न देशविरतादीनि, तेषु भवस्वभावतो देशतोऽपि विरतेरभावात् । 'पञ्च तिरिसु' इति तिर्यक्षु पञ्च गुणस्थानकानि भवन्ति, तत्र चत्वारि पूर्वोक्तान्येव, पञ्चमं तु देशविरतिगुणस्थानकम्, तेषु देशविरतेः सद्भावात् । तथा 'नरेसु' मनुष्येषु चतुर्दशापि गुणस्थानकानि भवन्ति, तेषु मिथ्यात्वादीनां शैलेश्यवस्थापर्यन्तानां सर्वभावानामपि संभवात् । तथैकेन्द्रियविकलेद्रियेषु प्रत्येकं 'द्वे द्वे' मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके भवतः । तत्र मिथ्यादृष्टिगुणस्थानकमविशेषेण सर्वेषु द्रष्टव्यम् । सासादनसम्यग्दृष्टिगुणस्थानकं पुनस्तेजोवायुवर्जप्रत्येकबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियेषु लब्ध्या पर्याप्तेषु करणेन त्वपर्याप्तेषु न सर्वेष्विति । 'पंचिंदीसु चउदस वि' इति पञ्चेन्द्रियेषु चतुर्दशापि गुणस्थानकानि भवन्ति । तत्रासंज्ञिपञ्चेन्द्रियेषु द्वे मिथ्यादृष्टिसासादनसम्यग्दृष्टिलक्षणे गुणस्थानके प्राप्येते, तेषु लब्ध्या पर्याप्तेसु करणेन त्वपर्याप्तकेषु सासादनभावस्यापि लभ्यमानत्वात् । लब्ध्यपर्याप्तेषु तु तेषु मिथ्यादृष्टिलक्षणमेवैकं गुणस्थानकम् । संज्ञिपञ्चेन्द्रियेषु पुनरपर्याप्तकेषु त्रीणि गुणस्थानकानि, तत्र 'द्वे' पूर्वोक्ते एव, तृतीयं त्वविरतिसम्यग्दृष्टिगुणस्थानकम् । एतेष्वेव च करणपर्याप्तकेषु सर्वाण्यपि गुणस्थानकानि भवन्ति, मनुष्येषु सर्वभावसंभवात् ।। २७ ।।

**भूदगतरूसु दो एगमगणिवाऊसु चउदस तसेसु ।**
**जोए तेरस वेए तिकसाए नव दस य लोभे ।।२८।।**

(हारि०) व्याख्या–'भूदगतरूसु' भूम्यम्बुवनस्पतिकायिकेषु 'द्वे' प्रथमे गुणस्थानके प्रत्येकं भवतः । तथा 'एकं' आद्यं गुणस्थानकमग्निवायुकायिकेषु, सासादनभावान्वितस्य तेष्वनुत्पादात् । तथा चतुर्दश त्रसेषु । तथा 'जोए' इति योगत्रये मनोवाक्कायलक्षणे त्रयोदश गुणस्थानान्यन्त्यगुणस्थानकवर्जितानि, चतुर्दशगुणस्थानके तु योगानामभावात् । तथा नवशब्दस्य प्रत्येकमभिसंबन्धात्, 'वेदत्रये' स्त्रीपुंनपुंसकलक्षणे नव गुणस्थानानि, 'कषायत्रये' क्रोधमानमायालक्षणे नवैवाद्यानि, तथा दश चाऽऽद्यान्येव लोभे भवन्ति । इति गाथार्थः ।।२८।।

इति काययोगवेदकषायेषु मार्गितानि गुणस्थानकानि, साम्प्रतं ज्ञानपञ्चकेऽज्ञानत्रयान्विते तथा लाघवार्थमवधिदर्शने केवलदर्शने च तान्येवाह—

(मल०) 'भूदगतरुसु' पृथिव्यम्बुवनस्पतिषु प्रत्येकं [1]'दु दु' मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके भवतः, करणापर्याप्तावस्थायामेतेषु लब्धिपर्याप्तकेषु सासादनभावस्यापि लभ्यमानत्वात्। 'इगमगणिवाउसु' इति अग्निषु वायुषु चैकमेव मिथ्यादृष्टिलक्षणं गुणस्थानकं भवति, सासादनभावोपगतस्य तेषु मध्ये उत्पादाभावात्। 'चउदस तसेसु' इति त्रसेषु चतुर्दशापि गुणस्थानकानि भवन्ति, एकेन्द्रियवर्जितानां सर्वेषामपि त्रसत्वात्। तत्र च मनुष्यापेक्षया सर्वगुणस्थानकानामपि संभवात्। तथा 'योगे' मनोवाक्कायरूपेऽयोगिकेवलिगुणस्थानकवर्जितानि शेषाणि त्रयोदशापि गुणस्थानकानि भवन्ति सर्वेष्वप्येतेषु यथायोगं योगत्रयस्यापि संभवात्। तथा 'वेदे' स्त्रीपुंनपुंसकलक्षणे, 'कषायत्रये' क्रोधमानमायारूपे मिथ्यादृष्ट्यादीन्यनिवृत्तिबादरपर्यन्तानि नव गुणस्थानकानि भवन्ति, न शेषाणि; अनिवृत्तिबादर एव क्षीणत्वेनोपशान्तत्वेन वा शेषेषु गुणस्थानकेषु तेषामसंभवात्। 'दस य लोभे' इति लोभे=लोभकषाये दश गुणस्थानकानि भवन्ति। तत्र नव पूर्वोक्तान्येव, दशमं सूक्ष्मसंपरायगुणस्थानकम्, तत्र किट्टीकृतलोभदलिकस्य वेद्यमानत्वात्॥ २८॥

मइसुयओहिदुगे नव अजयाइ जयाइ सत्त मणनाणे।
केवलदुगंमि दो तिन्नि दो व पढमा अनाणतिगे ॥२९॥

(हारि०) व्याख्या—मतिश्रुतावधिद्विके, अत्र द्वन्द्वैकवद्भावः, तत्र मतिज्ञाने श्रुतज्ञाने अवधिज्ञाने अवधिदर्शने च प्रत्येकं नव गुणस्थानानि भवन्तीति। अथ किमाद्यानि? तान्याह-'अजयाइ' [2]इति विभक्तिलोपादयतादीन्यविरतिसम्यग्दृष्टिगुणस्थानकप्रभृतीनि क्षीणमोहान्तानि। तथा 'जयाइ सत्त मणनाणे' [3]इति अत्रापि विभक्तिलोपाद्यतादीनि प्रमत्तयतिप्रमुखानि क्षीणमोहान्तानि सप्त गुणस्थानकानि मनःपर्यवज्ञाने भवन्ति। तथा 'केवलद्विके' केवलज्ञानकेवलदर्शनरूपे 'द्वे' सयोग्ययोग्याख्ये गुणस्थानके भवतः। तथा 'त्रीणि' प्रथमानि मिथ्यादृष्टिसासादनमिश्ररूपाणि, 'द्वे वा प्रथमे' मिथ्यादृष्टिसासादनरूपे, क? इत्याह— 'अज्ञानत्रिके' मत्यज्ञानश्रुताज्ञानविभङ्गलक्षणे। तत्र यदभिप्रायेण त्रीणि गुणस्थानानि भवन्ति, तेषामयमाशयः—यदुत मिश्रदृष्टेर्व्यामिश्रज्ञानान्यप्यज्ञानान्येव यथावस्थिततत्त्वनिर्णयाभावात्, अतस्त्रीण्यपि गुणस्थानान्यत्राज्ञानत्रिके भवन्तीति। यदभिप्रायेण च द्वे गुणस्थानके भवतः तेषामिदमाकूतम्—यदुत मिश्रदृष्टेः किंचित्सम्यग्रूपत्वात्तज्ज्ञानानि किंचित्कलुषाण्यपि सम्य-

१ अत्र टीकायां "दो दो इगमगणिवाउसु" इति पाठान्तरानुसारेण व्याख्यातं ज्ञेयम्।
२-३ "त्ति" इत्यपि पाठः।

गुज्ञानान्येव, अतोऽज्ञानत्रये द्वे एव गुणस्थानके भवतः । अहिवं तर्हि सासादनस्यापि सम्यग्दृष्टित्वेन तदवबोधस्यापि ज्ञानरूपत्वात्कथमज्ञानत्रये सासादनगुणस्थानकसंभवः ? इति, सत्यमेतत्, नवरं तज्ज्ञानस्यानन्तानुबन्धिप्रथमकषायोदयेनातिदूषितत्वादज्ञानमेवेति भावः । इति गाथार्थः ॥२१॥

एवं ज्ञानेषु सप्रतिपक्षेषु अवधिदर्शने केवलदर्शने च तानि प्ररूपितानि गुणस्थानकानि, साम्प्रतं संयमे सामायिकादिपञ्चप्रकारे देशसंयमे च तानि प्रतिपिपादयिषुराह—

(मल०) मतिज्ञाने श्रुतज्ञाने अवधिद्विके अवधिज्ञानदर्शनरूपे 'अयतादीनि' अविरतसम्यग्दृष्ट्यादीनि क्षीणमोहान्तानि नव गुणस्थानकानि भवन्ति न शेषाणि । तथाहि न मतिश्रुतावधिज्ञानानि मिथ्यादृष्टिसासादनमिश्रेषु भवन्ति तद्भावे ज्ञानत्वस्यैवायोगात् । यत्त्ववधिदर्शनं तत्कुतश्चिदभिप्रायाद्विशिष्टश्रुतविदो मिथ्यादृष्ट्यादीनां नेच्छन्ति । तन्मतमाश्रित्याचार्येणापि तत्तेषां नेष्टम् । अथ च सूत्रे मिथ्यादृष्ट्यादीनामप्यवधिदर्शनं प्रतिपाद्यते । यदुक्तं प्रज्ञप्तौ—"ओहिदंसणअणगारोवउत्ताणं भंते ? किं नाणी अन्नाणी? गोयमा ! णाणीवि अन्नाणीवि । जइ नाणी ते अत्थेगइआ तिण्णाणी, अत्थेगइया चउणाणी । जे तिण्णाणी ते आभिणिबोहियणाणी सुयणाणी ओहिणाणी । जे चउणाणि ते आभिणिबोहियणाणी सुयणाणी ओहिणाणी मणपज्जवणाणी जे अण्णाणी ते णियमा 'मइअण्णाणी सुयअण्णाणी विभंगनाणी" इति । अत्र हि येऽज्ञानिनस्ते मिथ्यादृष्टय एवेति मिथ्यादृष्टीनामप्यवधिदर्शनं साक्षादत्र सूत्रे प्रतिपादितम्, स एव च विभङ्गज्ञानी । यदा सासादनभावे मिश्रभावे वा वर्तते तदानीं तत्राप्यवधिदर्शनं प्राप्यत इति । यत्तु सयोग्ययोगिकेवलिगुणस्थानकद्विकं तत्र मतिज्ञानादि न संभवत्येव, तद्व्यवच्छेदेनैव केवलज्ञानस्य प्रादुर्भावात् । "नट्ठंमि उ छाउमत्थिए नाणे" इतिवचनप्रामाण्यात् । आह, ननु यदि मतिज्ञानादीनि स्वस्वावरणक्षयोपशमभावेऽपि प्रादुर्भवन्ति ततो निःशेषतः स्वस्वावरणक्षये सुतरां भवेयुश्चारित्रपरिणामवत्तत्कथं तदानीं तेषामभावः ? आह च—"आवरणदेसविगमे जाइं विज्जंति मइसुयाईणि । आवरणसव्वविगमे कह ताइं न होंति जीवस्स ॥१॥" इति, उच्यते, इह यथा सहस्रभानोरुपचितघनपटलान्तरितस्यापान्तरालावस्थितकटकुड्याद्यावरणविवरप्रविष्टः प्रकाशो घटपटादीन् प्रकाशयति, तथा केवलज्ञानावरणावृतस्य केवलज्ञानस्यापान्तरालमतिज्ञानाद्यावरणक्षयोपशमरूपविवरविनिर्गतः प्रकाशो जीवादीन् पदार्थान् प्रकाशयति, स च तथा प्रकाशयन् मतिज्ञानमित्यादिलक्षणं तत्तत्क्षयोपशमानुरूपमभिधानमुद्वहति । ततो यथा सकलघनपटलकटकुड्याद्यावरणापगमे स तथाविधः प्रकाशः सहस्रभानोरस्पष्टरूपो न भवति, किन्तु सर्वात्मना स्फुटरूपोऽन्य एव, तथेहापि सकलकेवलज्ञानावरणमतिज्ञानाद्यावरणक्षये

१ ति अमाणी, तं जहा ।

न तथाविधो मतिज्ञानादिसंज्ञितः केवलज्ञानस्य प्रकाशो भवति, किन्तु सर्वात्मना यथावस्थितं वस्तु परिच्छिन्दम् परिस्फुटरूपोऽन्य एवेत्यदोषः । उक्तं च–"कडविवरागयकिरणा मेहंतरियस्स जह दिणेसस्स । ते कडमेहावगमे; न होंति जह तह इमाइंपि ॥१॥" इति । अन्ये पुनराहुः–सन्त्येव मतिज्ञानादीन्यपि सयोगिकेवल्यादौ, केवलमफलत्वात् सन्त्यपि तदानीं न विवक्ष्यन्ते यथा सूर्योदये नक्षत्रादीनीति । तथा चोक्तम्–"अण्णे आभिणिबोहियणाणाईणि वि जिणस्स विज्जंति । अफलाणि सूरुदये, जहेव णक्खत्तमाईणि ॥१॥" 'जयाइ सत्त मणनाणे' इति यतादीनि प्रमत्तयतिप्रमुखानि क्षीणमोहान्तानि सप्त गुणस्थानकानि मनःपर्यायज्ञाने भवन्ति न शेषाणि। भावना पूर्वोक्तानुसारेणावसेया। तथा 'केवलद्विके' केवलज्ञानदर्शनरूपे द्वे सयोग्ययोगिकेवलिलक्षणे गुणस्थानके भवतः। तथा 'अज्ञानत्रिके' मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानलक्षणे प्रथमानि त्रीणि मिथ्यादृष्टिसासादनमिश्रलक्षणानि गुणस्थानकानि भवन्ति। मिश्रदृष्टेश्च यद्यपि–'मीसंमि वा मिस्सं' इतिवचनात्, ज्ञानव्यामिश्राण्यज्ञानानि प्राप्यन्ते न शुद्धान्यज्ञानानि, तथाऽपि तान्यज्ञानान्येव, यथावस्थितवस्तुतत्त्वनिर्णयाभावात्। अन्ये पुनराहुः–यद्यपि न तदानीं यथावस्थितवस्तुतत्त्वनिर्णयस्तथाऽपि न तान्यज्ञानान्येव, सम्यग्ज्ञानलेशव्यामिश्रत्वात् । तदुक्तम्–मिथ्यात्वाधिकस्य मिश्रदृष्टेरज्ञानबाहुल्यम्, सम्यक्त्वाधिकस्य पुनः सम्यग्ज्ञानबाहुल्यमित्यादि । तन्मतमाश्रित्याह–'दो व' इति द्वे वा प्रथमे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके भवतः । इति ॥२९॥

**सामाइयछेएसुं, चउरो परिहार दो पमत्ताई ।**
**देससुहुमे सगं पढमचरमचउ अजयअहखाए ॥३०॥**

(हारि०) व्याख्या–सामायिकच्छेदोपस्थापनीययोश्चत्वारि गुणस्थानानि विभक्तिलोपात्प्रमत्तादीनीति सण्टङ्कः। तथा परिहारविशुद्धिके द्वे प्रमत्ताप्रमत्ते। तथा 'देशसूक्ष्मे' अत्र द्वन्द्वः, स्वकमिति प्रत्येकं योज्यम् । देशे=देशविरते=चारित्राचारित्र इत्यर्थः, 'स्वकं' स्वकीयं देशयति गुणस्थानकमित्यर्थः । तथा सूक्ष्मसंपराये च चतुर्थचारित्रे स्वकं=स्वकीयं सूक्ष्मसंपरायाभिधगुणस्थानकमित्यर्थः। तथा प्रथमं च चरमं च प्रथमचरमे, *प्रथमचरमे च* ते 'चउ' इति चतुष्के च प्रथमचरमचतुष्के ते भवतः, अत्र प्रथमाद्विवचनलोपो द्रष्टव्यः । कयोः ? इत्याह–वचनव्यत्ययादयतयथाख्यातयोर्यथासंख्यम्। अयमभिप्रायः–अयतशब्देन गुणगुणिनोरभेदोपचारादसंयमो गृहीतः, ततोऽसंयमे प्रथमानि मिथ्यादृष्टिसासादनमिश्राविरतलक्षणानि चत्वारि गुणस्थानकानि भवन्ति । यथाख्याते तु संयमे चरमाण्युपशान्तक्षीणमोहसयोग्ययोगिकेवलिलक्षणानि चत्वारि गुणस्थानानि भवन्ति। इति गाथार्थः ॥३०॥

इति संयमे सप्रतिपक्षे भणितानि गुणस्थानानि, साम्प्रतं दर्शनलेश्याभव्येषु तान्येवाह–

* एतच्चिह्नद्वयान्तर्गतभागो मुद्रितप्रतौ नास्ति ।

(मल०) सामायिकच्छेदोपस्थापनयोश्चत्वारि प्रमत्तादीन्यनिवृत्तिबादरपर्यन्तानि गुणस्थानकानि भवन्ति । तथा परिहारविशुद्धिके संयमे द्वे प्रमत्ताप्रमत्तयतिलक्षणे गुणस्थानके भवतः, नोत्तराणि; तस्मिन् संयमे वर्तमानस्य श्रेण्यारोहप्रतिषेधात् । 'देससुहुमे सग' इति देशविरतौ सूक्ष्मसंपरायसंयमे च स्वकं=स्वकीयं स्वकीयं यथाक्रमं देशविरतिगुणस्थानकं सूक्ष्मसंपरायगुणस्थानकं भवति । 'पढमचरमचउ अजयअहक्खाए' इति यथाक्रमं अयते=असंयते=संयमहीने प्रथमानि मिथ्यादृष्ट्यादीन्यविरतसम्यग्दृष्टिपर्यन्तानि चत्वारि गुणस्थानकानि भवन्ति । यथाख्यातचारित्रे पुनश्चरमाण्युपशान्तमोहादीन्ययोगिकेवलिपर्यन्तानि चत्वारि गुणस्थानानि भवन्ति ॥३०॥

**बारस अचक्खुचक्खुसु पढमा लेसासु तिसु छ दुसु सत्त ।**
**सुक्काए तेरस गुणा सव्वे भव्वे अभव्वेगं ॥३१॥**

(हारि०) व्याख्या- द्वादश प्रथमानि गुणस्थानकानीति योगः । क्व ? इत्याह—अचक्षुश्चक्षुषोः' 'अचक्षुर्दर्शने चक्षुर्दर्शने इत्यर्थः[१] । तथा प्रथमानि मिथ्यादृष्ट्यादिगुणस्थानानि षडिति संबन्धः । कासु ? इत्याह- लेश्यासु' तिसृषु कृष्णनीलकापोताभिधानासु । तथा सप्त प्रथमानि मिथ्यादृष्ट्यादीनि अप्रमत्तयत्यन्तानि । कयोः ? इत्याह—'दुसु' इति द्वयोर्लेश्ययोस्तेजसीपद्माभिधानयोः । तथा 'शुक्लायां' शुक्ललेश्यायां प्रथमानि त्रयोदश गुणस्थानानि । प्रथमशब्दश्चतुर्ष्वपि पदेषु योज्यते । तथा भव्ये सर्वाणि गुणस्थानानि । तथाऽभव्ये एकं मिथ्यादृष्टिगुणस्थानकम् , अत्र जातावेकवचनम् । इति गाथार्थः ॥३१॥

इति दर्शनादिपदत्रये मार्गितानि गुणस्थानानि, साम्प्रतं सम्यक्त्वसंज्ञिपदद्वये तान्येवाह-

(मल०) अचक्षुर्दर्शने चक्षुर्दर्शने च प्रथमानि मिथ्यादृष्ट्यादीनि क्षीणमोहपर्यन्तानि द्वादश गुणस्थानकानि भवन्ति । भावना सुज्ञाना । तथा प्रथमासु तिसृषु 'लेश्यासु' कृष्णनीलकापोतरूपासु प्रथमानि मिथ्यादृष्ट्यादीनि प्रमत्तान्तानि षड् गुणस्थानकानि भवन्ति । कृष्णनीलकापोतलेश्यानां हि प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि, ततो मन्दसंक्लेशेषु तदध्यवसायस्थानेषु तथाविधसम्यक्त्वदेशसर्वविरतीनामपि सद्भावो न विरुध्यते । तदुक्तम्—सम्यक्त्वदेशविरतिसर्वविरतीनां प्रतिपत्तिकाले शुभलेश्यात्रयमेव भवति । उत्तरकालं तु सर्वा अपि लेश्याः परावर्तन्तेऽपीति । तथा 'द्वयोः' तेजःपद्मरूपयोर्लेश्ययोः सप्त गुणस्थानानि भवन्ति । तत्र षट् पूर्वोक्तान्येव, सप्तमं त्वप्रमत्तसंयतगुणस्थानकम् मिथ्यादृष्ट्यादीनां त्वेते लेश्ये जघन्यात्यन्ताविशुद्धतदध्यवसायस्थानापेक्षया द्रष्टव्ये । एवमुत्तरत्रापि भावनीयम् । तथा 'शुक्लायां' शुक्ललेश्यायां प्रथमानि त्रयोदश गुणस्थानकानि भवन्ति, न त्वयोगिगुणस्थानकम्; अयोगिनो लेश्यातीतत्वात् । तथा भव्ये सर्वाण्यपि गुणस्थानकानि भवन्ति, योग्यत्वात् । अभव्ये पुनरेकमेव मिथ्यादृष्टिलक्षणं गुणस्थानकमिति ॥३१॥

---

१ "चक्षुर्दर्शने-ऽचक्षुर्दर्शने चेत्यर्थः" इत्यपि पाठः ।

वेयगखइगउवसमे चउरो एक्कारसट्ठ तुरियाई ।
सेसतिगे सट्ठाणं सन्निसु चउदस असन्निसु दो ॥३२॥

(हारि०) व्याख्या--वेदकं=क्षायोपशमिकं तच्च क्षायिकं चौपशमिकं चेति समाहारद्वन्द्वः । तत्र यथासंख्येन चत्वार्येकादशाष्टौ गुणस्थानानि भवन्ति । किमाद्यानि ? इत्याह--विभक्तिलोपात् 'तुर्याद्यानि' चतुर्थादीनि । तत्र वेदकेऽविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तयतिनामानि चत्वारि गुणस्थानानि । क्षायिके त्वविरतसम्यग्दृष्ट्यादीन्ययोगिकेवलिगुणस्थानकान्तान्येकादश । औपशमिकेऽविरतसम्यग्दृष्ट्याद्युपशान्तमोहान्तान्यष्टौ गुणस्थानकानि भवन्ति । तथा 'शेषत्रिके' मिश्रसासादनमिथ्यादृष्टिरूपे 'स्वस्थानं' स्वकीयपदं भवति । अयमर्थः-सम्यग्मिथ्यात्वे सम्यग्मिथ्यादृष्टिगुणस्थानकम् । एवं सासादने सासादनम्, मिथ्यात्वे मिथ्यात्वमिति । तथा 'संज्ञिषु' मनोविज्ञानयुक्तेषु चतुर्दश गुणस्थानकानि भवन्ति । नन्वत्र चतुर्दशगुणस्थानकभणनेन सामान्येन केवल्यपि संज्ञित्वेन गृहीतः, तत्र सयोगिनं प्रति संज्ञित्वभावना द्रव्यमनःसमाश्रयणेन भवद्भिः प्रागुक्ता अयोगिनं प्रति सा कथं बुध्यते ?, अत्रोच्यते, पूर्वावस्थामाश्रित्य द्रष्टव्येति संभाव्यते *यथा दृष्टिवादोपदेशिकी संज्ञा गृह्यते । तथा* 'असंज्ञिषु' मनोविज्ञानरहितेषु द्वे मिथ्यात्वसासादनलक्षणगुणस्थानके भवतः । इति गाथार्थः ॥३२॥

इति सम्यक्त्वद्वारे सप्रतिपक्षे संज्ञिद्वारे चोक्तानि गुणस्थानानि । अथ पर्यन्तवर्त्याहारकद्वारे सप्रतिपक्षे तानि प्रतिपादयन् गत्यादिषु गुणस्थानकसमर्थनां दर्शयन्नाह—

(मल०) वेदकं=क्षायोपशमिकं तस्मिन्, तथा क्षायिके औपशमिके च सम्यक्त्वे यथासंख्यं चत्वारि एकादशाष्टौ च गुणस्थानकानि भवन्ति । कानि पुनस्तानि ? इत्यत आह—'तुर्यादीनि' चतुर्थादीनि । तत्र क्षायोपशमिकसम्यक्त्वेऽविरतसम्यग्दृष्ट्यादीन्यप्रमत्तपर्यन्तानि चत्वारि गुणस्थानकानि भवन्ति, क्षायिके त्वविरतसम्यग्दृष्ट्यादीन्ययोगिपर्यन्तान्येकादश गुणस्थानकानि भवन्ति, औपशमिकसम्यक्त्वे पुनरविरतसम्यग्दृष्ट्यादीन्युपशान्तमोहपर्यन्तान्यष्टाविति । 'सेसतिगे सट्ठाणं' इति शेषत्रिके मिथ्यादृष्टिसासादनमिश्रलक्षणे स्वस्थानं स्वं स्वमेव गुणस्थानकं भवति । तथा संज्ञिषु चतुर्दशापि गुणस्थानकानि भवन्ति, सयोग्ययोग्यवस्थायामपि द्रव्यमनोऽपेक्षया संज्ञित्वाभ्युपगमात् । 'असण्णिसु दो' इति असंज्ञिषु द्वे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके भवतः । तत्र सासादनसम्यग्दृष्टिगुणस्थानकं लब्धिपर्याप्तकानां करणापर्याप्तावस्थायां द्रष्टव्यम् ॥३२॥

आहारगेसु पढमा तेरसऽणाहारगेसु पंच इमे ।
[1]पढमंतिमदुगअविरय इय गइयाईसु गुणठाणा ॥३३॥

---

* एतच्चिह्नद्वयान्तर्गतपाठः प्रत्यन्तरे नास्ति । १ "पढमंतदुगअविरया" इति वा ।

(हारि०) व्याख्या–आहारकेषु प्रथमानि त्रयोदश गुणस्थानानि भवन्ति। तथाऽनाहारके पञ्चैमानि वक्ष्यमाणानि। तान्येवाह–'पढमंतिमदुगअविरय' इति द्विकशब्दस्य प्रत्येकमभिसंबन्धात्प्रथमद्विकान्त्यद्विकाविरतानीति तत्पुरुषगर्भो द्वन्द्वः। तत्र मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिगुणस्थानकानि त्रीणि विग्रहगतौ सयोगिकेवलिगुणस्थानकम्। समुद्घाते चतुर्थपञ्चमतृतीयसमयेषु सिद्धान्तप्रसिद्धेषु अयोगिकेवलिगुणस्थानं त्वीषद्ह्रस्वाक्षरपञ्चकोद्गिरणमात्रं कालं समस्तगुणस्थानकमित्यर्थः। उक्तं च–"विग्गहगइमावन्ना, केवलिणो समुहया अजोगी य। सिद्धा य अणाहारा, सेसा आहारगा जीवा ॥१॥" इत्यनाहारके पञ्चेति गत्यादिष्वाहारकपर्यवसानेषु चतुर्दशपदेषु द्विषष्ट्युत्तरभेदप्रभिन्नेषु 'इति' अमुना प्रकारेण गुणस्थानकान्यभिहितानीति शेषः। इति गाथार्थः ॥३३॥

साम्प्रतं मार्गणास्थानेष्वेव योगान्मार्गयितुकामः पूर्वं तानेव प्ररूपयन्नाह—

(मल०) आहारकेषु प्रथमानि मिथ्यादृष्ट्यादीनि त्रयोदश गुणस्थानकानि भवन्ति, सर्वेष्वप्येतेषु ओजोलोमप्रक्षेपाहाराणामन्यतमस्याहारस्य यथायोगं संभवात्। तथाऽनाहारकेषु पञ्च इमानि वक्ष्यमाणानि गुणस्थानकानि भवन्ति। कानि? इत्यत आह–पढमंतिमदुगअविरय' इति प्रथमद्विकं मिथ्यादृष्टिसासादनलक्षणम्, अन्तिमद्विकं सयोग्ययोगिकेवलिलक्षणम्, अविरतसम्यग्दृष्टिश्चेति। तत्र सयोगिनोऽनाहारकत्वं समुद्घातगतस्य तृतीयचतुर्थपञ्चमसमयेषु तदुक्तम्–"चतुर्थपञ्चमतृतीयेष्वनाहारकः" इति। अयोग्यवस्थायां तु योगरहितत्वेनौदारिकादिशरीरपोषकपुद्गलग्रहणाभावादनाहारकत्वम् औदारिकवैक्रियाहारकशरीरपोषकपुद्गलोपादानमाहार इति हि समयोपनिषद्वेदिनः। मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिषु विग्रहगतावनाहारकत्वमिति। उपसंहारमाह–' गइयाइसु इय गुणट्ठाणा" ॥३३॥

तदेवमुक्तानि मार्गणास्थानेषु गुणस्थानकानि, साम्प्रतमेतेषु योगानभिधित्सुस्तानेव पूर्वं स्वरूपतो निर्दिशति—

**सच्चं मोसं मीसं असच्चमोसं मणं तह वई य।**
**उरलविउव्वाहारा मीसा कम्मइगमिय जोगा ॥३४॥**

(हारि०) व्याख्या–सन्तो मुनयः पदार्था वा, तेषु यथासंख्येन मुक्तिप्रापकत्वेन यथावस्थितस्वरूपचिन्तनेन वा हितं सत्यम्। अस्ति जीवः सदसद्रूपो वा देहमात्रव्यापकः, इत्यादि यथावस्थितवस्तुविकल्पनपरम्। तथा तद्विपरीतं मृषा। नास्ति जीव एकान्तसद्रूपो वेत्यादि। यथावस्थिता-ऽयथावस्थितवस्तुचिन्तनपरं मिश्रम्। इह धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेषु अशोकवनमिदमिति यदा विकल्पयति तदा प्रस्तुतमिश्रविषयता। इदं हि विकल्पनमत्राशोकवृक्षाणां सद्भावात्सत्यम्, अन्येषामपि धवादीनां तत्र सद्भावादसत्यमिति मिश्रम्। न

वेयगखइगउवसमे चउरो एक्कारसट्ठ तुरियाई ।
सेसतिगे सट्ठाणं सन्निसु चउदस असन्निसु दो ॥३२॥

(हारि०) व्याख्या--वेदकं=क्षायोपशमिकं तच्च क्षायिकं चौपशमिकं चेति समाहारद्वन्द्वः । तत्र यथासंख्येन चत्वार्येकादशाष्टौ गुणस्थानानि भवन्ति । किमाद्यानि ? इत्याह--विभक्तिलोपात् 'तुर्यादीनि' चतुर्थादीनि । तत्र वेदकेऽविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तयतिनामानि चत्वारि गुणस्थानानि । क्षायिके त्वविरतसम्यग्दृष्ट्यादीन्ययोगिकेवलिगुणस्थानकान्तान्येकादश । औपशमिकेऽविरतसम्यग्दृष्ट्याद्युपशान्तमोहान्तान्यष्टौ गुणस्थानकानि भवन्ति । तथा 'शेषत्रिके' मिश्रसासादनमिथ्यादृष्टिरूपे 'स्वस्थानं' स्वकीयपदं भवति । अयमर्थः-सम्यग्मिथ्यात्वे सम्यग्मिथ्यादृष्टिगुणस्थानकम् । एवं सासादने सासादनम्, मिथ्यात्वे मिथ्यात्वमिति । तथा 'संज्ञिषु' मनोविज्ञानयुक्तेषु चतुर्दश गुणस्थानकानि भवन्ति । नन्वत्र चतुर्दशगुणस्थानकभणनेन सामान्येन केवल्यपि संज्ञित्वेन गृहीतः, तत्र सयोगिनं प्रति संज्ञित्वभावना द्रव्यमनःसमाश्रयणेन भवद्भिः प्रागुक्ता अयोगिनं प्रति सा कथं बुध्यते ?, अत्रोच्यते, पूर्वावस्थामाश्रित्य द्रष्टव्येति संभाव्यते *यथा दृष्टिवादोपदेशिकी संज्ञा गृह्यते । तथा* 'असंज्ञिषु' मनोविज्ञानरहितेषु द्वे मिथ्यात्वसासादनलक्षणगुणस्थानके भवतः । इति गाथार्थः ॥३२॥

इति सम्यक्त्वद्वारे सप्रतिपक्षे संज्ञिद्वारे चोक्तानि गुणस्थानानि । अथ पर्यन्तवर्त्याहारकद्वारे सप्रतिपक्षे तानि प्रतिपादयन् गत्यादिषु गुणस्थानकसमर्थनां दर्शयन्नाह—

(मल०) वेदकं=क्षायोपशमिकं तस्मिन्, तथा क्षायिके औपशमिके च सम्यक्त्वे यथासंख्यं चत्वारि एकादशाष्टौ च गुणस्थानकानि भवन्ति । कानि पुनस्तानि ? इत्यत आह--'तुर्यादीनि' चतुर्थादीनि । तत्र क्षायोपशमिकसम्यक्त्वेऽविरतसम्यग्दृष्ट्यादीन्यप्रमत्तपर्यन्तानि चत्वारि गुणस्थानकानि भवन्ति, क्षायिके त्वविरतसम्यग्दृष्ट्यादीन्ययोगिपर्यन्तान्येकादश गुणस्थानकानि भवन्ति, औपशमिकसम्यक्त्वे पुनरविरतसम्यग्दृष्ट्यादीन्युपशान्तमोहपर्यन्तान्यष्टाविति । 'सेसतिगे सट्ठाणं' इति शेषत्रिके मिथ्यादृष्टिसासादनमिश्रलक्षणे स्वस्थानं स्वं स्वमेव गुणस्थानकं भवति । तथा संज्ञिषु चतुर्दशापि गुणस्थानकानि भवन्ति, सयोग्ययोग्यवस्थायामपि द्रव्यमनोऽपेक्षया संज्ञित्वाभ्युपगमात् । 'असण्णिसु दो' इति असंज्ञिषु द्वे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके भवतः । तत्र सासादनसम्यग्दृष्टिगुणस्थानकं लब्धिपर्याप्तकानां करणापर्याप्तावस्थायां द्रष्टव्यम् ॥३२॥

आहारगेसु पढमा तेरसऽणाहारगेसु पंच इमे ।
[1]पढमंतिमदुगअविरय इय गइयाईसु गुणठाणा ॥३३॥

---

* एतच्चिह्नद्वयान्तर्गतपाठः प्रत्यन्तरे नास्ति । १ "पढमंतदुगअविरया" इति वा ।

(हारि०) व्याख्या—आहारकेषु प्रथमानि त्रयोदश गुणस्थानानि भवन्ति। तथाऽनाहारके पञ्चेमानि वक्ष्यमाणानि। तान्येवाह—'**पढमंतिमदुगअविरय**' इति द्विकशब्दस्य प्रत्येकमभिसंबन्धात्प्रथमद्विकान्त्यद्विकाविरतानीति तत्पुरुषगर्भो द्वन्द्वः। तत्र मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिगुणस्थानकानि त्रीणि विग्रहगतौ सयोगिकेवलिगुणस्थानकम्। समुद्घाते चतुर्थपञ्चमतृतीयसमयेषु सिद्धान्तप्रसिद्धेषु अयोगिकेवलिगुणस्थानं त्वीपद्हृस्वाक्षरपञ्चकोद्गिरणमात्रं कालं समस्तगुणस्थानकमित्यर्थः। उक्तं च—"**विग्गहगइमावन्ना, केवलिणो समुहया अजोगी य। सिद्धा य अणाहारा, सेसा आहारगा जीवा ॥१॥**" इत्यनाहारके पञ्चेति गत्यादिष्वाहारकपर्यवसानेषु चतुर्दशपदेषु द्विषष्ट्युत्तरभेदप्रभिन्नेषु 'इति' अमुना प्रकारेण गुणस्थानकान्यभिहितानीति शेषः। इति गाथार्थः ॥२३॥

साम्प्रतं मार्गणास्थानेष्वेव योगान्मार्गयितुकामः पूर्वं तानेव प्ररूपयन्नाह—

(मल०) आहारकेषु प्रथमानि मिथ्यादृष्ट्यादीनि त्रयोदश गुणस्थानकानि भवन्ति, सर्वेष्वप्येतेषु ओजोलोमप्रक्षेपाहाराणामन्यतमस्याहारस्य यथायोगं संभवात्। तथाऽनाहारकेषु पञ्च इमानि वक्ष्यमाणानि गुणस्थानकानि भवन्ति। कानि? इत्यत आह—**पढमंतिमदुगअविरय**' इति प्रथमद्विकं मिथ्यादृष्टिसासादनलक्षणम्, अन्तिमद्विकं सयोग्ययोगिकेवलिलक्षणम्, अविरतसम्यग्दृष्टिश्चेति। तत्र सयोगिनोऽनाहारकत्वं समुद्घातगतस्य तृतीयचतुर्थपञ्चमसमयेषु तदुक्तम्—"**चतुर्थपञ्चमतृतीयेष्वनाहारकः**" इति। अयोग्यवस्थायां तु योगरहितत्वेनौदारिकादिशरीरपोषकपुद्गलग्रहणाभावादनाहारकत्वम् औदारिकवैक्रियाहारकशरीरपोषकपुद्गलोपादानमाहार इति हि समयोपनिषद्वेदिनः। मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिषु विग्रहगतावनाहारकत्वमिति। उपसंहारमाह—'**गइयाइसु इय गुणट्ठाणा**" ॥२३॥

तदेवमुक्तानि मार्गणास्थानेषु गुणस्थानकानि, साम्प्रतमेतेषु योगानभिधित्सुस्तानेव पूर्वं स्वरूपतो निर्दिशति—

**सच्चं मोसं मीसं असच्चमोसं मणं तह वई य।**
**उरलविउव्वाहारा मीसा कम्मइगमिय जोगा ॥२४॥**

(हारि०) व्याख्या—सन्तो मुनयः पदार्था वा, तेषु यथासंख्येन मुक्तिप्रापकत्वेन यथावस्थितस्वरूपचिन्तनेन वा हितं सत्यम्। अस्ति जीवः सदसद्रूपो वा देहमात्रव्यापकः, इत्यादि यथावस्थितवस्तुविकल्पनपरम्। तथा तद्विपरीतं मृषा। नास्ति जीव एकान्तसद्रूपो वेत्यादि। यथावस्थिता-ऽयथावस्थितवस्तुचिन्तनपरं मिश्रम्। इह धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेषु अशोकवनमिदमिति यदा विकल्पयति तदा प्रस्तुतमिश्रविषयता। इदं हि विकल्पनमत्राशोकवृक्षाणां सद्भावात्सत्यम्, अन्येषामपि धवादीनां तत्र सद्भावादसत्यमिति मिश्रम्। न

वेयगखइगउवसमे चउरो एक्कारसट्ठ तुरियाई ।
सेसतिगे सट्ठाणं सन्निसु चउदस असन्निसु दो ॥३२॥

(हारि०) व्याख्या--वेदकं=क्षायोपशमिकं तच्च क्षायिकं चौपशमिकं चेति समाहारद्वन्द्वः । तत्र यथासंख्येन चत्वार्येकादशाष्टौ गुणस्थानानि भवन्ति । किमाद्यानि ? इत्याह--विभक्तिलोपात् 'तुर्यादीनि' चतुर्थादीनि । तत्र वेदकेऽविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तयतिनामानि चत्वारि गुणस्थानानि । क्षायिके त्वविरतसम्यग्दृष्ट्यादीन्ययोगिकेवलिगुणस्थानकान्तान्येकादश । औपशमिकेऽविरतसम्यग्दृष्ट्याद्युपशान्तमोहान्तान्यष्टौ गुणस्थानकानि भवन्ति । तथा 'शेषत्रिके' मिश्रसासादनमिथ्यादृष्टिरूपे 'स्वस्थानं' स्वकीयपदं भवति । अयमर्थः--सम्यग्मिथ्यात्वे सम्यग्मिथ्यादृष्टिगुणस्थानकम् । एवं सासादने सासादनम्, मिथ्यात्वे मिथ्यात्वमिति । तथा 'संज्ञिषु' मनोविज्ञानयुक्तेषु चतुर्दश गुणस्थानकानि भवन्ति । नन्वत्र चतुर्दशगुणस्थानकभणनेन सामान्येन केवल्यपि संज्ञित्वेन गृहीतः, तत्र सयोगिनं प्रति संज्ञित्वभावना द्रव्यमनःसमाश्रयणेन भवद्भिः प्रागुक्ता अयोगिनं प्रति सा कथं बुध्यते ?, अत्रोच्यते, पूर्वावस्थामाश्रित्य द्रष्टव्येति संभाव्यते *यथा दृष्टिवादोपदेशिकी संज्ञा गृह्यते । तथा* 'असंज्ञिषु' मनोविज्ञानरहितेषु द्वे मिथ्यात्वसासादनलक्षणगुणस्थानके भवतः । इति गाथार्थः ॥३२॥

इति सम्यक्त्वद्वारे सप्रतिपक्षे संज्ञिद्वारे चोक्तानि गुणस्थानानि । अथ पर्यन्तवर्त्याहारकद्वारे सप्रतिपक्षे तानि प्रतिपादयन् गत्यादिषु गुणस्थानकसमर्थनां दर्शयन्नाह—

(मल०) वेदकं=क्षायोपशमिकं तस्मिन्, तथा क्षायिके औपशमिके च सम्यक्त्वे यथासंख्यं चत्वारि एकादशाष्टौ च गुणस्थानकानि भवन्ति । कानि पुनस्तानि ? इत्यत आह--'तुर्यादीनि' चतुर्थादीनि । तत्र क्षायोपशमिकसम्यक्त्वेऽविरतसम्यग्दृष्ट्यादीन्यप्रमत्तपर्यन्तानि चत्वारि गुणस्थानकानि भवन्ति, क्षायिके त्वविरतसम्यग्दृष्ट्यादीन्ययोगिपर्यन्तान्येकादश गुणस्थानकानि भवन्ति, औपशमिकसम्यक्त्वे पुनरविरतसम्यग्दृष्ट्यादीन्युपशान्तमोहपर्यन्तान्यष्टाविति । 'सेसतिगे सट्ठाणं' इति शेषत्रिके मिथ्यादृष्टिसासादनमिश्रलक्षणे स्वस्थानं स्वं स्वमेव गुणस्थानकं भवति । तथा संज्ञिषु चतुर्दशापि गुणस्थानकानि भवन्ति, सयोग्ययोग्यवस्थायामपि द्रव्यमनोऽपेक्षया संज्ञित्वाभ्युपगमात् । 'असण्णिसु दो' इति असंज्ञिषु द्वे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके भवतः । तत्र सासादनसम्यग्दृष्टिगुणस्थानकं लब्धिपर्याप्तकानां करणापर्याप्तावस्थायां द्रष्टव्यम् ॥३२॥

आहारगेसु पढमा तेरसऽणाहारगेसु पंच इमे ।
[1]पढमंतिमदुगअविरय इय गइयाईसु गुणठाणा ॥३३॥

---

* एतच्चिह्नद्वयान्तर्गतपाठः प्रत्यन्तरे नास्ति । 1 "पढमंतदुगअविरया" इति वा ।

साम्प्रतमेते गत्यादिमार्गणास्थानेषु योज्यन्ते—

(मल०) इह योगशब्देन कारणे कार्योपचारात्तत्सहकारिभूतं मनः प्रभृत्येव विवक्षितमिति तैः सह योगस्य सामानाधिकरण्यम्। तत्र मनश्चतुर्धा, तद्यथा—सत्यं, मृषा 'मिश्रम्' इति सत्यामृषा असत्यामृषेति। तत्र सत्यमिति सन्तो मुनयः पदार्था वा, तेषु यथासंख्यं मुक्तिप्रापकत्वेन यथावस्थितवस्तुस्वरूपचिन्तनेन च साधु सत्यम्, यथाऽस्ति जीवः सदसद्रूपो देहमात्रव्यापी, इत्यादिरूपतया यथावस्थितवस्तुचिन्तनपरम्। सत्यविपरीतमसत्यम्, यथा नास्ति जीव एकान्तासद्रूपो वा, इत्यादिकुविकल्पनपरम्। सत्यं च मृषा चेति मिश्रम्, यथा धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमिति विकल्पनपरम्। अत्र हि कतिपयाशोकवृक्षाणां सद्भावात्सत्यता, अन्येषामपि धवादीनां सद्भावादसत्यता, व्यवहारनयमतापेक्षया चैवमुच्यते। परमार्थतः पुनरिदमसत्यमेव, यथाविकल्पितार्थायोगात्। तथा यन्न सत्यं नापि मृषा तदसत्यामृषा। इह विप्रतिपत्तौ सत्यां यद्वस्तुप्रतिष्ठाशया सर्वज्ञमतानुसारेण विकल्प्यते, यथाऽस्ति जीवः सदसद्रूप इत्यादि, तत्किल सत्यं परिभाषितम्। यत्पुनर्विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतोत्तीर्णं विकल्प्यते, यथा नास्ति जीव एकान्तनित्यो वेति तदसत्यम्, विराधकत्वात्। यत्पुनर्वस्तुप्रतिष्ठाशामन्तरेण स्वरूपमात्रपर्यालोचनपरम्; यथा हे देवदत्त! घटमानय, गां देहि मह्यम्; इत्यादिचिन्तनपरं तदसत्यामृषा। इदं हि स्वरूपमात्रपर्यालोचनपरत्वान्न यथोक्तलक्षणं सत्यं नापि मृषेति, इदमपि व्यवहारनयमतेन द्रष्टव्यम्, निश्चयनयमतेन तु विप्रतारणादिबुद्धिपूर्वकमसत्येऽन्तर्भवति अन्यथा तु सत्ये इति। 'तह वई' इति यथा मनः सत्यादिभेदाच्चतुर्धा तथा वागपि सत्यादिभेदाच्चतुर्धा। 'उरलविउव्वाहारा' इति औदारिकवैक्रियाहारकाणि। तत्रोदारं=प्रधानम्। प्राधान्यं च तीर्थकरगणधरशरीरापेक्षया द्रष्टव्यम्। ततोऽन्यस्यानुत्तरसुरशरीरस्याप्यनन्तगुणहीनरूपत्वादुदारमेवौदारिकम्। विनयादित्वादिकण्। अथवोदारं=सातिरेकयोजनसहस्रमानत्वाच्छेषशरीरापेक्षया बृहत्प्रमाणम्। बृहत्ता चास्य वैक्रियमधिकृत्य भवधारणीयसहजशरीरापेक्षया द्रष्टव्या। अन्यथोत्तरवैक्रियं योजनलक्षमानमपि लभ्यत इति। उदारमेवौदारिकम्। प्राग्वदिकण्प्रत्ययः। तथा विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियम्। तथा चतुर्दशपूर्वविदा तीर्थकरस्फातिदर्शनादिकतथाविधप्रयोजनोत्पत्तौ सत्यां विशिष्टलब्धिवशादाह्रियते=निर्वर्त्यत इत्याहारकम्। कृत्यल्युटो बहुलमितिवचनात् कर्मणि वुञ्। यथा पादहारक इत्यत्र। 'मिस्सा' इति मिश्रशब्दः प्रत्येकमभिसंबध्यते। औदारिकमिश्रं वैक्रियमिश्रं आहारकमिश्रं च। तत्रौदारिकमिश्रं कार्मणेन, तच्चापर्याप्तावस्थायां केवलिसमुद्घातावस्थायां वा उत्पत्तिदेशे हि पूर्वभवादनन्तरमागतो जीवः प्रथमसमये कार्मणेनैव केवलेनाहारयति, ततः परमौदारिकस्याप्यारब्धत्वादौदारिकेण कार्मणमिश्रेण यावच्छरीरस्य निष्पत्तिः। उक्तं च ''जोएण

विद्यते मृशा यत्र तद्भवत्यमृषम्, असत्यं च तदमृषं चेति कृताकृतादिवत्कर्मधारयः, आमन्त्रण-प्रज्ञापनादिरूपम्, यथा हे देवदत्त! घटमानय, धर्मं कुरु, भिक्षां देहि इत्यादि। एवंविधं किम्? इत्याह—'मणं' इति मनः=श्चित्तं, तथाशब्दो वाक्योपक्षेपार्थः। लिङ्गव्यत्ययेन वाक्चैवं-विधैव चतुर्भेदेत्यर्थः। तथा 'उरलविउव्वाहारा' इति सूचकत्वात्सूत्रस्यौदारिकवैक्रियाहारककाययोगाः। तथा 'मीसा' इति एत एवौदारिकादयो मिश्रास्त्रयः। 'कम्मइण' इति प्राकृतत्वात्कार्मणकाययोग इति सप्तविधकाययोगः। तत्रोदारं=प्रधानं, उदारमेवौदारिकम्। प्राधान्यं चेह तीर्थकरगणधरशरीरापेक्षया वेदितव्यम्। ततोऽन्यस्यानुत्तरसुर-शरीरस्याप्यनन्तगुणहीनरूपत्वात्। अथवा उदारं=सातिरेकयोजनसहस्रमानत्वाच्छेषशरीरेभ्यो बृहत्प्रमाणम्, उदारमेवौदारिकम्। बृहत्त्वं चास्य भवधारणीयसहजशरीरापेक्षया मन्तव्यम्। अन्यथा हि उत्तरवैक्रियं लक्षयोजनमानमपि लभ्यत इति। औदारिकमेव चीयमानत्वात्कायः, तेन सहकारिकारणभूतेन तद्विषयो वा योग औदारिककाययोगः १। तथा विविधा विशिष्टा वा क्रिया विक्रया तस्यां भवं वैक्रियम्, विशिष्टं कुर्वन्ति तदिति च निपातनाद्वैक्रियम्, तदेव कायस्तेन योगो वैक्रियकाययोगः २। तथा चतुर्दशपूर्वविदा तथाविधकार्योत्पत्तौ विशिष्टल-ब्धिवशादाह्रियते=निर्वर्त्यत इत्याहारकम्, अथवा आह्रियन्ते=गृह्यन्ते तीर्थकरादिसमीपे सूक्ष्मा जीवादयः पदार्था अनेनेत्याहारकम्, तदेव कायः, तेन योग आहारककाययोगः ३। तथा औदारिकं मिश्रं यत्र, कार्मणेनेति गम्यते, स भवत्यौदारिकमिश्रः। उत्पत्तिदेशे हि अनन्तरागतो जीवः प्रथमसमये कार्मणेनैवाहारयति ततः परमौदारिकस्यारब्धत्वादौदारिकेण कार्मणमिश्रेणा-हारयति, उक्तं च निर्युक्तिकृता—"जोएण कम्मएणं, आहारेई अणंतरं जीवो। तेण परं मीसेणं, जाव सरीरस्स निप्फत्ती ॥१॥" औदारिकमिश्रश्चासौ कायश्च तेन योग औदारिकमिश्रकाययोगः ४। तथा वैक्रियं मिश्रं यत्र कार्मणेनेति गम्यते स वैक्रियमिश्रः। अयं तु देवनारकाणामपर्याप्तावस्थायां मन्तव्यः। शेषस्तु वाय्वादीनामौदारिक (वैक्रिय) मिश्रो न प्राह्योऽप्रधानत्वादिति ५। तथाऽऽहारकं मिश्रं यत्रौदारिकेणेति गम्यते स आहारकमिश्रः, स एव कायस्तेन योग आहारकमिश्रकाययोगः। यदा सिद्धप्रयोजनश्चतुर्दशपूर्वविदाऽऽहारकं परित्यज्यौदारिकोपादानाय प्रवर्तते तदौदारिकेण मिश्रमाहारकं प्राप्यते। बहुव्यापारत्वेन प्रधान-त्वादाहारकेण व्यपदेश इति भावः। अन्ये त्वस्यापि प्रारम्भकाल एवाहारकमिश्रं प्रतिपद्यन्ते, प्रारभ्यमाणत्वेनाहारकस्य प्राधान्यविवक्षया तेनैव व्यपदेशमिच्छन्तीति हृदयम् ६। तथा कर्मैव कार्मणः, अथ कर्मणो विकारः कार्मणः, उक्तं च—'कम्मविवागो कम्मणमट्ठविहविचित्त-कम्मनिप्फन्नं। सव्वेसि सरीराणं कारणभूयं मुणेयव्वं ॥१॥' कार्मणश्चासौ कायश्च तेन योगः कार्मणकाययोगः ७। 'इय जोगा' इति 'इति' अमुना प्रकारेण योगाः पञ्च-दशापि प्ररूपिता इति शेषः। इति गाथार्थः ॥२४॥

साम्प्रतमेते गत्यादिमार्गणास्थानेषु योज्यन्ते—

(मल०) इह योगशब्देन कारणे कार्योपचारात्तत्सहकारिभूतं मनः प्रभृत्येव विवक्षितमिति तैः सह योगस्य सामानाधिकरण्यम्। तत्र मनश्चतुर्धा, तद्यथा–सत्यं, मृषाः 'मिश्रम्' इति सत्यामृषा असत्यामृषेति। तत्र सत्यमिति सन्तो मुनयः पदार्था वा, तेषु यथासंख्यं मुक्तिप्रापकत्वेन यथावस्थितवस्तुस्वरूपचिन्तनेन च साधु सत्यम्, यथाऽस्ति जीवः सदसद्रूपो देहमात्रव्यापी, इत्यादिरूपतया यथावस्थितवस्तुचिन्तनपरम्। सत्यविपरीतमसत्यम्, यथा नास्ति जीव एकान्तासद्रूपो वा, इत्यादिकुविकल्पनपरम्। सत्यं च मृषा चेति मिश्रम्, यथा धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमिति विकल्पनपरम्। अत्र हि कतिपयाशोकवृक्षाणां सद्भावात्सत्यता, अन्येषामपि धवादीनां सद्भावादसत्यता, व्यवहारनयमतापेक्षया चैवमुच्यते। परमार्थतः पुनरिदमसत्यमेव, यथाविकल्पितार्थायोगात्। तथा यन्न सत्यं नापि मृषा तदसत्यामृषा। इह विप्रविपत्तौ सत्यां यद्वस्तुप्रतिष्ठाशया सर्वज्ञमतानुसारेण विकल्प्यते, यथाऽस्ति जीवः सदसद्रूप इत्यादि, तत्किल सत्यं परिभाषितम्। यत्पुनर्विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतोत्तीर्णं विकल्प्यते, यथा नास्ति जीव एकान्तनित्यो वेति तदसत्यम्, विराधकत्वात्। यत्पुनर्वस्तुप्रतिष्ठाशामन्तरेण स्वरूपमात्रपर्यालोचनपरम्; यथा हे देवदत्त! घटमानय, गां देहि मह्यम्; इत्यादिचिन्तनपरं तदसत्यामृषा। इदं हि स्वरूपमात्रपर्यालोचनपरत्वान्न यथोक्तलक्षणं सत्यं नापि मृषेति, इदमपि व्यवहारनयमतेन द्रष्टव्यम्, निश्चयनयमतेन तु विप्रतारणादिबुद्धिपूर्वकमसत्येऽन्तर्भवति अन्यथा तु सत्ये इति। 'तह वई' इति यथा मनः सत्यादिभेदाच्चतुर्धा तथा वागपि सत्यादिभेदाच्चतुर्धा। 'उरलविउव्वाहारा' इति औदारिकवैक्रियाहारकाणि। तत्रोदारं=प्रधानम्। प्राधान्यं च तीर्थकरगणधरशरीरापेक्षया द्रष्टव्यम्। ततोऽन्यस्यानुत्तरसुरशरीरस्याप्यनन्तगुणहीनरूपत्वादुदारमेवौदारिकम्। विनयादित्वादिकण्। अथवोदारं=सातिरेकयोजनसहस्रमानत्वाच्छेषशरीरापेक्षया बृहत्प्रमाणम्। बृहत्ता चास्य वैक्रियमधिकृत्य भवधारणीयसहजशरीरापेक्षया द्रष्टव्या। अन्यथोत्तरवैक्रियं योजनलक्षमानमपि लभ्यत इति। उदारमेवौदारिकम्। प्राग्वदिकण्प्रत्ययः। तथा विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियम्। तथा चतुर्दशपूर्वविदा तीर्थकरस्फातिदर्शनादिकतथाविधप्रयोजनोत्पत्तौ सत्यां विशिष्टलब्धिवशादाह्रियते=निर्वर्त्यत इत्याहारकम्। कृत्यल्युटो बहुलमितिवचनात् कर्मणि वुञ्। यथा पादहारक इत्यत्र। 'मिस्सा' इति मिश्रशब्दः प्रत्येकमभिसंबध्यते। औदारिकमिश्रं वैक्रियमिश्रं आहारकमिश्रं च। तत्रौदारिकमिश्रं कार्मणेन, तच्चापर्याप्तावस्थायां केवलिसमुद्घातावस्थायां वा उत्पत्तिदेशे हि पूर्वभवादनन्तरमागतो जीवः प्रथमसमये कार्मणेनैव केवलेनाहारयति, ततः परमौदारिकस्याप्यारब्धत्वादौदारिकेण कार्मणमिश्रेण यावच्छरीरस्य निष्पत्तिः। उक्तं च "जोएण

विद्यते मृषा यत्र तद्सत्यमृषम्, असत्यं च तदमृषं चेति कृताकृतादिवत्कर्मधारयः, आमन्त्रण-प्रज्ञापनादिरूपम्, यथा हे देवदत्त! घटमानय, धर्मं कुरु, भिक्षां देहि इत्यादि। एवंविधं किम्? इत्याह–'मणं' इति मन=श्चित्तं, तथाशब्दो वाक्योपक्षेपार्थः। लिङ्गव्यत्ययेन वाक्चैवं-विधैव चतुर्भेदेत्यर्थः। तथा 'उरलविउव्वाहारा' इति द्वन्द्वैकत्वात्त्रयस्यौदारिकवैक्रियाहारककाययोगाः। तथा 'मीसा' इति एत एवौदारिकादयो मिश्रास्त्रयः। 'कम्मइग' इति प्राकृतत्वात्कार्मणकाययोग इति सप्तविधकाययोगः। तत्रोदारं=प्रधानं, उदारमेवौदारिकम्। प्राधान्यं चेह तीर्थकरगणधरशरीरापेक्षया वेदितव्यम्। ततोऽन्यस्यानुत्तरसुरशरीरस्याप्यनन्तगुणहीनरूपत्वात्। अथवा उदारं=सातिरेकयोजनसहस्रमानत्वाच्छेषशरीरेभ्यो बृहत्प्रमाणम्, उदारमेवौदारिकम्। बृहत्त्वं चास्य भवधारणीयसहजशरीरापेक्षया मन्तव्यम्। अन्यथा हि उत्तरवैक्रियं लक्षयोजनमानमपि लभ्यत इति। औदारिकमेव चीयमानत्वात्कायः, तेन सहकारिकारणभूतेन तद्विषयो वा योग औदारिककाययोगः १। तथा विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियम्, विशिष्टं कुर्वन्ति तदिति च निपातनाद्वैक्रियम्, तदेव कायस्तेन योगो वैक्रियकाययोगः २। तथा चतुर्दशपूर्वविदा तथाविधकार्योत्पत्तौ विशिष्टलब्धिवशादाह्रियते=निर्वर्त्यत इत्याहारकम्, अथवा आह्रियन्ते=गृह्यन्ते तीर्थकरादिसमीपे सूक्ष्मा जीवादयः पदार्था अनेनेत्याहारकम्, तदेव कायः, तेन योग आहारककाययोगः ३। तथा औदारिकं मिश्रं यत्र, कार्मणेनेति गम्यते, स भवत्यौदारिकमिश्रः। उत्पत्तिदेशे हि अनन्तरागतो जीवः प्रथमसमये कार्मणेनैवाहारयति ततः परमौदारिकस्यारब्धत्वादौदारिकेण कार्मणमिश्रेणाहारयति, उक्तं च निर्युक्तिकृता–"जोएण कम्मएणं, आहारेई अणंतरं जीवो। तेण परं मीसेणं, जाव सरीरस्स निप्फत्ती ॥१॥" औदारिकमिश्रश्चासौ कायश्च तेन योग औदारिकमिश्रकाययोगः ४। तथा वैक्रियं मिश्रं यत्र कार्मणेनेति गम्यते स वैक्रियमिश्रः। अयं तु देवनारकाणामपर्याप्तावस्थायां मन्तव्यः। शेषस्तु वाय्वादीनामौदारिक (वैक्रिय) मिश्रो न ग्राह्योऽप्रधानत्वादिति ५। तथाऽऽहारकं मिश्रं यत्रौदारिकेणेति गम्यते स आहारकमिश्रः, स एव कायस्तेन योग आहारकमिश्रकाययोगः। यदा सिद्धप्रयोजनश्चतुर्दशपूर्वविदाऽऽहारकं परित्यज्यौदारिकोपादानाय प्रवर्तते तदौदारिकेण मिश्रमाहारकं प्राप्यते। बहुव्यापारत्वेन प्रधानत्वादाहारकेण व्यपदेश इति भावः। अन्ये त्वस्यापि प्रारम्भकाल एवाहारकमिश्रं प्रतिपद्यन्ते, प्रारभ्यमाणत्वेनाहारकस्य प्राधान्यविवक्षया तेनैव व्यपदेशमिच्छन्तीति हृदयम् ६। तथा कर्मैव कार्मणः, अथ कर्मणो विकारः कार्मणः, उक्तं च–'कम्मविगारो कम्मणमट्ठविहविचित्तकम्मनिप्फन्नं। सव्वेसि सरीराणं कारणभूयं मुणेयव्वं ॥१॥' कार्मणश्चासौ कायश्च तेन योगः कार्मणकाययोगः ७। 'इय जोगा' इति 'इति' अमुना प्रकारेण योगाः पञ्चदशापि प्ररूपिता इति शेषः। इति गाथार्थः ॥२४॥

नरगइ[1] पणिंदि[2] तस[3] तणु[4] नर[5] अपुम[6] कसाय[10] मइ[11] सु[12] ओहिदुग[14] ।
अच्चक्खु[15] छलेसा[21] भव्व[22] सम्मदुग[24] सन्निसु[25] य सव्वे ॥३६॥

(हारि०) व्याख्या–'नरगइ' इति मनुष्यगतौ १ पञ्चेन्द्रियेषु २ त्रसेषु ३ 'तणु' इति काययोगे ४ 'नर' इति पुरुषवेदे ५ 'अपुम' इति नपुंसकवेदे ६ 'कसाय' इति क्रोध ७ मान ८ माया ९ लोभेषु १० मतिज्ञाने ११ श्रुतज्ञाने १२ 'ओहिदुगे' इति अवधिज्ञाने १३ अवधिदर्शने १४ च । एतेषु समाहारद्वन्द्वः 'अच्चक्खु' इति अचक्षुर्दर्शने १५ 'छलेसा' इति कृष्ण १६ नील १७ कापोत १८ तैजसी १९ पद्म २० शुक्ललेश्यासु २१ भव्येषु २२ सम्म-दुग' इति क्षायोपशमिके २३ क्षायिके २४ संज्ञिषु २५, अत्रापीतरेतरद्वन्द्वः, चशब्दः समुच्चये, 'सव्वे' योगा इति प्रक्रमः, पञ्चदशापि पञ्चविंशतिपदेषु भवन्ति । इति गाथार्थः ॥३६॥

तथा–

(मल०) नरगतौ मनुष्यगतौ. इन्द्रियद्वारे पञ्चेन्द्रियेषु कायद्वारे त्रसकायेषु, योगद्वारे काययोगे, वेदद्वारे पुंवेदनपुंसकवेदयोः, कषायद्वारे चतुर्ष्वपि कषायेषु 'मइसुओहिदुगे' इति ज्ञानद्वारे मतिज्ञाने श्रुतज्ञाने अवधिज्ञाने, दर्शनद्वारे अवधिदर्शने 'अचक्खु' इति अचक्षुर्दर्शने, लेश्याद्वारे षट्स्वपि लेश्यासु, भव्यद्वारे भव्येषु 'सम्मदुग' इति सम्यक्त्वद्वारे क्षायोपशमिके क्षायिके च, संज्ञिद्वारे संज्ञिषु' पञ्चदशापि योगा भवन्ति । सुज्ञानत्वाच्च नेह भावना क्रियते ॥३६॥

एगिंदिएसु पंच उ कम्मइगविउव्विउरलजुअलाणि ।
कम्मुरलदुगं अन्तिमभासा विगलेसु चउरोत्ति ॥३७॥

(हारि०) व्याख्या–एकेन्द्रियेषु पञ्चैव योगा इति प्रक्रमः । तुशब्द एवकारार्थः, स च योजित एव । के एते ? युगलशब्दस्य प्रत्येकमभिसंबन्धात्कार्मणवैक्रिययुगलौदारिकयुगलानि, अत्र तत्पुरुषगर्भो द्वन्द्वः । तत्र कार्मणं विग्रहगतौ, वैक्रियद्विकं बादरपर्याप्तकवायुकायिकापेक्षम्, तथा कार्मणौदारिकद्विकमिति द्वन्द्वः, अन्त्यभाषा चेति 'विकलेषु' विकलेन्द्रियेषु द्वित्रिचतुरिन्द्रिय-रूपेषु प्रत्येकं चत्वारो योगा इति प्रक्रमः । इतिशब्दो वाक्यसमाप्तौ । तत्र कार्मणं विग्रहगतौ, अन्त्यभाषाऽसत्यामृषालक्षणा इति गाथार्थः। ।३७।

तथा–

(मल०) एकेन्द्रियेषु पञ्च योगा भवन्ति । के ते ? इत्याह-'कम्मइगविउव्विउरल-जुयलाणि' इति कार्मणमौदारिकयुगलं वैक्रिययुगलं च । तत्र कार्मणमपान्तरालगतौ उत्पत्ति-प्रथमसमये च औदारिकमिश्रमपर्याप्तावस्थायां, पर्याप्तावस्थायां त्वौदारिकम् । वैक्रिययुगलं बाद-रपर्याप्तवायुकायिकस्य तस्य तल्लब्धिसंभवात् । तथा 'विकलेषु' विकलेन्द्रियेषु द्वित्रिचतुरिन्द्रिय-लक्षणेषु कार्मणौदारिकद्विकान्तिमभाषारूपाश्चत्वारो योगा भवन्ति । तत्र कार्मणौदारिकद्विकभा-वना प्राग्वत् । अन्तिमभाषा चासत्यामृषारूपा, शेषा तु भाषा तेषां न संभवत्येव, "विगलेसु असच्चमोसेव" इतिवचनात् ॥३७॥

(मल०) मनःपर्यायज्ञानचक्षुर्दर्शनरहिताः शेषा दशैवोपयोगा अनाहारके भवन्ति, तुरेवकारार्थे, तदुक्तम्—"तुः स्याद्भेदेऽवधारणे" इति । अनाहारको हि विग्रहगतौ केवलिसमुद्घातावस्थायामयोग्यवस्थायां वा, न च तदानीं मनःपर्यायज्ञानचक्षुर्दर्शनसंभव इति, उपसंहारमाह—'**उवयोगा इय गइयाइसु**' इति, इति एवमुक्तेन प्रकारेण गत्यादिषु मार्गणास्थानेषूपयोगा भवन्ति । साम्प्रतं योगेषु गुणस्थानकजीवस्थानोपयोगयोगानधिकृत्य मतान्तरमुपक्षिपन्नाह—'**नयमयणाणत्तमिणं तु जोगेसु**' योगेषु मनोवाक्कायलक्षणेषु नयनमतेन "**नयो ज्ञातुरभिप्रायः**" इतिवचनात्, अभिप्रायान्तरविशेषरूपेण नानात्वमिदं वक्ष्यमाणरूपं द्रष्टव्यम् । तुर्विशेषणे, स च शेषेषु मार्गणास्थानकेषु यथाभिहितं तथैवावगन्तव्यम् । योगेषु पुनर्वक्ष्यमाणनयमतापेक्षयाऽन्यथाऽपीति विशेषयति ॥४९॥

तदेव नानात्वमुपदर्शयति—

तणुवइमणेसु कमसो, दुचउतिपंचा दुअट्ठचउचउरो ।
तेरसदुबारतेरस, गुणजीवुवओगजोगत्ति ॥५०॥

(हारि०) व्याख्या-तनुवाङ्मनस्सु '**कमसो**' यथासंख्येन द्वि १ चतु २ त्रि ३ पञ्च ४ गुण १ जीवस्थानको २ पयोग ३ योगा ४ इति तनौ काययोगे । तथा क्रमश एव द्वि १ अष्ट २ चतु ३ श्चत्वारो ४ गुण १ जीवो २ पयोग ३ योगाः ४ इति वाचि वाग्योगे । तथा क्रमश इत्यत्रापि संबध्यते, ततस्त्रयोदश १ द्वि २ द्वादश ३ त्रयोदश ४ गुण १ जीवस्थानको २ पयोग ३ योगाः ४ इति मनसि मनोयोगे भवन्तीत्यक्षरघटना । भावार्थो गाथाभिः [1]कथ्यते-[2]"**केवलतणुजोगंमी, दो गुणचउजीवआइमा हुंति । मइसुयअन्नाणदुगं, अचक्खू तिन्नि उवओगा ॥१॥ वेउव्विउरलजुयला ४. कम्मणजोगो य १ पंच जोगत्ति । अमणवईए पढमा, दो गुण जिय अट्ठ चउ उवरिं ॥२॥ चक्खुअचक्खू मइसुय अनाण चत्तारि हुंति उवओगा । कम्मणउरालजुयलं २, असच्चभासा य चउ जोगा ॥३॥ तेरस गुण मणजोगे, अंतिमदो जीव बारउवओगा । तेरस जोगा य तहा, कम्मोरलमिस्स २ वज्जत्ति ४ ॥४॥**" मनोयोगे नानात्वं जीवस्थानेष्वेव शेषपदत्रयाभिधानं च प्रसङ्गादिति । अत्र यन्त्रस्थापनेयम्- मतान्तराभिधायकगाथागम्भीरार्थाऽपि सूत्रकारेण केनाप्यभिप्रायेण न विवृता अस्माभिश्च यथाऽवबोधं विवृता । इति गाथार्थः ॥५०॥

| | | | | |
|---|---|---|---|---|
| म | १३ | २ | १२ | १३ |
| व | २ | ८ | ४ | ४ |
| त | २ | ५ | ३ | ५ |
| • | गु | जी | उ | जो |

१ "उच्यते" इति जे० । २ एतद्गाथाचतुष्कं हस्तलिखितमूलगाथाप्रतौ मूलगाथातया प्रतिपादितम् ।

अधुना लेश्यास्तेष्वेव योज्यन्ते—

(मल०) तनुवाङ्मनस्सु 'क्रमशः' क्रमेण यानि द्विचतुरादीनि द्वादशसङ्ख्यापदानि तानि चत्वारि चत्वारि भूत्वा क्रमश एवं पृथक् पृथग् गुणस्थानकजीवस्थानकोपयोगयोगाभिधायकानि ज्ञातव्यानीत्यक्षरघटना । अस्य च नानात्वस्य निबन्धनम् । अयमभिप्रायः—प्राग्योगान्तरसहितोऽसहितो वा स्वस्वरूपमात्रेणैव काययोगादिर्विवक्षितः, तेन यत्र यथोक्तगुणस्थानकादिवक्तव्यता सर्वाऽप्युपपद्यते। इह तु काययोगादिर्योगान्तरविरहित एव विवक्ष्यते। यथा वाग्योगमनोयोगविरहितः काययोगः, मनोयोगकेवलकाययोगविरहितश्च वाग्योगः, केवलकाययोगवाग्योगविरहितश्च मनोयोगः, ततः पूर्वस्मान्नानात्वमिति। तत्र केवलकाययोगे द्वे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके, चत्वारि पर्याप्तापर्याप्तसूक्ष्मबादरैकेन्द्रियलक्षणानि जीवस्थानकानि, त्रयो मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनरूपा उपयोगाः, वैक्रियद्विकौदारिकद्विककार्मणलक्षणाः पञ्च योगाः, केवलकाययोगो ह्येकेन्द्रियेष्वेवाप्यते,तत्र च गुणस्थानकादीनि यथोक्तान्येव घटन्त इति । तथा वाग्योगे मनोयोगविरहिते द्वे मिथ्यादृष्टिसासादनलक्षणे गुणस्थानके अष्टौ, पर्याप्तापर्याप्तद्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियलक्षणानि जीवस्थानानि, चत्वारश्चक्षुरचक्षुर्दर्शनमत्यज्ञानश्रुताज्ञानलक्षणा उपयोगाः, कार्मणौदारिकद्विकासत्यामृषाभाषारूपास्चत्वारो योगाः, केवलवाग्योगो हि केवलकाययोगविरहितस्वरूपो द्वीन्द्रियादिष्वेवासंज्ञिपञ्चेन्द्रियपर्यन्तेषु संभवति नान्येषु, ततो यथोक्तान्येव गुणस्थानकादीनि तत्र भवन्ति न ऊनाधिकानि । तथा मनोयोगेऽयोगिकेवलिवर्जितानि शेषाणि त्रयोदशगुणस्थानकानि, द्वे च पर्याप्तापर्याप्तसंज्ञिपञ्चेन्द्रियलक्षणे जीवस्थानके, द्वादशाप्युपयोगाः, कार्मणौदारिकमिश्रवर्जिताश्च शेषास्त्रयोदश योगाः, कार्मणौदारिकमिश्रौ हि काययोगावपर्याप्तावस्थायां केवलिसमुद्घातावस्थायां वा, न च तदानीं मनोयोगोऽपर्याप्तावस्थायां मनस एवाभावात् केवलिसमुद्घातावस्थायां तु प्रयोजनाभावात् । तदुक्तम् मनोवचसी तु तदा सर्वथा न व्यापारयति, प्रयोजनाभावादिति ॥५०॥

उक्तं योगेषु नयमतनानात्वम् , साम्प्रतं मार्गणास्थानेषु लेश्या अभिधित्सुराह—

'लेसा उ तिन्नि पढमा, नारगविगलग्गिवाउकाएसु ।
एगिंदिभूतरूदगअसन्निसु पढमिया चउरो ॥५१॥

(हारि०) व्याख्या—लेश्यास्तिस्रः प्रथमाः कृष्णनीलकापोताख्या भवन्तीति । केषु ? इत्याह—नारक १-विकला ४ ऽग्नि ५ वायुकायिकेषु ६ अत्र द्वन्द्वः इति पदपञ्चके प्रथमा एव प्रथमिकाश्चतस्रः कृष्णनीलकापोततैजस्यभिधाना भवन्ति । इति गाथार्थः ॥५१॥

तथा—

(मल०) लेश्यास्तिस्रः कृष्णनीलकापोतरूपा नारकेषु विकलेन्द्रियेष्वमिषु वायुकायिकेषु च संभवन्ति नान्याः प्रायोऽमीषामप्रशस्ताध्यवसायस्थानोपेतत्वात् । तथेन्द्रियद्वारे एकेन्द्रियेषु, कायद्वारे भूतरूदकेष्वसंज्ञिषु च प्रथमाश्चतस्रः कृष्णनीलकापोततेजोरूपा लेश्या भवन्ति । भवनपतिव्यन्तरज्योतिष्कसौधर्मेशाना हि देवाः स्वस्वभवविच्युतावेतेषूत्पद्यन्ते ते च तेजोलेश्यावन्तः । जीवश्च यल्लेश्यो म्रियते अग्रेऽपि तल्लेश्य एवोपपद्यते, "जल्लेसे मरइ तल्लेसे उववज्जइ" इति वचनात् । तत एतेषामपर्याप्तावस्थायां कियत्कालं तेजोलेश्या भवतीति ॥५१॥

केवलजुयलअहक्खायसुहुमरागेसु सुक्कलेसेव ।
लेसासु छसु सठाणं गइयाइसु छावि सेसेसु ॥५२॥

(हारि०) व्याख्या—केवलयुगलयथाख्यातसूक्ष्मरागेषु इति द्वन्द्वः, इति पदचतुष्के शुक्लैवैका लेश्या । तथा लेश्यासु षट्सु स्वस्थानम् । कृष्णलेश्यायां कृष्णलेश्या, नीललेश्यायां, नीललेश्या, इत्यादि । तथा गत्यादिषु शेषेष्वेकचत्वारिंशत्पदेषु षडपि लेश्याः । इति गाथार्थः ॥५२॥

इति योजिता लेश्याः, इतोऽल्पबहुत्वमुच्यते—

(मल०) केवलयुगले केवलज्ञानकेवलदर्शनरूपे, तथा यथाख्यातसंयमे सूक्ष्मसंपरायसंयमे च शुक्ललेश्या भवति न शेषलेश्याः, केवलयुगलादावेकान्तविशुद्धपरिणामभावात्, तस्य शुक्ललेश्याऽविनाभूतत्वात् । तथा षट्सु लेश्यासु 'स्वस्थानम्' इति स्वा स्वा लेश्या भवति यथा कृष्णलेश्यायां कृष्णलेश्या इत्यादि । 'शेषेषु' च गत्यादिमार्गणास्थानकेष्वेकचत्वारिंशत्संख्येषु षडपि लेश्या भवन्तीति ।५२।

तदेवमुक्ता मार्गणास्थानकेषु लेश्याः, इदानीमेतेष्वेव चतुर्दशसु मार्गणास्थानेषु स्वस्थानापेक्षयाऽल्पबहुत्वमुच्यते—

गइयाइसु अप्पबहुं, भणामि सामन्नओ सठाणे वि ।
नरनिरयदेवतिरिया, थोवा दुअसंखणंतगुणा ॥५३॥

(हारि०) व्याख्या—'गत्यादिषु' चतुर्दशस्थानेषु 'अल्पबहुत्वं' एते स्तोका एतेभ्य एते बहव इत्येवंलक्षणं 'भणामि' प्रतिपादयामि, 'स्वस्थानेऽपि' सप्रतिभेदे गत्यादौ 'सामान्यतो' देवमनुष्यादिगतिभेदानपेक्षं यथा भवति, एतदेवाह—'नर' इत्यादि, अत्र

यथासंख्येन पदयोजना कार्या, सा चैवम्—नरास्तावत् स्तोकाः १, ततो नारका असंख्यातगुणाः २, ततो देवा असंख्यातगुणाः ३, ततस्तिर्यञ्चोऽनन्तगुणाः ४ तत्रानन्तवनस्पतिसद्भावात् । एवमन्यत्रापि यथासंभवं वनस्पतिमाश्रित्यानन्तत्वभावना कार्या । इति गाथार्थः ॥५३॥

इति गतिष्वल्पबहुत्वमुक्तम् । तथा—

(मल०) गत्यादिषु चतुर्दशसु मार्गणास्थानेषु 'सठाणे वि' इति अपिरवधारणे स्वस्थान एव न तु परस्थाने, स्वगत[1]नारकाद्यपेक्षयैवेति यावत् 'अल्पबहुत्वम्' एतेभ्य एते स्तोका एते बहव इत्येवं लक्षणं भणामि, "वर्तमानसामीप्ये वर्तमानवद्वा" इति भविष्यति वर्तमाना, ततो भणामि भणिष्यामीत्यर्थः । कथम् ? इत्याह—'सामान्यतः' सामान्येन स्तोकविशेषाधिकासंख्यातादित्वरूपेण, न तु विशेषेण श्रेणिप्रतराद्याकाशप्रदेशोत्सर्पिण्यादिसमयापहारलक्षणेन, तथाऽभिधाने सति ग्रन्थगौरवापत्तितः संक्षिप्तरुचिविनेयजनोपकारानुपपत्तेः । तदेव सामान्यतोऽल्पबहुत्वमाह—'नरनिरय' इत्यादि । इह यथासंख्येन पदयोजना कर्तव्या । सा चैवम्—नरा मनुष्या निरयदेवतिर्यग्योनिभ्यः सकाशात्स्तोकाः, यतस्तैरुत्कृष्टपदवर्तिभिरपि सर्वतः सप्तरज्जुप्रमाणस्य घनीकृतस्य लोकस्योपरितनाधस्तनप्रदेशरहितमेकैकप्रदेशपङ्क्तिरूपं श्रेणिमात्रमप्यङ्गुलमात्रक्षेत्रप्रदेशराशिसंबन्धितृतीयवर्गमूलगुणितप्रथमवर्गमूलप्रदेशप्रमाणैरसत्कल्पनया षट्पञ्चाशदधिकशतद्वयप्रमाणाङ्गुलमात्रक्षेत्रप्रदेशराशिसंबन्धिद्विकलक्षणतृतीयवर्गमूलगुणितषोडश—लक्षणप्रथमवर्गमूललब्धद्वात्रिंशत्प्रदेशप्रमाणैराकाशखण्डैर्मनुष्यरूपस्थानीयैरपह्रियमाणमपि नापह्रियते, एकरूपहीनत्वात् । यदि पुनरेतावत्प्रमाणमेकं रूपमन्यत्स्यात्, ततः सकलाऽपि श्रेणिरपह्रियते । कालतश्च प्रतिसमयमेतावत्प्रमाणैरप्याकाशखण्डैरपह्रियमाणा श्रेणिरसंख्याताभिरुत्सर्पिण्यवसर्पिणीभिर्निःशेषतोऽपह्रियते, कालतः सकाशात्क्षेत्रस्यात्यन्तसूक्ष्मत्वात् । उक्तं च **"उक्कोसपए जे मणुस्सा भवन्ति तेसु एक्कंमि मणुयरूवे पक्खित्ते समाणे तेहिं मणुस्सेहिं सेढी अवहीरइ । तीसे य सेढीए कालखित्तेहिं अवहारो मग्गिज्जइ । कालतो ताव असंखेज्जाहिं उस्सप्पिणिओसप्पिणोहिं, खेत्तओ अंगुलपढमवग्गमूलं तइयवग्गमूलपडुप्पन्नं । किं भणियं होइ ? तीसे सेढीए अंगुलायए खण्डे जो पएसरासी, तस्स जं पढमवग्गमूलपएसरासिमाणं तं तं तइयवग्गमूलपएसरासिणा पडुप्पाइज्जइ पडुप्पाइए समाणे जो पएसरासी हवइ एवइएहिं खंडेहिं अवहीरमाणो अवहीरमाणो जाव निट्ठाइ ताव मणुस्सावि अवहीरमाणा निट्ठंति । आह, कहमेगा सेढी एद्दहमेत्तेहिं खंडेहिं अवहीरमाणी अवहीरमाणी असंखि-**

---

१ "नारकादिपदापेक्षया" इत्यपि । "नारकादिभेदापेक्षया" इत्यपि ॥

**ज्जाहि उस्सप्पिणिओसप्पिणीहिं अवहीरइ। आयरिओ आह, खेत्तस्स सुहुमत्त-णओ सुत्ते विमं भणियं–'सुहुमो य होइ कालो, तत्तो सुहुमयरं हवइ खेत्तं। अंगुलसेढीमित्ते, ओसप्पिणिओ असंखेज्जा ॥१॥' इति।''** अतो निरयादिभ्यः सकाशात्स्तोका मनुष्याः, तेभ्यो नारका असंख्यातगुणाः, यतः सप्तरज्जुप्रमाणस्य घनीकृतस्य लोकस्योर्द्ध्वाधआयता एकप्रादेशिक्यः श्रेणयोऽङ्गुलमात्रक्षेत्रप्रदेशराशिगतप्रथमवर्गमूलघनप्रदेशराशिप्रमाणास्तासां यावान् प्रदेशराशिस्तावत्प्रमाणा नारकाः, अतस्ते नरेभ्योऽसंख्यातगुणा एव, तेभ्योऽपि देवा असंख्यातगुणाः, कथम्? इति चेद्, उच्यते, देवा हि भवनपतिव्यन्तरज्योतिष्कवैमानिकभेदेन चतुर्विधाः। भवनपतयश्चासुरनागसुवर्णादिभेदेन दशविधाः। तत्रासुरकुमारा अपि तावद्घनीकृतस्य लोकस्य या ऊर्ध्वाधआयता एकप्रादेशिक्यः श्रेणयोऽङ्गुलमात्रक्षेत्रगतप्रदेशराशिसंबन्धिप्रथमवर्गमूलासंख्येयभागगतप्रदेशराशिप्रमाणास्तासां संबन्धी यावान् प्रदेशराशिस्तावत्संख्याकाः। एवं नागकुमारादयोऽपि प्रत्येकं द्रष्टव्याः। तथा संख्येययोजनप्रमाणाकाशप्रदेशसूचिरूपैः खण्डैर्यावद्भिर्घनीकृतस्य लोकस्य (¹उपरितनाधस्तनप्रदेशरहितं मण्डकाकारं) प्रतरमपह्रियते तावत्प्रमाणा व्यन्तराः। उक्तं च–**''संखेज्जजोयणाणं, सूइपएसेहिं भाइयं पयरं। वंतरसुरेहि हीरइ, एवं एक्केक्कभेदेणं ॥१॥''** इति। अस्या अक्षरगमनिका-संख्येययोजनानां या सूचिरेकप्रादेशिकी पङ्क्तिस्तत्प्रदेशैः संख्येययोजनप्रमाणैकप्रादेशिकपङ्क्तिप्रदेशैरिति यावद्भक्तं प्रतरं व्यन्तरसुरैरपह्रियते तावद्भागलब्धराशिप्रमाणा व्यन्तरसुरा इत्यर्थः। इयमत्र भावना-संख्येययोजनप्रमाणसूचिप्रदेशाः किलासत्कल्पनया दश प्रतरप्रदेशाश्च लक्षम्, तस्य दशभिर्भागे हृते लब्धाः सहस्रा दश एतावन्त इत्यर्थः। एवमुक्तेन प्रकारेण प्रतिनिकायं व्यन्तराणां भावना कार्या। न चैवं सर्वसमुदायप्रमाणनियमव्याघातप्रसङ्गः, सूचिप्रमाणहेतुयोजनसंख्येयत्वस्य वैचित्र्यादिति। तथा षट्पञ्चाशदधिकशतद्वयाङ्गुलप्रमाणैराकाशप्रदेशसूचिरूपैः खण्डैर्यावद्भिर्यथोक्तस्वरूपं प्रतरमपह्रियते तावत्प्रमाणा ज्योतिष्का देवाः। तदुक्तम्–**छप्पन्नदोसयंगुलसूइपएसेहिं भाइयं पयरं। जोइसिएहिं हीरइ''** इति। अत एवोक्तं सूत्रे–**''वाणमंतरेहिंतो संखेज्जगुणा जोइसिया''** इति तथा वैमानिकदेवा घनीकृतस्य लोकस्य या ऊर्ध्वाधआयता एकप्रादेशिक्यः श्रेणयोऽङ्गुलमात्रक्षेत्रप्रदेशराशिसंबन्धितृतीयवर्गमूलघनप्रमाणास्तासां यावान् प्रदेशराशिस्तावत्प्रमाणाः। अतः सकलभवनपत्यादिसमुदायापेक्षया चिन्त्यमाना देवा नारकेभ्योऽसङ्ख्यातगुणा एव। तथा चोक्तम्–**''थोवा नरा नरेहि य, असंखगुणिया हवंति नेरइया। तत्तो सुरासुरेहि य, सिद्धाणंता तओ तिरिया ॥१॥''** इति। यदुक्तं तृतीयवर्गमूलघनप्रमाणा इति, तस्येयं गणितभावना–अङ्गुलमात्रक्षेत्रप्रदेशराशेरसत्कल्पनया

१ एतत्कोष्ठाकान्तर्वर्तिपाठ एक एव पुस्तक उपलभ्यते।

षट्पञ्चाशदधिकशतद्वयप्रमाणस्य प्रथमं वर्गमूलं षोडश, द्वितीयं चत्वारि, तृतीये द्वे, तच्च तृतीयं वर्गमूलं द्वितीयेन वर्गमूलेन चतुष्टयलक्षणेन गुण्यते ततोऽष्टौ भवन्ति; एष तृतीयवर्गमूलस्य घनः।

| | | |
|---|---|---|
| अङ्कस्थापना- | २५६ / १६ / ४ / २ | अस्य घनः ८। एवं प्रागपि वर्गमूलघनभावना द्रष्टव्या। तेभ्योऽपि च |
| देवेभ्यस्तिर्य- | | ञ्चोऽनन्तगुणाः; तत्रानन्तसंख्योपेतस्य वनस्पतिकायस्य सद्भावात् ॥५३॥ |

तदेवं गतिष्वल्पबहुत्वमभिधाय, साम्प्रतमिन्द्रियद्वारे तदभिधित्सुराह—

पणचउतिदुएगिंदी, थोवा तिन्नि अहिया अणंतगुणा।
तसतेउपुढविजलवाउहरियकाया पुण कमेणं ॥५४॥
थोवा असंखगुणिया, तिन्नि विसेसाहिया अणंतगुणा।
मणवयणकायजोगी, थोवासंखगुणणंतगुणा ॥५५॥

(हारि०) व्याख्या—सूचकत्वात्सूत्रस्य पञ्चचतुस्त्रिद्व्येकेन्द्रियाः, अत्र द्वन्द्वगर्भो बहुव्रीहिः। तत्र पञ्चेन्द्रियाः स्तोकाः, तेभ्यश्चतुरिन्द्रिया अधिकाः, तेभ्यस्त्रीन्द्रिया अधिकाः, ततो द्वीन्द्रिया अधिकाः, तेभ्य एकेन्द्रिया अनन्तगुणाः। अनन्तत्वभावना प्राग्वत्। इतीन्द्रियेष्वल्पबहुत्वमुक्तम्। तथा त्रसतेजःपृथिवीजलवायुहरितकायाः, इह द्वन्द्वगर्भस्तत्पुरुषः। पुनः क्रमेणाल्पबहुत्वं वक्ष्यमाणगाथया मन्तव्यम्। इति गाथार्थः ॥५४॥

तदेवाह—

(हारि०) व्याख्या—त्रसादयः प्राग्गाथापरार्द्धोक्ताः। तत्र त्रसाः स्तोकाः, तेभ्यस्तेजस्काया असङ्ख्येयगुणिताः, ततः पृथिवीकायिका विशेषाधिकाः, तेभ्यो जलकायिका विशेषाधिकाः, तेभ्यो वायुकायिका विशेषाधिकाः, तेभ्यो हरितकायिका अनन्तगुणाः। अनन्तत्वभावना प्राग्वत्। इति कायेष्वल्पबहुत्वमुक्तम्। तथा मनोवचनकाययोगिनः क्रमेणेति प्रक्रमः। स्तोका मनोयोगिनः संज्ञिपञ्चेन्द्रियाः, तेभ्योऽसङ्ख्येयगुणा वचनयोगिनो द्वीन्द्रियादयः, तेभ्योऽनन्तगुणाः काययोगिन एकेन्द्रियाः पृथ्वीप्रभृतयः। अनन्तगुणत्वभावना प्रागिव। इति योगेष्वल्पबहुत्वमुक्तम्। इति गाथार्थः ॥५५॥

तथा—

(मल०) पञ्चेन्द्रियाश्चतुरिन्द्रियादिभ्यः सकाशात्स्तोकाः, तेभ्यश्चतुरिन्द्रिया विशेषाधिकाः, तेभ्योऽपि त्रीन्द्रिया विशेषाधिकाः, तेभ्योऽपि द्वीन्द्रिया विशेषाधिकाः। तत्र यद्यपि च घनीकृतस्य लोकस्य या ऊर्ध्वाधआयता एकप्रादेशिक्यः श्रेणयः असंख्यातयोजनकोटीकोटीप्रमाणाकाशप्रदेशसूचिगतप्रदेशराशिप्रमाणास्तासां यावान् प्रदेशराशिस्तावत्प्रमाणा द्वीन्द्रियत्रीन्द्रिय-

चतुरिन्द्रियतिर्यग्योनिपञ्चेन्द्रिया अविशेषेण सूत्रे निर्दिष्टाः । तथा चोक्तं तत्र यथोक्तरूप-द्वीन्द्रियपरिमाणाभिधानानन्तरम्–"जहा बेइंदियाणं तहा तेइंदियाणं चउरिंदियाण वि भाणियव्व. पंचिंदियतिरिक्खजोणियाणंपि" इति । तथाऽपि सूचिपरिमाणहेत्वसङ्ख्यातरूपसङ्ख्याया बहुभेदत्वान्न यथोक्तविशेषाधिकत्वाभिधानव्याघातः । अत एव च हेतोस्तिर्यग्योनिपञ्चेन्द्रियेषु द्वीन्द्रियादितुल्यतया सूत्रेऽभिहितेष्वपि तत्रापि नरनिरयदेवप्रक्षेपेऽपि पञ्चेन्द्रियाश्चतुरिन्द्रियादिभ्यः स्तोका एव द्रष्टव्याः । तदुक्तम्–पचिंदिया य थोवा, विवज्जएण वियला विसेसहिया" इति द्वीन्द्रियेभ्योऽपि चैकेन्द्रिया अनन्तगुणाः, वनस्पतिकायजीवराशेरनन्तानन्तत्वात् । तस तेउ' इत्यादि सोत्तरगाथार्द्धम् । त्रसा द्वीन्द्रियादयः पूर्वनिर्दिष्टसंख्याकाः, ते तेजस्कायिकादिभ्यः सकाशात्स्तोकाः, तेभ्यः पुनस्तेजस्कायिका असंख्यातगुणाः, तेषां सूक्ष्मबादरभेदभिन्नानामसंख्येयलोकाकाशप्रदेशराशिप्रमाणत्वात् तेभ्यः पृथ्वीकायिका विशेषाधिकाः, तेभ्योऽप्कायिका विशेषाधिकाः, तेभ्योऽपि वायुकायिका विशेषाधिकाः । यद्यपि चैतेषामपि पृथ्वीकायिकादीनामसंख्येयलोकाकाशप्रदेशराशिप्रमाणतया सूत्रेऽविशेषेण निर्देशः कृतः । तथा चोक्तम्–जहा पुढविकाइयाणं एवं आउकाइयाणं वि" इत्यादि । तथाऽपि लोकानामसंख्यातत्वस्यानेकभेदत्वादिहैव विशेषाधिकत्वाभिधानेऽपि न कश्चिद्दोषः । उक्तं च—"थोवा य तसा तत्तो. तेउ असंखा तओ विसेसहिया । कमसो भूदगवाऊ, अकायहरिया अणंतगुणा ॥१॥" 'अकाय' इति सिद्धाः, तथा तेभ्यो वायुकायिकेभ्यो हरितकाया अनन्तगुणाः, अनन्तलोकाकाशप्रदेशराशिप्रमाणत्वात् । मणवयग' इत्यादि । मनोयोगिनः स्तोकाः, संज्ञिपञ्चेन्द्रियाणामेव मनोयोगित्वात् । तेभ्यश्च वाग्योगिनोऽसङ्ख्यातगुणाः, द्वीन्द्रियादीनामप्यसंज्ञितिर्यक्पञ्चेन्द्रियपर्यन्तानां वाग्योगिनां मनोयोगिभ्योऽसङ्ख्यातगुणानां तत्र प्रक्षेपात् । वाग्योगिभ्योऽपि काययोगिनोऽनन्तगुणाः, वनस्पतिकायिकानामप्यनन्तानन्तानां तत्र प्रक्षेपात् ॥५४॥५५॥

पुरिसेहिंतो इत्थी, संखेज्जगुणा नपुंसणंतगुणा ।
माणी कोही [1]मायी, लोही कमसो विसेसहिया ॥५६॥

(हारि०) व्याख्या–पुरुषाः स्तोका इति सामर्थ्याल्लभ्यते, ततः पुरुषेभ्यः स्त्रियः संख्येयगुणाः । तथा चागमः–"देवेहिंतो बत्तीसगुणाओ देवीणो नरेहिंतो सत्तावीसगुणाओ नारीओ, तिरिएहिंतो तिगुणाओ तिरिक्खीओ किंचि अहियाओ ।" इति । अत्रार्थे गाथे "तिगुणा तिरूवअहिया, तिरियाणं इत्थिया मुणेयव्वा । सत्तावीसगुणा पुण, मणुयाणं तदहिया चेव ॥१॥ बत्तीसगुणा बत्तीसरूवअहिया य तह य देवाणं ।

१ "माई लोमी" इत्यपि पाठ ।

**देवीओ पन्नत्ता, जिणेहि जियरागदोसेहिं ॥२॥**" ततः स्त्रीभ्यो नपुंसकान्यनन्तगुणानि । अनन्तत्वभावना पूर्ववत् । इति वेदेष्वल्पबहुत्वमुक्तम् । तथा मानिनः, क्रोधवन्तो, मायिनो, लोभवन्तः क्रमेण विशेषाधिकाः, अयमर्थः—स्तोका मानवन्त इत्यागमे भणनात्स्तोका इति सामर्थ्यलभ्यम् । शेषा भणितक्रमेण विशेषाधिका ज्ञेयाः । सामान्येन चत्वारोऽप्यनन्ताः, अनन्तकायिकादिष्वेतच्चतुष्कषायसद्भावात् । इति कषायेष्वल्पबहुत्वमुक्तम् । इति गाथार्थः ॥५६॥

तथा—

(मल०) स्त्र्यादिभ्यः सकाशात्पुरुषाः स्तोका इति सामर्थ्याल्लभ्यते, अन्यथा तेभ्यः स्त्रीणां सङ्ख्यातगुणत्वं नोपपद्यते, पुरुषेभ्यः सकाशात्स्त्रियः संख्यातगुणाः । उक्तंच—"**तिगुणा तिरूवअहिया, तिरियाणं इत्थिया मुणेयव्वा । सत्तावीसगुणा पुण मणुयाणं तदहिया चेव ॥१॥ बत्तीसगुणा बत्तीसरूवअहिया य तह य देवाणं । देवीओ पण्णत्ता, जिणेहि जियरागदोसेहिं ॥२॥**" स्त्रीभ्यश्च नपुंसका अनन्तगुणाः, अनन्तगुणता च वनस्पतिकायापेक्षया द्रष्टव्या । '**माणी**' इत्यादि सर्वस्तोका मानिनः, मानपरिणामकालस्य क्रोधादिपरिणामकालापेक्षया सर्वस्तोकत्वात् । तेभ्यः क्रोधवन्तो विशेषाधिकाः, क्रोधपरिणामकालस्य मानपरिणामकालापेक्षया विशेषाधिकत्वात् । तेभ्योऽपि मायिनो विशेषाधिकाः, भूयस्त्वेन जन्तूनां प्रभूतकालं च मायाबहुलत्वात् । ततोऽपि विशेषाधिका लोभवन्तः, सर्वेषामपि प्रायः संसारिजीवानां सदा परिग्रहाद्याकाङ्क्षासद्भावात् ॥५६॥

**मणपज्जविणो [1]थोवा, ओहिण्णाणी तओ असंखगुणा ।**
**मइसुयनाणी तत्तो, विसेसअहिया समा दोवि ॥५७॥**

(हारि०) व्याख्या—मनःपर्यवज्ञानिनः स्तोकाः, अवधिज्ञानिनस्ततोऽसंख्यगुणाः, असंख्यत्वात्सम्यग्दृष्टिदेवादीनाम् । मतिश्रुतज्ञानिनस्ततो विशेषाधिकाः, अवधिरहितसम्यग्दृष्टितिर्यङ्नरप्रक्षेपात् । स्वस्थाने पुनः '**समौ**' तुल्यौ द्वावपि राशी । इति गाथार्थः ॥५७॥

तथा—

(मल०) मनःपर्यायज्ञानिनः शेषज्ञान्यपेक्षया स्तोकाः, तद्धि गर्भव्युत्क्रान्तमनुष्याणां तत्रापि संयतानामप्रमत्तानां विविधामर्षौषध्यादिलब्धियुक्तानामुपजायते । यत उक्तम्-"**तं संजयस्स सव्वप्पमायरहियस्स विविहरिद्धिमतो ।**" इत्यादि । ते च स्तोका एव, सङ्ख्यातत्वात् । तेभ्योऽसङ्ख्येयगुणा अवधिज्ञानिनः, सम्यग्दृष्टिदेवादीनामवधिज्ञानयुक्तानां तेभ्योऽसंख्यातगुणत्वात् । '**ततः**' अवधिज्ञानिभ्यः सकाशान्मतिश्रुतज्ञानिनो विशेषाधिकाः, अवधिज्ञानरहितसम्यग्दृष्टिनरतिर्यक्प्रक्षेपात् । एतौ च मतिज्ञानिश्रुतज्ञानिनो स्वस्थाने चिन्त्यमानौ

---

१ "थेवा ओहिन्नाणी" इत्यपि पाठः ।

द्वावपि तुल्यौ, मतिश्रुतज्ञानयोः परस्परनान्तरीयकत्वात् । तथा च सूत्रम्-"**जत्थ मइनाणं तत्थ सुयनाणं, जत्थ सुयनाणं तत्थ मइनाणं । दोवि एयाइं अन्नान्नमणुगयाइं**" इति ॥५७॥

विब्भंगिणो असंखा, केवलनाणी तओ अणंतगुणा ।
तत्तोऽणंतगुणा दो, मइसुयअन्नाणिणो तुल्ला ॥५८॥

(हारि०) व्याख्या—वक्ष्यमाणतच्छब्दस्यात्रापि योगात्ततः पूर्वगाथोक्तमतिश्रुतज्ञानिभ्यः सकाशाद्विभङ्गिनोऽसंख्याः, मिथ्यादृष्टिसुरादीनामसंख्यगुणत्वात् । केवलज्ञानिनस्ततोऽनन्तगुणाः सिद्धानामानन्त्यात् । ततोऽनन्तगुणौ द्वौ मतिश्रुताज्ञानिनौ, एतदज्ञानद्वयवतां हि मिथ्यादृष्ट्यादीनामनन्तगुणत्वात् । 'तुल्यौ' समौ स्वस्थान इति शेषः । इति गाथार्थः ॥५८॥

इति ज्ञानेष्वल्पबहुत्वमुक्तम् । तथा—

(मल०) तेभ्यश्च मतिज्ञानिश्रुतज्ञानिभ्यः सकाशाद्विभङ्गज्ञानिनोऽसङ्ख्यातगुणाः, मिथ्यादृष्टिसुरादीनां विभङ्गज्ञानवतां तेभ्योऽसङ्ख्यातगुणत्वात् । ततोऽपि च विभङ्गज्ञानिभ्यः सकाशात्केवलिनोऽनन्तगुणाः, सिद्धानां तेभ्योऽनन्तगुणत्वात्, तेषां च केवलज्ञानयुक्तत्वात् । तेभ्योऽपि च केवलज्ञानिभ्यः सकाशादनन्तगुणाः मत्यज्ञानिश्रुताज्ञानिनः, सिद्धेभ्यो वनस्पतिकायिकानामनन्तगुणत्वात्, तेषां च मिथ्यादृष्टितया मतिश्रुताज्ञानयुक्तत्वात् । एतौ द्वावपि मत्यज्ञानिश्रुताज्ञानिनौ स्वस्थाने चिन्त्यमानौ तुल्यौ, मत्यज्ञानश्रुताज्ञानयोः परस्परमविनाभावित्वात् ॥५८॥

सुहुमपरिहारअहखायछेयसामइयदेसजइअजया ।
थोवा संखेज्जगुणा, चउरो अस्संखणंतगुणा ॥५९॥

(हारि०) व्याख्या—सूचकत्वात्सूत्रस्य सूक्ष्मसंपरायपरिहारविशुद्धिकयथाख्यातच्छेदोपस्थापनीयसामायिकदेशयत्ययताः क्रमेणेति प्रक्रमः । प्रथमाः स्तोकाः । ततः संख्येयगुणाश्चत्वारः । ततो देशयतयो गुणशब्दस्य प्रत्येकमभिसंबन्धादसंख्यगुणाः असंख्यगुणत्वाद्देशविरततिरश्चाम् । ततोऽनन्तगुणा अयताः, आद्यगुणस्थानकचतुष्टयवर्त्यसंयमिनः । भावना पूर्ववत् । इति गाथार्थः ॥५९॥

इति संयमेष्वल्पबहुत्वमुक्तम् । तथा—

(मल०) सर्वस्तोकाः सूक्ष्मसंपरायसंयमिनः, शतपृथक्त्वमात्रसंभवात् । तेभ्यः सङ्ख्येयगुणाः परिहारविशुद्धिकाः, सहस्रपृथक्त्वसंभवात् । तेभ्योऽपि सङ्ख्येयगुणा यथाख्यातचारित्रिणः, कोटीपृथक्त्वेन प्राप्यमाणत्वात् । तेभ्योऽपि च च्छेदोपस्थापनचारित्रिणः सङ्ख्येयगुणाः, कोटीशतपृथक्त्वेन लभ्यमानत्वात् । तेभ्योऽपि सामायिकसंयमिनः सङ्ख्येयगुणाः, कोटीसहस्रपृथ-

क्त्वेन प्राप्यमाणत्वात् । तेभ्योऽपि देशयतयोऽसङ्ख्यातगुणाः, असङ्ख्यातानां तिरश्चां देशविरतिसंभवात् । तेभ्योऽप्ययताः संयमहीना आद्यगुणस्थानकचतुष्टयवर्तिनोऽनन्तगुणाः, मिथ्यादृशामनन्तानन्तत्वात् । 'संखेज्जगुणा चउरो' इति चत्वारः परिहारविशुद्धिकयथाख्यातच्छेदोपस्थानसामायिकवन्तः क्रमेण सङ्ख्येयगुणाः शेषाक्षरगमनिका सुज्ञाना । इति ॥५९॥

**इय ओहिचक्खुकेवलअचक्खुदंसी कमेण विन्नेया ।**
**थोवा अस्संखगुणा, अणंतगुणिया अणंतगुणा ॥६०॥**

(हारि०) व्याख्या–'इति' अमुनोल्लेखेन विज्ञेया इति संबन्धः, पदावयवे पदसमुदायोपचारात् । अवधिदर्शनचक्षुर्दर्शनकेवलदर्शनाचक्षुर्दर्शनिनः, 'क्रमेण' भणितपरिपाट्या 'विज्ञेयाः' ज्ञातव्याः । कथम् ? स्तोका अवधिदर्शनिनः । ततोऽसंख्यगुणाश्चक्षुर्दर्शनिनः चतुरिन्द्रियप्रमुखचक्षुष्मतामसंख्यगुणत्वात् । ततोऽनन्तगुणिताः केवलदर्शनिनः, सिद्धानामनन्तत्वादेव । ततोऽनन्तगुणा अचक्षुर्दर्शनिनः, सर्वजीवव्यापित्वादचक्षुर्दर्शनस्य । तदुक्तम्–"**ज्ञानं सम्यग्दृष्टेर्दर्शनमथ भवति सर्वजीवानाम् । इति भावना ।**" इति गाथार्थः ॥६०॥

इति दर्शनेष्वल्पबहुत्वमुक्तम् । तथा—

(मल०) '**इति**' एवं वक्ष्यमाणलक्षणेन प्रकारेणावधिचक्षुःकेवलाचक्षुर्दर्शनिनः क्रमेण विज्ञेयाः । केन प्रकारेण ? इत्याह–'**थोवा**' इत्यादि, स्तोका अवधिदर्शनिनः, सुरनारकाणां नरतिरश्चां च केषांचिदवधिदर्शनसंभवात् । तेभ्यश्चक्षुर्दर्शनिनोऽसङ्ख्यातगुणाः, चतुरिन्द्रियादीनामपि चक्षुर्दर्शनिनां तत्र प्रक्षेपात् । तेभ्योऽनन्तगुणा, केवलदर्शनिनः, सिद्धानां तेभ्योऽनन्तगुणत्वात् , तेषां च केवलदर्शनयुक्तत्वात् । तेभ्योऽप्यनन्तगुणा अचक्षुर्दर्शनिनः, सर्वसंसारिजीवानां सिद्धेभ्योऽनन्तगुणत्वात् , तेषां च नियमादचक्षुर्दर्शनोपेतत्वात् । इति ॥६०॥

**सुक्का पम्हा तेऊ, काऊ नीला य किण्हलेसा य ।**
**थोवा दो संखगुणाऽणंतगुणा दो विसेसहिया ॥६१॥**

(हारि०) व्याख्या–इह गुणगुणिनोरभेदोपचारादेतल्लेश्यावन्तो गृह्यन्ते । ततः शुक्ललेश्यावन्तः स्तोकाः, ततः पद्मतेजोलेश्यावन्तौ संख्येयगुणौ द्वौ प्रत्येकम् । ततोऽनन्तगुणाः कापोतलेश्यावन्तः कापोतलेश्याया अनन्तकायिकेष्वपि सद्भावात् । ततो द्वावुमौ राशी विशेषाधिकौ । 'नीलाश्च' नीललेश्यावन्तः कृष्णलेश्याश्च । तत्र नीललेश्याधिक्यं चतुर्थनरके सद्भावात् । कृष्णलेश्याधिक्यं षष्ठसप्तमनरकसद्भावात् । इति गाथार्थः ॥६१॥

इति लेश्यास्वल्पबहुत्वमुक्तम् । तथा—

(मल०) स्तोकाः शुक्ललेश्यावन्तः, वैमानिकेष्वेव देवेषु लान्तकादिष्वनुत्तरसुरपर्यवसानेषु

केषुचिदेव च मनुष्यस्त्रीपुंसेषु कर्मभूमिजेषु तिर्यक्स्त्रीपुंसेषु च केषुचित्सङ्ख्यातवर्षायुष्केषु शुक्ललेश्यासंभवात् । ततः सङ्ख्येयगुणाः पद्मलेश्यावन्तः, सनत्कुमारमाहेन्द्रब्रह्मलोकदेवेषु उक्तस्वरूपेषु च मनुष्यतिर्यक्षु पद्मलेश्याभावात्, सनत्कुमारादिदेवानां च लान्तकादिदेवेभ्यः सङ्ख्येयगुणत्वात् । तेभ्योऽपि तेजोलेश्यावन्तः सङ्ख्येयगुणाः, सौधर्मेशानादिदेवेषु केषुचिच्च तिर्यङ्मनुष्येषु तेजोलेश्यासद्भावात्, तेषां च सकलपद्मलेश्यासहिततिर्यगादिप्राणिगणापेक्षया संख्येयगुणत्वात् । ततः कापोतलेश्यावन्तोऽनन्तगुणाः, अनन्तकायिकेष्वपि कापोतलेश्यासद्भावात् । ततो विशेषाधिका नीललेश्यावन्तः, नारकादीनां तल्लेश्यावतां तत्र प्रक्षेपात् । ततोऽपि विशेषाधिकाः कृष्णलेश्यावन्तः, भूयसां तल्लेश्यासद्भावात् ॥६१॥

थोवा जहन्नजुत्ताऽणंतयतुल्ल त्ति इह अभव्वजिया ।
तेहिंतोऽणंतगुणा, भव्वा णिव्वाणगमणरिहा ॥६२॥

(हारि०) व्याख्या—स्तोका इहात्र विचारे वर्तन्ते । क एते ? अभव्यजीवा मुक्तिगमनायोग्यजन्तवः, किं परिमाणाः ? जघन्यं च तद्युक्तानन्तकं च जघन्ययुक्तानन्तकं सिद्धान्तप्रसिद्धम्, तेन तुल्याः समा जघन्ययुक्तानन्तकतुल्याः । इह युक्तानन्तकपदे स्थानाशून्यार्थं काचिद्भावना लिख्यते-तत्र जम्बूद्वीपप्रमाणशलाकाप्रतिशलाकामहाशलाकाख्यपल्यत्रयमनवस्थितचतुर्थपल्येन भ्रियते, एकैकभरणपूर्वकं यावच्चत्वारोऽपि पल्या भृता एकशलाकोना भवन्ति तावत्संख्यातमुत्कृष्टं भवति । तत एकशलाकाक्षेपे परीतासंख्यातं जघन्यं स्यात् १ । एवमनेकप्रक्षेपैर्वर्गितसंवर्गितन्यायेन च मध्यमपरीतासंख्यातम् २ । उत्कृष्टपरीतासंख्यातं च ३ । एवं जघन्यादिभेदत्रयेण युक्तासंख्यातम् ३ । एवं भेदत्रयेणाऽसंख्यातासंख्यातं भवति ३ । एवमसंख्यातपदस्थानेऽनन्तपदं वाच्यम् । ततोऽनन्तेऽपि नवभेदा जाताः ९ । प्रक्षेपादिकं सर्वं जीवसमासादिग्रन्थेभ्योऽवसेयम् । वचनमात्रमत्र लिखितमिति । किन्त्वनन्तानन्तकमुत्कृष्टं न कथंचित्पूर्यते प्रस्तुते त्वभव्या युक्तानन्तकप्रथमभेदसमा मन्तव्याः । इतिशब्दो वाक्यार्थसमाप्तौ । इहशब्दो योजित एव । तेभ्योऽनन्तगुणा भव्याः । कीदृशा भव्याः ? 'निर्वाणगमनार्हाः' निर्वृतियानयोग्याः । इति गाथार्थः ॥६२॥

इति भव्येष्वल्पबहुत्वमुक्तम् । तथा—

(मल०) 'इह' अस्मिन् जगति भव्यापेक्षयाऽभव्यजीवाः स्तोकाः, कुतः ? इत्याह—'जहन्नजुत्ताणंतयतुल्ल त्ति' हेतावियं प्रथमा । ततोऽयमर्थः—यतोऽभव्यजीवा जघन्ययुक्तानन्तकतुल्या इति, तस्माद्भव्यजीवापेक्षया ते स्तोकाः । अथ किमिदं जघन्ययुक्तानन्तकं नाम ?, उच्यते, अनन्तसङ्ख्याविशेषः, स च सङ्ख्यातासङ्ख्यातरूपसङ्ख्याविशेषप्ररूपणामन्तरेण न प्ररूपयितुं शक्यते, एकादिप्ररूपणामन्तरेण शतादिसङ्ख्यावत्, तत आदितः कथयितुमारभ्यते ।

तत्र सङ्ख्यातं त्रिधा, जघन्यं मध्यमुत्कृष्टं च । तत्र जघन्यं द्वौ एकस्य एकत्वादेव गणनागोचरातिक्रान्तत्वात् । मध्यमं संख्यातं त्रिप्रभृति यावदेकरूपहीनतया उत्कृष्टं सङ्ख्यातं न भवति । तच्चोत्कृष्टमेवम्—इह जम्बूद्वीपप्रमाणा अधस्ताद्योजनसहस्रमवगाढा उपरिष्टादष्टयोजनोच्छ्रितचतुर्दशोपर्यधोविस्तृतप्राकारतदुपरिपञ्चधनुःशतविस्तृतद्विगव्यूतोच्छ्रितवेदिकान्तसहिताश्चत्वारः पल्याः कल्प्यन्ते । तत्र प्रथमोऽनवस्थितपल्यः । द्वितीयः शलाकापल्यः । तृतीयः प्रतिशलाकापल्यः । चतुर्थो महाशलाकापल्यः । प्रथमपल्यश्चानवस्थितनामा सशिखाकः सर्षपैरापूर्यते, यावदेकोऽप्यन्यः सर्षपस्तत्र प्रक्षिप्तः सन् नावस्थातुं शक्नोति । ततोऽसत्कल्पनया कश्चनापि देवो वा दानवो वा तमनवस्थितं पल्यं वामकरतले धृत्वैकं सर्षपं द्वीपे प्रक्षिपेद् एकं समुद्रे पुनरप्येकं द्वीपे एकं समुद्रे, एवं तावत्प्रक्षेपो वाच्यो यावदसावनवस्थितपल्यो निःशेषतो निष्ठितो भवति, तत एकोऽनवस्थितपल्यसत्कसर्षपेभ्योऽन्य एव सर्षपः शलाकापल्ये प्रक्षिप्यते, ततो यत्र द्वीपे समुद्रे चाऽसौ अनवस्थितपल्यो निष्ठां गतः, तदन्ता ये द्वीपसमुद्रास्तावत्प्रमाणः पुनरन्यः पल्यः परिकल्प्यते । सोऽप्यधोयोजनसहस्रमवगाढ उपरिष्टाद्यथोक्तजगतीवेदिकापरिकलितः सशिखाकः सर्षपैरापूर्यते । ततस्तमुत्पाट्य यस्मिन् द्वीपे समुद्रे वा प्रथमः पल्यो निष्ठितस्ततः परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेत्तावद् यावदसौ निर्लेपो भवति । ततः शलाकापल्ये द्वितीया सर्षपरूपा शलाका प्रक्षिप्यते । अन्ये त्वाहुः—एषैव प्रथमा शलाकेति । तत्त्वं पुनः केवलिनो विदन्ति । ततो यस्मिन् द्वीपे समुद्रे वा स एष द्वितीयः पल्यो निष्ठितस्तदन्ता मूलतः सर्वेऽपि ये द्वीपसमुद्रास्तावत्प्रमाणः पुनरन्यः पल्यः परिकल्प्यते, पूर्ववत्सर्षपैश्चापूर्यते । ततस्तं तावत्प्रमाणं पल्यमुत्पाट्य ततो निष्ठितस्थानात्परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेद् यावदसौ निष्ठितो भवति । ततस्तृतीया सर्षपरूपा शलाका शलाकापल्ये प्रक्षिप्यते । एवमनेन क्रमेण पुनः पुनरनवस्थितपल्यसर्षपाऽऽपूरणरिक्तीकरणलब्धैकैकसर्षपरूपाभिः शलाकाभिः शलाकापल्यो यथोक्तप्रमाणः सशिखाकस्तावदापूरयितव्यो यावत्तत्रैकोऽप्यन्यः सर्षपो न मातीति । ततः पूर्वपरिपाट्यागतोऽनवस्थितः पल्यः सर्षपैरापूरणीयः । ततः शलाकापल्यं वामकरतले कृत्वा पूर्वानवस्थितपल्यचरमसर्षपाक्रान्ताद्द्वीपात्समुद्राद्वा परतः प्रतिद्वीपं प्रतिसमुद्रं त्वेकैकं सर्षपं प्रक्षिपेद् यावदसौ निष्ठितो भवति । ततः प्रतिशलाकापल्ये सर्षपरूपा प्रथमा प्रतिशलाका प्रक्षिप्यते । ततोऽनन्तरोक्तोऽनवस्थितपल्य उत्पाट्यते । ततः शलाकापल्यचरमसर्षपाक्रान्ताद्द्वीपात्समुद्राद्वा परतः पूर्वक्रमेण द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेद् यावदसौ निःशेषतो निष्ठितो भवति । ततः शलाकापल्ये पुनरपि सर्षपरूपा एका शलाका प्रक्षिप्यते । ततोऽनन्तरोक्तानवस्थितपल्यचरमसर्षपाक्रान्तो द्वीपः समुद्रो वा यस्तदन्तमनवस्थितपल्यं सर्षपैर्भृत्वा ततः परतः पुनरप्येकैकं सर्षपं प्रतिद्वीपं प्रतिसमुद्रं च प्रक्षिपेद् यावदसौ निष्ठितो भवति । ततो द्वितीया शलाका शलाकापल्ये प्रक्षिप्यते । एवमपरापरानव-

स्थितपल्यापूरणरिक्तीकरणलब्धैकैकसर्षपैर्यदा शलाकापल्य आपूरितो भवति । पूर्वपरिपाट्या चानवस्थितपल्यस्तदा शलाकापल्यमुत्पाट्य प्राक्तनानवस्थितपल्यचरमसर्षपाक्रान्ताद्द्वीपात्समुद्राद्वा परतः प्रतिद्वीपं प्रतिसमुद्रं चैकैकं सर्षपं प्रक्षिपेद् यावदसौ निर्लेपो भवति । ततः प्रतिशलाकापल्ये सर्षपरूपा द्वितीया शलाका प्रक्षिप्यते । ततोऽनवस्थितपल्यमुत्पाट्यानन्तररिक्तीकृतशलाकापल्यचरमसर्षपाक्रान्तद्द्वीपात्समुद्राद्वा परतः पूर्वक्रमेण द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेद् यावदसौ निष्ठितो भवति । ततः पुनरपि शलाकापल्ये सर्षपरूपा शलाका प्रक्षिप्यते, यत्र चासौ द्वीपे समुद्रे वा निष्ठितस्तावत्प्रमाणविस्तरात्मकमनवस्थितपल्यं सर्षपैरापूर्य ततः परतः पूर्वक्रमेण द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेद् यावदसौ निष्ठितो भवति । ततः शलाकापल्ये द्वितीया शलाका प्रक्षिप्यते । एवमनेन क्रमेण तावद्वक्तव्यं यावत्योऽपि प्रतिशलाकापल्यशलाकापल्यानवस्थितपल्याः परिपूर्णमापूरिता भवन्ति । ततः प्रतिशलाकापल्यमुत्पाट्य निष्ठितस्थानात्परतः प्रतिद्वीपं प्रतिसमुद्रमेकैकं सर्षपं प्रक्षिपेद् यावदसौ निष्ठितो भवति । ततो महाशलाकापल्ये एका सर्षपरूपा शलाका प्रक्षिप्यते । ततः शलाकापल्यमुत्पाट्य प्रतिशलाकापल्यगतचरमसर्षपाक्रान्ताद्द्वीपात्समुद्राद्वा । परतः प्रतिद्वीपं प्रतिसमुद्रमेकैकं सर्षपं प्रक्षिपेद् यावदसौ निष्ठितो भवति । ततः प्रतिशलाकापल्ये एका शलाका प्रक्षिप्यते । ततोऽनवस्थितपल्यमुत्पाटयेद्, उत्पाट्य च शलाकापल्यगतचरमसर्षपाक्रान्ताद्द्वीपात्समुद्राद्वा परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेद्, तावद्गच्छेद् यावदसौ निःशेषतो रिक्तीभवति । ततः शलाकापल्ये प्रथमा शलाका प्रक्षिप्यते । ततोऽनन्तरोक्तानवस्थितपल्यगतचरमसर्षपाक्रान्तो द्वीपः समुद्रो वा यस्तत्पर्यन्तविस्तरात्मकोऽनवस्थितपल्यः कल्पयित्वा सर्षपैरापूर्यते । ततस्तमुत्पाट्य ततो निष्ठितस्थानात्परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेद् यावदसौ निष्ठितो भवति । ततो द्वितीया शलाका शलाकापल्ये प्रक्षिप्यते । एवं शलाकापल्यः पूरणीयः । एवमापूरणोत्पाटनप्रक्षेपपरम्परया तावद्वक्तव्यं यावन्महाशलाकापल्यप्रतिशलाकापल्यशलाकापल्यानवस्थितपल्याः सर्वेऽपि परिपूर्णशिखायुक्ताः समापूरिता भवन्ति । अत्र च यावन्तोऽनवस्थितपल्यशलाकापल्यप्रतिशलाकापल्यसर्षपप्रक्षेपव्याप्ता द्वीपसमुद्रा यावन्तश्च चतुष्पल्यसर्षपा एतावत्प्रमाणो राशिरेकरूपोन उत्कृष्टं संख्यातं भवति । तदुक्तम्-"**पढमतिपल्लुद्धरिया दीवुदही पल्लचउ सरिसवा य । सव्वोवि एस रासी, रूवूणो परमसंखेज्जं ॥१॥**" इति । सिद्धान्ते च यत्र कुत्रचित्संख्यातग्रहणम्, तत्र सर्वत्रापि जघन्योत्कृष्टापान्तरालवर्तिमध्यमं संख्यातं द्रष्टव्यम् । तदुक्तमनुयोगद्वारचूर्णौ सिद्धान्ते-"**जत्थ जत्थ संखेज्जगगहणं तत्थ तत्थ सव्वत्थ अजहण्णमणुक्कोसयं दट्ठव्वं**" इति । उक्तं सङ्ख्यातं, साम्प्रतमसङ्ख्यातकमुच्यते । तत्तु त्रिधा, परीतासङ्ख्यातकं युक्तासङ्ख्यातकं असङ्ख्यातासङ्ख्यातकं च । पुनरप्येकैकं त्रिधा, जघन्यं मध्यमं उत्कृष्टं च । तत्र जघ-

न्यं परीतासंख्यातकं उत्कृष्टसङ्ख्यातकमेवैकरूपाधिकं द्रष्टव्यम् । यत उक्तं सूत्रे—"उक्कोसए संखेज्जयं रूव पक्खित्तं जहण्णय परित्तासंखेज्जयं होइ" इति । ततः परमसंख्यातसंख्यास्थानानि सर्वाण्यपि मध्यमपरीतासंख्यातकरूपाणि द्रष्टव्यानि यावदुत्कृष्टं परीतासंख्यातकं न भवति । तच्चैवंरूपम्—जघन्यपरीतासंख्यातकसंबन्धीनि यावन्ति सर्षपलक्षणानि रूपाणि तान्येकैकशः पृथक् पृथक् संस्थाप्य, तत एकैकस्मिन् रूपे जघन्यपरीतासंख्यातकप्रमाणो राशिर्व्यवस्थाप्यते । तेषां च राशीनां परस्परमभ्यासो विधीयते । इहैवं भावना-असत्कल्पनया किल जघन्यपरीतासंख्यातकराशिस्थाने पञ्च रूपाणि कल्प्यन्ते । तानि च रूपाणि पृथक् पृथग् विध्रियन्ते । जाताः पञ्च एककाः एतेषामेककानां स्थाने प्रत्येकं पञ्चपरिमाणो राशिर्व्यवस्थाप्यते एतेषां च राशीनामेवमभ्यासः क्रियते । पञ्चभिर्गुणिताः पञ्च, जाता पञ्चविंशतिः । एषा पञ्चभिरभ्यस्यते, जाते पञ्चविंशं शतं एवमनेन क्रमेण परस्परमभ्यासे सति जातानि पञ्चविंशत्यधिकान्येकत्रिंशच्छतानि ३१२५

| |
|---|
| १ |
| १ |
| १ |
| १ |
| १ |

| |
|---|
| ५ |
| ५ |
| ५ |
| ५ |
| ५ |

एवमिहापि यथोक्तजघन्यपरीतासंख्यातकराशीनां पृथक् पृथग् एकैकस्मिन् रूपे व्यवस्थापितानां परस्परमभ्यासे सति यावान् राशिरुत्पद्यते, तावान् रूपोनः सन्नुत्कृष्टं परीतासंख्यातकं भवति । रूपे च प्रक्षिप्ते सति जघन्यं युक्तासंख्यातकं भवति, तावत्प्रमाणा एव च समया एकस्यामावलिकायां द्रष्टव्याः । तथा च सूत्रं जघन्ययुक्तासंख्यातकाभिधानानन्तरम्—"आवलिया वि तत्तिया चेव" इति । ततः परं यान्यसंख्यातसंख्यास्थानानि तानि मध्यमयुक्तासंख्यातकस्थानानि द्रष्टव्यानि, यावदुत्कृष्टं युक्तासंख्यातकं न भवति । तच्चैवम्—यानि जघन्ययुक्तासंख्यातकराशौ रूपाणि तान्येकैकशः पृथक् पृथक् संस्थाप्य तत एकैकस्मिन् रूपे जघन्ययुक्तासंख्यातकप्रमाणो राशिर्व्यवस्थाप्यते । तेषां च राशीनां पूर्वोक्तप्रकारेण परस्परमभ्यासे सति यावान् राशिः संपद्यते, तावान् एकरूपोनः सन्नुत्कृष्टं युक्तासंख्यातकं भवति । रूपे च प्रक्षिप्ते सति जघन्यमसंख्यातासंख्यातकं भवति । अन्ये पुनराहुः—जघन्ययुक्तासंख्यातकराशौ जघन्ययुक्तासंख्याकराशिना वर्गिते सति यावान् राशिः संभवति । यथा चतुष्केन वर्गिते षोडश, तावत्प्रमाणो राशिरेकरूपोनः सन्नुत्कृष्टं युक्तासंख्यातकं भवति । रूपे च प्रक्षिप्ते सति जघन्यमसंख्यातासंख्यातकं भवति । ततः परं यान्यसंख्यातसंख्यास्थानानि तानि सर्वाण्यपि मध्यमासंख्यातासंख्यातकस्थानानि, यावदुत्कृष्टमसंख्यातासंख्यातकं न भवति । तत्पुनः कियत्? इति चेद्, उच्यते, जघन्यासंख्यातासंख्यातकराशिरूपाणि पृथक्पृथग् एकैकशो व्यवस्थाप्य तत एकैकस्मिन् रूपे जघन्यासंख्यातासंख्यातकराशिर्व्यवस्थाप्यते । तेषां च राशीनां परस्परमभ्यासे कृते सति यावान् राशिः संभवति तावानेकरूपहीनः सन्नुत्कृष्टमसंख्यातासंख्यातकं भवति । अन्ये पुनरेवमाहुः-जघन्यासंख्यातासंख्यातकराशेर्वर्गो विधीयते । वर्गितस्यापि च तस्य राशेः पुनरन्यो वर्गो विधीयते । ततः

पुनरपि तस्य वर्गितवर्गितस्यान्यो वर्गो विधीयते । इत्येवं । त्रीन् वारान् वर्गे कृते सति इमान् दशाऽसंख्यातकप्रक्षेपान् प्रक्षिपेत् । "**लोगागासपएसा, धम्माधम्मेगजीवदेसा य । दव्वट्ठिया निगोया, पत्तेया चेव बोद्धव्वा ॥१॥ ठिइबंधज्झवसाया, अणुभागा जोगछेयपलिभागा । दोण्ह य समाणसमया, असंखपक्खेव दसउ त्ति ॥२॥**" "**दव्वट्ठिया निगोया**" इति द्रव्यस्थिता निगोदाः सूक्ष्माणां च बादराणां चानन्तकायिकजीवानां शरीराणि '**पत्तेया**' इति अनन्तकायिकव्यतिरिक्ताः पृथिव्यप्तेजोवायुवनस्पतित्रसाः प्रत्येकशरीरिणः।'**ठिइबंधज्झवसाया**" इति स्थितिबन्धस्य कारणभूता अध्यवसायाः कषायोदयरूपाः । "**ठिइअणुभागं कसायओ कुणइ**" इतिवचनात् । स्थितिबन्धाध्यवसायाः तेऽप्यसंख्याता एव । तथाहि-ज्ञानावरणीयस्य कर्मणस्तावज्जघन्यस्थितिबन्धोऽन्तर्मुहूर्तप्रमाणः । मध्यमः स एवैकसमयाधिको द्विसमयाधिक इत्यादिरूपः । उत्कृष्टस्तु त्रिंशत्सागरोपमकोटीकोटीप्रमाणः । एषां च स्थितिबन्धानां निर्वर्तका अध्यवसायाः प्रत्येकमसंख्येयलोकाकाशप्रमाणाः । '**ठिइबंधे ठिइबंधे अज्झवसाणाणऽसंखिया लोगा**' इति वचनात् । एवं च सत्येकस्मिन्नपि ज्ञानावरणीये कर्मण्यसंख्याताः स्थितिबन्धाध्यवसायाः प्राप्यन्ते । किं पुनः समस्तेषु कर्मसु ? इति । अनुभागा ज्ञानावरणीयादिकर्मणां दलिकेषु जघन्यमध्यमादिभेदभिन्ना रसविशेषाः, तेषां निष्पादकानि यान्यध्यवसायस्थानानि तान्यनुभागबन्धाध्यवसायस्थानानि, पदैकदेशे पदसमुदायोपचारात् । तत्रानुभागबन्धाध्यवसायस्थानान्यनुभागशब्देनोक्तानि तानि चासंख्येयलोकाकाशप्रदेशप्रमाणानि । '**जोगच्छेयपलिभागो**' इति योगो मनोवाक्कायनिमित्तं वीर्यम् तस्य प्रज्ञाच्छेदनकच्छेदेन प्रतिविशिष्टा निर्विभागा भागा योगच्छेदप्रतिभागाः, ते च जघन्ययोगस्थानादारभ्योत्कृष्टयोगस्थानं यावत्प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणा भवन्ति । '**दोण्ह य समाणसमया**' इति । द्वयोः समयोरुत्सर्पिण्यवसर्पिणीरूपयोः समयाः परमनिरुद्धाः कालविशेषाः, तेऽप्यसंख्याता एव । एतेषां च दशानां राशीनां प्रक्षेपे सति पुनः समस्तस्यापि राशेः पूर्ववत्त्रीन् वारान् वर्गो विधीयते । तत एतावत्प्रमाणो राशिरेकरूपोन उत्कृष्टमसंख्यातासंख्यातकं भवति । उक्तमसंख्यातकम्, इदानीमनन्तकमुच्यते । तदपि त्रिधा, परीतानन्तकं युक्तानन्तकं अनन्तानन्तकं च । पुनरप्येकैकं त्रिधा, जघन्यं मध्यममुत्कृष्टं च । तत्रोत्कृष्टासंख्यातासंख्यातकराशावेकरूपे प्रक्षिप्ते सति जघन्यं परीतानन्तकं भवति । ततः परं यान्यनन्तकरूपसंख्यास्थानानि तानि मध्यमपरीतानन्तकानि द्रष्टव्यानि, यावदुत्कृष्टं परीतानन्तकं न भवति । तच्चैवम्—जघन्यपरीतानन्तकराशौ यावन्ति रूपाणि तावत्संख्याकानां जघन्यपरीतानन्तकराशीनां परस्परमभ्यासे कृते सति यावान् राशिर्भवति तावानेकरूपहीनः सन्नुत्कृष्टं परीतानन्तकं भवति । रूपे च प्रक्षिप्ते सति जघन्यं युक्तानन्तकं भवति । एतावत्प्रमाणा अभव्यजीवाः । तथा च सूत्रं जघन्ययुक्तानन्तकसंख्याभिधानानन्तरम्—"**अभव-**

सिद्धिया वि तत्तिया चेव" इति । इह तावदेतावतैव पर्याप्तम् । अतः परं तु विनेयजनानुग्रहाय मध्यमयुक्तानन्तकादीन्यपि संख्यास्थानान्युपदर्श्यन्ते । तत्र जघन्ययुक्तानन्तकात्पराणि यान्यनन्तसंख्यास्थानानि तानि मध्यमयुक्तानन्तकस्थानानि द्रष्टव्यानि, यावदुत्कृष्टं युक्तानन्तकं न भवति । तच्चैवमवगन्तव्यम्—जघन्ययुक्तानन्तकराशौ यावन्ति रूपाणि तावत्प्रमाणानामेव जघन्ययुक्तानन्तकराशीनामन्योन्यमभ्यासे कृते सति यावान् राशिः संपद्यते तावानेकरूपोनः सन्नुत्कृष्टं युक्तानन्तकं भवति । रूपे च प्रक्षिप्ते सति जघन्यमनन्तानन्तकं भवति । ततः परं यान्यनन्तसंख्यास्थानानि तानि सर्वाण्यपि मध्यमानन्तानन्तकरूपाणि द्रष्टव्यानि । उत्कृष्टं त्वनन्तानन्तकं नास्त्येव । तथा च सूत्रम्—"**उक्कोसय अणंताणंतयं नत्थि**" इति अन्ये पुनराहुः—जघन्यानन्तानन्तकराशेस्तावतैव राशिना गुणनस्वरूपो वर्गः क्रियते, ततस्तस्य वर्गितराशेः पुनर्वर्गस्तस्यापि भूयो वर्गः । एवं वारत्रयं वर्गे कृते सति इमे षट् प्रक्षेपाः प्रक्षिप्यन्ते—"**सिद्धा निगोयजीवा, वणस्सई कालपुग्गला चेव । सव्वमलोगागासं, छप्पेएऽणंतपक्खेवा ॥१॥**" इत्यस्य व्याख्या—सर्व एव सिद्धा अपगतसकलकर्मकलङ्काः । तथा सर्वेऽपि सूक्ष्मबादरभेदभिन्ना निगोदजीवा अनन्तकायिकसत्त्वाः, तथा सर्वे वनस्पतयः प्रत्येकानन्तवनस्पतिजीवाः, 'काल' इति सर्वेऽतीतानागताः समयाः, सर्वे पुद्गलाः समस्तपुद्गलास्तिकायगताः परमाणवः, तथा सर्वं समस्तमलोकाकाशम्, अयं च सर्वशब्दः प्रत्येकं लिङ्गवचनपरिणामेन संबन्धनीयः, स च तथैव संबन्धितः। एते प्रदर्शितस्वरूपाः षडपि प्रक्षिप्यन्त इति प्रक्षेपाः, **कर्मणि घञ्** प्रक्षेपणीया राशयः पूर्वोक्तराशौ प्रक्षिप्यन्ते ततः पुनरप्येतावत्प्रमाणस्य राशेः पूर्वोक्तेनैव क्रमेण वारत्रयं वर्गो विधीयते ततः केवलज्ञानदर्शनपर्यायाः सर्वेऽपि तत्र प्रक्षिप्यन्ते, तत उत्कृष्टमनन्तानन्तकं भवति । सूत्राभिप्रायतश्चैवमप्युत्कृष्टमनन्तानन्तकं न भवतीति । प्रकृतमिदानीमनुस्रियते । तत्र यथोक्तसंख्येभ्योऽभव्येभ्यः सकाशाद्भव्या अनन्तगुणाः । किंरूपास्ते ? इत्याह—'**निर्वाणगमनार्हाः**' निर्वृतिगमनयोग्याः ॥६२॥

सासाणउवसमियमिस्सवेयगखइगमिच्छदिट्ठीओ ।
थोवा दो संखगुणा, असंखगुणिया अणंता दो ॥६३॥

(हारि०) व्याख्या—सासादनौपशमिकमिश्रवेदकक्षायिकमिथ्यादृष्टय इति द्वन्द्वः । तत्र स्तोकाः सासादनाः, ततो द्वावौपशमिकमिश्रदृष्टी संख्यातगुणौ, ततोऽसंख्यातगुणिता वेदकाः, क्षायोपशमिकसम्यग्दृष्टय इत्यर्थः, एतत्सम्यक्त्ववर्ती देवादीनामसंख्येयगुणत्वात् । ततोऽनन्तगुणौ द्वौ क्षायिकमिथ्यादृष्टी । तत्र क्षायिकेष्वनन्तत्वं सिद्धापेक्षम् मिथ्यादृष्टिपदे च भावितार्थमेव । इति गाथार्थः ॥६३॥

इति सम्यक्त्वे सप्रतिपक्षेऽल्पबहुत्वमुक्तम् । तथा—

(मल०) स्तोकाः सासादनसम्यग्दृष्टयः, तेभ्यः संख्यातगुणा औपशमिकसम्यग्दृष्टयः, केषांचिदेवोपशमिकसम्यक्त्वतः प्रच्युतेः, ततः प्रच्यवमानानां च सासादनत्वात् । तेभ्योऽपि चौपशमिकसम्यग्दृष्टिभ्यः सकाशान्मिश्राः संख्यातगुणाः तेभ्योऽपि क्षायोपशमिकसम्यग्दृष्टयोऽसंख्यातगुणाः तेभ्योऽपि क्षायिकसम्यग्दृष्टयोऽनन्तगुणाः, क्षायिकसम्यक्त्वातां सिद्धानामानन्त्यात् । तेभ्योऽपि मिथ्यादृष्टयोऽनन्तगुणाः, सिद्धेभ्योऽपि वनस्पतिजीवानामनन्तत्वात्, तेषां च मिथ्यादृष्टित्वात् ॥ इति ॥६३॥

सन्नी थोवा तत्तो अणंतगुणिया असन्निणो होंति[1] ।
थोवाऽणाहारजिया, तदसंखगुणा उ आहारा[2] ॥६४॥

(हारि०) व्याख्या—संज्ञिनः स्तोकाः ततोऽनन्तगुणिताः 'असंज्ञिनः' मनोविज्ञानविकलाः पृथिवीकायिकादिसर्वजीवा भवन्तीति, क्रियापदं सर्वाल्पबहुत्वपदेषु योज्यम् । इति संज्ञिष्वल्पबहुत्वमुक्तम् । तथा स्तोका आहारकापेक्षयाऽनन्ता अप्यनाहारकाः । एषां चानन्त्यं प्रतिसमयोद्वर्तनिगोदासंख्येयभागप्रमाणानन्तकायिकजीवानामनन्तानां विग्रहगत्यापन्नानां तथा सिद्धानां चानन्तानां सद्भावात् । तेभ्योऽसंख्यातगुणास्तदसंख्यातगुणा भवन्ति, के ? इत्याह—सहाहारेण वर्तन्त इति साहारकाः । यतोऽनाहारका विग्रहगत्यापन्ना एकैकनिगोदासंख्येयभागवर्तिन उक्ताः शेषास्त्वाहारकाः अतोऽनाहारकेभ्य आहारका असंख्येयगुणा एव इति गाथार्थः ॥६४॥

'इत्युक्तमल्पबहुत्वम्'; तदभिधानाच्च भणितं मार्गणास्थानगताभिधेयपदषट्कम्, गुणस्थानकेषु जीवस्थानाद्यभिधेयपददशकं मार्गयितुकामः प्रथमतस्तेष्वेव जीवस्थ... अत्रार्थेऽन्यकर्तृकी संबन्धगाथेयम्—"इय जियठाणाईयं मग्गणठाणेसु भणिय संपइ गुणठाणेसु, जीवट्ठाणाइयं वोच्छं ॥१॥" इतः प्रस्तुतगाथोच्यते

(मल०) स्तोकाः संज्ञिनो जीवाः, ...
त्वात् । तेभ्योऽसंज्ञिनः संज्ञिव्यतिरिक्ता अनन्तगुणाः, वनस...
स्तोका अनाहारकाः । विग्रहगत्यापन्नसमुद्घातगतकेवलिभव...
कत्वात् । तेभ्योऽसंख्यातगुणाः साहारा आहारकजीवाः ।

१ "हुंति" इत्यपि पाठः । २ "उ साहारा" ॥ इत्यपि पाठः ।
इत्यपि पाठः ।

जीवाः ते च प्राय आहारकाः. तत्कथमसंख्यातगुणा अनाहारकेभ्य आहारकाः ? इति, नैष दोषः, यतः प्रतिसमयमेकैकस्य निगोदस्यासंख्येयभागप्रमाणा विग्रहगत्यापन्ना जीवा लभ्यन्ते ते चानाहारकाः. तत आहारकजीवानामनाहारकजीवापेक्षयाऽसंख्यातगुणत्वमेवेति ।।६४।।

उक्तं गत्यादिषु मार्गणास्थानेषु स्वस्थानापेक्षयाऽल्पबहुत्वम् । इदानीं गुणस्थानकेषु जीवस्थानानि चिन्तयन्नाह—

मिच्छे सव्वे छ अपज्ज सन्निपज्जत्तगो य सासाणे ।
सम्मे दुविहो सन्नी सेसेसु सन्निपज्जत्तो ।।६५।।

(हारि०) व्याख्या—मिथ्यादृष्टौ सर्वजीवस्थानानि भवन्तीति गम्यम् । तथा षडपर्याप्तकजीवस्थानानि सूक्ष्मरहितानि संज्ञी पर्याप्तकश्चेति सप्तमं जीवस्थानकम् . क ? इत्याह—सासादने । तथा 'सम्मे' इति अविरतसम्यग्दृष्टिगुणस्थानके. किम् ? इत्याह—'द्विविधः' पर्याप्तापर्याप्तलक्षणः संज्ञीति जीवस्थानकद्वयम् । तथा 'शेषेषु' मिश्रदेशविरत्यादिष्वेकादशगुणस्थानकेषु संज्ञी पर्याप्त इत्येकं जीवस्थानकम् । इति गाथार्थः ।।६५।।

साम्प्रतं गुणस्थानकेषु जीवस्थानकसमर्थनां सूचयन् योगादिसंबन्धं दर्शयंश्च तेषु तानेवाह—

(मल०) मिथ्यादृष्टिगुणस्थानके सर्वाण्यपर्याप्तसूक्ष्मैकेन्द्रियादीनि पर्याप्तसंज्ञिपञ्चेन्द्रियपर्यन्तानि जीवस्थानानि भवन्ति, मिथ्यात्वस्य सर्वेष्वप्येतेषु संभवात् । तथा सूक्ष्मैकेन्द्रियवर्जिताः शेषाः षट् अपर्याप्तकाः संज्ञी पर्याप्तकश्चेति सप्त जीवस्थानानि सासादनसम्यग्दृष्टिगुणस्थानके भवन्ति । अपर्याप्तकाश्चेह करणापर्याप्तका द्रष्टव्याः न तु लब्ध्यपर्याप्तकाः, तेषु मध्ये सासादनसम्यक्त्वसहितस्योत्पादाभावात् । 'सम्मे दुविहो सन्नी' इति अविरतसम्यग्दृष्टिगुणस्थाने 'द्विविधः' पर्याप्तापर्याप्तरूपतया द्विप्रकारः संज्ञी ज्ञातव्यः । इहाप्यपर्याप्तकः करणापेक्षया द्रष्टव्यः न तु लब्ध्यपर्याप्तकमध्येऽविरतसम्यग्दृष्टेरुत्पादाभावात् । 'शेषेषु' मिश्रदेशविरत्यादिषु गुणस्थानकेषु पर्याप्तसंज्ञिपञ्चेन्द्रियलक्षणमेकमेव जीवस्थानकं द्रष्टव्यं न शेषाणि, तेषां मिश्रभावदेशसर्वविरतिप्रतिपत्त्यभावात् । न च पूर्वप्रतिपन्नमिश्रभावोऽन्येषु जीवस्थानकेषु लभ्यते—"न सम्ममिच्छो कुणइ कालं" इतिवचनात् ।।६५।।

उपसंहारमाह—

इय जियठाणा गुणठाणगेसु जोगाइ वोच्छमेत्ताहे ।
जोगाहारदुगूणा, मिच्छे सासणअविरए य ।।६६।।

इति सम्यक्त्वे सप्रतिपक्षेऽल्पबहुत्वमुक्तम् । तथा—

(मल०) स्तोकाः सासादनसम्यग्दृष्टयः, तेभ्यः संख्यातगुणा औपशमिकसम्यग्दृष्टयः, केषांचिदेवोपशमिकसम्यक्त्वतः प्रच्युतेः, इतः प्रच्यवमानानां च सासादनत्वात् । तेभ्योऽपि चौपशमिकसम्यग्दृष्टिभ्यः सकाशान्मिश्राः संख्यातगुणाः तेभ्योऽपि क्षायोपशमिकसम्यग्दृष्टयोऽसंख्यातगुणाः तेभ्योऽपि क्षायिकसम्यग्दृष्टयोऽनन्तगुणाः, क्षायिकसम्यग्दृष्टीनां सिद्धानामानन्त्यात् । तेभ्योऽपि मिथ्यादृष्टयोऽनन्तगुणाः, सिद्धेभ्योऽपि वनस्पतिजीवानामनन्तत्वात् , तेषां च मिथ्यादृष्टित्वात् ॥ इति ॥६३॥

सन्नी थोवा तत्तो, अणंतगुणिया असन्निणो होंति ।
थोवाणाहारजिया, तदसंखगुणा उ आहारा ॥६४॥

(हारि०) व्याख्या—संज्ञिनः स्तोकाः ततोऽनन्तगुणिताः 'असंज्ञिनः' मनोविज्ञानविकलाः पृथिवीकायिकादिसर्वजीवा भवन्तीति, क्रियापदं सर्वाल्पबहुत्वपदेषु योज्यम् । इति संज्ञिष्वल्पबहुत्वमुक्तम् । तथा स्तोका आहारकापेक्षयाऽनन्ता अप्यनाहारकाः । एषां चानन्त्यं प्रतिसमयोद्धृतनिगोदासंख्येयभागप्रमाणानन्तकायिकजीवानामनन्तानां विग्रहगत्यापन्नानां तथा सिद्धानां चानन्तानां सद्भावात् । तेभ्योऽसंख्यातगुणास्तदसंख्यातगुणा भवन्ति, के ? इत्याह— सदाहारेण वर्तन्त इति साहारकाः । यतोऽनाहारका विग्रहगत्यापन्ना एकैकनिगोदासंख्येयभागवर्तिन उक्ताः शेषास्त्वाहारकाः अतोऽनाहारकेभ्य आहारका असंख्येयगुणा एव इति गाथार्थः ॥६४॥

'इत्युक्तमल्पबहुत्वम्'; तदभिधानाच्च भणितं मार्गणास्थानगताभिधेयपदषट्कम् । अधुना गुणस्थानकेषु जीवस्थानाद्यभिधेयपददशकं मार्गयितुकामः प्रथमतस्तेष्वेव जीवस्थानान्याह, अत्रार्थेऽन्यकर्तृकी संबन्धगाथेयम्—"इय जियठाणाईयं, मग्गणठाणेसु भणियमसेसं । संपइ गुणठाणेसु, जीवट्ठाणाइयं वोच्छं ॥१॥" इतः प्रस्तुतगाथोच्यते—

(मल०) स्तोकाः संज्ञिनो जीवाः, देवनारकसमनस्कपञ्चेन्द्रियतिर्यङ्नराणामेव संज्ञित्वात् । तेभ्योऽसंज्ञिनः संज्ञिव्यतिरिक्ता अनन्तगुणाः, वनस्पतिकायजीवानामनन्तत्वात् । तथा स्तोका अनाहारकाः । विग्रहगत्यापन्नसमुद्घातगतकेवलिभवस्थायोगिकेवलिसिद्धानामेवानाहारकत्वात् । तेभ्योऽसंख्यातगुणाः साहाराः आहारकजीवाः । ननु च सिद्धेभ्योऽनन्तगुणाः संसारि-

१ "हुंति" इत्यपि पाठः । २ "उ साहारा" ॥ इत्यपि पाठः । ३ "तेभ्योऽसंख्यातगुणा भवन्ति" इत्यपि पाठः ।

णान्यैश्च तत्राभ्युपगम्यते तच्च सम्यगवगच्छामः, तथाविधसंप्रदायाभावात्, एतच्च प्रागेवोक्त-मिति। त एवानन्तरोक्ता दश योगा वैक्रियमिश्रयुताः सन्त एकादश 'देशयते' देशविरति-गुणस्थानके भवन्ति, अम्बडस्येव वैक्रियलब्धिमतो देशविरतस्य वैक्रियारम्भसंभवात्। तथा 'प्रमत्ते' प्रमत्तगुणस्थानके त एवानन्तरोक्ता एकादश योगा 'साहारद्विकाः' आहारकद्विक-सहिताः सन्तस्त्रयोदश भवन्ति ॥६७॥

एक्कारस अपमत्ते, मणवइआहारउरलवेउव्वा।
अप्पुव्वाइसु पंचसु, नव ओरालो मणवई य ॥६८॥

(हारि०) व्याख्या-एकादश योगाः, क्व? इत्याह—अप्रमत्ते, कीदृशास्ते? इत्याह—मनोवागाहारकौदारिकवैक्रियाणीति द्वन्द्वः। तत्रौदारिकमिश्रमपर्याप्तकतिर्यङ्मनुष्याणां केवलिसमुद्घाते च। कार्मणं तु विग्रहगतौ तिर्यगादीनां केवलिसमुद्घाते च। तथाऽऽहारकमिश्रं प्रमत्तयतेः। वैक्रियमिश्रं तु देवादीनामिति। एते चत्वारो योगा यथायोगमेतेषु भवन्ति, अतोऽप्रमत्ते प्रोक्ता एवैकादश योगा भवेयुरिति। तथाऽपूर्वादिषु निवृत्तिबादरगुणस्थानकादिषु पञ्चसु क्षीणमोहान्तेष्वित्यर्थः, कियन्तो योगाः? इत्याह—नवेति संख्यौदारिकमनोवचांसि चेति द्वन्द्वः, औदारिककाययोगश्चत्वारि मनांसि चत्वारि वचनानि। इति गाथार्थः ॥६८॥

साम्प्रतं योगान् समर्थयन्नुपयोगसंबन्धं दर्शयन्नाह—

(मल०) चतुर्विधवाग्योगचतुर्विधमनोयोगाहारकौदारिकवैक्रियलक्षणा एकादश योगाः 'अप्रमत्ते' अप्रमत्तगुणस्थानके भवन्ति। यत्तु वैक्रियमिश्रमाहारकमिश्रं च तन्न संभवति, तद्धि वैक्रियस्याहारकस्य च प्रारम्भकाले भवति, तदानीं लब्ध्युपजीवनादिनौत्सुक्यभावतः प्रमादसंभव इति। तथा औदारिकमिश्रमपर्याप्तावस्थायाम्, कार्मणं त्वपान्तरालगतौ, यद्वोभेऽपि केवलिसमुद्घातावस्थायाम्, ततस्तेऽपीह पूर्वत्र च गुणस्थानके न संभवत इति। 'अप्पुव्वाइसु' इत्यादि। अपूर्वादिष्वपूर्वकरणादिषु क्षीणमोहपर्यन्तेषु पञ्चसु गुणस्थानकेष्वौदारिकं चतुर्विधं मनश्चतुर्विधा वाग् इत्येते नव योगा भवन्ति, न शेषाः, अत्यन्तविशुद्धतया तेषां वैक्रियाहारकारम्भासंभवात्, तत्र स्थितानां च स्वभावत एव श्रेण्यारोहाभावात्। औदारिकमिश्रकार्मणकाययोगाभावस्तु पूर्वोक्तयुक्तेरेवावसेय इति ॥६८॥

चरमाइममणवइदुगकम्मुरलदुगं ति जोगिणो सत्त।
गयजोगो य अजोगी, वोच्छमओ बारसुवओगे ॥६९॥

(हारि०) व्याख्या-मनश्च वाक् च तयोर्द्विके, मनोवाग्द्विके चरमं चान्त्यं, आदिमं चाद्यं चर-

१ "तु" इत्यपि पाठः।

(हारि०) व्याख्या—इति जीवस्थानानि गुणस्थानकेषूक्तानि । इति शेषो दृश्यः ॥१॥ इतो योगादि वक्ष्ये, इति गाथार्द्धेन संबन्धोऽभिहितः । साम्प्रतं संबन्धितमेवार्थमाह—योगा उक्तस्वरूपा भवन्ति । किमशेषा अपि ? न इत्याह-आहारकद्विकोनास्त्रयोदशेत्यर्थः, क ? इत्याह- 'मिच्छे' इति मिथ्यादृष्टौ सासादनेऽविरते च गाथार्थः ॥६६॥

तथा—

(मल०) 'इति' एवमुपदर्शितेन प्रकारेण जीवस्थानकानि गुणस्थानकेषु द्रष्टव्यानि । 'एत्ताहे' इति इत ऊर्ध्वं सम्प्रति 'योगादि' आदिशब्दादुपयोगादिपरिग्रहः, 'वक्ष्ये' अभिधास्ये । तत्र योगान् तावदाह— जोगा' इत्यादि । योगा आहारकद्विकेन आहारकतन्मिश्रलक्षणेन ऊना रहिताः शेषास्त्रयोदश मिथ्यादृष्टौ सासादने अविरतौ च भवन्ति । मिथ्यादृष्टयादिगुणस्थानकत्रये हि संज्ञिपञ्चेन्द्रियोऽपि लभ्यते, तस्य च यथोक्तास्त्रयोदशापि योगाः संभवन्ति । यच्चाहारकद्विकं तच्चतुर्दशपूर्विण एव । तदुक्तम्—**आहारदुगं जायइ चउदसपुव्विस्स**' इति । न च मिथ्यादृष्ट्यादौ चतुर्दशपूर्वाधिगमसंभव इति ॥६६॥

**उरलविउव्वे'वइमणा दस मीसे ते विउव्विमीसजुया ।**
**देसजए एक्कारस साहारदुगा पमत्ते ते ॥६७॥**

(हारि०) व्याख्या—औदारिवैक्रियवाग्मनांसीति द्वन्द्वः, इति दश योगा मिश्रे—**न सम्ममिच्छो कुणइ कालं''** इतिवचनात् । कार्मणौदारिकवैक्रियमिश्रत्रिकं न भवति, आहारकद्विकं तु यतेरेव भवति, अतो मिश्रे दश योगा इति भावना । तथा ते पूर्वोक्ता दश योगा वैक्रियमिश्रयुता एकादशेत्यर्थः क ? इत्याह—देशयते । तथा सहाहारकद्विकेन आहारकशरीरतन्मिश्रलक्षणेन वर्तन्त इति साहारकद्विकास्ते पूर्वोक्ता एकादश त्रयोदशेत्यर्थः, क ? इत्याह-**'प्रमत्ते'** षष्ठगुणस्थानके । इति गाथार्थः ॥६७॥

तथा—

(मल०) औदारिकवैक्रियचतुर्विधवाग्योगचतुर्विधमनोयोगलक्षणा दश योगा मिश्रे सम्यग्मिथ्यादृष्टौ भवन्ति न शेषाः । तथा ह्याहारकद्विकस्यासंभवः पूर्वोक्तयुक्तेरेव, कार्मणशरीरं त्वपान्तरालगतौ संभवति, अस्य च मरणासंभवेनापान्तरालगत्यसंभवस्ततस्तस्याप्यसंभवः, अत एवौदारिकवैक्रियमिश्रेऽपि न संभवतः, तयोरपर्याप्तावस्थाभावित्वात् . तस्यां चावस्थायां सम्यग्मिथ्यात्वाभावात् । ननु च मा भूद्देवनारकसंबन्धि वैक्रियमिश्रम्, यत्पुनर्मनुष्यतिरश्चां सम्यग्मिथ्यादृशां वैक्रियलब्धिमतां वैक्रियकरणसंभवेन तदारम्भकाले वैक्रियमिश्रं भवति तत्कस्मान्नाभ्युपगम्यते ?, उच्यते, तेषां वैक्रियकरणासंभवतोऽन्यतो वा यतः कुतश्चित्कारणादाचार्यै-

१ "वय" इत्यपि पाठः ।

गान्यैश्च तत्राभ्युपगम्यते तन्न सम्यगवगच्छामः, तथाविधसंप्रदायाभावात्, एतच्च प्रागेवोक्तमिति। त एवानन्तरोक्ता दश योगा वैक्रियमिश्रयुताः सन्त एकादश 'देशयते' देशविरतिगुणस्थानके भवन्ति, अम्बडस्येव वैक्रियलब्धिमतो देशविरतस्य वैक्रियारम्भसंभवात्। तथा 'प्रमत्ते' प्रमत्तगुणस्थानके त एवानन्तरोक्ता एकादश योगा 'साहारद्विकाः' आहारकद्विकसहिताः सन्तस्त्रयोदश भवन्ति ॥६७॥

एक्कारस अपमत्ते, मणवइआहारउरलवेउव्वा ।
अप्पुव्वाइसु पंचसु, नव ओरालो मणवई य ॥६८॥

(हारि०) व्याख्या-एकादश योगाः, क? इत्याह—अप्रमत्ते, कीदृशास्ते? इत्याह—मनोवागाहारकौदारिकवैक्रियाणीति द्वन्द्वः। तत्रौदारिकमिश्रमपर्याप्तकतिर्यङ्मनुष्याणां केवलिसमुद्घाते च। कार्मणं तु विग्रहगतौ तिर्यगादीनां केवलिसमुद्घाते च। तथाऽऽहारकमिश्रं प्रमत्तयतेः। वैक्रियमिश्रं तु देवादीनामिति। एते चत्वारो योगा यथायोगमेतेषु भवन्ति, अतोऽप्रमत्ते प्रोक्ता एवैकादश योगा भवेयुरिति। तथाऽपूर्वादिषु निवृत्तिबादरगुणस्थानकादिषु पञ्चसु क्षीणमोहान्तेष्वित्यर्थः, कियन्तो योगाः? इत्याह—नवेति संख्यौदारिकमनोवचांसि चेति द्वन्द्वः, औदारिककाययोगश्चत्वारि मनांसि चत्वारि वचनानि। इति गाथार्थः ॥६८॥

साम्प्रतं योगान् समर्थयन्नुपयोगसंबन्धं दर्शयन्नाह—

(मल०) चतुर्विधवाग्योगचतुर्विधमनोयोगाहारकौदारिकवैक्रियलक्षणा एकादश योगाः 'अप्रमत्ते' अप्रमत्तगुणस्थानके भवन्ति। यत्तु वैक्रियमिश्रमाहारकमिश्रं च तन्न संभवति, तद्धि वैक्रियस्याहारकस्य च प्रारम्भकाले भवति, तदानीं लब्ध्युपजीवनादिनौत्सुक्यभावतः प्रमादसंभव इति। तथा औदारिकमिश्रमपर्याप्तावस्थायाम्, कार्मणं त्वपान्तरालगतौ, यद्वोभेऽपि केवलिसमुद्घातावस्थायाम्, ततस्तेऽपीह पूर्वत्र च गुणस्थानके न संभवत इति। 'अप्पुव्वाइसु' इत्यादि। अपूर्वादिष्वपूर्वकरणादिषु क्षीणमोहपर्यन्तेषु पञ्चसु गुणस्थानकेष्वौदारिकं चतुर्विधं मनश्चतुर्विधा वाग् इत्येते नव योगा भवन्ति, न शेषाः, अत्यन्तविशुद्धतया तेषां वैक्रियाहारकारम्भासंभवात्, तत्र स्थितानां च स्वभावत एव श्रेण्यारोहाभावात्। औदारिकमिश्रकार्मणकाययोगाभावस्तु पूर्वोक्तयुक्तेरेवावसेय इति ॥६८॥

चरमाइममणवइदुगकम्मुरलदुगं'ति जोगिणो सत्त ।
गयजोगो य अजोगी, वोच्छमओ बारसुवओगे ॥६९॥

(हारि०) व्याख्या-मनश्च वाक् च तयोर्द्विके, मनोवाग्द्विके चरमं चान्त्यं, आदिमं चाद्यं चर-

१ "तु" इत्यपि पाठः।

मादिमे, ते च ते मनोवाग्द्विके च चरमादिममनोवाग्द्विके, चरमादिमं च मनोऽसत्यामृषं सत्यं चेत्यर्थः, चरमा आदिमा च वागसत्यामृषा सत्या चेत्यर्थः, ततश्चरमादिममनोवाग्द्विके च कार्मणं चौदारिकद्विकं चौदारिकशरीरतन्मिश्रलक्षणं चरमादिममनोवाग्द्विककार्मणौदारिकद्विकम् , इत्येते सप्तेति संबन्धः, योगा भवन्ति । कस्य ? इत्याह–'योगिनः' सयोगिकेवलिनः । तत्र मनोद्विकं दूरदेशस्थमनःपर्यायज्ञानादिषु द्रव्यमनोव्यापारणात् । वाग्द्विकं देशनादावुपयोगात् । कार्मण औदारिकमिश्रश्च केवलिसमुद्घातेऽष्टसामयिके यथासंभवमौदारिकश्च चङ्क्रमणादौ द्रष्टव्य इति, तथा गतयोगश्चायोगीति । इति योजिता योगा गुणस्थानकेषु ॥ वक्ष्येऽभिधास्येऽत ऊर्ध्वं कान् ? उपयोगान् प्राक्प्रतिपादितस्वरूपान् , कियतः? द्वादश गुणस्थानकेष्विति प्रक्रमः । इति गाथार्थः ॥६९॥

प्रस्तावितमेवाह—

(मल०) चरमादिमरूपं मनोद्विकं चरमादिमरूपं च वाग्द्विकं कार्मणमौदारिकतन्मिश्रलक्षणमौदारिकद्विकं चेति सप्त योगाः 'योगिनः' सयोगिकेवलिनो भवन्ति । तत्र चरमं मनोऽसत्यामृषा आदिमं सत्यम् एवं चरमादिमे वाचावपि द्रष्टव्ये । कार्मणौदारिकमिश्रे तु समुद्घातावस्थायामिति । 'गयजोगो उ अजोगी' इति अयोगी अयोगिकेवली गतयोग एव भवति, योगाभावनिबन्धनत्वादयोगित्वावस्थायाः. तुशब्द एवकारार्थः तदेवमभिहिता गुणस्थानकेषु योगाः । साम्प्रतमेतेष्वेवोपयोगानभिधातुकाम आह–'वोच्छमओ' इत्यादि । वक्ष्येऽभिधास्येऽत ऊर्ध्वं गुणस्थानकेषु द्वादश उपयोगान् ॥६९॥

तानेवाह—

> अचक्खुचक्खुदंसणमन्नाणतिगं च मिच्छसासाणे ।
> अविरयसम्मे देसे, तिनाणदंसणतिगंति छ उ ॥७०॥

(हारि०) व्याख्या–दर्शनशब्दस्य प्रत्येकमभिसंबन्धादचक्षुर्दर्शनचक्षुर्दर्शनमिति द्वन्द्वः, तथाऽज्ञानत्रिकं चेति पञ्चोपयोगाः, कयोः ? इत्याह–वचनव्यत्ययान्मिथ्यादृष्टिसासादनयोरिति द्वन्द्वः । तथाऽविरतसम्यक्त्वे 'देसे' देशविरते च, किम् ? इत्याह–त्रिज्ञानदर्शनत्रिकमिति कर्मधारयतत्पुरुषगर्भः समाहारद्वन्द्वः, इत्येते षडुपयोगाः । इति गाथार्थः ॥७०॥

तथा—

(मल०) अचक्षुर्दर्शनं चक्षुर्दर्शनं अज्ञानत्रिकं च मत्यज्ञानश्रुताज्ञानविभङ्गलक्षणमित्येते पञ्चोपयोगा मिथ्यादृष्टिसासादनगुणस्थानकयोर्भवन्ति न शेषाः, सम्यक्त्वविरत्यभावात् । तथाऽविरतसम्यग्दृष्टौ देशविरते च त्रीणि ज्ञानानि मतिश्रुतावधिलक्षणानि, दर्शनत्रिकं चक्षुरचक्षुरवधिदर्शनलक्षणमित्येते षडुपयोगा भवन्ति न शेषाः, मिथ्यात्वसर्वविरत्यभावात् ॥७०॥

मीसे ते च्चिय मीसा सत्त पमत्ताइसु समणनाणा ।
केवलियनाणदंसणउवओगा जोगजोगीसु ॥७१॥

(हारि०) व्याख्या–मिश्रगुणस्थानके त एव पूर्वोक्ताः षडुपयोगा अज्ञानमिश्राः । तथा सप्तोपयोगाः, केषु ? इत्याह–प्रमत्तयत्यादिषु क्षीणमोहान्तेषु सप्तगुणस्थानकेषु, कीदृशाः ? समनःपर्यायज्ञानाः । 'ते च्चिय' इत्यत्रापि संबन्धात्त एव पूर्वोक्ताः षडुपयोगाः समनःपर्यायज्ञानाः सप्तेत्यर्थः । तथा केवलिकज्ञानदर्शनोपयोगाविति कर्मधारयः, कयोः ? इत्याह–'योग्ययोगिनोः' सयोग्ययोगिकेवलिगुणस्थानकयोर्भवत इति शेषः । इति गाथार्थः ॥७१॥

इत्युक्ता उपयोगा गुणस्थानकेषु । साम्प्रतमिहैवागमोक्तानामपि केषांचिदर्थानामनधिकृतत्वमाह—

(मल०) 'मिश्रे' मिश्रगुणस्थानके त एव पूर्वोक्ताः षडुपयोगा अज्ञानमिश्रा द्रष्टव्याः, तस्योभयदृष्टिपातित्वात् । केवलं कदाचित्सम्यक्त्वबाहुल्येन ज्ञानबाहुल्यम्, कदाचिच्च मिथ्यात्वबाहुल्येनाज्ञानबाहुल्यम्, समकक्षतायां तूभयोरपि समतेति । अस्मिंश्च गुणस्थानके यदवधिदर्शनमुक्तं तत्सैद्धान्तिकमतापेक्षया द्रष्टव्यमित्युक्तं प्राक् । तथा प्रमत्तादिषु क्षीणमोहपर्यन्तेषु सप्तसु गुणस्थानकेषु त एव पूर्वोक्ताः षड् उपयोगाः 'समणनाणा' इति समनःपर्यायज्ञानाः सन्तः सप्त भवन्ति न शेषाः, मिथ्यात्वघातिकर्मक्षयाभावात् । तथा केवलिकज्ञानदर्शनलक्षणौ द्वावुपयोगौ सयोगिकेवलिनि अयोगिकेवलिनि च गुणस्थानके भवतो न शेषा दश ज्ञानदर्शनलक्षणाः, तदुच्छेदेनैव केवलज्ञानदर्शनोत्पत्तेः । "नट्ठंमि उ छाउमत्थिए नाणे" इतिवचनात् ॥७१॥

तदेवमुक्ता गुणस्थानकेषूपयोगाः । साम्प्रतं यदिह प्रकरणे सूत्राभिमतमपि कार्मग्रन्थिकाभिप्रायानुसरणतो नाधिकृतं तद्दर्शयन्नाह—

सासणभावे नाणं विउव्विगाहारगे उरलमिस्सं ।
नेगिंदिसु सासाणो नेहाहिगयं सुयमयंपि ॥७२॥

(हारि०) व्याख्या 'सासादनभावे' सासादने सति ज्ञानमित्यादि 'श्रुतमतमपि' सिद्धान्ताभिप्रेतमपि 'न' नैव 'इह' अस्मिन् प्रकरणे 'अधिकृतं' अभ्युपगतम्, किन्त्वज्ञानमेवाधिकृतं कर्मग्रन्थाभिप्रायस्येहाश्रितत्वादिति संबन्धः । तथा 'वैक्रियाहारके' वैक्रियाहारककरणे औदारिकमिश्रमित्यपि नाधिकृतम्, किन्तु वैक्रियमिश्रमाहारकमिश्रं चाधिकृतम्, तस्यैव प्रधा-

१ "सिच्चिय" इत्यपि पाठः ।

नत्वात् । तथा 'न' नैवैकेन्द्रियेषु 'सासाणो' इति लिङ्गव्यत्ययात्सासादनमिति न चाधिकृतम् , किन्त्वेकेन्द्रियेषु सासादनमधिकृतं तत एव हेतोः । इति गाथार्थः ॥७२॥

इतो लेश्यास्तेष्वेवाभिधित्सुराह—

(मल०) 'सासादनभावे' सासादनसम्यग्दृष्टित्वे सति ज्ञानं भवति, नाज्ञानमिति । 'श्रुतमतमपि' सूत्रसम्मतमपि, तथाहि—"बेइन्दियाणं भंते ! किं नाणी अन्नाणी ? गोयमा ! णाणीवि अण्णाणीवि । जे नाणी ते नियमा दुनाणी । तंजहा—आभिणिबोहियनाणी सुयणाणी । जे अण्णाणी ते वि नियमा दुअन्नाणी । तंजहा—मइअन्नाणी सुयअन्नाणी य ॥" इत्यादि सूत्रे द्वीन्द्रियादीनां ज्ञानित्वमभिहितम् , तच्च सासादनसम्यक्त्वापेक्षयैव न शेषसम्यक्त्वापेक्षया, असंभवात् । उक्तं च प्रज्ञापनाटीकायाम्—"बेइन्दियस्स दो णाणा कहं लब्भंति ? भण्णइ सासायणं पडुच्च तस्सापज्जत्तयस्स दो णाणा लब्भंति" इति । ततः सासादनभावेऽपि ज्ञानं सूत्रे सम्मतमेव, तच्चेत्थं सम्मतमपि नेह प्रकरणेऽधिकृतं किंत्वज्ञानमेव, कार्मग्रन्थिकाभिप्रायस्यानुसरणात् । तदभिप्रायश्चायम्—सासादनस्य मिथ्यात्वाभिमुखतया तत्सम्यक्त्वस्य मलीमसत्वेन तन्निबन्धनस्य ज्ञानस्यापि मलीमसत्वादज्ञानरूपतेति । तथा सूत्रे वैक्रिये आहारके चारभ्यमाणे तेन आरभ्यमाणेन सहौदारिकस्य मिश्रीभवनात् , औदारिकमिश्रमुक्तम् । तथा चाह प्रज्ञापनाटीकाकारः—यदा पुनरौदारिकशरीरी वैक्रियलब्धिसंपन्नो मनुष्यः पञ्चेन्द्रियतिर्यग्योनिको वा पर्याप्तबादरवायुकायिको वा वैक्रियं करोति तदौदारिकशरीरयोग एव वर्तमानः प्रदेशान् विक्षिप्य वैक्रियशरीरयोग्यान् पुद्गलानादाय यावद्वैक्रियशरीरपर्याप्त्या पर्याप्तिं न गच्छति तावद्वैक्रियेण मिश्रता व्यपदेशश्चौदारिकेण तस्य प्रधानत्वात् । एवमाहारकेणापि सह मिश्रता द्रष्टव्या । आहारयति च तेनैवेति तेनैव व्यपदेश इति । परित्यागकाले च वैक्रियस्याहारकस्य च यथाक्रमं वैक्रियमिश्रमाहारकमिश्रं च । उक्तं च प्रज्ञापनाटीकायामेवाहारकमधिकृत्य—यदाहारकशरीरी भूत्वा कृतकार्यः पुनरप्यौदारिकं गृह्णाति तदाऽऽहारकस्य प्रधानत्वादौदारिकप्रवेशं प्रति व्यापारभावान्न परित्यज्यते, यावत्सर्वथैवाहारकं तदौदारिकेण सह मिश्रतेत्याहारकमिश्रता इत्याहारकमिश्रशरीरकायप्रयोग इति । तच्चेत्थम्—वैक्रियाहारकारम्भकाले औदारिकमिश्रं सूत्रेऽभिहितमपि नेह प्रकरणेऽधिकृतं कार्मग्रन्थिकैः, गुणविशेषप्रत्ययसमुत्थलब्धिविशेषकारणतया प्रारम्भकाले परित्यागकाले च वैक्रियस्याहारकस्य च प्राधान्यविवक्षया वैक्रियमिश्रस्याहारकमिश्रस्यैव चाभिधानात् तदभिप्रायस्य चेहानुसरणात् । तथा नैकेन्द्रियेषु 'सासाणो' इति भावप्रधानोऽयं निर्देशः सासादनभावः सूत्रे मतः, अन्यथा द्वीन्द्रियादीनामिवैकेन्द्रियाणामपि ज्ञानित्वमुच्येत न चोच्यते, किन्तु विशेषतः प्रतिषिध्यते । तथाहि—'एगिंदियाणं भंते ! किं नाणी अण्णाणी ?

**गोयमा ! नो नाणी नियमा अन्नाणी**" इति । स चेत्थं सासादनभावप्रतिषेधः सूत्रे मतोऽपि केनचित्कारणेन कार्मग्रन्थिकैर्नाभ्युपैयत, इतीहापि नाधिक्रियते तदभिप्रायस्यैवेह प्रायोऽनुसरणादिति । '**नेहाहिगयं सुयमयंपि**'इत्येतद्विभक्तिपरिणामेन प्रतिपादं संबन्धनीयं तथैव च संबन्धितमिति ॥७२॥

गुणस्थानकेष्वेव लेश्या अभिधित्सुराह—

लेसा तिन्नि पमत्तं तेऊपम्हा उ अप्पमत्तंता ।
सुक्का जाव सजोगी निरुद्धलेसो अजोगि त्ति ॥७३॥

(हारि०) व्याख्या—आद्यास्तिस्रो लेश्याः प्रमत्तान्ताः प्रमत्तात्परतो न भवन्तीति प्रमत्तं यावत्षडपीत्यर्थः । तथा तैजसीपद्मे त्वप्रमत्तान्तेऽप्रमत्तात्परतस्ते न भवतोऽप्रमत्ते अन्त्यास्तिस्रो लेश्या इत्यर्थः, । ततोऽप्रमत्तादूर्ध्वं '**शुक्ला**' शुक्ललेश्यैकैवेत्यर्थो यावत् सयोगिगुणस्थानम् । तथा '**निरुद्धलेश्यः**' अलेश्य इत्यर्थः, कोऽसौ ? इत्याह—'**अयोगी**' अयोगिकेवली । इतिशब्दो लेश्याद्वारसमाप्त्यर्थे । इति गाथार्थः ॥७३॥

इत्युक्ता लेश्या गुणस्थानकेषु ४ । साम्प्रतं बन्धहेतवः, ते च मूलभेदतश्चत्वार उत्तरभेदतः सप्तपञ्चाशदिति तानुभयथाऽभिधित्सुराह—

(मल०) आद्यास्तिस्रो लेश्याः '**प्रमत्तान्ताः**' प्रमत्तगुणस्थानकपर्यन्ता भवन्ति, प्रमत्तात्परतो न भवन्तीति यावत् । तेजःपद्मलेश्ये तु '**अप्रमत्तान्ते**' मिथ्यादृष्टिगुणस्थानकात्प्रभृति यावदप्रमत्तगुणस्थानकं तावद्भवत इत्यर्थः । '**सुक्का जाव सजोगी**' इति मिथ्यादृष्टिगुणस्थानकात्प्रभृति यावत्सयोगिकेवलिगुणस्थानकं तावत् '**शुक्ला**' शुक्ललेश्या भवति । '**निरुद्धलेसो अजोगी त्ति**' अयोगी अयोगीकेवली '**निरुद्धलेश्यः**' अपगतलेश्यो भवति । इतिर्वाक्यपरिसमाप्तौ । इह लेश्यानां प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि । ततो मन्दाध्यवसायस्थानापेक्षया शुक्ललेश्यादीनामपि मिथ्यादृष्ट्यादौ कृष्णलेश्यादीनामपि प्रमत्तगुणस्थानकेऽपि संभवो न विरुध्यत इति ॥७३॥

तदेवमुक्ता गुणस्थानकेषु लेश्याः । साम्प्रतं बन्धहेतवो वक्तुमवसरप्राप्ताः, ते च मूलभेदतश्चत्वार उत्तरभेदतश्च सप्तपञ्चाशत्, एतानुभयथाऽप्यभिधित्सुराह—

बंधस्स मिच्छअविरइकसायजोग त्ति हेयवो चउरो ।
पंच दुवालस पणुवीस पनरस कमेण भेया सिं ॥७४॥

(हारि०) व्याख्या—मिथ्यात्वाविरतिकषाययोगाः, '**इति**' अमुना प्रकारेण बन्धस्य मूल-

१ "अविरय" इत्यपि पाठः ।

नत्वात् । तथा 'न' नैवैकेन्द्रियेषु 'सासाणो' इति लिङ्गव्यत्ययात्सासादनमिति न चाधिकृतम् , किन्त्वेकेन्द्रियेषु सासादनमधिकृतं तत एव हेतोः । इति गाथार्थः ॥७२॥

इतो लेश्यास्तेष्वेवाभिधित्सुराह—

(मल०) **'सासादनभावे'** सासादनसम्यग्दृष्टित्वे मतिज्ञानं भवति, नाज्ञानमिति । **श्रुतसममपि'** सूत्रसम्मतमपि, तथाहि—**वेइंदियाणं भंते ! किं नाणी अन्नाणी ? गोयमा ! णाणीवि अण्णाणीवि । जे नाणी ते नियमा दुनाणी । तंजहा—आभिणिबोहियनाणी सुयणाणी । जे अण्णाणी ते वि नियमा दुअन्नाणी । तंजहा—मइअन्नाणी सुयअन्नाणी य ॥''** इत्यादि सूत्रे द्वीन्द्रियादीनां ज्ञानित्वमभिहितम् , तच्च सासादनसम्यक्त्वापेक्षयैव न शेषसम्यक्त्वापेक्षया, असंभवात् । उक्तं च प्रज्ञापनाटीकायाम्—**बेइंदियस्स दो णाणा कहं लब्भंति ? भण्णइ सासायणं पडुच्च तस्सापज्जत्तयस्स दो णाणा लब्भंति''** इति । ततः सासादनभावेऽपि ज्ञानं सूत्रे सम्मतमेव, तच्चेत्थं सम्मतमपि नेह प्रकरणेऽधिकृतं किंत्वज्ञानमेव, कार्मग्रन्थिकाभिप्रायस्यानुसरणात् । तदभिप्रायश्चायम्—सासादनस्य मिथ्यात्वाभिमुखतया तत्सम्यक्त्वस्य मलीमसत्वेन तन्निबन्धनस्य ज्ञानस्यापि मलीमसत्वादज्ञानरूपतेति । तथा सूत्रे वैक्रिये आहारके चारभ्यमाणे तेन प्रारभ्यमाणेन सहौदारिकस्य मिश्रीभवनात् , औदारिकमिश्रमुक्तम् । तथा चाह प्रज्ञापनाटीकाकारः—यदा पुनरौदारिकशरीरी वैक्रियलब्धिसंपन्नो मनुष्यः पञ्चेन्द्रियतिर्यग्योनिको वा पर्याप्तबादरवायुकायिको वा वैक्रियं करोति तदौदारिकशरीरयोग एव वर्तमानः प्रदेशान् विक्षिप्य वैक्रियशरीरयोग्यान् पुद्गलानादाय यावद्वैक्रियशरीरपर्याप्त्या पर्याप्तिं न गच्छति तावद्वैक्रियेण मिश्रता व्यपदेशश्चौदारिकेण तस्य प्रधानत्वात् । एवमाहारकेणापि सह मिश्रता द्रष्टव्या । आहारयति च तेनैवेति तेनैव व्यपदेश इति । परित्यागकाले च वैक्रियस्याहारकस्य च यथाक्रमं वैक्रियमिश्रमाहारकमिश्रं च । उक्तं च प्रज्ञापनाटीकायामेवाहारकमधिकृत्य—यदाहारकशरीरी भूत्वा कृतकार्यः पुनरप्यौदारिकं गृह्णाति तदाऽऽहारकस्य प्रधानत्वादौदारिकप्रवेशं प्रति व्यापारभावान्न परित्यज्यते, यावत्सर्वथैवाहारकं तदौदारिकेण सह मिश्रतेत्याहारकमिश्रता इत्याहारकमिश्रशरीरकायप्रयोग इति । तच्चेत्थम्—वैक्रियाहारकारम्भकाले औदारिकमिश्रं सूत्रेऽभिहितमपि नेह प्रकरणेऽधिकृतं कार्मग्रन्थिकैः, गुणविशेषप्रत्ययसमुत्थलब्धिविशेषकारणतया प्रारम्भकाले परित्यागकाले च वैक्रियस्याहारकस्य च प्राधान्यविवक्षया वैक्रियमिश्रस्याहारकमिश्रस्यैव चाभिधानात् तदभिप्रायस्य चेहानुसरणात् । तथा नैकेन्द्रियेषु **'सासाणो'** इति भावप्रधानोऽयं निर्देशः सासादनभावः सूत्रे मतः, अन्यथा द्वीन्द्रियादीनामिवैकेन्द्रियाणामपि ज्ञानित्वमुच्येत न चोच्यते, किन्तु विशेषतः प्रतिषिध्यते । तथाहि—**'एगिंदियाणं भंते ! किं नाणी अण्णाणी ?**

**गोयमा ! नो नाणी नियमा अन्नाणी**" इति । स चेत्थं सासादनभावप्रतिषेधः सूत्रे मतोऽपि केनचित्कारणेन कार्मग्रन्थिकैर्नाभ्युपैयत, इतीहापि नाधिक्रियते तदभिप्रायस्यैवेह प्रायोऽनुसरणादिति । '**नेहाहिगयं सुयमयंपि**'इत्येतद्विभक्तिपरिणामेन प्रतिपाद्यं संबन्धनीयं तथैव च संबन्धितमिति ॥७२॥

गुणस्थानकेष्वेव लेश्या अभिधित्सुराह—

लेसा तिन्नि पमत्तं तेऊपम्हा उ अप्पमत्तंता ।
सुक्का जाव सजोगी निरुद्धलेसो अजोगि त्ति ॥७३॥

(हारि०) व्याख्या—आद्यास्तिस्रो लेश्याः प्रमत्तान्ताः प्रमत्तात्परतो न भवन्तीति प्रमत्तं यावत्षडपीत्यर्थः । तथा तैजसीपद्मे त्वप्रमत्तान्तेऽप्रमत्तात्परतस्ते न भवतोऽप्रमत्ते अन्त्यास्तिस्रो लेश्या इत्यर्थः, । ततोऽप्रमत्तादूर्ध्वं 'शुक्ला' शुक्ललेश्यैकैवेत्यर्थो यावत् सयोगिगुणस्थानम् । तथा '**निरुद्धलेश्यः**' अलेश्य इत्यर्थः, कोऽसौ ? इत्याह—'**अयोगी**' अयोगिकेवली । इतिशब्दो लेश्याद्वारसमाप्त्यर्थे । इति गाथार्थः ॥७३॥

इत्युक्ता लेश्या गुणस्थानकेषु ४ । साम्प्रतं बन्धहेतवः, ते च मूलभेदतश्चत्वार उत्तरभेदतः सप्तपञ्चाशदिति तानुभयथाऽभिधित्सुराह—

(मल०) आद्यास्तिस्रो लेश्याः '**प्रमत्तान्ताः**' प्रमत्तगुणस्थानकपर्यन्ता भवन्ति, प्रमत्तात्परतो न भवन्तीति यावत् । तेजःपद्मलेश्ये तु '**अप्रमत्तान्ते**' मिथ्यादृष्टिगुणस्थानकात्प्रभृति यावदप्रमत्तगुणस्थानकं तावद्भवत इत्यर्थः । '**सुक्का जाव सजोगी**' इति मिथ्यादृष्टिगुणस्थानकात्प्रभृति यावत्सयोगिकेवलिगुणस्थानकं तावत् '**शुक्ला**' शुक्ललेश्या भवति । '**निरुद्धलेसो अजोगी त्ति**' अयोगी अयोगीकेवली '**निरुद्धलेश्यः**' अपगतलेश्यो भवति । इतिर्वाक्यपरिसमाप्तौ । इह लेश्यानां प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि । ततो मन्दाध्यवसायस्थानापेक्षया शुक्ललेश्यादीनामपि मिथ्यादृष्ट्यादौ कृष्णलेश्यादीनामपि प्रमत्तगुणस्थानकेऽपि संभवो न विरुध्यत इति ॥७३॥

तदेवमुक्ता गुणस्थानकेषु लेश्याः । साम्प्रतं बन्धहेतवो वक्तुमवसरप्राप्ताः, ते च मूलभेदतश्चत्वार उत्तरभेदतश्च सप्तपञ्चाशत् , एतानुभयथाऽप्यभिधित्सुराह—

बंधस्स मिच्छअविरइकसायजोग त्ति हेयवो चउरो ।
पंच दुवालस पणुवीस पनरस कमेण भेया सिं ॥७४॥

(हारि०) व्याख्या—मिथ्यात्वाविरतिकषाययोगाः, '**इति**' अमुना प्रकारेण बन्धस्य मूल-

१ "अविरय" इत्यपि पाठः ।

हेतवश्चत्वारः। एषां च मिथ्यात्वादीनां 'क्रमेण' परिपाट्या इति संबन्धः। पञ्च-द्वादश-पञ्चविंशति-पञ्चदशसंख्या भेदा भवन्ति। एते च मीलिताः सप्तपञ्चाशद्बन्धहेतूत्तरभेदाः। इति गाथार्थः ॥७४॥ एतानेव विवृण्वन्नाह—

(मल०) 'बन्धस्य' सामर्थ्याज्ज्ञानावरणीयादिकर्मबन्धस्य मूलहेतवश्चत्वारः। के ते ? इत्याह–मिथ्यात्वाविरतिकषाययोगाः। तत्र मिथ्यात्वं विपरीतावबोधस्वभावम्। अविरतिः सावद्ययोगेभ्यो निवृत्त्यभावः। कषाययोगाः प्राङ्निरूपितस्वरूपाः। नन्वन्यत्र प्रमादोऽपि बन्धहेतुरभिधीयते, तदुक्तम्–"**मिथ्यात्वाविरतिप्रमादकषाययोगा बन्धहेतवः**" इति। स कथमिह नोक्तः ?, उच्यते, कार्मग्रन्थिकैर्मद्यविषयरूपस्य तस्याविरतावेवान्तर्भावो विवक्षितः कषायश्च पृथगेवोक्तः। वैक्रियारम्भादिसंभवी तु प्रमादो योगग्रहणेनैव गृहीत इत्यदोषः। अमीषामेवोत्तरभेदानाह–'पंच' इत्यादि। मिथ्यात्वस्योत्तरभेदाः पञ्च, अविरतेर्द्वादश कषायाणां पञ्चविंशतिः, योगानां पञ्चदश ॥७४॥ एतानेव स्वरूपतः कथयन्नाह—

★आभिग्गहियं अणभिग्गहं च तह अभिनिवेसियं चेव।
संसइयमणाभोगं मिच्छत्तं पंचहा एवं ॥७५॥
बारसविहा अविरई मणइंदियअनियमो छकायवहो।
सोलस नव य कसाया पणुवीसं पन्नरस जोगा ॥७६॥

(हारि०) व्याख्या–आभिग्रहिकं दीक्षितानाम् १। अनभिग्रहं चेतरेषाम् २। तथाऽऽभिनिवेशिकं गोष्ठामाहिलादीनाम् ३। सांशयिकं जिनोक्ततत्त्वेषु संशयवताम् ४। अनाभोगमेकेन्द्रियादीनाम् ५। मिथ्यात्वं पञ्चधा 'एवं' इत्येवंप्रकारमिति ॥७५॥ अथ द्वितीयगाथा व्याख्यायते–द्वादशविधाऽविरतिर्भवति। कथम् ? इत्याह-मनश्चेन्द्रियाणि च मनइन्द्रियाणि तेषामनियमोऽनियन्त्रणमिति समासः। तथा षट् च ते कायाश्च पृथिव्यादयः तेषां च वधो=हिंसेति समासः। तथा षोडश नव च कषायाः प्रसिद्धस्वरूपाः कियन्तो मीलिता भवन्ति ? इत्याह-पञ्चविंशतिः। तथा पञ्चदश योगाः प्राक्प्रतिपादितस्वरूपाः। इति गाथाद्वयार्थः ॥७६॥

अथ बन्धहेतूत्तरभेदान् गुणस्थानकेषु यथासंख्येन योजयन्नाह—

(मल०) गाथाद्वयम्। मिथ्यात्वमुक्तस्वरूपम्। 'एवम्' अमुना प्रकारेण 'पञ्चधा' पञ्चप्रकारम्। केन च प्रकारेण ? इत्याह–आभिग्रहिकं १ आनाभिग्रहिकं २ च तथाऽऽभिनिवेशिकं ३ चैव सांश-

★उक्तगाथा द्वयमध्येऽन्यगाथाद्वयं हस्तलिखितमूलगाथाप्रतावधिकतयेत्थं दृश्यते तद्यथा—
आभिग्गहियं किल दिक्खियाणमणभिग्गहं तु इयराणं। गुट्ठामाहिलमाईण जं अभिनिवेसियं तं तु ॥
संसइयं मिच्छत्तं जा संका जिणवरुत्ततत्तेसु। विगलिंदियाण जं पुण तमणाभोगं विणिद्दिट्ठं ॥

यिकं ४ अनाभोगिकं ५ मिति । तत्राभिग्रहेण इदमेव दर्शनं शोभनं नान्यद् इत्येवंरूपेण कुदर्शनविषयेण निर्वृत्तमाभिग्रहिकम् यद्वशाद्बोटिकादिकुदर्शनानामन्यतमं दर्शनं गृह्णाति १ । एतद्विपरीतमनाभिग्रहिकम् यद्वशात्सर्वाण्यपि दर्शनानि शोभनानीत्येवमीषन्माध्यस्थ्यमुपजायते २ । आभिनिवेशिकं यदभिनिवेशेन निर्वृत्तम्, यथा गोष्ठामाहिलादीनाम् ३ । सांशयिकम्, यद्वशाद्भगवदर्हदुपदिष्टेष्वपि जीवादितत्त्वेषु संशय उपजायते, यथा न जाने किमिदं भगवदुक्तं धर्मास्तिकायादि सत्यमुतान्यथेति ४ । अनाभोगिकं यदनाभोगेन निर्वृत्तम्, तच्चैकेन्द्रियादीनामिति ५ । तथा द्वादशविधाऽविरतिः । कथम्? इत्याह—'**मणइंदियअनियमो छकायवहो**' इति पञ्चानामिन्द्रियाणां षष्ठस्य च मनसः स्वस्वविषये प्रवर्तमानस्य यदनियमनं अनियन्त्रणम् । तथा षण्णां पृथिव्यप्तेजोवायुवनस्पतित्रसरूपाणां कायानां वधो=हिंसा इति । तथा कषायाः प्रागुक्तशब्दार्थाः पञ्चविंशतिः । कथम्? इत्याह—षोडश नव चेति । तत्र क्रोधमानमायालोभाः प्रत्येकमनन्तानुबन्धिनोऽप्रत्याख्यानावरणाः प्रत्याख्यानावरणाः संज्वलनाश्च ततस्ते षोडश भवन्ति । तत्र पारंपर्येण भवमनन्तमनुबध्नन्तीत्येवं शीला अनन्तानुबन्धिनः, उदयस्थानाममीषां सम्यक्त्वविघातकृत्त्वात् । तथाऽल्पमपि प्रत्याख्यानमावृण्वन्तीत्यप्रत्याख्यानावरणाः, तदुदये लेशतोऽपि प्रत्याख्यानानुत्पत्तेः । प्रत्याख्यानं सर्वविरतिरूपमावृण्वन्तीति प्रत्याख्यानावरणाः । तथा परीषहोपसर्गादिसंपाते चारित्रिणमपि सम् ईषज्ज्वलयन्तीति संज्वलनाः । पश्चानुपूर्व्या च स्वरूपमेतेषामेवम्—"**जलरेणुपुढविपव्वयराईसरिसो चउव्विहो कोहो । तिणिसलयाकट्ठट्ठियसेलत्थंभोवमो माणो ॥१॥ मायावलेहिगोमुत्तिमिंढसिंगघणवंसमूलसमा । लोहो हलिद्दखंजणकद्दमकिमिरागसारिच्छो ॥२॥ पक्खचउमासवच्छरजावज्जीवाणुगामिणो कमसो । देवनरतिरियनारयगइसाहणहेयवो भणिया ॥३॥**" इति तथा वेदत्रिकहास्यादिषट्करूपा नव नोकषायाः । ते च कषायसहचारित्वादुपचारेणेह कषाया इत्युक्ताः । तत्र वेदत्रिकं प्रागनिर्दिष्टस्वरूपम् । हास्यादिषट्कं हास्यरत्यरतिभयशोकजुगुप्सालक्षणम् । तत्र सनिमित्तमनिमित्तं वा यद्धसनं तद्धास्यम् । बाह्याभ्यन्तरेषु वस्तुषु प्रीती रतिः । तेष्वेवाप्रीतिररतिः । भयं त्रासः । परिदेवनादिलिङ्गः शोकः । सचेतनाचेतनेषु वस्तुषु व्यलीककरणं जुगुप्सा इति । योगाः पञ्चदश, ते च सर्वेऽपि प्राक् प्रतिपादितस्वरूपाः ॥७५॥७६॥

इदानीममूनेव बन्धहेतून् गुणस्थानकेषु चिन्तयन्नाह—

[1]पण[2]पन्न[3]पन्न[4]तियछहिय[5] [6]चत्तउण[7]चत्त[8]छचउ दुगवीसा ।
[9]सोलस[10]दस[11]नव[12]नव[13]सत्तहेउणो न उ अजोगिम्मि ॥७७॥

८ "चत्तिगुणचत्त०" इत्यपि पाठः ।

(हारि०) व्याख्या—अस्याः केनाप्यभिप्रायेण सूत्रकारेण पदविवरणं न कृतम् तच्च यथाऽवबोधमस्माभिः शास्त्रानुसारेण लिख्यते—तत्र सामान्येन पूर्वोक्ताः सप्तपञ्चाशदुत्तरभेदा बन्धहेतवो भवन्ति ५७। ततो। मिथ्यादृष्टेराहारकतन्मिश्रवर्जनात्पञ्चपञ्चाशदेव मन्तव्याः, तद्वर्जनं तु संयमवतस्तत्सद्भावादिति ५५ । तथा पूर्वोक्तायाः पञ्चपञ्चाशतो मिथ्यात्वपञ्चकेऽपनीते सासादनस्य पञ्चाशद्द्रष्टव्याः ५०। सम्यग्मिथ्यादृष्टेस्तु परलोकगमनाभावात्कार्मणं औदारिकमिश्रं वैक्रियमिश्रं च न संभवति, अनन्तानुबन्ध्युदयस्य चास्य निषिद्धत्वात् । अनन्तानुबन्धिचतुष्टयं च नास्ति अत एतेषु सप्तसु पूर्वोक्तायाः पञ्चाशतोऽपनीतेषु शेषास्त्रिचत्वारिंशदुत्तरभेदा भवन्ति ४३। तथाऽविरतस्य परलोकगमनसंभवात् पूर्वापनीतकार्मणौदारिकमिश्रवैक्रियमिश्रत्रये पूर्वोक्तत्रिचत्वारिंशति पुनः-प्रक्षिप्ते षट्चत्वारिंशद्भेदा भवन्ति ४६ । तथा देशविरतस्याप्रत्याख्यानावरणोदयस्य निषिद्धत्वादप्रत्याख्यानावरणचतुष्टयं तथा विग्रहगतावपर्याप्तावस्थायां च देशविरतेरभावात् कार्मणौदारिकमिश्रद्वयं त्रससंयमानिवृत्तत्वात् त्रसासंयमश्च न संभवति, अत एतानि पूर्वोक्तायाः षट्चत्वारिंशतोऽपनीयन्ते, ततः शेषा एकोनचत्वारिंश [1]द्बन्धहेतवो भवन्ति। अत्राह, ननु देशविरतस्त्रसासंयमात्संकल्पजा[2]देव निवृत्तो न त्वारम्भजादेः, तत्कथं सर्वोऽप्येषोऽपनीयते ? सत्यम् , किन्तु, गृहिणामशक्यपरिहारत्वेन सन्नप्यारम्भजत्रसासंयमो न विवक्षित इत्यदोषः । एतच्च शतकबृहच्चूर्णिमनुश्रित्य लिखितमिति नात्र स्वमनीषिका भावनीयेति । तथा प्रमत्तस्य पूर्वापनीतत्रसासंयमव्यतिरिक्तानामेकादशाविरतीनामभावात् प्रत्याख्यानावरणानां चाभावादेव आहारक[3]द्विकसद्भावात् पूर्वोक्तायामेकोनचत्वारिंशति पञ्चदशकेऽपनीते द्विके च क्षिप्ते षड्विंशत्युत्तरभेदा भवन्ति २६ । तथाऽप्रमत्तस्य त्वनन्तरोक्तायाः षड्विंशतेर्लब्ध्यनुपजीवनेनाहारवैक्रियानारम्भकत्वाद्वैक्रियमिश्राहारकमिश्रद्वयेऽपनीते शेषाश्चतुर्विंशत्युत्तरभेदा भवन्ति २४ । तथाऽपूर्वकरणे त्वतिविशुद्धत्वाद्वैक्रियाहारकमपि न संभवत्येव, ततो वैक्रियाहारकद्विकेऽनन्तरोक्तायाश्चतुर्विंशतेर्मध्यादपनीते शेषा द्वाविंशतिर्भवति २२ । तथाऽनिवृत्तिबादरस्य तु हास्यादिषट्कस्यापूर्वकरण एव व्यवच्छिन्नत्वात् शेषाः संज्वलनाश्चत्वारः कषायाः, वेदत्रयम् , मनो ४ वचनौ ४ दारिकरूपा नव योगाः, एते षोडश भवन्ति १६ । यावदद्यापि वेदत्रयं संज्वलनत्रयं च नापगच्छति, तदपगमने तु यथासंभवो वाच्यः । तथा सूक्ष्मसंपरायस्य वेदत्रयक्रोधादित्रिकयोरनिवृत्तिबादर एव व्यवच्छिन्नत्वाच्छेषा नव योगाः संज्वलनलोभश्चेति दश भवन्ति १० । तथा त्रयाणामुपशान्तादीनां योगप्रत्यय एव बन्धः, ततश्चोपशान्तक्षीणमोहयोः प्रत्येकं नवधा भवति, अष्टौ मनोवाचः औदारिककाययोगश्चेति ९ । तथा सयोगिकेवलिनस्तु योगः सप्तधा

---

१–'दुत्तरभेदा लभ्यन्ते' इत्यपि ॥ २"०देरेवासौ" इत्यपि । ३ ''मिश्रवैक्रियमिश्रसद्भावात्'' इत्यपि ।

भवति, पूर्वोक्तनवकमध्यान्मृषामिश्ररूपे मनोद्वये एवं वाग्द्वये चापनीते औदारिकमिश्रकार्मणे च क्षिप्ते सति। तथाऽयोगी तु प्रत्ययाभावादबन्धकः। अयमर्थो गाथाभिरपि कथ्यते शिष्यानुग्रहार्थम्—**आहारगदुगहीणा, पणवन्ना होइ मिच्छदिट्ठिम्मि ५५। सा मिच्छपणगहीणा, पन्नासा तह य सासाणे ५० ॥१॥ सा चउणंतकसाया ४, ओरालविउव्विमीसकम्मइगं। इय सत्तगेण रहिया, तेयाला मीसगुणठाणे ४३ ॥२॥ ओरालियवेउव्वियमीसदुगं तह य कम्मणसरीरं। एय तिगेणं सहिया, अविरयसंमंमि छायाला ४६ ॥३॥ ओरालमीसकम्मणचउबीयकसायतसअविरई य। इय सत्तगेण रहिया, इगुयाला देसविरइयंमि ३९ ॥४॥ तइयकसायचउक्कं, एक्कारस अविरई य ¹मोत्तूण। आहारगदुगसहिया, पमत्तसाहुस्स छव्वीसा २६ ॥५॥ विउवाहरगमीसगरहिया चउवीस होइ अपमत्ते २४। आहारगवेउव्वियहीणदुवीसा अपुव्वंमि २२ ॥६॥ हासाइछक्करहिया, सोलस अनियट्टिबायरे होंति १६। संजलणवेयनियतियरहिया इह होंति दस सुहमे १०॥७॥ उवसंते ९ तह खीणे ९, नव नव हेऊ य लोहपरिहीणा। दोमणदोवइरहिया, कम्मणओरालमीसजुया ॥८॥ एवं सत्त सजोगे ७, एए सव्वे न हुंतऽजोगंमि। चउदस गुणठाणेसु, पणचन्निवाइ वक्खायं ॥९॥"** इति गाथार्थः ॥७७॥

इत्युक्ता बन्धहेतवः। अधुना येषां कर्मणामेते बन्धहेतवस्तेभ्यस्तेषां बन्धं दर्शयन् संख्याविशिष्टानि तान्याह—

(मल०) इह मिथ्यात्वाद्यवान्तरभेदानामनन्तरोक्तानां पञ्च द्वादशादीनामेकत्र मीलने सप्तपञ्चाशद्भवति। तत्र मिथ्यादृष्टिगुणस्थानके आहारकतन्मिश्रवर्जाः शेषाः पञ्चपञ्चाशद्बन्धहेतवो भवन्ति। आहारकद्विकवर्जनं तु **'संयमवतां तदुदयो नान्यस्य'** इतिवचनात्। तथा सासादनसम्यग्दृष्टौ पञ्चाशद्बन्धहेतवः, मिथ्यात्वपञ्चकस्येहासंभवेनोपनयनात्। तथा सम्यग्मिथ्यादृष्टौ त्रिचत्वारिंशद्बन्धहेतवः, यतोऽत्र **"न सम्ममिच्छो कुणइ कालं"** इतिवचनात्, न परलोकगमनं तदभावाच्च न कार्मणौदारिकमिश्रवैक्रियमिश्रसंभवः, अनन्तानुबन्ध्युदयस्य चात्र निषिद्धत्वादनन्तानुबन्धिचतुष्टयमपि न संभवति, अत एतेषु सप्तसु पूर्वोक्तायाः पञ्चाशतोऽपनीतेषु शेषास्त्रिचत्वारिंशदेव भवति। तथाऽविरतसम्यग्दृष्टिगुणस्थानके षट्चत्वारिंशद्बन्धहेतवः यतोऽत्र परलोकगमनसंभवात् पूर्वापनीतं कार्मणौदारिकमिश्रवैक्रियमिश्रलक्षणं त्रिकं पूर्वोक्तायां त्रिचत्वारिंशति पुनः प्रक्षिप्यत इति। तथा देशविरतिगुणस्थानके एकोनचत्वारिंशद्बन्धहेतवः यस्मान्नात्राप्रत्याख्यानावरणकषायोदयः, न च त्रसासंयमः, नाप्येतद्गुणस्थानकमपान्तरालगतावपर्याप्तावस्थायां वा लभ्यते, ततोऽप्रत्याख्यानावरणचतुष्टयकार्मणौदारिकमिश्रत्रसासंयमरूपेषु सप्तसु

---

१ "मोत्तु तओ" इत्यपि।

(हारि०) व्याख्या-अस्याः केनाप्यभिप्रायेण सूत्रकारेण पदविवरणं न कृतम् तच्च यथावबोधमस्माभिः शास्त्रानुसारेण लिख्यते-तत्र सामान्येन पूर्वोक्ताः सप्तपञ्चाशदुत्तरभेदा बन्धहेतवो भवन्ति ५७। ततो । मिथ्यादृष्टेराहारकतन्मिश्रवर्जनात्पञ्चपञ्चाशदेव मन्तव्याः, तद्वर्जनं तु संयमव्रतस्तत्सद्भावादिति ५५ ।तथा पूर्वोक्तायाः पञ्चपञ्चाशतो मिथ्यात्वपञ्चकेऽपनीते सासादनस्य पञ्चाशद्द्रष्टव्याः ५० ।सम्यग्मिथ्यादृष्टेस्तु परलोकगमनाभावात्कार्मणमौदारिकमिश्रं वैक्रियमिश्रं च न संभवति, अनन्तानुबन्ध्युदयस्य चास्य निषिद्धत्वात् ; अनन्तानुबन्धिचतुष्टयं च नास्ति अत एतेषु सप्तसु पूर्वोक्तायाः पञ्चाशतोऽपनीतेषु शेषास्त्रिचत्वारिंशदुत्तरभेदा भवन्ति ४३ । तथाऽविरतस्य परलोकगमनसंभवात् पूर्वापनीतकार्मणौदारिकमिश्रवैक्रियमिश्रत्रये पूर्वोक्तत्रिचत्वारिंशति पुनः-प्रक्षिप्ते षट्चत्वारिंशद्भेदा भवन्ति ४६ । तथा देशविरतस्याप्रत्याख्यानावरणोदयस्य निषिद्धत्वादप्रत्याख्यानावरणचतुष्टयं तथा विग्रहगतावपर्याप्तावस्थायां च देशविरतेरभावात् कार्मणौदारिकमिश्रद्वयं त्रससंयमानिवृत्तत्वात् त्रसासंयमश्च न संभवति, अत एतानि पूर्वोक्तायाः षट्चत्वारिंशतोऽपनीयन्ते, ततः शेषा एकोनचत्वारिंश [1]द्बन्धहेतवो भवन्ति । अत्राह, ननु देशविरतस्त्रसासंयमात्संकल्पजा [2]देव निवृत्तो न त्वारम्भजादेः, तत्कथं सर्वोऽप्येषोऽपनीयते ? सत्यम् , किन्तु, गृहिणामशक्यपरिहारत्वेन सन्नप्यारम्भजत्रसासंयमो न विवक्षित इत्यदोषः । एतच्च शतकबृहच्चूर्णिमनुश्रित्य लिखितमिति नात्र स्वमनीषिका भावनीयेति । तथा प्रमत्तस्य पूर्वापनीतत्रसासंयमव्यतिरिक्तानामेकादशाविरतीनामभावात् प्रत्याख्यानावरणानां चाभावादेव आहारक [3]द्विकसद्भावात् पूर्वोक्तायामेकोनचत्वारिंशति पञ्चदशकेऽपनीते द्विके च क्षिप्ते षड्विंशत्युत्तरभेदा भवन्ति २६ । तथाऽप्रमत्तस्य त्वनन्तरोक्तायाः षड्विंशतेर्लब्ध्यनुपजीवनेनाहारवैक्रियानारम्भकत्वाद्वैक्रियमिश्राहारकमिश्रद्वयेऽपनीते शेषाश्चतुर्विंशत्युत्तरभेदा भवन्ति २४ । तथाऽपूर्वकरणे त्वतिविशुद्धत्वाद्वैक्रियाहारकमपि न संभवत्येव, ततो वैक्रियाहारकद्विकेऽनन्तरोक्तायाश्चतुर्विंशतेर्मध्यादपनीते शेषा द्वाविंशतिर्भवति २२ । तथाऽनिवृत्तिबादरस्य तु हास्यादिषट्कस्यापूर्वकरण एव व्यवच्छिन्नत्वात् शेषाः संज्वलनाश्चत्वारः कषायाः, वेदत्रयम् , मनो ४ वचनौ ४ दारिकरूपा नव योगाः, एते षोडश भवन्ति १६ । यावदद्यापि वेदत्रयं संज्वलनत्रयं च नापगच्छति, तदपगमने तु यथासंभवो वाच्यः । तथा सूक्ष्मसंपरायस्य वेदत्रयक्रोधादित्रिकयोरनिवृत्तिबादर एव व्यवच्छिन्नत्वाच्छेषा नव योगाः संज्वलनलोभश्चेति दश भवन्ति १० ।

तथा त्रयाणामुपशान्तादीनां योगप्रत्यय एव बन्धः, ततश्चोपशान्तक्षीणमोहयोः प्रत्येकं नवधा भवति, अष्टौ मनोवाचः औदारिककाययोगश्चेति ९ । तथा सयोगिकेवलिनस्तु योगः सप्तधा

---

१-'द्युत्तरभेदा लभ्यन्ते' इत्यपि ॥ २"०देरेवासौ" इत्यपि । ३ ''मिश्रवैक्रियमिश्रसद्भावात्'' इत्यपि ।

भवति, पूर्वोक्तनवकमध्यान्मृषामिश्ररूपे मनोद्वये एवं वाग्द्वये चापनीते औदारिकमिश्रकार्मणे च क्षिप्ते सति। तथाऽयोगी तु प्रत्ययाभावादबन्धकः। अयमर्थो गाथाभिरपि कथ्यते शिष्यानुग्रहार्थम्—आहारगदुगहीणा, पणवन्ना होइ मिच्छदिट्ठिम्मि ५५। सा मिच्छपणगहीणा, पन्नासा तह य सासाणे ५० ॥१॥ सा चउणंतकसाया ४, ओरालविउव्विमीसकम्मइगं। इय सत्तगेण रहिया, तेयाला मीसगुणठाणे ४३ ॥२॥ ओरालियवेउव्वियमीसदुगं तह य कम्मणसरीरं। एय तिगेणं सहिया, अविरयसंमंमि छायाला ४६ ॥३॥ ओरालमीसकम्मणचउबीयकसायतसअविरई य। इय सत्तगेण रहिया, इगुयाला देसविरइयंमि ३९ ॥४॥ तइयकसायचउक्कं, एक्कारस अविरई य [1]मोत्तूण। आहारगदुगसहिया, पमत्तसाहुस्स छव्वीसा २६ ॥५॥ विउवाहारगमीसगरहिया चउवीस होइ अपमत्ते २४। आहारगवेउव्वियहीणदुवीसा अपुव्वंमि २२ ॥६॥ हासाइछक्करहिया, सोलस अनियट्टिबायरे होंति १६। संजलणवेयनियतियरहिया इह होंति दस सुहमे १०॥७॥ उवसंते ९ तह खीणे ९, नव नव हेऊ य लोहपरिहीणा। दोमणदोवइरहिया, कम्मणओरालमीसजुया ॥८॥ एवं सत्त सजोगे ७, एए सव्वे न हुंतऽजोगंमि। चउदस गुणठाणेसुं, पणवन्नाइ वक्खायं ॥९॥" इति गाथार्थः ॥७७॥

इत्युक्ता बन्धहेतवः। अधुना येषां कर्मणामेते बन्धहेतवस्तेभ्यस्तेषां बन्धं दर्शयन् संख्याविशिष्टानि तान्याह—

(मल०) इह मिथ्यात्वाद्यवान्तरभेदानामनन्तरोक्तानां पञ्च द्वादशादीनामेकत्र मीलने सप्तपञ्चाशद्भवति। तत्र मिथ्यादृष्टिगुणस्थानके आहारकतन्मिश्रवर्जाः शेषाः पञ्चपञ्चाशद्बन्धहेतवो भवन्ति। आहारकद्विकवर्जनं तु 'संयमवतां तदुदयो नान्यस्य' इतिवचनात्। तथा सासादनसम्यग्दृष्टौ पञ्चाशद्बन्धहेतवः, मिथ्यात्वपञ्चकस्येहासंभवेनोपनयनात्। तथा सम्यग्मिथ्यादृष्टौ त्रिचत्वारिंशद्बन्धहेतवः, यतोऽत्र "न सम्ममिच्छो कुणइ कालं" इतिवचनात्, न परलोकगमनं तदभावाच्च न कार्मणौदारिकमिश्रवैक्रियमिश्रसंभवः, अनन्तानुबन्ध्युदयस्य चात्र निषिद्धत्वादनन्तानुबन्धिचतुष्टयमपि न संभवति, अत एतेषु सप्तसु पूर्वोक्तायाः पञ्चाशतोऽपनीतेषु शेषास्त्रिचत्वारिंशदेव भवति। तथाऽविरतसम्यग्दृष्टिगुणस्थानके षट्चत्वारिंशद्बन्धहेतवः यतोऽत्र परलोकगमनसंभवात् पूर्वापनीतं कार्मणौदारिकमिश्रवैक्रियमिश्रलक्षणं त्रिकं पूर्वोक्तायां त्रिचत्वारिंशति पुनः प्रक्षिप्यत इति। तथा देशविरतिगुणस्थानके एकोनचत्वारिंशद्बन्धहेतवः यस्मान्नात्राप्रत्याख्यानावरणकषायोदयः, न च त्रसासंयमः, नाप्येतद्गुणस्थानकमपान्तरालगतावपर्याप्तावस्थायां वा लभ्यते, ततोऽप्रत्याख्यानावरणचतुष्टयकार्मणौदारिकमिश्रत्रसासंयमरूपेषु सप्तसु

[1] "मोत्तु तओ" इत्यपि।

(हारि०) व्याख्या-अस्याः केनाप्यभिप्रायेण सूत्रकारेण पदविवरणं न कृतम् तच्च यथावबोधमस्माभिः शास्त्रानुसारेण लिख्यते-तत्र सामान्येन पूर्वोक्ताः सप्तपञ्चाशदुत्तरभेदा बन्धहेतवो भवन्ति ५७। ततो । मिथ्यादृष्टेराहारकतन्मिश्रवर्जनात्पञ्चपञ्चाशदेव मन्तव्याः, तद्वर्जनं तु संयमवतस्तत्सद्भावादिति ५५ । तथा पूर्वोक्तायाः पञ्चपञ्चाशतो मिथ्यात्वपञ्चकेऽपनीते सासादनस्य पञ्चाशदुद्रष्टव्याः ५० । सम्यगमिथ्यादृष्टेस्तु परलोकगमनाभावात्कार्मणं औदारिकमिश्रं वैक्रियमिश्रं च न संभवति, अनन्तानुबन्ध्युदयस्य चास्य निषिद्धत्वात् ; अनन्तानुबन्धिचतुष्टयं च नास्ति अत एतेषु सप्तसु पूर्वोक्तायाः पञ्चाशतोऽपनीतेषु शेषास्त्रिचत्वारिंशदुत्तरभेदा भवन्ति ४३ । तथाऽविरतस्य परलोकगमनसंभवात् पूर्वापनीतकार्मणौदारिकमिश्रवैक्रियमिश्रत्रये पूर्वोक्तत्रिचत्वारिंशति पुनः-प्रक्षिप्ते षट्चत्वारिंशद्भेदा भवन्ति ४६ । तथा देशविरतस्याप्रत्याख्यानावरणोदयस्य निषिद्धत्वादप्रत्याख्यानावरणचतुष्टयं तथा विग्रहगतावपर्याप्तावस्थायां च देशविरतेरभावात् कार्मणौदारिकमिश्रद्वयं त्रससंयमानिवृत्तत्वात् त्रसासंयमश्च न संभवति, अत एतानि पूर्वोक्तायाः षट्चत्वारिंशतोऽपनीयन्ते, ततः शेषा एकोनचत्वारिंश [1]द्बन्धहेतवो भवन्ति । अत्राह, ननु देशविरतस्त्रसासंयमात्संकल्पजा[2]देव निवृत्तो न त्वारम्भजादेः, तत्कथं सर्वोऽप्येषोऽपनीयते ? सत्यम् , किन्तु, गृहिणामशक्यपरिहारत्वेन सन्नप्यारम्भजत्रसासंयमो न विवक्षित इत्यदोषः । एतच्च शतकबृहच्चूर्णिमनुश्रित्य लिखितमिति नात्र स्वमनीषिका भावनीयेति । तथा प्रमत्तस्य पूर्वापनीतत्रसासंयमव्यतिरिक्तानामेकादशाविरतीनामभावात् प्रत्याख्यानावरणानां चाभावादेव आहारक[3]द्विकसद्भावात् पूर्वोक्तायामेकोनचत्वारिंशति पञ्चदशकेऽपनीते द्विके च क्षिप्ते षड्विंशत्युत्तरभेदा भवन्ति २६ । तथाऽप्रमत्तस्य त्वनन्तरोक्तायाः षड्विंशतेर्लब्ध्यनुपजीवनेनाहारवैक्रियानारम्भकत्वाद्वैक्रियमिश्राहारकमिश्रद्वयेऽपनीते शेषाश्चतुर्विंशत्युत्तरभेदा भवन्ति २४ । तथाऽपूर्वकरणे त्वतिविशुद्धत्वाद्वैक्रियाहारकमपि न संभवत्येव, ततो वैक्रियाहारकद्विकेऽनन्तरोक्तायाश्चतुर्विंशतेर्मध्यादपनीते शेषा द्वाविंशतिर्भवति २२ । तथाऽनिवृत्तिबादरस्य तु हास्यादिषट्कस्यापूर्वकरण एव व्यवच्छिन्नत्वात् शेषाः संज्वलनाश्चत्वारः कषायाः, वेदत्रयम् , मनो ४ वचनौ ४ दारिकरूपा नव योगाः, एते षोडश भवन्ति १६ । यावदद्यापि वेदत्रयं संज्वलनत्रयं च नापगच्छति, तदपगमने तु यथासंभवो वाच्यः । तथा सूक्ष्मसंपरायस्य वेदत्रयक्रोधादित्रिकयोरनिवृत्तिबादर एव व्यवच्छिन्नत्वाच्छेषा नव योगाः संज्वलनलोभश्चेति दश भवन्ति १० ।

तथा त्रयाणामुपशान्तादीनां योगप्रत्यय एव बन्धः, ततश्चोपशान्तक्षीणमोहयोः प्रत्येकं नवधा भवति, अष्टौ मनोवाचः औदारिककाययोगश्चेति ९ । तथा सयोगिकेवलिनस्तु योगः सप्तधा

---

१-' दुत्तरभेदा लभ्यन्ते" इत्यपि ॥ २"०देरेवासौ" इत्यपि । ३ "मिश्रवैक्रियमिश्रसद्भावात्" इत्यपि ।

व्यापाराहृतकर्मवर्गणान्तःपाती विशिष्टपुद्गलसमूहः, ज्ञानं च दर्शनं च तयोरावरणे, तथा वेद्यते सातसातरूपेणेति वेदनीयम्, यद्यपि च सर्वं कर्म वेद्यते, तथाऽपीह पङ्कजादिशब्दवद्वेदनीयशब्दस्य रूढिविषयत्वात्सातासातरूपमेव कर्म वेदनीयं न शेषम्, ज्ञानदर्शनावरणे च वेदनीयं च तानि। मोहयतीति मोहनीयं, मिथ्यादर्शनादि। चः समुच्चये। आयात्यागच्छति प्रतिबन्धकर्ता स्वकृतकर्मावाप्तनरकादिकुगतेर्निष्क्रमितुमनसो जन्तोरित्यायुः। नामयति गत्यादिविविधभावानुभवनं प्रति जीवं प्रवणयतीतिनाम, गतिजात्यादि। गूयते शब्दयते उच्चावच्चैः शब्दैरात्मा यस्मात्तद्गोत्रम्। अन्तरा दातृप्रतिग्राहकयोरन्तर्विघ्नहेतुतयाऽयते गच्छतीत्यन्तरायं दानान्तरायादि ॥७८॥

तदेवं बन्धहेतुभ्यो यानि कर्माणि बध्यन्ते तान्युपदर्श्य, साम्प्रतमेतेष्वेव बन्धादिस्थानसंख्यामाह—

[1]सत्त [2]ट्ठछेग [3]बंधा, संतुदया [1]अट्ठ [2]सत्तचत्तारि।
[1]सत्त [2]ट्ठ [3]छपं [4]च [5]दुगं, उदीरणाठाणसंखेयं ॥७९॥

(हरि०) व्याख्या—सप्ताष्टषडेकविधबन्धभेदाच्चत्वारि बन्धस्थानानि ४। अष्टसप्तचतुर्विधसत्ताभेदात् त्रीणि सत्तास्थानानि ३। एवमुदयस्थानान्यपि त्रीणि ३ सप्ताष्टषट्पञ्चद्विविधोदीरणाभेदात्पञ्चसंख्योदीरणास्थानानि ५। इति गाथार्थः ॥७९॥

अथैतानि गुणस्थानकेषु योजयति—

(मल०) चत्वारि बन्धस्थानानि। तद्यथा—सप्ताष्टौ षडेकमिति। तत्र यदाऽऽयुर्न बध्यते तदा सप्त, शेषकालं त्वष्टौ। आयुर्मोहनीयबन्धव्यवच्छेदे षट्। ज्ञानदर्शनावरणान्तरायनामगोत्रबन्धस्य व्यवच्छेदे चैकमिति। त्रीणि सत्तास्थानानि। तद्यथा—अष्टौ सप्त चत्वारि। तत्राष्टौ प्रतीतानि। मोहनीयसत्ताक्षये सप्त। ज्ञानादर्शनावरणान्तरायसत्ताक्षयेऽपि चत्वारि। उदयस्थानान्यपि त्रीणि। तद्यथा—अष्टौ सप्त चत्वारि। तत्राष्टानामुदयः सर्वसंसारिणामुपशान्तमोहादौ। मोहनीयोदयव्यवच्छेदे सप्तानाम्। घातिकर्मक्षये तु चतुर्णामिति। उदीरणास्थानानि पञ्च। तद्यथा—सप्ताष्टौ षट् पञ्च द्वे इति। तत्रायुष उदीरणायामपगतायां सप्तानाम्। आयुरप्युदीरयतामष्टानाम्। वेदनीयायुषोरुदीरणायामपगतायां षण्णाम्। वेदनीयायुर्मोहनीयोदीरणायामपगतायां पञ्चानाम्। नामगोत्रे एव केवले उदीरयतो द्वयोरुदीरणेति। इयं बन्धादीनां स्थानसंख्या ॥७९॥

साम्प्रतं बन्धस्थानानि गुणस्थानकेषु योजयन्नाह—

अपमत्तंता सत्तट्ठ मीसअप्पुव्वबायरा सत्त।
बंधंति छ सुहुमो एगमुवरिमा बंधगोऽजोगी ॥८०॥

पूर्वोक्तायाः षट्चत्वारिंशतोऽपनीतेषु शेषा एकोनचत्वारिंशद्बन्धहेतवो भवन्ति । ननु देशविरतस्त्रसासंयमात्संकल्पजादेव निवृत्तो न त्वारम्भजात्, तत्कथमेषोऽत्रापनीयते ? इति, नैष दोषः, आरम्भेऽपि तस्य यतनया प्रवर्तमानत्वेन तन्निमित्तस्य त्रसासंयमस्य सतोपीहाविवक्षणात् । तथा प्रमत्तगुणस्थानके षड्विंशतिर्बन्धहेतवः, यत इहैकादशधाऽविरतिः प्रत्याख्यानावरणचतुष्टयं च न संभवति, आहारकद्विकं च संभवति, ततः पूर्वोक्ताया एकोनचत्वारिंशतः पञ्चदशकेऽपनीते द्विके च तत्र प्रक्षिप्ते षड्विंशतिरेव भवति । तथाऽप्रमत्तस्य लब्ध्यनुपजीवनेनाहारकवैक्रियानारम्भादाहारकमिश्रवैक्रियमिश्रलक्षणे द्विके षड्विंशतेरप्यपनीते शेषाश्चतुर्विंशतिर्बन्धहेतवोऽप्रमत्तगुणस्थानके भवन्ति । अपूर्वकरणगुणस्थानके तु वैक्रियाहारके अपि न संभवतः, इत्यनन्तरोक्तायाश्चतुर्विंशतेर्वैक्रियाहारकरूपे द्विकेऽपनीते शेषा द्वाविंशतिर्बन्धहेतवः । तथा हास्यादिषट्कस्यापूर्वकरणगुणस्थानक एव व्यवच्छिन्नत्वादनिवृत्तिबादरसंपरायगुणस्थानके द्वाविंशतेः षट्केऽपनीते शेषाः षोडश बन्धहेतवो भवन्ति, ते च [3]वेदत्रय[4]संज्वलनचतुष्टयौ-[1]दारिककाययोग[4]चतुर्विधवाग्योग[4]चतुर्विधमनोयोगरूपा द्रष्टव्याः । तथा सूक्ष्मसंपरायगुणस्थानके वेदत्रये क्रोधादित्रये चानिवृत्तिबादर एव व्यवच्छिन्नत्वात्षोडशकादपनीते शेषा दश बन्धहेतवो भवन्ति । उपशान्तमोहगुणस्थानके नव बन्धहेतवः, लोभस्य सूक्ष्मसंपराये व्यवच्छिन्नत्वात् अत एव क्षीणमोहगुणस्थानकेऽपि, सयोगिकेवलिगुणस्थानके सत्यासत्यामृषामनोयोगसत्यासत्यामृषावाग्योगकार्मणौदारिकतन्मिश्रलक्षणाः सप्त बन्धहेतवो भवन्ति । 'न उ अजोगिम्मि' इति अयोगिकेवलिगुणस्थानके तु न कश्चिद्बन्धहेतुः, योगस्यापि व्यवच्छिन्नत्वात् ॥७७॥

उक्ता बन्धहेतवः । साम्प्रतं येषां कर्मणामेते बन्धहेतवस्तेषामेतेभ्यो बन्धमुपदर्शयन्नाह—

**तो [1]नाण[2]दंसणावरण[3]वेयणीयाणि [4]मोहणिज्जं च ।**
**[5]आउय[6]नामं [7]गोयं[8]तरायमिइ अट्ठ कम्माणि ॥७८॥**

(हारि०) व्याख्या—'तो' इति तेभ्यो मिथ्यात्वादिभ्यः सकाशाज्ज्ञानदर्शनावरणवेदनीयानीति द्वन्द्वः । तथा मोहनीयं च । आयुर्नामेति समाहारद्वन्द्वः । तथा गोत्रान्तरायमित्यत्रापि समाहारद्वन्द्वः । इत्येतान्यष्टौ कर्माणि बध्यन्त इति शेषः । इति गाथार्थः ॥७८॥

अधुनैषां बन्धादिस्थानसंख्यामाह—

(मल०) 'तो' इति तेभ्योऽनन्तरोक्तेभ्यो बन्धहेतुभ्यः 'इति' अमून्यष्टौ कर्माणि बध्यन्त इति शेषः । कानि ? इत्यत आह—'णाण' इत्यादि ज्ञायतेऽनेन ज्ञप्तिर्वा ज्ञानम्, सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मकोऽवबोधः, दृश्यतेऽनेन दृष्टिर्वा दर्शनम्, सामान्यावबोधात्मकं चक्षुर्दर्शनादि, आव्रियते=आच्छाद्यतेऽनेनेत्यावरणम्, मिथ्यात्वादिसचिवजीव-

मष्टौ। 'क्षीणे' क्षीणमोहगुणस्थानके सत्तायामुदये च सप्त कर्मप्रकृतयः, मोहनीयस्य क्षीणत्वात्। 'चत्तारि सेसेसु' इति प्राकृतत्वाद् द्वित्वेऽपि बहुवचनम्। शेषयोः सयोग्ययोगिकेवलिगुणस्थानकयोरुदये सत्तायां चतस्रोऽघातिकर्मप्रकृतयो भवन्ति, घातिकर्मचतुष्टयस्य क्षीणत्वात् ॥८१॥

उक्ता सत्तोदयस्थानकयोजना। साम्प्रतमुदीरणास्थानानि योजयन्नाह—

सत्तट्ठ पमत्तंता, [1]कम्मे उइरिंति अट्ठ मीसो उ।
वेयणियाउ विणा छ उ, अपमत्तअपुव्वअनियट्टी ॥८२॥

(हारि०) व्याख्या–सप्ताष्ट वा कर्माण्युदीरयन्तीति सण्टङ्कः। क एते? प्रमत्तान्ताः पञ्च मिश्रवर्जाः, तस्य पृथग्भणनात्। तदेवाह–'अट्ठ मीसो उ' इति अष्टावेव वचनव्यत्ययादुदीरयति मिश्रः, तुरेवकारार्थो योजित एव। तथा विभक्तिलोपाद्वेदनीयायुर्भ्यां विना षट् कर्माण्युदीरयन्ति। क एते? अप्रमत्तापूर्वानिवृत्तिबादरा इति द्वन्द्वः। इति गाथार्थः॥८२॥

तथा—

(मल०) मिथ्यादृष्टिप्रभृतयः प्रमत्तान्ता यावदद्याप्यनुभूयमानमवायुरावलिकावशेषं न भवति तावत्सर्वेऽप्यमी निरन्तरमष्टावपि कर्माण्युदीरयन्ति, आवलिकावशेषे पुनरनुभूयमानभवायुषि सप्तैव, आवलिकावशेषस्य कर्मण उदीरणाया अभावात्तथास्वाभाव्यात्। 'अट्ठ मीसो उ' इति मिश्रस्तु सम्यग्मिथ्यादृष्टिः पुनरष्टावेव कर्माण्युदीरयति, न तु कदाचनापि सप्त, सम्यग्मिथ्यादृष्टिगुणस्थानके वर्तमानस्य सत आयुष आवलिकावशेषाभावात्। स हि अन्तर्मुहूर्तावशेषायुष्क एव तद्भावं परित्यज्य सम्यक्त्वं मिथ्यात्वं वा नियमात्प्रतिपद्यत इति। तथाऽप्रमत्तापूर्वकरणानिवृत्तिबादरा वेदनीयायुषी वर्जयित्वा शेषाणि षट् कर्माण्युदीरयन्ति न तु वेदनीयायुषी, अतिविशुद्धतया तदुदीरणायोग्याध्यवसायस्थानाभावात् ॥८२॥

सुहुमो छ पंच [2]उइरेइ पंच [3]उवसंतु पंच दो खीणो।
जोगी उ नामगोए, अजोगि [4]अणुदीरगो भयवं ॥८३॥

(हारि०) व्याख्या–सूक्ष्मसंपरायः षट् पञ्च चोदीरयति। तथा पञ्चोपशान्तमोहः। तथा पञ्च द्वे वा क्षीणमोहः। तथा योगी सयोगिकेवली तुरेवकारार्थः, उत्तरत्र योक्ष्यते, नामगोत्रे एव। तथाऽयोगी अनुदीरको न किंचिदुदीरयति भगवान् पूज्य इति। सप्ताष्टषडादिपदभावना त्वेवं द्रष्टव्या–इह मिथ्यादृष्टेः प्रभृति यावत्प्रमत्तसंयतो यावदद्याप्यावलिकावशेषमात्मीया-

१ "कम्मउईरेंति" इत्यपि पाठः। २ "उईरेइ" इत्यपि पाठः। ३ "उवसंत" इत्यपि। ४ "अणुदीरगो भगवं" इत्यपि।

(हारि०) व्याख्या—'अप्रमत्तान्ताः' इत्युक्ते मिथ्यादृष्टिप्रभृतय इति लभ्यन्ते। तत एते षड् मिश्रवर्जास्तस्य पृथग्गणनात्सप्ताष्टौ वा बध्नन्तीति संबन्धः। तथा मिश्रापूर्वबादरास्त्रयोऽपि सप्त बध्नन्तीति। तथा षट् सूक्ष्मसंपराया बध्नन्ति। तथैकमुपरितना उपशान्तक्षीणमोहसयोगिकेवलिनः। तथा 'अबन्धगोऽजोगी' इति अयमर्थः—सप्तविधबन्धका आयुर्बन्धवर्जाः षड्विधबन्धका मोहायुर्बन्धवर्जिता एकविधबन्धकाः सातमेवैकं बध्नन्ति। इति गाथार्थः ॥८०॥

इति बन्धस्थानयोजना गुणस्थानकेषूक्ता ६। अथोदयसत्तास्थानद्वयं तेष्वेव निरूपयन्नाह—

(मल०) मिथ्यादृष्टिप्रभृतयोऽप्रमत्तान्ताः सप्ताष्टौ वा कर्माणि बध्नन्ति, आयुर्बन्धकालेऽष्टौ, शेषकालं तु सप्तैव। 'मीसअपुव्वबायरा' इति मिश्रापूर्वकरणानिवृत्तिबादराः सप्तैव बध्नन्ति, तेषामायुर्बन्धाभावात्। तत्र मिश्रस्य तथास्वाभाव्यात्, इतरयोस्त्वतिविशुद्धत्वात्, आयुर्बन्धस्य च घोलनापरिणामनिमित्तत्वात्। 'छ सुहुमो' इति सूक्ष्मसंपरायो मोहनीयायुर्वर्जानि षट् कर्माणि बध्नाति, मोहनीयबन्धस्य बादरकषायोदयनिमित्तत्वात्, तस्य च तदभावादायुर्बन्धाभावस्त्वतिविशुद्धत्वादवसेयः। 'एगमुवरिमा' इति एकं सातवेदनीयलक्षणं कर्मोपरितना उपशान्तमोहक्षीणमोहसयोगिकेवलिनो बध्नन्ति न शेषाणि, तद्बन्धहेत्वभावात्। 'अबन्धगोऽजोगी' इति अयोगी=अयोगिकेवली योगस्यापि बन्धहेतोरभावादबन्धकः ॥८०॥

उक्ता गुणस्थानकेषु बन्धस्थानयोजना। साम्प्रतमेतेषूदयसत्तास्थानयोजनां निरूपयन्नाह—

जा सुहुमो ता अट्ठवि, उदए संते य होंति पयडीओ।
सत्तट्ठुवसंते खीणि सत्त चत्तारि सेसेसु ॥८१॥

(हारि०) व्याख्या—मिथ्यादृष्टेरारभ्य यावत्सूक्ष्मसंपरायस्तावदष्टावपि, किम्? 'उदए संते य' इति उदये सत्तायां च 'भवन्ति' जायन्ते प्रकृतयः कर्मणामिति शेषः। तथा सप्ताष्टौ चोपशान्ते, सप्त उदयेऽष्टौ सत्तायामित्यर्थः। तथा 'क्षीणे' क्षीणमोहे मोहवर्जा उदये सत्तायां च सप्तेति। तथा चत्वार्यघातिकर्माणीति शेषः। शेषयोः सयोग्ययोगिकेवलिगुणस्थानकयोरुदये सत्तायां च भवन्तीति सर्वत्र योज्यम्। इति गाथार्थः ॥८१॥

इत्युदयसत्तास्थानानि निरूपितानि गुणस्थानकेषु। ८१। साम्प्रतमुदीरणास्थानानि तेष्वेव योजयन्नाह—

(मल०) मिथ्यादृष्टिगुणस्थानकमारभ्य यावत्सूक्ष्मसंपरायगुणस्थानं तावदष्टावपि कर्मप्रकृतय उदये सत्तायां च प्राप्यन्ते। उपशान्तमोहगुणस्थानके उदये सप्त कर्मप्रकृतयः, सत्ताया-

मष्टौ । **'क्षीणे'** क्षीणमोहगुणस्थानके सत्तायामुदये च सप्त कर्मप्रकृतयः, मोहनीयस्य क्षीणत्वात् । **'चत्तारि सेसेसु'** इति प्राकृतत्वाद् द्वित्वेऽपि बहुवचनम् । शेषयोः सयोग्ययोगिकेवलिगुणस्थानकयोरुदये सत्तायां चतस्रोऽघातिकर्मप्रकृतयो भवन्ति, घातिकर्मचतुष्टयस्य क्षीणत्वात् ॥८१॥

उक्ता सत्तोदयस्थानकयोजना । साम्प्रतमुदीरणास्थानानि योजयन्नाह—

**सत्तट्ठ पमत्तंता, [1]कम्मे उइरिंति अट्ठ मीसो उ ।**
**वेयणियाउ विणा छ उ, अपमत्तअपुव्वअनियट्टी ॥८२॥**

(हारि०) व्याख्या—सप्ताष्ट वा कर्माण्युदीरयन्तीति सण्टङ्कः । क एते ? प्रमत्तान्ताः पञ्च मिश्रवर्जाः, तस्य पृथग्भणनात् । तदेवाह—**'अट्ठ मीसो उ'** इति अष्टावेव वचनव्यत्ययादुदीरयति मिश्रः, तुरेवकारार्थो योजित एव । तथा त्रिभक्तिलोपाद्वेदनीयायुर्भ्यां विना षट् कर्माण्युदीरयन्ति । क एते ? अप्रमत्तापूर्वानिवृत्तिबादरा इति द्वन्द्वः । इति गाथार्थः ॥८२॥

तथा—

(मल०) मिथ्यादृष्टिप्रभृतयः प्रमत्तान्ता यावदद्याप्यनुभूयमानभवायुरावलिकावशेषं न भवति तावत्सर्वेऽप्यमी निरन्तरमष्टावपि कर्माण्युदीरयन्ति, आवलिकावशेषे पुनरनुभूयमानभवायुषि सप्तैव, आवलिकावशेषस्य कर्मण उदीरणाया अभावात्तथास्वाभाव्यात् । **'अट्ठ मीसो उ'** इति मिश्रस्तु सम्यग्मिथ्यादृष्टिः पुनरष्टावेव कर्माण्युदीरयति, न तु कदाचनापि सप्त, सम्यग्मिथ्यादृष्टिगुणस्थानके वर्तमानस्य सत आयुष आवलिकावशेषाभावात् । स हि अन्तर्मुहूर्तावशेषायुष्क एव तद्भावं परित्यज्य सम्यक्त्वं मिथ्यात्वं वा नियमात्प्रतिपद्यत इति । तथाऽप्रमत्तापूर्वकरणानिवृत्तिबादरा वेदनीयायुषी वर्जयित्वा शेषाणि षट् कर्माण्युदीरयन्ति न तु वेदनीयायुषी, अतिविशुद्धतया तदुदीरणायोग्याध्यवसायस्थानाभावात् ॥८२॥

**सुहुमो छ पंच [2]उइरेइ पंच [3]उवसंतु पंच दो खीणो ।**
**जोगी उ नामगोए, अजोगि [4]अणुदीरगो भयवं ॥८३॥**

(हारि०) व्याख्या—सूक्ष्मसंपरायः षट् पञ्च वोदीरयति । तथा पञ्चोपशान्तमोहः । तथा पञ्च द्वे वा क्षीणमोहः । तथा योगी सयोगिकेवली तुरेवकारार्थः, उत्तरत्र योक्ष्यते, नामगोत्रे एव । तथाऽयोगी अनुदीरको न किंचिदुदीरयति भगवान् पूज्य इति । सप्ताष्टपदादिपदभावना त्वेवं द्रष्टव्या—इह मिथ्यादृष्टेः प्रभृति यावत्प्रमत्तसंयतो यावदद्याप्यावलिकावशेषमात्मीया-

१ "कम्मउईरेंति" इत्यपि पाठः । २ "उईरेइ" इत्यपि पाठः । ३ "उवसंत" इत्यपि । ४ - अणुदीरणा भगवं" इत्यपि ।

त्मीयमायुर्न भवति तावत्सर्वेऽप्यमी निरन्तरमष्टावपि प्रकृतीरुदीरयन्ति, तदुदीरणायोग्याध्यवसायस्य सर्वेष्वपि भावात् । अद्धावलिकावशेषे आयुषि सप्तैव प्रकृतीरुदीरयन्ति न त्वायुष्कम् । सम्यग्मिथ्यादृष्टिस्तु अष्टावेवोदीरयति न तु कदाचनापि सप्तेति, सम्यग्मिथ्यादृष्टेरायुष आवलिकावशेषताया अभावात्, सह्यायुष्कान्तर्मुहूर्तावशेष एव तद्भावं परित्यज्य सम्यक्त्वं मिथ्यात्वं वा नियमात्प्रतिपद्यत इति । अप्रमत्तादयस्त्रयः षट् कर्माण्युदीरयन्ति, अतिविशुद्धत्वेन वेदनीयायुरुदीरणायोग्याध्यवसायाभावात् । सूक्ष्मसंपरायस्तु षड्विधोदीरकस्तावद् यावन्मोहनीयमावलिकावशेषं न भवति, तदवशेषे तु तस्मिन् पञ्चविधोदीरक एवेति । उपशान्तमोहस्तु पूर्वोक्तपञ्चविधोदीरक इति । क्षीणमोहस्तु ज्ञानावरणदर्शनावरणान्तरायेष्वावलिकावशेषे तु द्विविधोदीरकः, पूर्वं तु पञ्चविधोदीरक इति । सयोगिकेवली पुनर्द्विविधोदीरक एव, यतो वेद्यमानमेव कर्मोदीर्यते । तत्र घातिचतुष्टयस्य क्षीणत्वाद्वेदनमेव नास्ति, कुतस्तदुदीरणम्? वेदनीयायुषोस्तूदीरणा प्रागेवोपरतेति । अयोगिकेवली तु न किंचिदुदीरयति, उदीरणस्य योगसव्यपेक्षत्वात्, तस्य च तदभावात् । इति गाथार्थः ॥८३॥

इत्युक्तोदीरणा । अथाल्पबहुत्वमाह—

(मल०) सूक्ष्मः=सूक्ष्मसंपरायः षट् पञ्च वा कर्माण्युदीरयति । तत्र षडनन्तरोक्तानि तानि च तावदुदीरयति यावन्मोहनीयमावलिकावशेषं न भवति, आवलिकावशेषे च मोहनीये तस्याप्युदीरणाया अभावात् शेषाणि पञ्च कर्माण्युदीरयति । **'पंच उवसंतु'** इति उपशान्त=उपशान्तमोहः पञ्चकर्माण्युदीरयति न वेदनीयायुर्मोहनीयानि । तत्र वेदनीयायुषोः कारणं प्रागेवोक्तम् । मोहनीयं तदुदयाभावान्नोदीर्यते **'वेद्यमानमेवोदीर्यते'** इतिवचनात् । **'पंच दो खीणे'** इति क्षीणः=क्षीणमोहोऽनन्तरोक्तानि पञ्च कर्माण्युदीरयति, तानि च तावदुदीरयति यावज्ज्ञानदर्शनावरणान्तरायाणि आवलिकाप्रविष्टानि न भवन्ति, आवलिकामात्रप्रविष्टेषु तु तेषु तेषामप्युदीरणाया अभावाद् द्वे एव नामगोत्रलक्षणे कर्मणी उदीरयति । **'जोगी उ नामगोए'** इति योगी तु=सयोगिकेवली पुनर्नामगोत्रे उदीरयति, न शेषाणि, घातिकर्मचतुष्टयं हि निर्मूलत एव क्षीणमिति न तस्योदीरणासंभवः, वेदनीयायुषोस्तूदीरणा पूर्वोक्तकारणादेव न भवतीति । **'अजोगि अणुदीरगो भयवं'** इति अयोगिकेवली भगवान् अनुदीरको=न किंचिदपि कर्मोदीरयति, योगसव्यपेक्षत्वादुदीरणायाः, तस्य च योगाभावात् ॥८३॥

इत्युक्ता गुणस्थानकेषूदीरणास्थानयोजना । साम्प्रतमेतेष्वेव वर्तमानानां जन्तूनामल्पबहुत्वमाह—

उवसंतजिणा थोवा, संखेज्जगुणा उ खीणमोहजिणा ।
सुहुमनियट्टिनियट्टी, तिन्नि वि तुल्ला विसेसहिया ॥८४॥
जोगिअपमत्तइयरे, संखगुणा देससासणा मिस्सा ।
अविरयअजोगिमिच्छा, असंख चउरो दुवेऽणंता ॥८५॥

(हारि०) व्याख्या–उपशान्तजिनाः स्तोकाः, यतस्ते प्रतिपद्यमानकाश्चतुष्पञ्चाशत्प्रमाणा एव प्राप्यन्ते, तेभ्यः संख्येयगुणाः क्षीणमोहजिनाः, यतस्तेऽष्टोत्तरशतसंख्या एकसमये प्रतिपद्यमाना लभ्यन्ते । एते द्वयेऽपि यदोत्कृष्टपदे लभ्यन्ते तदा ज्ञेयाः, कदाचिद्विपर्ययेणापि स्युः क्षीणमोहाः स्तोका उपशान्तमोहास्तु बहव इति । ततो विशेषाधिकाः, क एते ? सूक्ष्मसंपरायानिवृत्तिनिवृत्तिबादरास्त्रयोऽपि स्वस्थाने तुल्याः, तुल्यत्वादेतद्गुणस्थानकत्रयस्यारम्भकाणामिति ॥८४॥ इतो द्वितीयगाथा व्याख्यायते– तेभ्यो योग्यप्रमत्तेतरे इति द्वन्द्वः । इतरः=प्रमत्तो गृह्यते, संख्यातगुणाः, यतः सयोगिकेवलिनां कोटीपृथक्त्वं प्राप्यते । अप्रमत्तप्रमत्तगुणस्थानकवर्ती तु कोटीसहस्रपृथक्त्वं सामायिके कोटीशतपृथक्त्वं छेदोपस्थापनीये परमप्रमत्तान्तर्मुहूर्तं लघु प्रमत्तान्तर्मुहूर्तं बृहत्प्रमाणम्, इत्यतो यथोक्तं संख्यातगुणत्वं लभ्यते । ततो देशविरतसासादनमिश्राऽविरतायोगिमिथ्यादृष्टयः क्रमेणासंख्याश्चत्वारो द्वयेऽनन्ताः । भावना त्वेवम्–प्रमत्तयतिभ्योऽसंख्यातत्वाद्देशविरतितिर्यग्मनुष्याणाम् । सासादनास्तु कदाचित्सर्वथैव न भवन्ति, यदा तु भवन्ति तदा जघन्यपदे एको वा द्वौ वा यावदुत्कृष्टतो गतिचतुष्टयसंभवित्वाद्देशविरतेभ्योऽसंख्येयगुणा भवन्ति । मिश्रा यदा भवन्ति तदोत्कृष्टतः सासादनेभ्योऽसंख्यातगुणाः, उत्कृष्टतोऽपि षडावलिकाप्रमाणत्वात्सासादनाद्धायाः, मिश्राद्धायास्त्वन्तर्मुहूर्तप्रमाणत्वादिति । मिश्रेभ्योऽसंख्येयगुणा अविरतसम्यग्दृष्टयः, चतुर्गतिषु सर्वकालभावित्वात्तेषामिति । तेभ्योऽनन्तगुणा अयोगिनः, अयोगिग्रहणेन चात्र सिद्धा अपि गृहीताः, यतोऽयोगिनो भवस्थाभवस्थभेदेन द्विविधा भवन्ति । तेभ्योऽनन्तगुणा मिथ्यादृष्टयः, पृथिव्यादिसाधारणमिथ्यादृष्टीनामनन्तत्वात् । इति गाथार्थः ॥८५॥

इत्युक्तमल्पबहुत्वम्, तद्भणनाच्चोक्तं यथाप्रतिज्ञातं समस्तमभिधेयजातम् । साम्प्रतं प्रकरणस्यादेयताख्यापनार्थं प्रकरणकारो गुणनिष्पन्नं स्वनाम सूचयन्नुपदेशमाह—

(मल०) उपशान्तजिना=उपशान्तवीतरागाः स्तोकाः, यतस्ते प्रतिपद्यमानका उत्कर्षतोऽपि चतुष्पञ्चाशत्प्रमाणा एव प्राप्यन्त इति । तेभ्यः सकाशात्पुनः क्षीणमोहजिनाः संख्येयगुणाः, यतस्ते प्रतिपद्यमानका एकस्मिन् समयेऽष्टोत्तरशतप्रमाणा अपि लभ्यन्ते । एतच्चैवमाचार्येणाभिहितमुत्कृष्टपदापेक्षया, अन्यथा कदाचिद्विपर्ययोऽपि द्रष्टव्यः । स्तोकाः क्षीणमोहाः, बहवस्तु

तेभ्य उपशान्तमोहा इति । तथा तेभ्यः क्षीणमोहेभ्यः सकाशात्सूक्ष्मानिवृत्तिनिवृत्तयः सूक्ष्मसंपरायानिवृत्तिबादरापूर्वकरणा विशेषाधिकाः । स्वस्थाने पुनरेते चिन्त्यमानास्त्रयोऽपि तुल्या इति ॥८४॥ 'इयर' इति अप्रमत्तप्रतियोगिनः प्रमत्ताः तेभ्यः सूक्ष्मादिभ्यः सकाशाद्योगिनः सयोगिकेवलिनः सङ्ख्यातगुणाः, तेषां कोटीपृथक्त्वेन लभ्यमानत्वात् । तेभ्योऽप्रमत्ताः संख्येयगुणाः कोटीसहस्रपृथक्त्वेन प्राप्यमाणत्वात् । तेभ्योऽपि संख्येयगुणाः प्रमत्ताः । प्रमादभावो हि बहूनां बहुकालं च लभ्यते, विपर्ययेण त्वप्रमाद इति न यथोक्तसंख्याव्याघातः । 'देस' इत्यादि, देशविरतसासादनमिश्राविरतिलक्षणाश्चत्वारो यथोत्तरमसंख्येयगुणाः । अयोगिमिथ्यादृष्टिलक्षणौ च द्वौ यथोत्तरमनन्तगुणौ । तत्र प्रमत्तेभ्यो देशविरता असंख्येयगुणाः, तिरश्चामसंख्यातानां देशविरतिभावात् । सासादनास्तु कदाचित्सर्वथैव न भवन्ति, यदा तु भवन्ति तदा जघन्येनैको द्वौ वा, उत्कर्षतस्तु देशविरतेभ्योऽप्यसंख्येयगुणाः । तेभ्योऽपि मिश्रा असंख्येयगुणाः, सासादनाद्धाया उत्कर्षतोऽपि षडावलिकामात्रतया स्तोकत्वात्, मिश्राद्धायास्त्वन्तर्मुहूर्तप्रमाणतया प्रभूतत्वात् । तेभ्योऽप्यसंख्येयगुणा अविरतसम्यग्दृष्टयः, तेषां गतिचतुष्टयेऽपि प्रभूततया सर्वकालं संभवात् । तेभ्योऽप्ययोगिनो भवस्थाभवस्थभेदभिन्ना अनन्तगुणाः, सिद्धानामनन्तत्वात् । तेभ्योऽप्यनन्तगुणा मिथ्यादृष्टयः साधारणवनस्पतीनां सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेषां च मिथ्यादृष्टित्वादिति ॥८५॥

तदेवमभिहितं गुणस्थानकवर्तिनां जीवानामल्पबहुत्वम्, तदभिधानाच्च यत् 'वोच्छामि जीवमग्गण' इत्यादि प्राक् प्रतिज्ञातं तदपि समर्थितम् । साम्प्रतं जिनवचनानुसारिप्रकरणमिदमित्येतत्प्रकरणश्रवणादिक्रियासु वर्तमानानां जीवानामेकान्तेन हितसंप्राप्तिमुत्प्रेक्षमाण आचार्यो निजान्वर्थनामोत्कीर्तनपूर्वकं जिनशासनगौरवख्यापनपूर्वकं च परेषामुपदेशमाह—

जिणवयणमहोवणीयं, जिणवयणामयसमुद्दबिंदुमिमं ।
हियकंखिणो बुहजणा, निसुणंतु गुणंतु जाणंतु ॥८६॥

॥ इति षडशीत्यपरपर्यायागमिकवस्तुविचारसारप्रकरणम् ॥

(हारि०) व्याख्या–जिनो वल्लभो यस्य स तथा तेनोपनीतस्तम्, इत्यनेन प्रकरणादेयतामाह। भवति हि यथोक्तान्वर्थनाम्ना पुरुषविशेषेणोपनीते वस्तुनि बुधजनानामादेयताबुद्धिः, एतदेव च प्रस्तुतप्रकरणकर्तुरभिधानम्। जिना=रागादिवैरिवारजेतारः, तेषां वचनं=मागमः, तदेवामृतं=त्रिदशाहारः, तस्य समुद्रः=सिन्धुः, तस्य बिन्दुरिवबिन्दुस्तम्, इमं प्रस्तुतप्रकरणरूपं 'हितकाङ्क्षिणः' मोक्षाभिलाषिणो 'बुधजनाः' पण्डितलोकाः 'निश्शृण्वन्तु' आकर्णयन्तु 'गुणयन्तु' परावर्तयन्तु 'जानन्तु' बुध्यताम्। इति गाथार्थः ॥८६॥

॥ अथ प्रशस्तिः ॥

* प्रायोऽन्यशास्त्रदृष्टः, सर्वोऽप्यर्थो मयाऽत्र संचरितः ।
न पुनः स्वमनीषिकया, तथापि यत्किंचिदिह वितथम् ॥१॥

* सूत्रमतिलङ्घ्य लिखितं, तच्छोध्यं मय्यनुग्रहं कृत्वा ।
परकीयदोषगुणयोस्त्यागोपादानविधिकुशलैः ॥२॥

* छद्मस्थस्य हि बुद्धिः, स्खलति न कस्येह कर्मवशगस्य ।
सद्बुद्धिविरहितानां, विशेषतो मद्विधासुमताम् ॥३॥

* कृत्वा यद्वृत्तिमिमां, पुण्यं समुपार्जितं मया तेन ।
मुक्तिमचिरेण लभतां, क्षपितरजाः सर्वभव्यजनः ॥४॥

× मध्यस्थभावादचलप्रतिष्ठः, सुवर्णरूपः सुमनोनिवासः ।
अस्मिन्महामेरुरिवास्ति लोके, श्रीमान् बृहद्गच्छ इति प्रसिद्धः ॥५॥

× तस्मिन्नभूदायतबाहुशाखः कल्पद्रुमाभः प्रभुमानदेवः ।
यदीयवाचो विबुधैः सुबोधाः, कर्णेकृता नूतनमञ्जरीवत् ॥६॥

× तस्मादुपाध्याय इहाजनिष्ट, श्रीमान्मनस्वी जिनदेवनामा ।
गुरुक्रमाराधयितान्पबुद्धिस्तस्यास्ति शिष्यो हरिभद्रसूरिः ॥७॥

* अणहिल्लपाटकपुरे, श्रीमज्जयसिंहदेवनृपराज्ये ।
आशापूरवसत्यां, वृत्तिस्तेनेयमारचिता ॥८॥

* एकैकाक्षरगणनादरया वृत्तेरनुष्टुभां मानम् ।
अष्टौ शतानि जातं, पञ्चाशत्समधिकानीति ८५० ॥९॥

* वर्षशतैकादशके, द्वासप्तत्याधिके ११७२ नभोमासे ।
सितपञ्चम्यां सूर्ये, समर्थिता वृत्तिकेयमिति ॥१०॥

॥ इत्यागमिकवस्तुविचारसारप्रकरणवृत्तिः, श्रीमद्धरिभद्रसूरिनिर्मिता समाप्ता ॥

* आर्या । × उपज.तिः ।

(मल०) सुगमम् ॥८६॥

॥ अथ प्रशस्तिः ॥

यद्गदितमल्पमतिना, जिनवचनविरुद्धमर्थतत्त्वेषु ।
विद्वद्भिस्तत्त्वज्ञैः, प्रसादमाधाय तच्छोध्यम् ॥१॥ [आर्या]
बह्वर्थमल्पशब्दं, प्रकरणमेतद्विवृण्वता कुशलम् ।
यदवापि मलयगिरिणा, सिद्धिं तेनाश्नुतां लोकः ॥२॥ [ ,, ]

॥ इति श्रीमन्मलयगिरिसूरिविरचिता षडशीतिप्रकरणवृत्तिः समाप्ता ॥


॥ समाप्तोऽयं टीकाद्वयोपेतः षडशीतिनामा चतुर्थः कर्मग्रन्थः ॥

इति

श्रीमज्जिनवल्लभगणिपुङ्गवप्रणीते

**श्रीषडशीतिनाम्नि चतुर्थे प्राचीनकर्मग्रन्थे**

प्रथमा श्रीहरिभद्रसूरिकृता द्वितीया श्रीमलयगिरिसूरिकृता च टीका समाप्ता

(मल०) सुगमम् ॥८६॥

॥ अथ प्रशस्तिः ॥

यद्गदितमल्पमतिना, जिनवचनविरुद्धमर्थतत्त्वेषु ।
विद्वद्भिस्तत्त्वज्ञैः, प्रसादमाधाय तच्छोध्यम् ॥१॥ [आर्या]
यद्वर्यमल्पशब्दं, प्रकरणमेतद्विवृण्वता कुशलम् ।
यदवापि मलयगिरिणा, सिद्धिं तेनाश्नुतां लोकः ॥२॥ [ ,, ]

॥ इति श्रीमन्मलयगिरिसूरिविरचिता षडशीतिप्रकरणवृत्तिः समाप्ता ॥

॥ समाप्तोऽयं टीकाद्वयोपेतः षडशीतिनामा चतुर्थः कर्मग्रन्थः ॥

इति

श्रीमज्जिनवल्लभगणिपुङ्गवप्रणीते

**श्रीषडशीतिनाम्नि चतुर्थे प्राचीनकर्मग्रन्थे**

प्रथमा श्रीहरिभद्रसूरिकृता द्वितीया श्रीमलयगिरिसूरिकृता च टीका समाप्ता

अथ

श्रीमज्जिनवल्लभगणिपुङ्गवप्रणीते

# श्रीषडशीतिनाम्नि चतुर्थे प्राचीनकर्मग्रन्थे

तृतीया श्रीयशोभद्रसूरिकृता टीका प्रारभ्यते

॥ ॐ ह्रीँ श्रीँ अर्हं श्रीशंखेश्वरपार्श्वनाथायनमः ॥

न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

सकलागमरहस्यवेदिश्रीमदाचार्यविजयदानसूरीश्वरेभ्यो नमः ॥

कर्मसाहित्यनिष्णातश्रीमदाचार्यविजयप्रेमसूरीश्वरेभ्यो नमः ॥

श्रीमज्जिनवल्लभगणिपुङ्गवप्रणीतः

# षडशीतिनामा चतुर्थः कर्मग्रन्थः ।

( अपरनाम—आगमिकवस्तुविचारसारप्रकरणम् )

## श्रीमद् यशोभद्रसूरीश्वरप्रणीतटीकया समलङ्कृतः ॥



श्री नमः सर्वज्ञाय

आगमिकवस्तुगोचरविचारसारप्रकरणपदजातं
किञ्चित्किञ्चिद्विवृणोमि नतहितां भारतीं स्मृत्वा ॥ १ ॥

क्वासौ श्रीजिनवल्लभस्य रचना *सूक्ष्मार्थचर्चाऽर्चिता,
क्वेयं मे मतिरग्रिमा प्रणयिनी मुग्धत्वपृथ्वीभुजः ।
पङ्गोस्तुङ्गनगाधिरोहणसुहृद्यत्नोऽयमार्यास्ततो,
ऽसद्ध्यानव्यसनार्णवे निपततः स्वान्तस्य पोतोऽर्पितः ॥ २ ॥

निच्छिन्नमोहपासं पमरियविमलोरुकेवलपयासं ।
पणयजणपूरियासं पयओ पणमित्तु जिणपासं ॥ १ ॥

(यशो०) "निच्छिन्नमोहपास"मित्यादि, विशेषणविभूषितात्मानं जिनपार्श्वं प्रणम्य जीवमार्गणागुणस्थानादि 'वक्ष्य' इत्युत्तरगाथया संबन्धः । तत्र "निच्छिन्ने"ति अविरतसम्यग्दृष्ट्यादीनामपि सूक्ष्मसंपरायान्तानां किंचित् किंचिद् मोहच्छेदोऽस्तीति तद्व्यवच्छेदार्थं निशब्दोपादानं नितरामतिशयेन छिन्नः=खंडितो मोह एव सर्वोपद्रवव्यस्थानगमनविचारकत्वात्पाशोऽनेन स तथा, एवंरूपश्च क्षीणकषायवीतरागछद्मस्थावस्थावलम्ब्यपि भगवान् स्यादत आह—प्रसृतो=ऽसर्वगतात्मनि व्यवस्थित एव विस्तृतः=प्रचुरभावमापन्नः समस्ततदावरणविरयाद्विमलः सकललोकालोकव्यापकत्वादुरू=महान् केवलस्य=केवलज्ञानस्य प्रकाशः=प्रकाशनशक्ति=

* "सूक्ष्मार्थचर्चा-ऽञ्चिता" इति वा ।

विषयपरिच्छेदसामर्थ्यं यस्य प्रसृतविमलोरुकेवलप्रकाशः। इह यद्यपि मोह इव ज्ञानावरण-दर्शनावरणान्तरायेष्वपि छिन्नेष्वेव केवलप्रसरस्तथापि मोहच्छेदस्य प्रधानतया मोहच्छेदहेतुकः केवलप्रकाशः प्रतिपादितः। अनेन विशेषणद्वयेनापायापगम-ज्ञानातिशयावभिहितौ ताभ्यां च तीर्थकरस्तुतेः प्रस्तुतत्वात्तीर्थङ्करनामकर्मोदयाविनाभाविनौ पूजा-वचनातिशयावाक्षिप्तौ। इत्थं वानि-ष्टविघातेष्टप्राप्तिशरीरा स्वार्थसंपत्तिः प्रकाशिता। प्रणतजनस्य पूरिताः सकलसत्त्वसाधारणेन वचसा स्वर्गापवर्गमार्गप्रकाशनादाशा=वाञ्छा येनेत्यनेन च परार्थसंपत्तिः। प्रयत आदरपरः। एवं च सम्पूर्णस्वार्थपरार्थसंपदो भगवतः "**प्रणम्ये**" ति प्रकर्षप्राप्तनमस्कारस्वरूपमनुपधि धर्मोत्पा-दनद्वारा विघ्नजनका-ऽधर्म्मप्रतिबन्धान्निखिलविघ्नविघातनिघ्नं तत्त्वतो मङ्गलमाविष्कृतमिति। अर्हतां तुल्यगुणत्वेऽपि पार्श्वजिनस्य यदत्रोपादानं तत्तच्छासनाधिष्ठायकसाहायकेन प्रकरणस्य प्रणीतत्वात् ॥ १ ॥

वोच्छामि जीवमग्गणगुणठाणुवओगजोगलेसाई।
किंचि सुगुरूवएसा सन्नाणसुझाणहेउत्ति ॥ २ ॥

(यशो०) जीवाश्च मार्ग्गणगुणाश्च, तेषां स्थानानि, तानि चोपयोगाश्चेत्यादि द्वन्द्वगर्भो बहुव्रीहिः। आदिशब्दात्कर्मबन्धोदयोदीरणासत्तास्थानाल्पबहुत्वबन्धहेतुपरिग्रहः। किंचिदिति सिद्धान्तसिन्धोरुद्धृत्य बिन्दुमात्रम्। वक्ष्ये=ऽभिधास्ये। किमिति? सज्ज्ञानस्य सुध्यानस्य च हेतुः= कारणमिति कृत्वा। "**सुगुरूवएसे**" ति शोभनस्य=समयानुसारिसम्यग्ज्ञानानुष्ठानसारस्य गुरो-रुपदेशेन, अनेन कश्चिदप्राप्तप्रवराम्नाय इदं प्रणीतवानिति शंकानिराशः। एवं च जीवस्थानाद्य-भिधेयं निखिलजगदुपादेयताकुलगृहम्। गुरुपर्वक्रमलक्षणः संबन्धः। जीवादिवस्तुविषय-प्रकरणकरणद्वारेणातिदृढिमोपारूढबोधरूपं सत्=शोभनं ज्ञानम्, धर्मध्यानाधिरोहणार्थं श्रुत-धर्मानुगतानि वाचनाप्रच्छनापरावर्त्तनानुप्रेक्षारूपाण्यालम्बनान्येव शोभनं रूपध्यानं च कर्त्तुरनंतरप्रयोजने एतत्प्रकरणश्रवणप्रसादसमासादितजीवस्थानादिव्युत्पत्तिस्वरूपं ज्ञानमुप-वर्णितचरं सुध्यानं च श्रोतुरनंतरप्रयोजने प्रतिपादितानि। परंपरप्रयोजनं तु कर्तृश्रोत्रोः "ज्ञानं ध्यानं च मुक्तिद"मिति वचनात्परमपदरूपमाक्षिप्तं द्रष्टव्यम्। इह यद्यपि जीवस्थानाद्यभिधेयं सामान्यत उक्तम्, तथापि जीवस्थानेषु गुणस्थानयोगोपयोगलेश्याबन्धोदयोदीरणासत्ताख्या-न्यष्टौ, मार्गणास्थानेषु जीवस्थानगुणस्थानयोगोपयोगलेश्याल्पबहुत्वाभिधानानि षट्, गुण-स्थानेषु जीवस्थानयोगोपयोगलेश्याबन्धहेतुबन्धोदयोदीरणासत्तास्थानाल्पबहुत्वाख्यानि च दशाभिधेयानि "व्याख्यानतो विशेषप्रतिपत्ति" रितिन्यायादवगन्तव्यानि जीवस्थानगुणस्था-नादीनाम्, तुशब्दार्थो यथावसरमुपवर्णयिष्यते। अत्र च प्रकरणकृत् 'प्रणम्ये'ति क्त्वाप्रत्ययेन पूर्वकालभाविना 'वक्ष्य' इत्युत्तरकालभाविक्रियासव्यपेक्षेण प्रणमनक्रियामभिदधता कथञ्चि-

नित्यानित्यपक्षं समर्थयते स्म । एकान्तनित्यानित्यपक्षे हि क्त्वाप्रत्ययानुपपत्तिः । एकान्तनित्यतायां कर्तुः प्रणमनक्रियास्वभावात्, जीवस्थानादिकर्मकवचनक्रियाया अभावात्, एकान्ताऽनित्यतायां चान्यः प्रणमनक्रियायाः कर्त्ताऽपरो वचनक्रियायाः कर्त्तेति विभिन्नकर्तृकत्वात् प्रत्ययानुपपत्तिः ॥ २ ॥

तत्र जीवस्थानानां संख्यावच्छिन्नं स्वरूपं निरूपयन्नाह—

**इह सुहुमबायरेगिंदिबितिचउअसन्निसन्निपंचेंदी ।**
**अपजत्तापज्जत्ता कमेण चउदस जियट्ठाणा ॥ ३ ॥**

(यशो०) इह=जगति प्रवचने वा सूक्ष्मनामकर्मोदयात् सूक्ष्माः सर्वलोकव्यापिनो, बादरनामकर्मोदयाद्बादरा लोकदेशवर्त्तिन एकेन्द्रियाः । सूचकत्वात्सूत्रस्य द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः । "असन्निसन्न"ति, संज्ञा=विज्ञानं सा हेतुवाददीर्घकालदृष्टिवादभेदात् त्रिधा । तत्र हेतोर्वादस्तेन संज्ञा । द्वित्रिचतुरिन्द्रियाऽसंज्ञिपञ्चेन्द्रियाणां मन्तव्या । ते हि हेतुवादेन एवं वक्तुं शक्यन्त एव, संज्ञिन एते, आतपादिभ्यश्छायाद्याश्रयणादाहारादिनिमित्तचेष्टान्वितत्वाच्च । एतदपेक्षया पृथिव्यादयोऽसंज्ञिनः, या तु सिद्धान्ते पृथिव्यादीनामपि आहारादिभेदाद्दशविधा संज्ञा प्रतिपादिता सा तेषामतिशयेनाव्यक्तेति न विवक्षिता १ । दीर्घकालिकी संज्ञा साभिधीयते यस्यां सत्यां कालत्रयेऽपि इदमकार्षमिदं करोमि इदं करिष्यामीति विमृश्यते । एतदपेक्षया मनोलब्ध्या वन्ध्याः सर्वेऽप्यसंज्ञिनः । एषा च न हेतुवादेन प्रतीयते, बालानामपि सुप्रतीतत्वात् २ । दृष्टिः=सम्यग्दर्शनं तस्य वदनं*(वादः) तेन संज्ञा सम्यक्त्वविमलीकृतज्ञानरूपा । एतदपेक्षया संज्ञिपञ्चेन्द्रिया अपि मिथ्यादृशोऽसंज्ञिन उच्यन्ते । समये तु यत्र क्वचित्संज्ञ्यसंज्ञिव्यवहारः, स समस्तोऽपि दीर्घकालिकसंज्ञाभावाभावावलम्ब्येत्यत्रापि दीर्घकालिकसंज्ञावन्तः संज्ञिनस्तद्विपरीतास्त्वसंज्ञिनः, पञ्चेन्द्रियाः । "अपज्जत्तापज्जत्ते" ति पर्याप्तापर्याप्तव्यवहारस्य पर्याप्तिपरिज्ञानपुरस्सरत्वादादौ पर्याप्तेः संक्षेपतः स्वरूपं सोपयोगित्वाद् भेदकालस्वामिनश्चोच्यन्ते । तत्र पर्याप्तिः=आहारप्रवृत्तियोग्यपुद्गलदलिकोपादनपरिणामनकारणं जीवस्य पुद्गलोपचयः शक्तिविशेष इति स्वरूपम् । यया बाह्यमाहारमाहृत्य खलरसरूपतया परिणामयति जन्तुः सा शक्तिराहारपर्याप्तिः । यया रसीभूतमाहारं रसासृङ्मांसमेदोऽस्थिमज्जाशुक्ररूपसप्तधातुमयौदारिकशरीररूपतया वैक्रियाहारकयोर्योग्यानि च द्रव्याण्यादाय वैक्रियाहारकरूपतया च परिणतिं नयति, सा शरीरपर्याप्तिः । इयं च न शरीरनामकर्मण्यन्तर्भवति, साध्यभेदात् । शरीरनाम्नो हि कर्मणो जीवेन गृहीतानां पुद्गलानामौदारिकादिदेहत्वेन परिणतिः साध्या, शरीरपर्याप्तेस्त्वारब्धशरीरस्य परिसमाप्तिरिति । ययेन्द्रिययोग्यधातुभूतमाहारमिन्द्रियतया परिणाममुपनयति, सेन्द्रियपर्याप्तिः । ययोच्छ्वासयोग्यं वर्गणाद्रव्यं स्वीकृत्योच्छ्वासतया परि-

* ( ) एतच्चिह्नान्तर्गतः पाठः प्रक्षिप्तो द्रष्टव्यः । एवमग्रेऽपि ।

विषयपरिछेदसामर्थ्यं यस्य प्रसृतविमलोरुकेवलप्रकाशः । इह यद्यपि मोह इव ज्ञानावरण-दर्शनावरणान्तरायेष्वपि छिन्नेष्वेव केवलप्रसरस्तथापि मोहछेदस्य प्रधानतया मोहछेदहेतुकः केवलप्रकाशः प्रतिपादितः । अनेन विशेषणद्वयेनापायापगम-ज्ञानातिशयावभिहितौ ताभ्यां च तीर्थकरस्तुतेः प्रस्तुतत्वात्तीर्थकरनामकर्मोदयाविनाभाविनौ पूजा-वचनातिशयावाक्षिप्तौ । इत्थं वानि-ष्टविघातेष्टप्राप्तिशरीरा स्वार्थसंपत्तिः प्रकाशिता । प्रणतजनस्य पूरिताः सकलसत्त्वसाधारणेन वचसा स्वर्गापवर्गमार्गप्रकाशनादाशा=वाञ्छा येनेत्यनेन च परार्थसंपत्तिः । प्रयत आदरपरः । एवं च सम्पूर्णस्वार्थपरार्थसंपदो भगवतः "प्रणम्ये" ति प्रकर्षप्राप्तनमस्कारस्वरूपमनुपधि धर्मोत्पा-दनद्वारा विघ्नजनका-ऽधर्म्मप्रतिबन्धान्निखिलविघ्नविघातनिघ्नं तत्त्वतो मङ्गलमाविष्कृतमिति । अर्हतां तुल्यगुणत्वेऽपि पार्श्वजिनस्य यदत्रोपादानं तत्तच्छासनाधिष्ठायकसाहायकेन प्रकरणस्य प्रणीतत्वात् ।। १ ।।

वोच्छामि जीवमग्गणगुणठाणुवओगजोगलेसाई ।
किंचि सुगुरूवएसा सन्नाणसुझाणहेउत्ति ॥ २ ॥

(यशो०) जीवाश्च मार्ग्गणगुणाश्च, तेषां स्थानानि, तानि चोपयोगाश्चेत्यादि द्वन्द्वगर्भो बहुव्रीहिः । आदिशब्दात्कर्मबन्धोदयोदीरणासत्तास्थानाल्पबहुत्वबन्धहेतुपरिग्रहः । किंचिदिति सिद्धान्तसिन्धोरुद्धृत्य विन्दुमात्रम् । वक्ष्ये=ऽभिधास्ये । किमिति ? सज्ज्ञानस्य सुध्यानस्य च हेतुः= कारणमिति कृत्वा । "सुगुरूवएसे" ति शोभनस्य=समयानुसारिसम्यग्ज्ञानानुष्ठानसारस्य गुरो-रुपदेशेन, अनेन कश्चिदप्राप्तप्रवराम्नाय इदं प्रणीतवानिति शंकानिराशः । एवं च जीवस्थानाद्य-भिधेयं निखिलजगदुपादेयताकुलगृहम् । गुरुपर्वक्रमलक्षणः संबन्धः । जीवादिवस्तुविषय-प्रकरणकरणद्वारेणातिदृढिमोपारूढबोधरूपं सत्=शोभनं ज्ञानम्, धर्मध्यानाधिरोहणार्थं श्रुत-धर्मानुगतानि वाचनाप्रच्छनापरावर्त्तनानुप्रेक्षारूपाण्यालम्बनान्येव शोभनं रूपध्यानं च कर्त्तुरनंतरप्रयोजने एतत्प्रकरणश्रवणप्रसादसमासादितजीवस्थानादिव्युत्पत्तिस्वरूपं ज्ञानमुप-वर्णितचरं सुध्यानं च श्रोतुरनंतरप्रयोजने प्रतिपादितानि । परंपरप्रयोजनं तु कर्तृश्रोत्रोः "ज्ञानं ध्यानं च मुक्तिद"मिति वचनात्परमपदरूपमाक्षिप्तं द्रष्टव्यम् । इह यद्यपि जीवस्थानाद्यभिधेयं सामान्यत उक्तम्, तथापि जीवस्थानेषु गुणस्थानयोगोपयोगलेश्याबन्धोदयोदीरणासत्ताख्या-न्यष्टौ, मार्गणास्थानेषु जीवस्थानगुणस्थानयोगोपयोगलेश्याल्पबहुत्वाभिधानानि षट्, गुण-स्थानेषु जीवस्थानयोगोपयोगलेश्याबन्धहेतुबन्धोदयोदीरणासत्तास्थानाल्पबहुत्वाख्यानि च दशाभिधेयानि "व्याख्यानतो विशेषप्रतिपत्ति" रितिन्यायादवगन्तव्यानि जीवस्थानगुणस्था-नादीनाम्, तुशब्दार्थो यथावसरमुपवर्णयिष्यते । अत्र च प्रकरणकृत् 'प्रणम्ये'ति क्त्वाप्रत्ययेन पूर्वकालभाविना 'वक्ष्य' इत्युत्तरकालभाविक्रियासव्यपेक्षेण प्रणमनक्रियामभिदधता कथञ्चि-

नित्यानित्यपक्षं समर्थयते स्म । एकान्तनित्यानित्यपक्षे हि क्त्वाप्रत्ययानुपपत्तिः । एकान्तनित्यतायां कर्तुः प्रणमनक्रियास्वभावात्, जीवस्थानादिकर्मकवचनक्रियाया अभावाद्, एकान्ताऽनित्यतायां चान्यः प्रणमनक्रियायाः कर्त्ताऽपरो वचनक्रियायाः कर्तेति विभिन्नकर्तृकत्वात् प्रत्ययानुपपत्तिः ॥ २ ॥

तत्र जीवस्थानानां संख्यावच्छिन्नं स्वरूपं निरूपयन्नाह—

**इह सुहुमबायरेगिंदिबितिचउअसन्निसन्निपंचेंदी ।**
**अपजत्तापज्जत्ता कमेण चउदस जियट्ठाणा ॥ ३ ॥**

(यशो०) इह=जगति प्रवचने वा सूक्ष्मनामकर्मोदयात् सूक्ष्माः सर्वलोकव्यापिनो, बादरनामकर्मोदयाद्बादरा लोकदेशवर्त्तिन एकेन्द्रियाः । सूचकत्वात्सूत्रस्य द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः । "असन्निसन्न"ति, संज्ञा=विज्ञानं सा हेतुवाददीर्घकालदृष्टिवादभेदात् त्रिधा । तत्र हेतोर्वादस्तेन संज्ञा । द्वित्रिचतुरिन्द्रियाऽसंज्ञिपञ्चेन्द्रियाणां मन्तव्या । ते हि हेतुवादेन एवं वक्तुं शक्यन्त एव, संज्ञिन एते, आतपादिभ्यश्छायाद्याश्रयणादाहारादिनिमित्तचेष्टान्वितत्वाच्च । एतदपेक्षया पृथिव्यादयोऽसंज्ञिनः, या तु सिद्धान्ते पृथिव्यादीनामपि आहारादिभेदाद्दशविधा संज्ञा प्रतिपादिता सा तेषामतिशयेनाव्यक्तेति न विवक्षिता १ । दीर्घकालिकी संज्ञा साभिधीयते यस्यां सत्यां कालत्रये-ऽपि इदमकार्यमिदं करोमि इदं करिष्यामीति विमृश्यते । एतदपेक्षया मनोलब्ध्या वन्ध्याः सर्वेऽप्यसंज्ञिनः । एषा च न हेतुवादेन प्रतीयते, बालानामपि सुप्रतीतत्वात् २ । दृष्टिः=सम्यग्दर्शनं तस्य वदनं *(वादः) तेन संज्ञा सम्यक्त्वविमलीकृतज्ञानरूपा । एतदपेक्षया संज्ञिपञ्चेन्द्रिया अपि मिथ्यादृशोऽसंज्ञिन उच्यन्ते । समये तु यत्र क्वचित्संज्ञ्यसंज्ञिव्यवहारः, स समस्तोऽपि दीर्घकालिकसंज्ञाभावाभावावलम्ब्येत्यत्रापि दीर्घकालिकसंज्ञावन्तः संज्ञिनस्तद्विपरीतास्त्वसंज्ञिनः, पञ्चेन्द्रियाः । "अपज्जत्तापज्जत्ते" ति पर्याप्तापर्याप्तव्यवहारस्य पर्याप्तिपरिज्ञानपुरस्सरत्वादादौ पर्याप्तेः संक्षेपतः स्वरूपं सोपयोगित्वाद् भेदकालस्वामिनश्चोच्यन्ते । तत्र पर्याप्ति=आहारप्रवृत्तियोग्यपुद्गलदलिकोपादनपरिणामनकारणं जीवस्य पुद्गलोपचयः शक्तिविशेष इति स्वरूपम् । यया बाह्यमाहारमाहृत्य खलरसरूपतया परिणामयति जन्तुः सा शक्तिराहारपर्याप्तिः । यया रसीभूतमाहारं रसासृग्मांसमेदोस्थिमज्जाशुक्ररूपसप्तधातुमयौदारिकशरीररूपतया वैक्रियाहारकयोर्योग्यानि च द्रव्यान्यादाय वैक्रियाहारकरूपतया च परिणतिं नयति, सा शरीरपर्याप्तिः। इयं च न शरीरनामकर्मपर्यन्तभवति, साध्यभेदात् । शरीरनाम्नो हि कर्मणो जीवेन गृहीतानां पुद्गलानामौदारिकादिदेहत्वेन परिणतिः साध्या, शरीरपर्याप्तेस्त्वारब्धशरीरस्य परिसमाप्तिरिति । ययेन्द्रिययोग्यधातुभूतमाहारमिन्द्रियतया परिणाममुपनयति, सेन्द्रियपर्याप्तिः । ययोच्छ्वासयोग्यं वर्गणाद्रव्यं स्वीकृत्योच्छ्वासतया परि-

* ( ) एतच्चिह्नान्तर्गतः पाठः प्रक्षिप्तो द्रष्टव्यः । एवमग्रे ऽपि ।

गुणस्थानान्यादिः=प्रथमं यस्य योगादिस्थानसप्तकस्य तत्तथा, तावच्छब्दः क्रमार्थः। ततो जीवस्थानेषु गुणस्थानानि ततो योगास्तत उपयोगा इत्यादि। 'बायरे' ति सूचकत्वात्सूत्रस्य बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियासंज्ञिपञ्चेन्द्रिया इति दृश्यम्। तच्च समाहारद्वन्द्वाश्रयणाल्लुप्तसप्तम्येकवचनान्तम्। एवमन्यत्रापि। एकादश समुदायव्यपदेशविभक्तिलोपावभ्यूह्यौ। ततश्च बादरादिष्वसंज्ञिपर्यवसानेष्वपर्याप्तेषु पञ्चसु 'पढमगुणे' त्ति प्रथमे मिथ्यात्वसास्वादनरूपे गुणस्थाने भवतः। तत्र प्रथमगुणस्थानमेतेषु प्रतीतम्, द्वितीयं तु करणापर्याप्तबादरैकेन्द्रियादिषु बद्धायुषः संज्ञिपञ्चेन्द्रियस्य पर्यन्ते औपशमिकसम्यक्त्वमवाप्य तदेव वमतो मिथ्यात्वं चाऽप्राप्नुवतस्तेष्वेवोत्पद्यमानस्य जघन्यतः समयमुत्कृष्टः षडावलिका भवतीति कार्मग्रन्थिकमतम्। यत्तु 'उभया(य)भावो पुढवाइएसु" इति वचनात्तु सम्यक्त्वश्रुतादिसामायिकानामुभयस्य पूर्वप्रतिपन्नप्रतिपद्यमानरूपस्यैकेन्द्रियेष्वन्तर्भाव इति सिद्धान्तमतम्। तदिह नाश्रितमिति 'नेगिंदिसु सासाणोत्ति' ति स्वयमेव वक्ष्यति। 'सन्निअपज्जत्ते' त्ति अत्र मिथ्यादृष्टिसास्वादने पूर्ववत्, अविरतसम्यग्दृष्टिगुणस्थानसद्भावस्तु कस्यचिदप्रतिपतितसम्यक्त्वस्य करणापर्याप्तसंज्ञिषूत्पद्यमानस्य। 'सव्वे सन्नि' त्ति सर्वाणि चतुर्दशाऽपि संज्ञिनि पर्याप्ते प्राप्यन्ते, नानाजीवानपेक्ष्य सयोगिनि च संज्ञीति व्यवहारो द्रव्यमनोऽपेक्षया, अयोगिनि तु भूतपूर्वमनो-ऽपेक्षया। 'सेसे' स्विति उक्तातिरिक्तेषु सप्तसु पर्याप्तापर्याप्ते सूक्ष्मैकेन्द्रिये बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु तु पर्याप्तेष्वित्यर्थ ॥४-५॥

अथैतेष्वेव जीवस्थानेषु [प्र]योगान्योजयन्नाह—

जोगा छसु अप्पज्जत्तएसु कम्मइगउरलमिस्सा दो।
वेउव्वियमीसजुया सन्निअपज्जत्तए तिन्नि ॥६॥

(यशो०) षट्सु अपर्याप्तेषु (अ)पर्याप्तसंज्ञिपञ्चेन्द्रियवर्जेषु योगौ कार्मणौदारिकमिश्रौ। तत्रैतेषामृजुगतिविग्रहग[तिउ](त्यु)त्पत्तिप्रथमसमयवर्तिनां कार्मणकाययोगः। उत्पत्तिप्रथमसमयादपरसमयगतानां पर्याप्तिरसमर्थयमानानामौदारिकं मिश्रं कार्मणेन यत्र तत्तथा, तद्भवति। तावेव पूर्वोक्तौ वैक्रियं मिश्रं कार्मणेन यत्र तत्तथा, तेन युतौ सहिताविति त्रयो योगाः संज्ञिन्यपर्याप्ते भवन्ति। तत्र वैक्रियमिश्रयोगोऽस्य देवनारकेषूत्पद्यमानस्य बोद्धव्यः ॥६॥

अथाद्यार्द्धेन मतान्तरमाह—

बिंति अपज्जत्ताण वि तणुपज्जत्ताण केइ ओरालं।

(यशो.)इह सूत्रकृदङ्गस्य द्वितीयश्रुतस्कन्धे आहारपरिज्ञाख्यतृतीयाध्ययने'ओयाहारा जीवा सव्वे अपज्जत्तगो'ति निर्युक्तिगाथायां १८ प्रकारस्तु इन्द्रियादिभिः पर्याप्तिभिः पर्याप्तकः केवा-

णमय्यालम्ब्य च मुञ्चति, सोच्छ्‌वासपर्याप्तिः। इयमुच्छ्‌वासनाम्नो भिन्ना, यत उच्छ्‌वासनामोदयेन जनितामपि सतीमुच्छ्‌वासनलब्धिमुच्छ्‌वासलब्ध्या जन्तुर्व्यापारयितुं समर्थः, नान्यथा। यया भाषा प्रायोग्यं वर्गणाद्रव्यं गृहीत्वा भाषारूपत्वेन परिणमय्यालम्ब्य च मुञ्चति, सा भाषापर्याप्तिः। यया मनःप्रायोग्यं वर्गणाद्रव्यमुपादाय मनस्त्वेन परिणमय्यालम्ब्य च मुञ्चति, सा मनःपर्याप्तिरिति षट्। प्रज्ञापना-व्याख्याप्रज्ञप्त्यादौ त्वन्त्यपर्याप्त्योर्बहुश्रुतिगम्यमुविविक्षयैकत्वविवक्षया पञ्चेति भेदाः। "वेउव्वाहाराणं सरीरअज्जाउपणइगिगसमया। पिहु पण अउमुहुत्ता उरले आहारइगसमये" त्ति-वचनात्, वैक्रियस्याहारकस्य च शरीरपर्याप्तिरान्तर्मौहूर्तिकी, शेषास्तु सामायिकाः। औदारिकस्याहारपर्याप्तिः सामायिका, शेषाः पुनरान्तर्मौहूर्तिक्य इति कालः। प्रज्ञापनायां त्वाहारादि-पर्याप्तीनां युगपदारब्धानां मध्ये आहारपर्याप्तेः समयः, शेषाणां प्रत्येकमन्तर्मुहूर्तम्। सामान्येन निष्पत्तिकाल उक्तः। तत्राद्यानां च तिसृणामेकेन्द्रिया भाषापर्याप्तिसहितानां [कैव](विक)लेन्द्रिया भाषापर्याप्तिसमन्वितानां पञ्चेन्द्रिया इति स्वामिनः। एताश्च पर्याप्तयो विद्यन्ते येषां ते मत्वर्थीयात्प्रत्यये पर्याप्ताः तद्विपरीता अपर्याप्ताः। ते च, ये भवान्तरालवर्त्तिनो विवक्षितभवे च प्रथमोत्पन्नास्त एव वाच्याः, न पुनर्भवारम्भभाविपर्याप्तिसमाप्त्या पर्याप्त्या विशिष्टतीर्थगादयो वैक्रियाद्यारम्भादिकालवर्त्तिनः, सत्यामपि वैक्रियाद्यपेक्षया पर्याप्त्यसमाप्तौ तेषामपर्याप्तत्वेन सैद्धान्तिकैरपरिभाषितत्वात्। ततश्च सूक्ष्मबादरैकेन्द्रिया द्वीन्द्रियादयः संज्ञिपञ्चेन्द्रियान्ताः प्रत्येकमपर्याप्तपर्याप्तभेदभाजः क्रमेणेति। सूक्ष्मत्वस्य सर्वप्राणिनां मूलस्थानत्वेन प्रथमं सूक्ष्मास्ततो यथोत्तरं प्रवर्द्धमानकर्म्मक्षयोपशमपात्रत्वेन बादराद्याः संज्ञिपञ्चेन्द्रियान्ता निर्देश्याः, त एव चापर्याप्तत्वपूर्वकत्वाद्विवक्षितभवे पर्याप्तत्वस्य पर्याप्तेभ्यःप्रथममपर्याप्ता इत्यनेनैव क्रमेण। "जियट्ठाणे"ति प्राकृतत्वात्पुंसा निर्देशः। एवमन्यत्रापि लिङ्गव्यत्ययादि तत्र तत्र द्रष्टव्यम्। जीवन्ति जीविष्यन्ति जीवितवन्त इति जीवास्तिष्ठन्ति जीवास्तत्कर्मपारतन्त्र्यादेष्विति स्थानानि= स्वरूपभेदाः, जीवानां स्थानानि मन्तव्यानीति शेषः। अत्र सामर्थ्यादेव चतुर्दशत्वे लब्धे चतुर्दशेति न्यूनाधिकसंख्याव्यवच्छेदार्थमिति ॥३॥

संप्रति जीवस्थानेषु गुणस्थानानि संबन्धपुरस्सरं गाथायुगेनाह—

सव्वभणियव्वमूलेसु तेसु गुणठाणगाइ ता भणिमो।
पढमगुणा दो बायरबितिचउरअसन्निअपजत्ते ॥ ४ ॥
सन्निअपज्जत्ते मिच्छदिट्ठिसासाणअविरया तिन्नि।
सव्वे सन्निपजत्ते मिच्छं सेसेसु सत्तसु वि ॥ ५ ॥

(यशो०) इह प्रकरणे सर्वेषां भणनार्हाणां गुणस्थानादीनामाद्येषु "तेस्वि"ति तेषु जीवस्थानेषु

गुणस्थानान्यादिः=प्रथमं यस्य योगादिस्थानसप्तकस्य तत्तथा, तावच्छब्दः क्रमार्थः । ततो जीवस्थानेषु गुणस्थानानि ततो योगास्तत उपयोगा इत्यादि । 'बायरे' ति सूचकत्वात्सूत्रस्य बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियासंज्ञिपञ्चेन्द्रिया इति दृश्यम् । तच्च समाहारद्वन्द्वाश्रयणाल्लुप्तसप्तम्येकवचनान्तम् । एवमन्यत्रापि । एकादश समुदायव्यपदेशविभक्तिलोपावभ्यूह्यौ । ततश्च बादरादिष्वसंज्ञिपर्यवसानेष्वपर्याप्तेषु पञ्चसु 'पढमगुणे' त्ति प्रथमे मिथ्यात्वसास्वादनरूपे गुणस्थाने भवतः । तत्र प्रथमगुणस्थानमेतेषु प्रतीतम् . द्वितीयं तु करणापर्याप्तबादरैकेन्द्रियादिषु बद्धायुषः संज्ञिपञ्चेन्द्रियस्य पर्यन्त औपशमिकसम्यक्त्वमवाप्य तदेव वमतो मिथ्यात्वं चाऽप्राप्नुवतस्तेष्वेवोत्पद्यमानस्य जघन्यतः समयमुत्कृष्टः षडावलिका भवतीति कार्मग्रन्थिकमतम् । यत्तु 'उभवा (या)भावो पुढवाइएसु" इति वचनात्तु सम्यक्त्वश्रुतादिसामायिकानामुभयस्य पूर्वप्रतिपन्नप्रतिपद्यमानरूपस्यैकेन्द्रियेष्वन्तर्भाव इति सिद्धान्तमतम् । तदिह नाश्रितमिति 'नेगिंदिसु सासाणोत्ति' ति स्वयमेव वक्ष्यति । 'सन्निअपज्जत्ते' त्ति अत्र मिथ्यादृष्टिसास्वादने पूर्ववत् , अविरतसम्यग्दृष्टिगुणस्थानसद्भावस्तु कस्यचिदप्रतिपतितसम्यक्त्वस्य करणापर्याप्तसंज्ञिषूत्पद्यमानस्य । 'सव्वे सन्नि'त्ति सर्वाणि चतुर्दशाऽपि संज्ञिनि पर्याप्ते प्राप्यन्ते, नानाजीवानपेक्ष्य सयोगिनि च संज्ञीति व्यवहारो द्रव्यमनोऽपेक्षया, अयोगिनि तु भूतपूर्वमनो-ऽपेक्षया । 'सेसे'स्विति उक्तातिरिक्तेषु सप्तसु पर्याप्तापर्याप्ते सूक्ष्मैकेन्द्रिये बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु तु पर्याप्तेष्वित्यर्थ ॥४-५॥

अथैतेष्वेव जीवस्थानेषु [प्र]योगान्योजयन्नाह—

जोगा छसु अप्पज्जत्तएसु कम्मइगउरलमिस्सा दो ।
वेउव्वियमीसजुया सन्निअपज्जत्तए तिन्नि ॥६॥

(यशो०) षट्सु अपर्याप्तेषु (अ)पर्याप्तसंज्ञिपञ्चेन्द्रियवर्जेषु योगौ कार्मणौदारिकमिश्रौ । तत्रैतेषामृजुगतिविग्रहग[तिउ](त्यु)त्पत्तिप्रथमसमयवर्तिनां कार्मणकाययोगः । उत्पत्तिप्रथमसमयादपरसमयगतानां पर्याप्तीरसमर्थयमानानामौदारिकं मिश्रं कार्मणेन यत्र तत्तथा, तद्भवति । तावेव पूर्वोक्तौ वैक्रियं मिश्रं कार्मणेन यत्र तत्तथा, तेन युतौ सहिताविति त्रयो योगाः संज्ञिन्यपर्याप्ते भवन्ति । तत्र वैक्रियमिश्रयोगोऽस्य देवनारकेषूत्पद्यमानस्य बोद्धव्यः ॥६॥

अथाद्यार्द्धेन मतान्तरमाह—

बिंति अपज्जत्ताण वि तणुपज्जत्ताण केइ ओरालं ।

(यशो.)इह सूत्रकृदङ्गस्य द्वितीयश्रुतस्कन्धे आहारपरिज्ञाख्यतृतीयाध्ययने'ओयाहारा जीव सव्वे अपज्जत्तगे'ति निर्युक्तिगाथायां १८ सकास्तु इन्द्रियादिभिः पर्याप्तिभिः पर्याप्तकाः केषा-

श्चिन्मतेन शरीरपर्याप्त्या वा पर्याप्तका गृह्यन्त" इति विवृत्तिः। ततः शरीरपर्याप्त्यापि पर्याप्ताः पर्याप्ता उच्यन्ते । तेनेन्द्रियादिपर्याप्तीरपेक्ष्याऽपर्याप्तानां शरीरपर्याप्त्या पर्याप्तानामौदारिककाययोगं केचिदाचक्षते । तथा चाऽऽचाराङ्गस्य लोकविषयाख्यद्वितीयाध्ययनप्रथमोद्देशके पञ्चदशभेदमनोवाक्कायलक्षणप्रयोगकर्मविचारे "औदारिककाययोगास्तिर्यग्मनुष्योः शरीरपर्याप्ते-रूर्द्ध्व" मिति विवरणम् । नत्वेवं सुरनारकाणां वैक्रियकाययोगः कथं नेष्यते ? । पर्याप्ता हि द्विधा, लब्धितः करणतश्च । ततस्तत्र [कृताः?]लब्ध्यपर्याप्तानामौदारिकः काययोगो विवक्षितः, लब्ध्यपर्याप्तास्तु देवनारका न भवन्तीति तेषां वैक्रिययोगाऽप्रसङ्गः । करणापर्याप्तानां सुरनार-काणां वैक्रियकाययोगो नरतिरश्चां च औदारिककाययोगो न विवक्षित इति । "बिंति अपज्जत्ताण वि" इत्यौदारिकस्यैवोक्तेरेवानुमीयते । अथवा वैक्रियशरीरिणः शरीरपर्याप्तिरान्त-र्मौहूर्तिकी, शेषाः पञ्च सामायिक्य इति । संज्ञिनोऽपर्याप्तकस्य स्वल्पकालत्वेन वैक्रियं न विवक्षित-मिति । लब्धितः करणतश्च पर्याप्तापर्याप्तयोरयं विशेषः—यः स्वपर्याप्तीरसमाप्य म्रियते स लब्ध्य-पर्याप्तः । स च 'आइतिए न त्थ मपज्जत्तो' इति वचनादाद्यं पर्याप्तित्रिकं समाप्यैव म्रियेत इति दृश्यम् । यस्मादागामिभवायुष्कं बद्ध्वैव म्रियते । तच्च समापिताद्यपर्याप्तित्रिकेणैव बध्यते, यत औदारिकवैक्रियाहारककाययोगे विशिष्टे परभवायुर्बन्धः । तद्विशिष्टता च न शरीर-पर्याप्त्यैव किन्तु शरीरेन्द्रियपर्याप्तिभ्यां पर्याप्तस्य, अन्यथैकेन्द्रियादिव्यपदेशस्याप्यसम्भवप्रसङ्गः । तद्विपरीतो लब्धिपर्याप्तः । यः पुनरुच्छ्वासादिकाः स्वस्वविषयेषु परिणमनं प्रतिसाधकतमत्वेन करणापरपर्यायाः पर्याप्तीर्नाद्यापि पूरयति परं पूरयिष्यति स करणापर्याप्तः । यः पूरितनिजपर्याप्तिः स करणपर्याप्तः । तत्र सुरनारकासंख्यातवर्षायुर्नरतिर्यगुत्तमपुरुषचरिमशरीरिणो लब्धितः पर्याप्ता एव भवन्ति, निरुपक्रमायुष्कत्वेनापर्याप्तदशायां मरणाभावात् । निरुपक्रमसोपक्रमायुष्कता चैवम्—यदा जन्तुः स्वायुषस्त्रिभागे त्रिभागत्रिभागे वा जघन्यत एकेन द्वाभ्यां च, उत्कृष्टतः सप्तभिरष्टाभिर्वाकर्षैरायुःकर्माणुग्रहणरूपैरन्तर्मुहूर्तप्रमाणेन कालेन जीवप्रदेशरचनानाडिकान्त-र्वर्तिनं आयुःकर्म्मवर्गणापुद्गलान्विशिष्टवीर्येण करोति, तदा निरुपक्रमायुर्भवति । अन्यदा तु सोपक्रमायुष्क इत्या-ऽऽचारटीका । आयुषि सप्तभिरष्टाभिर्वाकर्षैर्गवामिव मरुषु जगलं दूषग्रहण-रूपैर्यत्पुद्गलोपादानं तदतिदृढमित्यपवर्त्तयितुमशक्यतया निरुपक्रममुच्यते । यत्तु षड्भिः पञ्चभि-श्चतुर्भिर्वा आगृहीतं दलिकं तदपवर्त्तनाकरणेनोपक्रम्यत इति सोपक्रममिति बृहदुत्तराध्ययनटी-केति । करणतस्त्वमी उभयथापि स्युः ।

अत्र संग्रहगाथाः—

"सो लद्धिअपज्जत्तो जो मरइ अपूरिउं अपज्जत्तो, लद्धिपजत्तो सो पुण जो मरई ताउ पूरित्ता ॥ १ ॥
नज्ञवि पूरेइ परं पूरिस्सइ स इह करणअपजत्तो । सो पुग करणपजत्तो जेणं ता पूरिया हुन्ति ॥ २ ॥
नेरइयसुरासंखाउतिरियनरचरिमतणुपवरपुरिसा । लद्धिपजत्ता नियमा करणेणं हुन्ति दुविहा वि ॥३॥"

इत्यलम् ।

बायरपज्जत्ते तिन्नि उरलवेउव्वियदुगं च ॥ ७॥

(यशो०) बादरपर्याप्तैकेन्द्रियस्य पृथिव्यादेरौदारिककाययोगः । वैक्रियो वैक्रियमिश्रश्च बादरपर्याप्तवायुकायिकं प्रतीत्य । तथाहि—अस्य वैक्रियलब्धिमतो वैक्रियः, वैक्रियारम्भत्यागकालयोरौदारिकेण मिश्रो वैक्रियो वैक्रियमिश्रः, स च योगः प्राप्यते । अत्रौदारिकवैक्रिययोर्मिश्रतायां समायामपि प्रारम्भकाले प्रारभ्यमाणत्वेन त्यागकाले च बहुव्यापारत्वेन वैक्रियस्य प्राधान्याद्वैक्रियमिश्र इति व्यपदेशो, न त्वौदारिकमिश्र इति । 'विउव्वगाहारगे उरलमिस्स' मिति वक्ष्यमाणोक्तेः । अन्ये तु वायोर्वैक्रियारम्भकाले वैक्रियेण मिश्र औदारिकमिश्र इति व्यपदिशन्ति । बहुव्यापारत्वेनौदारिकस्य प्राधान्यविवक्षया ॥७॥

अथाद्यार्द्धेन योगान्समर्थयन् जीवस्थानेष्वेवोपयोगानाह—

उरलं सुहुमे चउसु य भासजुयं पनरसा वि सन्निंमि ।
उवओगा दससु तओ अचक्खुदंसणमनाणदुगं ॥८॥

(यशो०) पज्जत्त' इति प्रागुक्तानुवृत्त्या सूक्ष्मे पर्याप्ते औदारिकः, चतुर्षु च द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु पर्याप्तेषु भाषयाऽसत्यामृषारूपया युक्त औदारिकः, चः पुनरर्थत्वात् संज्ञिनि पर्याप्ते पुनः पञ्चदश चतुर्विधमनश्चतुर्विधवाक्सप्तविधकायरूपा योगाः । तत्र वैक्रियमिश्रो गर्भजतिर्यग्मनुष्ययोर्लब्धिमतो वैक्रियस्याऽऽरम्भकाले त्यागकाले च । लब्धिपर्याप्तस्य च पर्याप्तग्रहणेन ग्रहणादुत्पद्यमानयोरपर्याप्तयोर्देवनारकयोरपि वैक्रियस्यारम्भकाले पर्याप्तयोस्तूभयोरुत्तरवैक्रियारम्भकाले च वैक्रियमिश्रः । आहारकमिश्रस्तु लब्धिमतां संयतानामाहारकस्यारम्भकाले त्यागकाले च मन्तव्यः । अन्ये तु तिर्यग्मनुष्ययोर्वैक्रियस्यारम्भकाले, संयतानामाऽऽहारकस्यारम्भकाले । केचित्तु तयोः त्यागकाले औदारिकमिश्रमिति मन्यन्ते । औदारिकमिश्रस्तु केवलिसमुद्घाते सप्तमषष्ठ-द्वितीयसमयेषु । कार्मणयोगः पुनस्तत्रैव चतुर्थ-पञ्चमतृतीयसमयेषु द्रष्टव्यः । शेषयोगास्तु सुज्ञाना एव । 'तओ' इति त्रय उपयोगा दशसु पर्याप्तापर्याप्तेषु सूक्ष्मबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियेषु अपर्याप्तयोस्तु चतुरिन्द्रियासंज्ञिपञ्चेन्द्रिययोः त्रय इति व्याचष्टे । 'अचक्खुदंसणमनाणदुग' मिति अचक्षुषा=चक्षुर्वर्जेन्द्रियैर्दर्शनं=सामान्यांशग्राही बोधोऽचक्षुर्दर्शनं पर्याप्तेषु इन्द्रियानाश्रितसामान्योपयोगमात्ररूपं चापर्याप्तेषु । अज्ञानद्विकं=मत्यज्ञानश्रुताज्ञानरूपम् । तत्रास्य द्विकस्य द्वीन्द्रियादिषु सद्भावः सूपपादः । एकेन्द्रियेषु स्पर्शनावरणक्षयोपशमसमुत्थाया मतेर्भाषाश्रोत्रेन्द्रियलब्ध्यभावेपि भावेन्द्रियप्रसूतस्यानभिव्यक्तशब्दार्थोल्लेखोपप्लावितोपलब्धिरूपस्य

ब्धिन्मतेन शरीरपर्याप्त्या वा पर्याप्तका गृह्यन्त" इति विवृत्तिः। ततः शरीरपर्याप्त्यापि पर्याप्ताः पर्याप्ता उच्यन्ते । तेनेन्द्रियादिपर्याप्तीरपेक्ष्याऽपर्याप्तानां शरीरपर्याप्त्या पर्याप्तानामौदारिककाययोगं केचिदाचक्षते । तथा चाऽऽचाराङ्गस्य लोकविषयाध्ययद्वितीयाध्ययनप्रथमोद्देशके पञ्चदशभेदमनोवाक्कायलक्षणप्रयोगकर्मविचारे "औदारिककाययोगास्तिर्यग्मनुष्योः शरीरपर्याप्तेरूर्द्ध्व" मिति विवरणम्। नन्वेवं सुरनारकाणां वैक्रियकाययोगः कथं नेष्यते ? । पर्याप्ता हि द्विधा, लब्धितः करणतश्च । ततस्तत्र [कृताः?]लब्ध्यपर्याप्तानामौदारिकः काययोगो विवक्षितः, लब्ध्यपर्याप्तास्तु देवनारका न भवन्तीति तेषां वैक्रिययोगाऽप्रसङ्गः । करणापर्याप्तानां सुरनारकाणां वैक्रियकाययोगो नरतिरश्चां च औदारिककाययोगो न विवक्षित इति । "बिंसि अपज्जत्ताण वि" इत्यौदारिकस्यैवोक्तेरेवानुमीयते । अथवा वैक्रियशरीरिणः शरीरपर्याप्तिरान्तमौहूर्तिकी, शेषाः पञ्च सामायिक्य इति । संज्ञिनोऽपर्याप्तकस्य स्वल्पकालत्वेन वैक्रियं न विवक्षितमिति । लब्धितः करणतश्च पर्याप्तापर्याप्तयोरयं विशेषः—यः स्वपर्याप्तीरसमाप्य म्रियते स लब्ध्यपर्याप्तः । स च 'आइतिए नत्थ अपज्जत्तो' इति वचनादाद्यं पर्याप्तित्रिकं समाप्यैव म्रियेत इति दृश्यम् । यस्मादागामिभवायुष्कं बद्‌ध्वैव म्रियते । तच्च समापिताद्यपर्याप्तित्रिकेणैव बध्यते, यत औदारिकवैक्रियाहारककाययोगे विशिष्टे परभवायुर्बन्धः । तद्विशिष्टता च न शरीरपर्याप्त्यैव किन्तु शरीरेन्द्रियपर्याप्तिभ्यां पर्याप्तस्य, अन्यथैकेन्द्रियादिव्यपदेशस्याप्यभवप्रसङ्गः । तद्विपरीतो लब्धिपर्याप्तः । यः पुनरुच्छ्वासादिकाः स्वस्वविषयेषु परिणमनं प्रतिसाधकतमत्वेन करणापरपर्यायाः पर्याप्तीर्नाद्यापि पूरयति परं पूरयिष्यति स करणापर्याप्तः । यः पूरितनिजपर्याप्तिः स करणपर्याप्तः । तत्र सुरनारकासंख्यातवर्षायुर्नरतिर्यगुत्तमपुरुषचरिमशरीरिणो लब्धितः पर्याप्ता एव भवन्ति, निरूपक्रमायुष्कत्वेनापर्याप्तदशायां मरणाभावात् । निरूपक्रमसोपक्रमायुष्कता चैवम्—यदा जन्तुः स्वायुषस्त्रिभागे त्रिभागत्रिभागे वा जघन्यत एकेन द्वाभ्यां च, उत्कृष्टतः सप्तभिरष्टाभिर्वाकर्षैरायुःकर्माणुग्रहणरूपैरन्तर्मुहूर्तप्रमाणेन कालेन जीवप्रदेशरचनानाडिकान्तर्वर्तिन आयुःकर्म्मवर्ग्गणापुद्गलान्विशिष्टवीर्येण करोति, तदा निरूपक्रमायुर्भवति । अन्यदा तु सोपक्रमायुष्क इत्या-ऽऽचारटीका । आयुषि सप्तभिरष्टाभिर्वाकर्षैर्गवामिव मरुषु जगलं दृषग्रहणरूपैर्यत्पुद्गलोपादानं तदतिदृढमित्यपवर्त्तयितुमशक्यतया निरुपक्रममुच्यते । यत्तु षड्भिः पञ्चभिश्चतुर्भिर्वा आगृहीतं दलिकं तदपवर्त्तनाकरणेनोपक्रम्यत इति सोपक्रममिति बृहदुत्तराध्ययनटीकेति । करणतस्त्वमी उभयथापि स्युः ।

अत्र संग्रहगाथाः—

"सो लद्धिअपज्जत्तो जो मरइ अपूरिउं अपज्जत्तो, लद्धिपजत्तो सो पुण जो मरई ताउ पूरित्ता ॥ १ ॥
नज्जवि पूरेइ परं पूरिस्सइ स इह करणअपजत्तो। सो पुण करणपजत्तो जेणं ता पूरिया हुन्ति ॥ २ ॥
नेरइयसुरासंखाउतिरियनरचरिमतणुपवरपुरिसा । लद्धिपजत्ता नियमा करणेणं हुन्ति दुविहा वि ॥३॥"

इत्यलम् ।

बायरपज्जत्ते तिन्नि उरलवेउव्वियदुगं च ॥ ७ ॥

(यशो०) बादरपर्याप्तैकेन्द्रियस्य पृथिव्यादेरौदारिककाययोगः । वैक्रियो वैक्रियमिश्रश्च बादरपर्याप्तवायुकायिकं प्रतीत्य । तथाहि—अस्य वैक्रियलब्धिमतो वैक्रियः, वैक्रियारम्भत्याग-कालयोरौदारिकेण मिश्रो वैक्रियो वैक्रियमिश्रः, स च योगः प्राप्यते । अत्रौदारिकवैक्रिययोर्मिश्र-तायां समायामपि प्रारम्भकाले प्रारभ्यमाणत्वेन त्यागकाले च बहुव्यापारत्वेन वैक्रियस्य प्राधान्याद्वैक्रियमिश्र इति व्यपदेशो, न त्वौदारिकमिश्र इति । 'विउव्वगाहारगे उरलमिस्स' मिति वक्ष्यमाणोक्तेः । अन्ये तु वायोर्वैक्रियारम्भकाले वैक्रियेण मिश्र औदारिकमिश्र इति व्यप दिशन्ति । बहुव्यापारत्वेनौदारिकस्य प्राधान्यविवक्षया ॥ ॥

अथाद्यार्द्धेन योगान्समर्थयन् जीवस्थानेष्वेवोपयोगानाह—

उरलं सुहुमे चउसु य भासजुयं पनरसा वि सन्निंमि ।
उवओगा दससु तओ अचक्खुदंसणमनाणदुगं ॥८॥

(यशो०) पज्जत्त' इति प्रागुक्तानुवृत्त्या सूक्ष्मे पर्याप्त औदारिकः, चतुर्षु च द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु पर्याप्तेषु भाषयाऽसत्यामृषारूपया युक्त औदारिकः, चः पुनरर्थत्वात् संज्ञिनि पर्याप्ते पुनः पञ्चदश चतुर्विधमनश्चतुर्विधवाक्सप्तविधकायरूपा योगाः । तत्र वैक्रियमिश्रो गर्भजतिर्यग्मनुष्ययोर्लब्धिमतोर्वैक्रियस्याऽऽरम्भकाले त्यागकाले च । लब्धि-पर्याप्तस्य च पर्याप्तग्रहणेन ग्रहणादुत्पद्यमानयोरपर्याप्तयोर्देवनारकयोरपि वैक्रियस्यारम्भकाले पर्याप्तयोस्तूभयोरुत्तरवैक्रियारम्भकाले च वैक्रियमिश्रः । आहारकमिश्रस्तु लब्धिमतां संयतानामाहा-रकस्यारम्भकाले त्यागकाले च मन्तव्यः । अन्ये तु तिर्यग्मनुष्ययोर्वैक्रियस्यारम्भकाले, संयतानामा-ऽऽहारकस्यारम्भकाले । केचित्तु तयोः त्यागकाले औदारिकमिश्रमिति मन्यन्ते । औदारिकमिश्रस्तु केवलिसमुद्घाते सप्तमषष्ठ-द्वितीयसमयेषु । कार्मणयोगः पुनस्तत्रैव चतुर्थ-पञ्चमतृतीयसमयेषु द्रष्टव्यः । शेषयोगास्तु सुज्ञाना एव । 'तओ' इति त्रय उपयोगा दशसु पर्याप्तापर्याप्तेषु सूक्ष्मबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियेषु अपर्याप्तयोस्तु चतुरिन्द्रियासंज्ञिपञ्चेन्द्रिययोः त्रय इति व्याचष्टे । 'अचक्खुदंस-णमनाणदुग' मिति अचक्षुषा=चक्षुर्वर्जेन्द्रियैर्दर्शनं=सामान्यांशग्राही बोधोऽचक्षुर्दर्शनं पर्याप्तेषु इन्द्रियानाश्रितसामान्योपयोगमात्ररूपं चापर्याप्तेषु । अज्ञानद्विकं=मत्यज्ञानश्रुताज्ञानरूपम् । तत्रास्य द्विकस्य द्वीन्द्रियादिषु सद्भावः सूपपादः । एकेन्द्रियेषु स्पर्शनावरणक्षयोपशमसमुत्थाया मतेर्भाषा-श्रोतेन्द्रियलब्ध्यभावेपि भावेन्द्रियप्रसूतस्यानभिव्यक्तशब्दार्थोल्लेखोपप्लावितोपलब्धिरूपस्य

कस्यापि श्रुतस्य च सद्भावः । क्षुद्वेदनीयप्रादुर्भूताहाराभिलापात्मकाहारसंज्ञाया इव मतेः श्रुतस्य च मिथ्यात्वाक्रान्तत्वादज्ञानता ॥ ८ ॥

चक्खुजुया चउरिंदियअसन्नि पज्जत्तएसु ते चउरो ।
मणनाणचक्खुकेवलदुगरहिया सन्निअपजत्ते ॥ ९ ॥

(यशो ) असन्नी'ति लुप्तसप्तमीबहुवचनान्तं पर्याप्तेष्विति प्रत्येकं सम्बध्यते. ततस्ते पूर्वोक्ता-स्त्रयश्चक्षुर्दर्शनयुक्ताश्चत्वारः पर्याप्तेषु चतुरिन्द्रियेष्वसंज्ञिपञ्चेन्द्रियेषु च योगाः । संज्ञिन्यपर्याप्ते पुनरष्टौ । तथाहि-ज्ञानत्रिकमवधिदर्शनं करणापर्याप्तस्याविरतसम्यग्दृशो विभङ्गस्तु मिथ्यादृशः, नवरं मनुष्यस्य विभङ्गस्तिरश्चश्चावधिविभङ्गौ न स्तः, प्रज्ञापनादिषु प्रतिषिद्धत्वात् ; तिर्यक्षु हि विभङ्गावध्योः प्रतिपतितयोरेवोत्पत्तिः, मनुष्येषु तु विभङ्गे प्रतिपतित एव, अवधौ तु सत्यपि तीर्थंकरवत् , मत्यज्ञानं श्रुताज्ञानं च लब्धितः करणतश्चापर्याप्तस्य मिथ्यादृशः, अचक्षुर्दर्शनं लब्धितः करणतश्चापर्याप्तयोः सम्यग्मिथ्यादृशोर्भवतीत्यत एवाह–'मणानाणे'त्यादि ॥ ९ ॥

अथ प्रथमपादेनोपयोगान् समर्थयन् लेश्या दर्शयन्नाह—

सव्वे सन्निसु पत्तो लेसाओ छावि दुविहसन्निंमि ।
चउरो पढमा बायरअपजत्ते तिन्नि सेसेसु ॥१०॥

(यशो०)संज्ञिषु पारिशेष्यात्पर्याप्तेषु सर्वे द्वादश मतिश्रुतावधिमनःपर्ययकेवलज्ञानमत्यज्ञान-श्रुताज्ञानविभङ्गचक्षुरचक्षुरवधिकेवलदर्शनरूपा उपयोगा भवन्ति इति । उपयोगानन्तरं लेश्या वक्ष्यन्त इति शेषः । ताश्च द्विविधे पर्याप्ता-ऽपर्याप्तलक्षणे संज्ञिनि षडपि कृष्णनीलकापोती तेजसीपद्माशुक्लाभिधाः । बादरापर्याप्तलक्षणे जीवस्थाने प्रथमाश्चतस्रस्तिस्रः प्रतीतास्तैजस्यास्तु सद्भावः पुढवीआउवणस्सई'त्यादिवचनाऽविशिष्टत्वेऽपि जघन्यायुर्देवेभ्य ईशानान्तेभ्यश्च्युत्वा जघन्यस्थितिरहितस्थितिकेषु शुभपृथिव्युदकाप्रशस्तपलाशादिशेषप्रशस्तोत्पलादिवनस्पति-ष्वुत्पद्यमाने करणापर्याप्ते । अत्रापि 'प्रथमा' इति सम्बन्ध।त्तिस्रः प्रथमाः शेषेषु=द्विविधसंज्ञिबादरा-पर्याप्तवर्जितेष्वेकादशसु ॥ १० ॥

अथ जीवस्थानेष्वेव बन्धोदयोदीरणासत्ताख्यं स्थानचतुष्टयमाह—

सत्तऽट्ठअट्ठ सत्तऽट्ठ अट्ठ बन्धुदउदीरणासंता ।
तेरसखु जीवठाणेसु सन्निपज्जत्तए ओघो ॥११॥

(यशो०) सप्ताष्टौ च अष्टौ च सप्ताष्टौ च अष्टौ चेति संख्यानि यथाक्रमं 'सन्ते' ति भावप्रधान-त्वान्निर्देशस्य बन्धोदयोदीरणासत्तारूपाणि स्थानानि भवन्तीति

द्राग्वै बन्धस्य, ततो बन्धस्वरूपप्रच्युतेर्हेतुत्वेन बन्धप्रतिपक्षत्वादुदयोदीरणयोः, तत्राप्युदयविशेष एवोदीरणेत्युदयानन्तरमुदीरणायाः, ततो बन्धस्वरूपप्रच्युतेरहेतुत्वेनोदयोदीरणयोः प्रतिपक्षत्वात्सत्तायाः स्थानानीत्ययमेव बन्धादीनां क्रमः। इह च बन्धादीनां प्रत्येकमेकप्रकारत्वेपि सप्ताष्टादिमूलकर्मापेक्षया सप्ताष्टादिसंख्यात्वम्। तत्र ज्ञानावरणदर्शनावरणवेदनीयमोहनीयनामगोत्रान्तरायात्मनां सप्तानामायुर्युक्तानामष्टानां कर्मणां बन्धः, एवमुदीरणापि, उदयसत्ते त्वष्टानामेवेति त्रयोदशसु जीवस्थानेषु। संज्ञिनि तु पर्याप्ते ओघः=सामान्यं बन्धादीनाम्, विशेषन्तु गुणस्थानकविशेषापेक्षया "सत्तट्ठछेगबन्धे" इत्यादिना वक्ष्यति। स चैवं सुखार्थं किञ्चिदिहापि दर्श्यते।

अट्ठेव य सत्ताउगरहिया छम्मोहआउयविउत्ता। सायं एगं एयं चउरो ठाणाणि बन्धस्स ॥ १ ॥
अड सत्त मोहरहिया चउरो वेज्जाउनामगोयाणि। 'वेज्ज'त्ति वेदनीयं। सत्ताए उदएवि ठाणाणि य पत्तेयं ॥२॥
अड सत्त-ऽऽउविणा-ऽणाउवेज्ज छप्पण अमोहवेज्जाऊ दो नामं गोयं तह इय पंच उईरणाट्ठाणा ॥ ३ ॥

'अणाउवेज्ज'त्ति आयुर्वेदनीयरहितानि षट्। बन्धादीनां स्वरूपमिदम्-निरन्तरं पुद्गलपरिपूर्णलोके कर्मवर्गणानुगुणानामणूनामात्मनश्च वह्न्ययस्पिण्डवत्परस्परमभेदेनेव मिथ्यात्वादिहेतुभिः सम्बन्धो बन्धः। तेषामेव यथास्वस्थितिबद्धानां करणविशेषनिर्मिते स्वाभाविके वाऽबाधाकालक्षयरूपे स्थित्यपचये सत्युदयसमयमायातानां विपाकवेदनमुदयः। तेषामेवानागतफलानां करणविशेषनिर्वर्त्तिते स्थित्यपचये सत्युदयाऽऽवलिकायां प्रवेशनमुदीरणा। बन्धसंक्रमाभ्यां लब्धात्मलाभानां कर्मणां निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावे सद्भावः सत्ता।

अत्र संग्रहगाथाः—

जीवस्स पोग्गलाण य जोगाण परोप्परं अभेएणं। मिच्छाइहेउविहिया जा घडणा एत्थ सो बन्धो ॥ १ ॥
करणेण सहावेण च ठियवचए तेसिमुदयपत्ताणं। जं वेयणं विवागेणं सो उदओ जिणाभिहिओ ॥२॥
कम्माणूणं जाए करणविसेसेण ठियवचयभावे। जं उदयावलियाए पवेसणमुदीरणा सेह ॥ ३ ॥
बंधणसंकमलद्धत्तालाहकम्मस्स रूवअविणासे। निज्जरणसंकमेहिं सब्भावो जो य सा सत्ता ॥ ४ ॥

'करणेणं'ति सूचितानि करणान्यमूनि—

बन्धणसंकमणुव्वट्टणा य अववट्टणा उईरणया। उवसामणा निहत्ती निकायणा चत्ति करणाइं ॥ १ ॥

अस्या व्याख्या— बन्धनकरणं बन्ध एव।

पगिइठिइरसपएसाणमन्नकम्मत्तणेण ठवियाणं। जं अन्नकम्मरूवत्तठावणं संकमो एसो ॥ १ ॥
तं उव्वट्टणकरणं जं ठिइरसवुड्ढियवड्ढियपवुत्तं। ठिइरसहस्सीकरणं करणं अवयत्तणं जाणं ॥ २ ॥
उदीरणोक्तैव।

उदयनिहित्तिनिकायणउदीरणाणं अजोग्गयत्तेणं। कम्माणं जं ठावणमुवसमणा सा विणिद्दिट्ठा ॥ ३ ॥
उव्वट्टणापवत्तणियरकरणाजोग्गयाएं कम्माणं। संठावणं निहत्ती निकायणा करणमुवियत्तं ॥ ४ ॥
सर्वकरणायोग्यमित्यर्थः ॥ ११ ॥

कस्यापि श्रुतस्य च सद्भावः । क्षुद्वेदनीयप्रादुर्भूताहाराभिलाषात्मकाहारसंज्ञाया इव मतेः श्रुतस्य च मिथ्यात्वाक्रान्तत्वादज्ञानता ॥ ८ ॥

चक्खुजुया चउरिंदियअसन्नि पज्जत्तएसु ते चउरो ।
मणनाणचक्खुकेवलदुगरहिया सन्निअपजत्ते ॥ ९ ॥

(यशो०) असन्नो'ति लुप्तसप्तमीबहुवचनातं पर्याप्तेष्विति प्रत्येकं सम्बध्यते. ततस्ते पूर्वोक्तास्त्रयश्चक्षुर्दर्शनयुक्ताश्चत्वारः पर्याप्तेषु चतुरिन्द्रियेष्वसंज्ञिपञ्चेन्द्रियेषु च योगाः । संज्ञिन्यपर्याप्ते पुनरष्टौ । तथाहि-ज्ञानत्रिकमवधिदर्शनं करणापर्याप्तस्याविरतसम्यग्दृशो विभङ्गस्तु मिथ्यादृशः, नवरं मनुष्यस्य विभङ्गस्तिरश्चश्चावधिविभङ्गौ न स्तः, प्रज्ञापनादिषु प्रतिषिद्धत्वात्; तिर्यक्षु हि विभङ्गावध्योः प्रतिपतितयोरेवोत्पत्तिः, मनुष्येषु तु विभङ्गे प्रतिपतित एव, अवधौ तु सत्यपि तीर्थकरवत्, मत्यज्ञानं श्रुताज्ञानं च लब्धितः करणतश्चापर्याप्तस्य मिथ्यादृशः, अचक्षुर्दर्शनं लब्धितः करणतश्चापर्याप्तयोः सम्यग्मिथ्यादृशोर्भवतीत्यत एवाह-'मणनाणे'त्यादि ॥ ९ ॥

अथ प्रथमपादेनोपयोगान् समर्थयन् लेश्या दर्शयन्नाह—

सव्वे सन्निसु पत्तो लेसाओ छावि दुविहमन्निंमि ।
चउरो पढमा बायरअपजत्ते तिन्नि सेसेसु ॥१०॥

(यशो०) संज्ञिषु पारिशेष्यात्पर्याप्तेषु सर्वे द्वादश मतिश्रुतावधिमनःपर्ययकेवलज्ञानमत्यज्ञानश्रुताज्ञानविभङ्गचक्षुरचक्षुरवधिकेवलदर्शनरूपा उपयोगा भवन्ति इति । उपयोगानन्तरं लेश्या वक्ष्यन्त इति शेषः । ताश्च द्विविधे पर्याप्ता-ऽपर्याप्तलक्षणे संज्ञिनि षडपि कृष्णनीलकापोतीतेजसीपद्माशुक्लाभिधाः । बादरापर्याप्तलक्षणे जीवस्थाने प्रथमाश्चतस्रस्तिस्रः प्रतीतास्तैजस्यास्तु सद्भावः पुढवीआउवणस्सई'त्यादिवचनाऽविशिष्टत्वेऽपि जघन्यायुर्देवस्य ईशानान्तेभ्यश्च्युत्वा जघन्यस्थितिरहितस्थितिकेषु शुभपृथिव्युदकाप्रशस्तपलाशादिशेषप्रशस्तोत्पलादिवनस्पतिषूत्पद्यमाने करणापर्याप्ते । अत्रापि 'प्रथमा' इति सम्बन्धः तिस्रः प्रथमाः शेषेषु=द्विविधसंज्ञिबादरापर्याप्तवर्जितेष्वेकादशसु ॥ १० ॥

अथ जीवस्थानेष्वेव बन्धोदयोदीरणासत्ताख्यं स्थानचतुष्टयमाह—

सत्तऽट्ठअट्ठ सत्तऽट्ठ अट्ठ बन्धुदउदीरणासंता ।
तेरमसु जीवठाणेसु सन्निपज्जत्तए ओघो ॥११॥

(यशो०) सप्ताष्टौ च अष्टौ च सप्ताष्टौ च अष्टौ चेति संख्यानि यथाक्रमं 'सन्ते' सि भावप्रधानत्वान्निर्देशस्य बन्धोदयोदीरणासत्तारूपाणि स्थानानि भवन्तीति शेषः । उदयादीनां बन्धाधीनत्वा-

दादौ बन्धस्य, ततो बन्धस्वरूपप्रच्युतेर्हेतुत्वेन बन्धप्रतिपक्षत्वादुदयोदीरणयोः, तत्राप्युदयविशेष एवोदीरणेत्युदयानन्तरमुदीरणायाः, ततो बन्धस्वरूपप्रच्युतेरहेतुत्वेनोदयोदीरणयोः प्रतिपक्षत्वात्सत्तायाः स्थानानीत्ययमेव बन्धादीनां क्रमः। इह च बन्धादीनां प्रत्येकमेकप्रकारत्वेपि सप्ताष्टादिमूलकर्मापेक्षया सप्ताष्टादिसंख्यात्वम्। तत्र ज्ञानावरणदर्शनावरणवेदनीयमोहनीयनामगोत्रान्तरायात्मनां सप्तानामायुर्युक्तानामष्टानां कर्मणां बन्धः, एवमुदीरणापि, उदयसत्ते त्वष्टानामेवेति त्रयोदशसु जीवस्थानेषु। संज्ञिनि तु पर्याप्त ओघः=सामान्यं बन्धादीनाम्, विशेषन्तु गुणस्थानकविशेषापेक्षया "सत्तट्ठछेगबन्धे" इत्यादिना वक्ष्यति। स चैवं सुखार्थं किञ्चिदिहापि दर्श्यते।

अट्ठेव य सत्ताउगरहिया छम्मोहआउयविउत्ता। सायं एगं एयं चउरो ठाणाणि बन्धस्स ॥ १ ॥
अड सत्त मोहरहिया चउरो वेज्जाउनामगोयाणि। 'वेज्ज'ति वेदनीयं। सत्ताए उदएवि ठाणाणि य पत्तेयं ॥२॥
अड सत्ता-ऽऽउविणा-ऽणाउवेज्ज छप्पण अमोहविज्जाऊ दो नामं गोयं तह इय पंच उईरणाट्ठाणा ॥ ३ ॥

'अणाउवेज्ज'त्ति आयुर्वेदनीयरहितानि षट्। बन्धादीनां स्वरूपमिदम्-निरन्तरं पुद्गलपरिपूर्णलोके कर्मवर्गणानुगुणानामणूनामात्मनश्च वह्न्ययस्पिण्डवत्परस्परमभेदेनेव मिथ्यात्वादिहेतुभिः सम्बन्धो बन्धः। तेषामेव यथास्वस्थितिबद्धानां करणविशेषनिर्मिते स्वाभाविके वाऽबाधाकालक्षयरूपे स्थित्यपचये सत्युदयसमयमायातानां विपाकवेदनमुदयः। तेषामेवानागतफलानां करणविशेषनिर्वर्त्तिते स्थित्यपचये सत्युदयाऽऽवलिकायां प्रवेशनमुदीरणा। बन्धसंक्रमाभ्यां लब्धात्मलाभानां कर्मणां निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावे सद्भावः सत्ता।

अत्र संग्रहगाथाः—

जीवस्स पोग्गलाण य जोगाण परोप्परं अभेएणं। मिच्छाइहेउविहिया जा घडणा एत्थ सो बन्धो ॥ १ ॥
करणेण सहावेण च ठियवचए तेसिमुदयपत्ताणं। जं वेयणं विवागेणं सो उदओ जिणाभिहिओ ॥२॥
कम्माणूणं जाए करणविसेसेण ठियवचयभावे। जं उदयावलियाए पवेसणमुदीरणा सेह ॥ ३ ॥
बंधणसंकमलद्धत्तलाहकम्मस्स रूवअविणासे। निज्जरणसंकमेहिं सब्भावो जो य सा सत्ता ॥ ४ ॥

'करणेणं'ति सूचितानि करणान्यमूनि—

बन्धणसंकमणुव्वट्टणा य अववट्टणा उईरणया। उवसामणा निहत्ती निकायणा चत्ति करणाइं ॥ १ ॥

अस्या व्याख्या— बन्धनकरणं बन्ध एव।

पगिइठिइरसपएसाणमन्नकम्मत्तणेण ठवियाणं। जं अन्नकम्मरूवत्तठावणं संकमो एसो ॥ १ ॥
सं उव्वट्टणकरणं जं ठिइरसवुड्ढियपवियपकुणं। ठिइरसहस्सीकरणं करणं अववत्तणं जाणं ॥ २ ॥

उदीरणोक्तैव।

उदयनिहत्तिनिकायणउदीरणाणं अजोग्गयत्तेणं। कम्माणं जं ठावणमुवसमणा सा विणिदिट्ठा ॥ ३ ॥
उव्वट्टणापवत्तणियरकरणाजोग्गयाए कम्माणं। संठावणं निहत्ती निकायणा करणगुवियत्तं ॥ ४ ॥
सर्वकरणायोग्यमित्यर्थः ॥ ११ ॥

कस्यापि श्रुतस्य च सद्भावः। क्षुद्वेदनीयप्रादुर्भूताहाराभिलाषात्मकाहारसंज्ञाया इव मतेः श्रुतस्य च मिथ्यात्वाक्रान्तत्वादज्ञानता ॥ ८ ॥

चक्खुजुया चउरिंदियअसन्नि पज्जत्तएसु ते चउरो।
मणनाणचक्खुकेवलदुगरहिया सन्निअपजत्ते ॥ ९ ॥

(यशो०) असन्नी'ति लुप्तसप्तमीबहुवचनात् पर्याप्तेष्विति प्रत्येकं सम्बध्यते. ततस्ते पूर्वोक्तास्त्रयश्चक्षुर्दर्शनयुक्ताश्चत्वारः पर्याप्तेषु चतुरिन्द्रियेष्वसंज्ञिपञ्चेन्द्रियेषु च योगाः। संज्ञिन्यपर्याप्ते पुनरष्टौ। तथाहि-ज्ञानत्रिकमवधिदर्शनं करणापर्याप्तस्याविरतसम्यग्दृशो विभङ्गस्तु मिथ्यादृशः, नवरं मनुष्यस्य विभङ्गस्तिरश्चश्चावधिविभङ्गौ न स्तः, प्रज्ञापनादिषु प्रतिषिद्धत्वात्; तिर्यक्षु हि विभङ्गावध्योः प्रतिपतितयोरेवोत्पत्तिः, मनुष्येषु तु विभङ्गे प्रतिपतित एव, अवधौ तु सत्यपि तीर्थकरवत्, मत्यज्ञानं श्रुताज्ञानं च लब्धितः करणतश्चापर्याप्तस्य मिथ्यादृशः, अचक्षुर्दर्शनं लब्धितः करणतश्चापर्याप्तयोः सम्यग्मिथ्यादृशोर्भवतीत्यत एवाह-'मणनाणे'त्यादि ॥ ९ ॥

अथ प्रथमपादेनोपयोगान् समर्थयन् लेश्या दर्शयन्नाह—

सव्वे सन्निसु पत्तो लेसाओ छावि दुविहसन्निंमि।
चउरो पढमा बायरअपजत्ते तिन्नि सेसेसु ॥१०॥

(यशो०)संज्ञिषु पारिशेष्यात्पर्याप्तेषु सर्वे द्वादश मतिश्रुतावधिमनःपर्ययकेवलज्ञानमत्यज्ञान-श्रुताज्ञानविभङ्गचक्षुरचक्षुरवधिकेवलदर्शनरूपा उपयोगा भवन्ति इति। उपयोगानन्तरं लेश्या वक्ष्यन्त इति शेषः। ताश्च द्विविधे पर्याप्ता-ऽपर्याप्तलक्षणे संज्ञिनि षडपि कृष्णनीलकापोती तेजसीपद्माशुक्लाभिधाः। बादरापर्याप्तलक्षणे जीवस्थाने प्रथमाश्चतस्रस्तिस्रः प्रतीतास्तैजस्यास्तु सद्भावः पुढवीआउवणस्सई'त्यादिवचनाऽविशिष्टत्वेऽपि जघन्यायुर्देवेभ्य ईशानान्तेभ्यश्च्युत्वा जघन्यस्थितिरहितस्थितिकेषु शुभपृथिव्युदकाप्रशस्तपलाशादिशेषप्रशस्तोत्पलादिवनस्पति-षूत्पद्यमाने करणापर्याप्ते। अत्रापि 'प्रथमा' इति सम्बन्धात्तिस्रः प्रथमाः शेषेषु=द्विविधसंज्ञिबादरा-पर्याप्तवर्जितेष्वेकादशसु ॥ १० ॥

अथ जीवस्थानेष्वेव बन्धोदयोदीरणासत्ताख्यं स्थानचतुष्टयमाह—

सत्तऽट्ठअट्ठ सत्तऽट्ठ अट्ठ बन्धुदउदीरणासंता।
तेरससु जीवठाणेसु सन्निपज्जत्तए ओघो ॥११॥

(यशो०) सप्ताष्टौ च अष्टौ च सप्ताष्टौ च अष्टौ चेति संख्यानि यथाक्रमं 'सन्ते' ति भावप्रधानत्वान्निर्देशस्य बन्धोदयोदीरणासत्तारूपाणि स्थानानि भवन्तीति शेषः। उदयादीनां बन्धाधीनत्वा-

संज्ञिपञ्चेन्द्रियाश्च मीनमहिष्याद्यस्तिर्यञ्चः । निरयाः=नरकावासास्तत्रोत्पन्ना अपि जन्तवो निरयाः । सुरनरादिषु विषये गतिः सुरनरादिशब्दव्यपदेश्यपर्यायनिबन्धनम् । अत्र प्रायः प्रकृष्टसुखस्य च्यवनेर्ष्याविषादादेरीषदसुखस्य चाऽऽधारतया प्रथमं सुराणाम्, प्रायोल्पसुखस्य बहोर्बन्ध-वध-परिभव-गर्भोत्पत्ति-जरा-रुगादेरसुखस्य चाऽऽधारतया तदनु नराणाम्, प्रायोल्पसुखस्य बहुतरस्य शीतवातातपपारतन्त्र्यादेरसुखस्य चाऽऽस्पदतया ततस्तिरश्चाम्, परमाधार्मिकपरस्परोदीरणक्षेत्रप्रत्ययबहुतमकेवलासुखनिकेतनतया तदनन्तरं नारकाणां गतिरुक्ता । सर्वदेवातितीव्राज्ञानोदयाद्याधारतया प्रागेकेन्द्रियास्तदपेक्षयोत्तरोत्तरविशिष्टक्षयोपशमसमर्प्पिताधिकाधिककरणोपबृंहितज्ञानभाक्त्वेन क्रमेण द्वीन्द्रियाद्याः पञ्चेन्द्रियान्ता निर्दिष्टाः । एकेन्द्रियादिव्यपदेशश्चामीषां यथोत्तरं प्रवर्द्धमानमतिज्ञानावरणक्षयोपशमाविर्भूतस्यैकेन्द्रियादिजातिनामकर्मोदयनियमितक्रमस्य पर्याप्तकनामकर्मादिसामर्थ्यसिद्धस्य द्रव्यभावरूपस्पर्शनादेरेकद्वयादीन्द्रियस्य भाजनत्वात् । प्रायोवादीनां चरणस्खलनादिक्षमाशिथिलावयवतया प्रथमं पृथिवीकायस्य, ततः शिथिलावयवतया तद्विपक्षस्या-ऽप्कायस्य, ततस्तद्विरोधित्वेन तेजस्कायस्य, ततस्तदुपबृंहकत्वेन वायोस्ततस्तत्सादुगुण्यवैगुण्यानुसारेणीवनस्पतेः सादुगुण्यवैगुण्य इति वनस्पतिकायस्याथ शकलपृथिवीकायाद्युपभोगयोग्यत्वेन त्रसकायस्य निर्देशः ॥१३॥

**मणवयकाया जोगा इत्थी पुरिसो नपुंसगो वेया ।**
**कोहो माणो माया लोभो चउरो कसायत्ति ॥१४॥**

(यशो०) काययोगेन मनोयोग्यवर्गणाभ्यो गृहीत्वा मनोरूपेण परिणमितानि वस्तुचिन्ताप्रवर्त्तकानि द्रव्याणि मन इत्युच्यते । तेन सहकारिणा तद्विषयो वा योगो मनोयोगः । उच्यत इति वाक्=भाषापरिणतिमापन्नः पुद्गलसमूहस्तया सहकारिण्या तद्विषयो वा योगो वाग्योगः । चीयत इति काय औदारिकादिस्तेन सहकारिणा तद्विषयो वा योगः काययोगः । तत्र स्तोकाधारतया प्रथमं मनोयोगस्य, तदपेक्षया बह्वाश्रयतया वाग्योगस्य, तदपेक्षयाऽतिबह्वाश्रयतया तत्पृष्ठे काययोगस्योपन्यासः । यदुदये स्त्रियाः पुंस्यभिलाषः स फुंफकाग्निसमानः स्त्रीवेदः । यदुदये पुंसः स्त्रियामभिलाप[स्त्रि](स्तृ)णाग्निज्वालातुल्यः स पुंवेदः । यदुदये नपुंसकस्य स्त्रीपुंसयोरभिलाषः स महानगरदवाग्निसमो नपुंसकवेदः । तत्र पुरुषवेदापेक्षया बह्वाश्रितत्वादादौ स्त्रीवेदः, ततः पुरुषवेदः, स्त्री-पुरुषोभयाभिलाषित्वेनातिसंक्लिष्टतया तयोरन्ते नपुंसकवेदः । क्रोधो=ऽक्षान्तिस्वरूपो मानो=गर्व्वो जात्याद्युद्भवममार्दवं माया=वञ्चनात्मिका परिणतिर्लोभो=ऽसंतोषात्मको गार्ध्यपरिणामः सर्वानुगामित्वादादौ क्रोधस्य, तदनु-

१ "बहु" इत्यपि पाठः ।

जीवस्थानेषु गुणस्थानादीन्यष्टौ पदान्युक्तानि जीवस्थानगुणस्थानादीनामन्वेषणा-रूपाया मार्गणायाः स्थानानि मार्गणास्थानानि मूलभेदापेक्षया चतुर्दशसंख्यान्याह—

**एत्तो गइइंदियकायजोयवेए कसायनाणे य ।**
**संजमदंसणलेसा भवसम्मे सन्निआहारे ॥१२॥**

(यशो०) एत्तो=जीवस्थानाद्यनन्तरम्, अत्र गतयश्चेन्द्रियाणि चेत्यादिः 'सुरनरतिरिनरयगई' इत्यादिविभागानुसारेण विग्रहे यथासम्भवं समाहारद्वन्द्वः, एत्वन्तु सर्वत्र प्राकृतप्रभवम् । तत्र गम्यन्ते स्वपरिणामनिर्मितकर्म्मपाशावबद्धैर्जन्तुभिरिति गतयः । इन्द्रस्याऽऽत्मनो लिङ्गानीन्द्रियाणि । अत्राश्रितेनेन्द्रियेणाश्रयमुपलक्षयता इन्द्रियवन्त उक्ता भवन्ति, तथा च 'इगबिती' त्यादिना विभागेन सद्भाविरोधः । एवमन्यत्रापि यथासम्भवं व्याख्येयम् । चीयन्त इति कायाः पृथिव्यादयः । कायशब्दश्चात्र शरीर इव पृथिव्यादिजीवनिचये वर्त्तते, चयसाधर्म्यात् । युज्यते= धावनादिक्रियासु व्यापार्यते जीव एभिरिति, युज्यन्ते=संबध्यन्ते धावनादिक्रियया ऽसुमन्त एभिरिति वा योगाः । वेद्यन्ते=अद्यमिलापोत्पादकत्वेनानुभूयन्त इति वेदाश्चारित्रमोहनीयान्तर्गतकर्मदलिकनिकायविशेषाः । कृष्यन्ते=नरकादिस्थानेषु देहिनोऽनेनेति कषं=कर्म, कष्यन्ते प्राणिनः परस्परमस्मिन्निति कषः=संसारो वा, तदेव, स एव वा, आयो=लाभो येभ्य इति वा, कषमयन्ते=गच्छन्त्येभिरिति वा कषायाः । ज्ञायन्ते=निर्णीयन्ते सामान्यविशेषात्मकानि वस्तूनि विशेषरूपत्वेनैभिरिति ज्ञानानि । सं=सम्यग् यम्यते=निवर्त्यते जन्तुर्जन्तुघातादिभ्य एभिरिति संयमाः । दृश्यते सामान्यविशेषात्मकसितं वस्तुसामान्यरूपतयैभिरिति दर्शनानि । लिश्यति= श्लिष्यति कर्मणा प्राणी आभिरिति लेश्याः=सकलकर्मनिस्यन्दभूतकृष्णनीलादिद्रव्यसचिवस्य जीवस्य शुभा अशुभाश्च परिणामविशेषाः । मुक्तिपर्यायेण भविष्यन्तीति त्रैकालिकेऽप्यत्यये भवाः=भव्याः । जीवादितत्त्वश्रद्धानेन सम्यगञ्चन्ति=प्रवर्तन्ते सम्यञ्चः=सम्यग्दृष्टयस्तेषां भावाः=सम्यक्त्वानि=जीवादितत्त्वश्रद्धानपरिणामाः । इदं कृतमिदं करोमीदं करिष्यामीत्यादिदीर्घकालत्रयविषयविशिष्टमनोव्यापारवती दीर्घकालिक्यभिधाना संज्ञाऽस्याऽस्तीति संज्ञी । ओजोलोमप्रक्षेपभेदात् त्रिविधमाहारं यथासम्भवमाहारयन्तीत्याहारकाः ॥१२॥

**सुरनरतिरिनरयगई [1]इगबितिचउरिंदिया य [2]पंचेंदी ।**
**पुढवी आऊ तेऊ वाऊ वणसइतसा काया ॥१३॥**

(यशो०) उत्तानार्था । नवरं भवनपतिव्यन्तरज्योतिष्कवैमानिकस्वरूपाः सुराः । सम्मूर्च्छिमा गर्भजाश्च प्रतीता नराः । एकद्वित्रिचतुरिन्द्रियाः सम्मूर्च्छजमनुष्यव्यतिरिक्ता असंज्ञिपञ्चेन्द्रियाः

---

१ "बइ" इत्यपि पाठः । २ "पंचिंदि" इत्यपि ।

जीवस्थानेषु गुणस्थानादीन्यष्टौ पदान्युक्तानि जीवस्थानगुणस्थानादीनामन्वेषणारूपाया मार्ग्गणायाः स्थानानि मार्ग्गणास्थानानि मूलभेदापेक्षया चतुर्दशसंख्यान्याह—

एत्तो गइइंदियकायजोयवेए कसायनाणे य।
संजमदंसणलेसा भवसम्मे सन्निआहारे ॥१२॥

(यशो०) एत्तो=जीवस्थानाद्यनन्तरम्, अत्र गतयश्चेन्द्रियाणि चेत्यादिः 'सुरनरतिरिनरयगई' इत्यादिविभागानुसारेण विग्रहे यथासम्भवं समाहारद्वन्द्वः, एत्वन्तु सर्वत्र प्राकृतप्रभवम्। तत्र गम्यन्ते स्वपरिणामनिर्मितकर्म्मपाशावनद्धैर्जन्तुभिरिति गतयः। इन्द्रस्याऽऽत्मनो लिङ्गानीन्द्रियाणि। अत्राश्रितेनेन्द्रियेणाश्रयमुपलक्षयता इन्द्रियवन्त उक्ता भवन्ति, तथा च 'इगबिती' त्यादिना विभागेन सद्भाविरोधः। एवमन्यत्रापि यथासम्भवं व्याख्येयम्। चीयन्त इति कायाः पृथिव्यादयः। कायशब्दश्चात्र शरीर इव पृथिव्यादिजीवनिचये वर्त्तते, चयसाधर्म्यात्। युज्यते=धावनादिक्रियासु व्यापार्यते जीव एभिरिति, युज्यन्ते=संबध्यन्ते धावनादिक्रिययाऽसुमन्त एभिरिति वा योगाः। वेद्यन्ते=आद्यभिलापोत्पादकत्वेनानुभूयन्त इति वेदाश्चारित्रमोहनीयान्तर्गतकर्मदलिकनिकायविशेषाः। कष्यन्ते=नरकादिस्थानेषु देहिनोऽनेनेति कषं=कर्म, कष्यन्ते प्राणिनः परस्परमस्मिन्निति कषः=संसारो वा, तदेव, स एव वा, आयो=लाभो येभ्य इति वा, कषमयन्ते=गच्छन्त्येभिरिति वा कषायाः। ज्ञायन्ते=निर्णीयन्ते सामान्यविशेषात्मकानि वस्तूनि विशेषरूपत्वेनैभिरिति ज्ञानानि। सं=सम्यग् यम्यते=निवर्त्यते जन्तुर्जन्तुघातादिभ्य एभिरिति संयमाः। दृश्यते सामान्यविशेषाभ्यासितं वस्तुसामान्यरूपतयैभिरिति दर्शनानि। लिश्यति=श्लिष्यति कर्मणा प्राणी आभिरिति लेश्याः=सकलकर्मनिस्यन्दभूतकृष्णनीलादिद्रव्यसचिवस्य जीवस्य शुभा अशुभाश्च परिणामविशेषाः। मुक्तिपर्यायेण भविष्यन्तीति त्रैकालिकेऽर्थप्रत्यये भवाः=भव्याः। जीवादितत्त्वश्रद्धानेन सम्यगञ्चन्ति=प्रवर्तन्ते सम्यञ्चः=सम्यग्दृशस्तेषां भावाः=सम्यक्त्वानि=जीवादितत्त्वश्रद्धानपरिणामाः। इदं कृतमिदं करोमीदं करिष्यामीत्यादिदीर्घकालत्रयविषयविशिष्टमनोव्यापारवती दीर्घकालिक्यभिधाना संज्ञाऽस्याऽस्तीति संज्ञी। ओजोलोमप्रक्षेपभेदात् त्रिविधमाहारं यथासम्भवमाहारयन्तीत्याहारकाः ॥१२॥

सुरनरतिरिनरयगई [1]इगबितिचउरिंदिया य [2]पंचेंदी।
पुढवी आऊ तेऊ वाऊ वणसइतसा काया ॥१३॥

(यशो०) उत्तानार्था। नवरं भवनपतिव्यन्तरज्योतिष्कवैमानिकस्वरूपाः सुराः। सम्मूर्च्छिमा गर्भजाश्च प्रतीता नराः। एकद्वित्रिचतुरिन्द्रियाः सम्मूर्च्छजमनुष्यव्यतिरिक्ता असंज्ञिपञ्चेन्द्रियाः

---

१ "मइ" इत्यपि पाठः। २ "पंचिंदि" इत्यपि।

संज्ञिपञ्चेन्द्रियाश्च मीनमहिष्यादयस्तिर्यञ्चः । निरयाः=नरकावासास्तत्रोत्पन्ना अपि जन्तवो निरयाः । सुरनरादिषु विषये गतिः सुरनरादिशब्दव्यपदेश्यपर्यायनिबन्धनम् । अत्र प्रायः प्रकृष्टसुखस्य च्यवनेर्ष्याविषादादेरीषदसुखस्य चाऽऽधारतया प्रथमं सुराणाम् , प्रायोऽल्पसुखस्य बहोर्बन्ध-वध-परिभव-गर्भोत्पत्ति-जरा-रुगादेरसुखस्य चाऽऽधारतया तदनु नराणाम्, प्रायोऽल्पसुखस्य बहुतरस्य शीतवातातपपारतन्त्र्यादेरसुखस्य चाऽऽस्पदतया ततस्तिरश्चाम् , परमाधार्मिकपरस्परोदीरणक्षेत्रप्रत्ययबहुतमकेवलासुखनिकेतनतया तदनन्तरं नारकाणां गतिरुक्ता । सर्वदेवातितीव्राज्ञानोदयाद्याधारतया प्रागेकेन्द्रियास्तदपेक्षयोत्तरोत्तरविशिष्टक्षयोपशमसमर्पिताधिकाधिककरणोपबृंहितज्ञानभाक्त्वेन क्रमेण द्वीन्द्रियाद्याः पञ्चेन्द्रियान्ता निर्दिष्टाः । एकेन्द्रियादिव्यपदेशश्चामीषां यथोत्तरं प्रवर्द्धमानमतिज्ञानावरणक्षयोपशमाविर्भूतस्यैकेन्द्रियादिजातिनामकर्मोदयनियमितक्रमस्य पर्याप्तकनामकर्मादिसामर्थ्यसिद्धस्य द्रव्यभावरूपस्पर्शनादेरेकद्व्यादीन्द्रियस्य भाजनत्वात् । प्रायोवादीनां चरणस्खलनादिक्षमाशिथिलावयवतया प्रथमं पृथिवीकायस्य, ततः शिथिलावयवतया तद्विपक्षस्या-ऽप्कायस्य, ततस्तद्विरोधित्वेन तेजस्कायस्य, ततस्तदुपबृंहकत्वेन वायोस्ततस्तत्साद्गुण्यवैगुण्यानुसारिणीवनस्पतेः साद्गुण्यवैगुण्य इति वनस्पतिकायस्याथ शकलपृथिवीकायाद्युपभोगयोग्यत्वेन त्रसकायस्य निर्देशः ॥१३॥

**मणवयकाया जोगा इत्थी पुरिसो नपुंसगो वेया ।**
**कोहो माणो माया लोभो चउरो कसायत्ति ॥१४॥**

(यशो०) काययोगेन मनोयोग्यवर्गणाभ्यो गृहीत्वा मनोरूपेण परिणमितानि वस्तुचिन्ताप्रवर्त्तकानि द्रव्याणि मन इत्युच्यते । तेन सहकारिणा तद्विषयो वा योगो मनोयोगः । उच्यत इति वाक्=भाषापरिणतिमापन्नः पुद्गलसमूहस्तया सहकारिण्या तद्विषयो वा योगो वाग्योगः । चीयत इति काय औदारिकादिस्तेन सहकारिणा तद्विषयो वा योगः काययोगः । तत्र स्तोकाधारतया प्रथमं मनोयोगस्य, तदपेक्षया बह्वाश्रयतया वाग्योगस्य, तदपेक्षयाऽतिबह्वाश्रयतया तत्पृष्ठे काययोगस्योपन्यासः । यदुदये स्त्रियाः पुंस्यभिलाषः स फुंफकाग्निसमानः स्त्रीवेदः । यदुदये पुंसः स्त्रियामभिलाप[स्त्रि](स्तृ)णाग्निज्वालातुल्यः स पुंवेदः । यदुदये नपुंसकस्य स्त्रीपुंसयोरभिलाषः स महानगरदवाग्निसमो नपुंसकवेदः । तत्र पुरुषवेदापेक्षया बह्वाश्रितत्वादादौ स्त्रीवेदः, ततः पुरुषवेदः, स्त्री-पुरुषोभयाभिलाषित्वेनातिसंक्लिष्टतया तयोरन्ते नपुंसकवेदः । क्रोधो=ऽक्षान्तिस्वरूपो मानो=गर्व्वो जात्याद्युद्भवममार्दवं माया=वञ्चनात्मिका परिणतिर्लोभो=ऽसंतोषात्मको गार्ध्यपरिणामः सर्वानुगामित्वादादौ क्रोधस्य, तदनु-

१ "घर्" इत्यपि पाठः ।

जीवस्थानेषु गुणस्थानादीन्यष्टौ पदान्युक्तानि जीवस्थानगुणस्थानादीनामन्वेषणारूपाया मार्गणायाः स्थानानि मार्गणास्थानानि मूलभेदापेक्षया चतुर्दशसंख्यान्याह—

एत्तो गइइंदियकायजोयवेए कसायनाणे य ।
संजमदंसणलेसा भवसम्मे सन्निआहारे ॥१२॥

(यशो०) एत्तो=जीवस्थानाद्यनन्तरम्, अत्र गतयश्चेन्द्रियाणि चेत्यादिः 'सुरनरतिरिनरयगई' इत्यादिविभागानुसारेण विग्रहे यथासम्भवं समाहारद्वन्द्वः, एत्वन्तु सर्वत्र प्राकृतप्रभवम् । तत्र गम्यन्ते स्वपरिणामनिर्मितकर्म्मपाशावनद्धैर्जन्तुभिरिति गतयः । इन्द्रस्याऽऽत्मनो लिङ्गानीन्द्रियाणि । अत्राश्रितेनेन्द्रियेणाश्रयमुपलक्षयता इन्द्रियवन्त उक्ता भवन्ति, तथा च 'इगबिती' त्यादिना विभागेन सहाविरोधः । एवमन्यत्रापि यथासम्भवं व्याख्येयम् । चीयन्त इति कायाः पृथिव्यादयः । कायशब्दश्चात्र शरीर इव पृथिव्यादिजीवनिचये वर्त्तते, चयसाधर्म्यात् । युज्यते=धावनादिक्रियासु व्यापार्यते जीव एभिरिति, युज्यन्ते=संबध्यन्ते धावनादिक्रिययाऽसुमन्त एभिरिति वा योगाः । वेद्यन्ते=अभिलाषोत्पादकत्वेनानुभूयन्त इति वेदाश्चारित्रमोहनीयान्तर्गतकर्मदलिकनिकायविशेषाः । कष्यन्ते=नरकादिस्थानेषु देहिनोऽनेनेति कषं=कर्म, कष्यन्ते प्राणिनः परस्परमस्मिन्निति कषः=संसारो वा, तदेव, स एव वा, आयो=लाभो येभ्य इति वा, कषमयन्ते=गच्छन्त्येभिरिति वा कषायाः । ज्ञायन्ते=निर्णीयन्ते सामान्यविशेषात्मकानि वस्तूनि विशेषरूपत्वेनैभिरिति ज्ञानानि । सं=सम्यग् यम्यते=निवर्त्यते जन्तुर्जन्तुघातादिभ्य एभिरिति संयमाः । दृश्यते सामान्यविशेषाभ्यासितं वस्तुसामान्यरूपतयैभिरिति दर्शनानि । लिश्यति=श्लिष्यति कर्मणा प्राणी आभिरिति लेश्याः=सकलकर्मनिस्यन्दभूतकृष्णनीलादिद्रव्यसचिवस्य जीवस्य शुभा अशुभाश्च परिणामविशेषाः । मुक्तिपर्यायेण भविष्यन्तीति त्रैकालिकेऽप्रत्यये भवाः=भव्याः । जीवादितत्त्वश्रद्धानेन सम्यगञ्चन्ति=प्रवर्तन्ते सम्यञ्चः=सम्यग्दृशस्तेषां भावाः=सम्यक्त्वानि=जीवादितत्त्वश्रद्धानपरिणामाः । इदं कृतमिदं करोमीदं करिष्यामीत्यादिदीर्घकालत्रयविषयविशिष्टमनोव्यापारवती दीर्घकालिक्यभिधाना संज्ञाऽस्याऽस्तीति संज्ञी । ओजोलोमप्रक्षेपभेदात् त्रिविधमाहारं यथासम्भवमाहारयन्तीत्याहारकाः ॥१२॥

सुरनरतिरिनरयगई [1]इगबितिचउरिंदिया य [2]पंचेंदी ।
पुढवी आऊ तेऊ वाऊ वणसइतसा काया ॥१३॥

(यशो०) उत्तानार्था । नवरं भवनपतिव्यन्तरज्योतिष्कवैमानिकस्वरूपाः सुराः । सम्मूर्च्छिमा गर्भजाश्च प्रतीता नराः । एकद्वित्रिचतुरिन्द्रियाः सम्मूर्च्छजमनुष्यव्यतिरिक्ता असंज्ञिपञ्चेन्द्रियाः

१ "वइ" इत्यपि पाठः । २ "पंचिंदि" इत्यपि ।

संज्ञिपञ्चेन्द्रियाश्च मीनमहिष्याद्यस्तिर्यञ्चः । निरयाः=नरकावासास्तत्रोत्पन्ना अपि जन्तवो निरयाः । सुरनरादिषु विषये गतिः सुरनरादिशब्दव्यपदेश्यपर्यायनिबन्धनम् । अत्र प्रायः प्रकृष्टसुखस्य च्यवनेर्ष्याविषादादेरीषदसुखस्य चाऽऽधारतया प्रथमं सुराणाम् , प्रायोल्पसुखस्य बहोर्बन्ध-वध-परिभव-गर्भोत्पत्ति-जरा-रुगादेरसुखस्य चाऽऽधारतया तदनु नराणाम्, प्रायोल्पसुखस्य बहुतरस्य शीतवातातपपारतन्त्र्यादेरसुखस्य चाऽऽस्पदतया ततस्तिरश्चाम् , परमाधार्मिकपरस्परोदीरणक्षेत्रप्रत्ययबहुतमकेवलासुखनिकेतनतया तदनन्तरं नारकाणां गतिरुक्ता । सर्वदेवातितीव्राज्ञानोदयाद्याधारतया प्रागेकेन्द्रियास्तदपेक्षयोत्तरोत्तरविशिष्टक्षयोपशमसमर्पिताधिकाधिककरणोपबृंहितज्ञानभाक्त्वेन क्रमेण द्वीन्द्रियाद्याः पञ्चेन्द्रियान्ता निर्दिष्टाः । एकेन्द्रियादिव्यपदेशश्चामीषां यथोत्तरं प्रवर्द्धमानमतिज्ञानावरणक्षयोपशमाविर्भूतस्यैकेन्द्रियादिजातिनामकर्मोदयनियमितक्रमस्य पर्याप्तकनामकर्मादिसामर्थ्यसिद्धस्य द्रव्यभावरूपस्पर्शनादेरेकद्व्यादीन्द्रियस्य भाजनत्वात्। प्रायोवादीनां चरणस्खलनादिक्षमाशिथिलावयवतया प्रथमं पृथिवीकायस्य, ततः शिथिलावयवतया तद्विपक्षस्या-ऽप्कायस्य, ततस्तद्विरोधित्वेन तेजस्कायस्य, ततस्तदुपबृंहकत्वेन वायोस्ततस्तत्साद्गुण्यवैगुण्यानुसारिणीवनस्पतेः साद्गुण्यवैगुण्य इति वनस्पतिकायस्याथ सकलपृथिवीकायाद्युपभोगयोग्यत्वेन त्रसकायस्य निर्देशः ॥१३॥

**मण वयकाया जोगा इत्थी पुरिसो नपुंसगो वेया ।**
**कोहो माणो माया लोभो चउरो कसायत्ति ॥१४॥**

(यशो०) काययोगेन मनोयोग्यवर्गणाभ्यो गृहीत्वा मनोरूपेण परिणमितानि वस्तुचिन्ताप्रवर्त्तकानि द्रव्याणि मन इत्युच्यते । तेन सहकारिणा तद्विषयो वा योगो मनोयोगः । उच्यत इति वाक्=भाषापरिणतिमापन्नः पुद्गलसमूहस्तया सहकारिण्या तद्विषयो वा योगो वाग्योगः । चीयत इति काय औदारिकादिस्तेन सहकारिणा तद्विषयो वा योगः काययोगः । तत्र स्तोकाधारतया प्रथमं मनोयोगस्य, तदपेक्षया बह्वाश्रयतया वाग्योगस्य, तदपेक्षयाऽतिबह्वाश्रयतया तत्पृष्ठे काययोगस्योपन्यासः । यदुदये स्त्रियाः पुंस्यभिलाषः स फुंफकाग्निसमानः स्त्रीवेदः । यदुदये पुंसः स्त्रियामभिलाष[स्त्रि](स्तृ)णाग्निज्वालातुल्यः स पुंवेदः। यदुदये नपुंसकस्य स्त्रीपुंसयोरभिलाषः स महानगरदवाग्निसमो नपुंसकवेदः । तत्र पुरुषवेदापेक्षया बह्वाश्रितत्वादादौ स्त्रीवेदः, ततः पुरुषवेदः, स्त्री-पुरुषोभयाभिलाषित्वेनातिसंक्लिष्टतया तयोरन्ते नपुंसकवेदः । क्रोधो=ऽक्षान्तिस्वरूपो मानो=गर्वो जात्याद्युद्भवममार्दवं माया=वञ्चनाध्यात्मिका परिणतिर्लोभो=ऽसंतोषात्मको गार्ध्यपरिणामः सर्वानुगामित्वादादौ क्रोधस्य, तदनु-

१ "षड्" इत्यपि पाठः ।

सम्यग्दृष्टिर्मिश्रो मिथ्यादृग्वा भवति । सिद्धान्तमतेन तु कोऽप्यनादिमिथ्यादृक्तथाविधगुर्वादि-सामग्र्यामपूर्वकरणेन पुञ्जत्रयं कृत्वा शुद्धपुञ्जपुद्गलान्वेदयन्नौपशमिकसम्यग्दृष्टिरभूत्वैव क्षायोपशमिकसम्यग्दृष्टिर्भवति । अन्यस्तूक्तक्रमेणौपशमिकसम्यग्दृष्टिर्भवति । पुञ्जत्रयमसौ न करोत्येव । तदकरणादेव चौपशमिकाच्च्युतो मिथ्यात्वमेव व्रजति । यत्कल्पभाष्यम्—
"आलम्बणमलहन्ती जह सट्ठाणं न मुञ्चई इलिया । एवं अकयतिपुञ्जी मिच्छं चिय उवसमी एइ ॥" ।
अत्रा-ऽसंख्याताः सर्वदैव आसाद्यन्ते ॥४॥ प्रत्याख्यानकषायोदयेन विचारितसर्वविरति-लाभत्वात्करणत्रययोगत्रयविषयसर्वसावद्ययोगस्य देशे विवक्षितैकव्रतगोचरस्थूलसावद्ययोगादौ समस्तव्रतविषयानुमतिरहितव्यापारान्ते विरतं=विरतिर्यस्य स तथा, तस्य गुणस्थानं देश-विरतगुणस्थानम् । अत्रापि संख्यातीताः सततमऽवाप्यन्ते ॥५॥ संयच्छति स्म सर्वसावद्ययोगात्, सम्यगुपरमति स्म संयतः, प्रमाद्यति स्म=संयमयोगेषु सीदति स्म प्रमत्तः, यद्वा प्रमदनं प्रमत्तं=प्रमादो मदिरा-विषय-कषाय-निद्रा-विकथानामन्यतमः, सर्वे वा, प्रमत्तमस्यास्तीति मत्वर्थीया-त्प्रत्यये प्रमत्तः, स चासौ संयतश्च स तथा, तस्य गुणस्थानं प्रमत्तसंयतगुणस्थानम् । अत्र कोटि-सहस्रपृथक्त्वं प्राप्यते ॥६॥ प्रमत्तविपरीतोऽप्रमत्तः, स चासौ संयतश्चाप्रमत्तसंयतस्तस्य गुणस्थानमप्रमत्तसंयतगुणस्थानम् । अवसर्पिण्यास्तृतीये चतुर्थे चारके उत्सर्पिण्या द्वितीये तृतीये चतुर्थे चारकेऽवसर्पिण्युत्सर्पिणीव्यतिरिक्ते चतुर्थारकप्रतिमे च काले लब्धजन्मोत्तमसंहननो वर्षाष्टकोपरि शुभलेश्यो मनुष्योऽस्मिन्नप्रमत्तगुणस्थानकेऽविरतादीनां त्रयाणां गुणस्थान-कानामन्यतमे वा वर्त्तमानः प्रथमकषायचतुष्क-दर्शनत्रिकक्षपणाया आरम्भकः । अत्रा-ऽप्रमत्त-गुणस्थानके प्रमत्तसंयतेभ्यः स्तोकाः प्राप्यन्ते ॥७॥ युगपदिदं गुणस्थानमनुप्रविष्टानाम-न्योन्यमध्यवसायस्थानस्य भेदरूपा निवृत्तिरप्यस्तीति निवृत्तिः, सा चासौ गुणस्थानं च निवृत्तिगुणस्थानम् । अस्य 'निवृत्तिबादर' इत्यपि संज्ञा । यन्मूलावश्यकटीका—क्षपक-श्रेण्यन्तर्गतो जीवग्रामः क्षीणदर्शनसप्तको निवृत्तिबादरो भण्यते । अपूर्वकरणगुणस्थानमिति संज्ञा-न्तरमप्यस्य, तत्रापूर्वं=नवं स्थितिघात-रसघात-गुणश्रेणि-गुणसंक्रम-स्थितिबन्धानां करणं=निवर्त्तन-मस्येत्यपूर्वकरणः । तत्र महामानायाः कर्मस्थितेरपवर्त्तनाकरणेनाल्पीकरणं स्थितिघातः । रसस्य प्रभूतस्यापवर्त्तनाकरणेनाल्पीकरणं रसघातः । एतौ च प्राक्तनगुणस्थानेषु विशुद्धेरल्पत्वादल्पावेव व्यधादत्र तु विशुद्धेरुत्कृष्टत्वेन महाप्रमाणावपूर्वौ विधत्ते । उपरितनस्थितेर्विशुद्धिवशादपवर्त्तना-करणेनावतारितस्य दलिकस्यान्तर्मुहूर्त्तप्रमाणमुदयसमयस्योपरि शीघ्रतरक्षपणाय प्रतिसमयम-संख्येयगुणया वृद्ध्या रचनं गुणश्रेणिरुच्यते । एतां च पूर्वगुणस्थानेष्वविशुद्धत्वेन कालतो दीर्घां दलिकरचनामाश्रित्य लघीयसीं दलिकस्यापवर्त्तनात् कृतवान् । अत्र तु विशुद्धत्वाद पूर्वां कालतो ह्रस्वतरां (दलिकरचनां) स्वीकृत्य पृथीयसीं बहुतरस्य दलिकस्यापवर्त्तनात् करोति । तथा बध्य-मानशुभकर्मस्वबध्यमानाशुभकर्मदलिकस्य प्रति[क्षणशब्द](क्षण)मसंख्येयगुणवृद्ध्या विशुद्धिवशेन

अनादिमिथ्यादृष्टिरसुमान् निर्मितदर्शनत्रिपुञ्जोऽनाभोगानिर्वर्तितेन गिरिसरिदुपलघोलनाकल्पेन यथा येनैव प्रकारेणानादिकाले अभूत्तेनैव प्रवृत्तं नाऽपूर्वं स्वभावान्तरं प्राप्तमित्यन्वर्थेन यथाप्रवृत्तेन क्रियते कर्म्मबन्धोदयोदीरणोपशमनाद्यनेनेति करणेनाध्यवसायविशेषेण मोहस्य सागरोपमाणामेकाग्रसप्ततिं नाम्नो गोत्रस्य चैकान्नविंशतिमायुर्वर्जानामन्येषां कर्म्मणामेकोनत्रिंशतं च क्षपयित्वा प्रत्येकं कृतपल्योपमा-ऽसंख्येयभागन्यूनान्त्यसागरकोटिकोटिस्थितिको मध्यमस्थितावायुषो वर्त्तमानो विशुद्धिविशेषस्वरूपेणानादौ संसारे अप्राप्तपूर्वत्वात् स्थितिघातरसघाताद्यपूर्वार्थनिर्वर्त्तकत्वाद् अपूर्वेण करणेन भिन्नघनरागद्वेषरूपग्रन्थिः प्रधानतरविशुध्यात्मकं न विद्यते मोक्षतरुबीजं सम्यक्त्वमनासाद्य निवृत्ति [र्व्यावृत्तिरस्येति व्युत्पत्तेः](=व्यावृत्तिर्यस्य यस्मिन् वा तद्, तच्च तत्करण)-मनिवृत्तिकरणमनुभवन्मिथ्यात्वस्थितेरुदयक्षणादारभ्यान्तर्मुहूर्त्तस्योपरि प्रदेशतो विपाकतश्च मिथ्यात्वदलिकानुदयरूपमन्तरकरणं करोति। कृते चैतस्मिन् मिथ्यात्वस्थितिरन्तर्मुहूर्त्तमानाऽधस्तना। तदुपरितना चान्तर्मुहूर्त्तोनान्तःसागरोपमकोटीकोटिमाना द्वितीया। तत्रा-ऽऽद्यायां स्थितौ वर्त्तमानो मिथ्यात्वोदयान्मिथ्यादृष्टिरेव, अन्तर्मुहूर्तेन तस्यामुपगतायामन्तरकरणप्रथम(समय) एवौपशमिकसम्यग्दर्शनप्राप्तावुपशान्ताद्धायामान्तर्मौहूर्तिक्यां जघन्येन समयशेषायामुत्कृष्टतः षडावलिकाशेषायामनन्तानुबन्ध्युदयः कस्यचिद् भवति। तत्र चासौ सास्वादनसम्यग्दृष्टिगुणस्थाने वर्तते। उपशमश्रेणेर्वा प्रतिपतितः कश्चिदिति कर्म्मग्रन्थमतम्। तत्र तस्याद्यगुणस्थानमपि यावत् गमनात्। सिद्धान्तमते तु श्रेणेः समाप्तौ निवृत्तः प्रमत्तगुणेऽप्रमत्तगुणे वा-ऽवतिष्ठते। कालगतस्तु देवेष्वविरतो भवतीति। सास्वादनोत्तरकालं चावश्यं मिथ्यात्वोदयान्मिथ्यादृष्टिः स्यात्। अत्र च गुणस्थाने उत्कर्षतो-ऽसंख्येयाः प्राणिनः प्राप्यन्ते ॥२॥ सम्यक् च मिथ्या च दृष्टिरस्येति सम्यग्मिथ्यादृष्टिस्तस्य गुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानम्। यदा हि पूर्वोक्तप्रकारेणा-ऽवाप्तेनौपशमिकसम्यक्त्वेनौषधकल्पेन वक्ष्यमाणमतभेदादपूर्वकरणेन वा मदनकोद्रववदशुद्धस्य मिथ्यात्वमोहनीयस्य शुद्धार्द्धविशुद्धाशुद्धतया त्रिधा कृतस्य सम्बन्धिनां पुञ्जानां मध्येऽर्द्धविशुद्धपुञ्ज उदेति, तदा तदुदयवशेनार्द्धविशुद्धजिनतत्त्वश्रद्धानसद्भावात् सम्यग्मिथ्यादृष्टिरन्तर्मुहूर्त्तं यावत्तत ऊर्ध्वं सम्यक्त्वं मिथ्यात्वं वा भजति। अत्राऽप्युत्कृष्टतोऽसंख्येयाः प्राणभाजो लभ्यन्ते ॥३॥ विरति स्म = सावद्ययोगेभ्यो निवर्त्तते स्म विरतो न तथाऽविरतः, यद्वा विरमणं विरतं=सावद्ययोगपरिहार एव, अप्रत्याख्यानकषायोदयान्नास्य विरतमस्तीत्यविरतः। स चासौ सम्यग्दृष्टिश्चाविरतसम्यग्दृष्टिः। स च पूर्वोपवर्णितौपशमिकसम्यग्दृष्टिः, शुद्धदर्शनमोहपुञ्जोदयवर्त्ती वा क्षायोपशमिकसम्यग्दृष्टिः, प्रथमकषायचतुष्कमिथ्यात्वमिश्रसम्यक्त्वक्षपणात् क्षीणदर्शनसप्तको वा क्षायिकसम्यग्दृष्टिस्तस्य गुणस्थानमविरतसम्यग्दृष्टिगुणस्थानम्। इह च कर्मग्रन्थमतेन प्रथममुक्तरीत्यैव सर्वोऽ-प्यौपशमिकसम्यग्दृष्टिर्भूत्वा कृतत्रिपुञ्जः क्षायोपशमिक-

सम्यग्दृष्टिर्मिश्रो मिथ्यादृग्वा भवति । सिद्धान्तमतेन तु कोऽप्यनादिमिथ्यादृक्तथाविधगुर्वादि-सामग्र्यामपूर्वकरणेन पुञ्जत्रयं कृत्वा शुद्धपुञ्जपुद्गलान्वेदयन्नौपशमिकसम्यग्दृष्टिरभूत्वैव क्षायोपशमिकसम्यग्दृष्टिर्भवति । अन्यस्तूक्तक्रमेणौपशमिकसम्यग्दृष्टिर्भवति । पुञ्जत्रयमसौ न करोत्येव। तदकरणादेव चौपशमिकाच्च्युतो मिथ्यात्वमेव व्रजति । यत्कल्पभाष्यम्—
"आलम्बणमलहन्ती जह सट्ठाणं न मुञ्चई इलिया । एवं अकयतिपुञ्जी मिच्छं चिय उवसमी एइ ॥" ।
अत्रा-ऽसंख्याताः सर्वदैव आसाद्यन्ते ॥४॥ प्रत्याख्यानकषायोदयेन विचारितसर्वविरति-लाभत्वात्करणत्रययोगत्रयविषयसर्वसावद्ययोगस्य देशे विवक्षितैकव्रतगोचरस्थूलसावद्ययोगादौ समस्तव्रतविषयानुमतिवर्जितव्यापारान्ते विरतं=विरतिर्यस्य स तथा, तस्य गुणस्थानं देश-विरतगुणस्थानम् । अत्रापि संख्यातीताः सततमऽवाप्यन्ते ॥५॥ संयच्छति स्म सर्वसावद्ययोगात्, सम्यगुपरमति स्म संयतः, प्रमाद्यति स्म=संयमयोगेषु सीदति स्म प्रमत्तः, यद्वा प्रमदनं प्रमत्तं=प्रमादो मदिरा-विषय-कषाय-निद्रा-विकथानामन्यतमः, सर्वे वा, प्रमत्तमस्यास्तीति मत्वर्थीया-त्प्रत्यये प्रमत्तः, स चासौ संयतश्च स तथा, तस्य गुणस्थानं प्रमत्तसंयतगुणस्थानम् । अत्र कोटि-सहस्रपृथक्त्वं प्राप्यते ॥६॥ प्रमत्तविपरीतोऽप्रमत्तः, स चासौ संयतश्चाप्रमत्तसंयतस्तस्य गुणस्थानमप्रमत्तसंयतगुणस्थानम् । अवसर्पिण्यास्तृतीये चतुर्थे चारके उत्सर्पिण्या द्वितीये तृतीये चतुर्थे चारकेऽवसर्पिण्युत्सर्पिणीव्यतिरिक्ते चतुर्थारकप्रतिमे च काले लब्धजन्मोत्तमसंहननो वर्षाष्टकोपरि शुभलेश्यो मनुष्योऽस्मिन्नप्रमत्तगुणस्थानकेऽविरतादीनां त्रयाणां गुणस्थान-कानामन्यतमे वा वर्त्तमानः प्रथमकषायचतुष्क-दर्शनत्रिकक्षपणाया आरम्भकः । अत्रा-ऽप्रमत्त-गुणस्थानके प्रमत्तसंयतेभ्यः स्तोकाः प्राप्यन्ते ॥७॥ युगपदिदं गुणस्थानमनुप्रविष्टानाम-न्योन्यमध्यवसायस्थानस्य भेदरूपा निवृत्तिरप्यस्तीति निवृत्तिः, सा चासौ गुणस्थानं च निवृत्तिगुणस्थानम् । अस्य 'नियट्टिबायर' इत्यपि संज्ञा । यन्मूलावश्यकटीका—क्षपक श्रेण्यन्तर्गतो जीवग्रामः क्षीणदर्शनसप्तको निवृत्तिबादरो भण्यते । अपूर्वकरणगुणस्थानमिति संज्ञा-न्तरमप्यस्य, तत्रापूर्वं=नवं स्थितिघात-रसघात-गुणश्रेणि-गुणसंक्रम-स्थितिबन्धानां करणं=निर्वर्त्तन-मस्येत्यपूर्वकरणः । तत्र महामानायाः कर्मस्थितेरपवर्त्तनाकरणेनाल्पीकरणं स्थितिघातः । रसस्य प्रभूतस्यापवर्त्तनाकरणेनाल्पीकरणं रसघातः । एतौ च प्राक्तनगुणस्थानेषु विशुद्धेरल्पत्वादल्पावेव व्यधादत्र तु विशुद्धेरुत्कृष्टत्वेन महाप्रमाणावपूर्वौ विधत्ते । उपरितनस्थितेर्विशुद्धिवशादपवर्त्तना-करणेनावतारितस्य दलिकस्यान्तर्मुहूर्त्तप्रमाणमुदयसमयस्योपरि शीघ्रतरक्षपणाय प्रतिसमयम-संख्येयगुणया वृद्ध्या रचनं गुणश्रेणिरुच्यते । एतां च पूर्वगुणस्थानेष्वविशुद्धत्वेन कालतो दीर्घां दलिकरचनामाश्रित्य लघीयसीं दलिकस्यापवर्त्तनात् कृतवान् । अत्र तु विशुद्धत्वाद पूर्वां कालतो ह्रस्वतरां (दलिकरचनां) स्वीकृत्य पृथीयसीं बहुतरस्य दलिकस्यापवर्त्तनात् करोति । तथा बध्य-मानशुभकर्मस्वबध्यमानाशुभकर्मदलिकस्य प्रति[न्दशब्द](क्षण)मसंख्येयगुणवृद्ध्या विशुद्धिवशेन

नयनं=संचारणं गुणसंक्रमः। एनमप्यत्र विशिष्टतरत्वादपूर्वं करोति। विशिष्टाध्यवसायपरिगृहीतस्य कर्मदलिकस्य यत्कालनियमनं स स्थितिबन्धः एतं चाशुद्धत्वात्प्राग्द्राघीयांसमाकार्षीदिह तु विशुद्धत्वाल्लघीयांसं करोति। उपलक्षणं चैतदुदयोद्वर्त्तनादीनाम्, यत एतानप्यपूर्वान् करोत्यत्र स चापूर्वकरणः क्षपणाया उपशमनायाश्चार्हत्वात् क्षपक उपशमको वा न पुनरयं क्षपयत्युपशमयति वा किञ्चित्। तस्य गुणस्थानमपूर्वकरणगुणस्थानम्। अत्र संख्याता लभ्यन्ते ॥८॥ एककालमिदं गुणस्थानमधिरूढानां बहूनामसुमन्तां परस्परसम्बन्धिनोऽध्यवसायस्थानस्य व्यावृत्तिरिह निवृत्तिः, नास्ति तथाविधा साऽस्येत्यनिवृत्तिः। तुल्यकालमिदमारूढानामन्येषां यदध्यवसायस्थानं विवक्षितस्यापि तदेवेत्यर्थः ॥९॥ सम्परैति=पर्यटति संसारमनेनेति सम्परायः=कषायोदयः, बादरसूक्ष्मसम्परायापेक्षया स्थूलः सम्परायोऽस्येति बादरसम्परायोऽनिवृत्तिश्चासौ बादरसम्परायश्च स तथा, स च क्षपकोपशमकभेदात् द्विधा, तत्राऽबद्धायुः क्षपकः प्रत्याख्यानाप्रत्याख्यानकषायाष्टकमर्द्धक्षपितं कृतान्तराल एवातिविशुद्धिवशेन क्षपितस्त्यानर्द्धित्रिकनरकद्विकतिर्यग्द्विकैकेन्द्रियादिजातिचतुष्कातपोद्योतस्थावर-साधारणसूक्ष्माभिधानषोडशप्रकृतिर्मतान्तरेण त्वपर्याप्तप्रक्षेपात्क्षपितसप्तदशप्रकृतिस्तस्यैव क्षपितशेषं क्षपयति, ततः क्रमेण नपुंसकवेद स्त्री-वेद-हास्यादिषट्क-पुंवेदसंज्वलनक्रोध-मान-मायाः क्षपयति, ततो लोभमपि बादरं सूक्ष्मलोभस्य सूक्ष्मसम्पराय एव क्षपणात् उपशमकस्तु नपुंसकवेदं स्त्रीवेदं हास्यादिषट्कं पुंवेदं द्वितीयतृतीयौ क्रोधौ चतुर्थक्रोधं द्वितीयतृतीयौ मानौ चतुर्थमानं द्वितीयतृतीये माये चतुर्थमायां द्वितीयतृतीयौ लोभौ च क्रमेणोपशमयति। ततश्चास्य सामान्येनेहोक्तक्षपणोपशमविषयक्रमस्यावश्यकवृत्तिकृता विशेषेण क्षपणायामुपशमनायां च निरुक्तिक्रमान्तर्मुहूर्त्तमनिवृत्तिबादरसंपरायगुणस्थानम्। अत्र संख्याताः प्राप्यन्ते ॥६॥ सूक्ष्मः सम्परायः=किट्टीकृतलोभकषायोदयरूपो यस्य स सूक्ष्मसम्परायः क्षपक उपशमो वा। तस्य गुणस्थानं सूक्ष्मसम्परायगुणस्थानं। अत्र संख्याता अधिगम्यन्ते ॥१०॥ छाद्यते केवलं ज्ञानं दर्शनं चात्मनोऽनेनेति छद्म, तच्चात्र ज्ञानदर्शनावरणान्तरायकर्मोदयरूपम्, तत्र तिष्ठतीति छद्मस्थः, वीतो रागो मायालोभोदयरूपो यस्य स तथा, स चासौ छद्मस्थश्च वीतरागछद्मस्थः। उपशान्ता=उपशमं नीताः सन्त एव संक्रमणोद्वर्त्तनादिकरणायोग्यत्वेन व्यवस्थापिताः कषाया येन स तथा, स चासौ वीतरागछद्मस्थश्च उपशान्तकषायवीतरागच्छद्मस्थस्तस्य गुणस्थानम् उपशान्तकषायवीतरागच्छद्मस्थगुणस्थानम्। तत्रोपशान्तकषायग्रहणे सति वीतरागग्रहणमविरतसम्यग्दृष्ट्यादीनां प्रमत्तान्तानां व्यवच्छेदाय, तेषामप्यनन्तानुबन्ध्यादिकियत्कषायोपशमकत्वात्, वीतरागग्रहणे चोपशान्तकषायवीतरागग्रहणं क्षीणकषायस्य निरासाय, उपशान्तकषायवीतरागग्रहणे छद्मस्थग्रहणं स्वरूपाविष्करणार्थम्; नह्म-

छद्मस्थ उपशान्तकषायवीतरागः सम्भवति, यः छद्मस्थग्रहणेन व्यवच्छिद्येत। अयमुपशान्तकषायवीतरागच्छद्मस्थो जघन्यतः समयमुत्कर्षतोऽन्तर्मुहूर्तं भवति। तत ऊर्ध्वं नियमेनाद्धाक्षयेण भवक्षयेण वा प्रतिपतति। तत्र भवक्षयो म्रियमाणस्य,अद्धाक्षय उपशान्ताद्धायां पूर्णायाम्। अद्धाक्षयेण प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति। अयं च वारचतुष्टयमुपशमश्रेणिं नानाभवेषु प्रतिपद्यते । 'च उ उवसमित्तु मोहं' इति वचनात्। एकस्मिंस्तु वारद्वयमुत्कर्षत 'एगभवे दुखुत्तो चरितमोहं उवसमेइ' इति वचनात्। यश्च वारद्वयमेतां प्रतिपद्यते तस्य तत्र भवे नियमात् क्षपकश्रेणेरभावः। यः पुनरेकवारं प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपीति कर्मग्रन्थमतम्। सिद्धान्तमतं त्वेकभवे एकामेव श्रेणीं प्रतिपद्यते। यस्कल्पः—'अन्नयरसेढिवज्जं एगभवेण च सव्वा' इति। अत्र संख्याता वर्त्तन्ते ॥११॥ क्षीणाः=क्षयमापन्नाः कषाया यस्य स तथा, स चासौ वीतरागच्छद्मस्थश्च क्षीणकषायवीतरागछद्मस्थस्तस्य गुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम्। अस्मिन् द्वादशे गुणस्थाने परमार्थेन दर्शितायाः क्षपकश्रेणेरेकादशे चोपशमश्रेणेः परिसमाप्तिर्भवति। श्रेणिद्वयस्यास्य परिसमाप्तिकालोऽप्यन्तर्मुहूर्त्तमेव, असंख्येयत्वादन्तर्मुहूर्त्तानाम्। तत्राविरताद्यप्रमत्तान्तेष्वाद्यान् कषायान्दर्शनत्रयं च, शेषांस्तु संज्वलनलोभविकलाननिवृत्तौ, संज्वलनं लोभं च सूक्ष्मसम्पराये क्षपयति। तदेवमेतेष्वपि गुणस्थानेषु क्षीणकषायव्यपदेशः प्रसज्यते, क्वापि कियतां कषायाणां क्षयसद्भावात्, अतस्तद्व्यवच्छेदार्थं वीतरागग्रहणम्, क्षीणकषायवीतरागत्वे सति च्छद्मस्थग्रहणं केवलीव्युदासाय, छद्मस्थग्रहणे सति सरागपराकरणार्थं वीतरागग्रहणम्, क्षीणकषायग्रहणं चोपशान्तकषायव्यवच्छित्तये। अत्र संख्याता भवन्ति।।१२।।सह योगेन=वीर्येण वर्त्तन्ते=सयोगा मनोवाक्कायास्ते विद्यन्ते यस्य सयोगी। यद्वा अनुत्तरविमानवासिमनःपर्यायज्ञानादिभिः किंचिन्मनसा पृष्टस्य केवलिनो मनसैवावेदने मनोयोगस्याद्यान्त्यभेदभाजः, देशनादौ वाग्योगस्यादिमान्तिमभेदान्वितस्य, चंक्रमणादावौदारिककाययोगस्य च सद्भावात्, सहयोगैर्मनोवाक्कायैर्वर्त्तत इति सयोगः, सयोगी वा, सर्वधनादेशकृतिगणत्वेन मत्वर्थीयेन्विधानात्, केवलमस्तीति केवली, सयोगश्चासौ सयोगी वा चासौ केवली च तस्य गुणस्थानं सयोगकेवलिगुणस्थानं सयोगिकेवलिगुणस्थानमिति वा। अत्र कोटिपृथक्त्वमापद्यते ॥१३॥ न सन्ति प्राचीना[म]योगा यस्या-ऽसावयोगोऽयोगी वा पूर्ववत्। अयोगित्वं पुनरेवम्—त्रिविधोऽपि योगः सूक्ष्मबादरत्वाभ्यां द्वेधा, केवली च केवलोत्पादादूर्ध्वं जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु देशोनां पूर्वकोटीं विहृत्यान्तर्मुहूर्त्तशेषायुः शैलेशीं प्रतिपित्सुरादौ बादरकाययोगेन बादरवाग्मनोयोगौ निरुध्य सूक्ष्मकाययोगावष्टम्भेन बादरकाययोगं निरुणद्धि। सर्वबादरयोगनिरोधानन्तरं च सूक्ष्मकाययोगावष्टम्भेन सूक्ष्मवाग्मनोयोगौ निरुणद्धि। सूक्ष्मकाययोगं तु सूक्ष्मक्रियमनिवर्त्तिशुक्लध्यानं ध्यायन् सावष्टम्भेनैव निरुणद्धि। अन्यस्यावष्टम्भनीययोगान्तरस्य तदा-

नयनं=संचारणं गुणसंक्रमः । एनमप्यत्र विशिष्टतरत्वादपूर्वं करोति । विशिष्टाध्यवसायपरिगृहीतस्य कर्मदलिकस्य यत्कालनियमनं स स्थितिबन्धः एतं चाशुद्धत्वात्प्राग्द्राघीयांसमाकार्षीदिह तु विशुद्धत्वाल्लघीयांसं करोति । उपलक्षणं चैतदुदयोद्वर्त्तनादीनाम् , यत एतानप्यपूर्वान् करोत्यत्र स चापूर्वकरणः क्षपणाया उपसमनायाश्चार्हत्वात् क्षपक उपशमको वा न पुनरयं क्षपयत्युपशमयनि वा किञ्चित् । तस्य गुणस्थानमपूर्वकरणगुणस्थानम् । अत्र संख्याता लभ्यन्ते ॥८॥ एककालमिदं गुणस्थानमधिरूढानां वहूनामसुमन्तां परस्परसम्बन्धिनोऽध्यवसायस्थानस्य व्यावृत्तिरिह निवृत्तिः, नास्ति तथाविधा साऽस्येत्यनिवृत्तिः । तुल्यकालमिदमारूढानामन्येषां यदध्यवसायस्थानं विवक्षितस्यापि तदेवेत्यर्थः ॥९॥ सम्परैति=पर्यटति संसारमनेनेति सम्परायः=कषायोदयः, वादरसूक्ष्मसम्परायापेक्षया स्थूलः सम्परायोऽस्येति वादरसम्परायोऽनिवृत्तिश्चासौ बादरसम्परायश्च स तथा, स च क्षपकोपशमकभेदात् द्विधा, तत्राऽबद्धायुः क्षपकः प्रत्याख्यानाप्रत्याखानकषायाष्टकमर्द्धक्षपितं कृतान्तराल एवातिविशुद्धिवशेन क्षपितस्त्यानर्द्धित्रिकनरकद्विकतिर्यग्द्विकैकेन्द्रियादिजातिचतुष्कातपोद्योतस्थावर-साधारणसूक्ष्माभिधानषोडशप्रकृतिर्मतान्तरेण त्वपर्याप्तप्रक्षेपात्क्षपितसप्तदशप्रकृतिस्तस्यैव क्षपितशेषं क्षपयति, ततः क्रमेण नपुंसकवेद स्त्री-वेद-हास्यादिषट्क-पुंवेदसंज्वलनक्रोध-मान-मायाः क्षपयति, ततो लोभमपि वादरं सूक्ष्मलोभस्य सूक्ष्मसम्पराय एव क्षपणात् उपशमकस्तु नपुंसकवेदं स्त्रीवेदं हास्यादिषट्कं पुवेदं द्वितीयतृतीयौ क्रोधौ चतुर्थक्रोधं द्वितीयतृतीयौ मानौ चतुर्थमानं द्वितीयतृतीये माये चतुर्थमायां द्वितीयतृतीयौ लोभौ च क्रमेणोपशमयति । ततश्चास्य सामान्येनेहोक्तक्षपणोपशमविषयक्रमस्यावश्यकवृत्तिकृता विशेषेण क्षपणायामुपशमनायां च निष्टङ्कितक्रमान्तर्मुहूर्त्तमनिवृत्तिबादरसंपरायगुणस्थानम् । अत्र संख्याताः प्राप्यन्ते ॥६॥ सूक्ष्मः सम्परायः=किट्टीकृतलोभकषायोदयरूपो यस्य स सूक्ष्मसम्परायः क्षपक उपशमो वा । तस्य गुणस्थानं सूक्ष्मसम्परायगुणस्थानं । अत्र संख्याता अधिगम्यन्ते ॥१०॥ छाद्यते केवलं ज्ञानं दर्शनं चात्मनोऽनेति छद्म, तच्चात्र ज्ञानदर्शनावरणान्तरायकर्मोदयरूपम् , तत्र तिष्ठतीति छद्मस्थः, वीतो रागो मायालोभोदयरूपो यस्य स तथा, स चासौ छद्मस्थश्च वीतरागछद्मस्थः । उपशान्ता=उपशमं नीताः सन्त एव संक्रमणोद्वर्त्तनादिकरणायोग्यत्वेन व्यवस्थापिताः कषाया येन स तथा, स चासौ वीतरागछद्मस्थश्च उपशान्तकषायवीतरागच्छद्मस्थस्तस्य गुणस्थानम् उपशान्तकषायवीतरागच्छद्मस्थगुणस्थानम् । तत्रोपशान्तकषायग्रहणे सति वीतरागग्रहणमविरतसम्यग्दृष्ट्यादीनां प्रमत्तान्तानां व्यवच्छेदाय, तेषामप्यनन्तानुबन्ध्यादिकियत्कषायोपशमकत्वात् , वीतरागग्रहणे चोपशान्तकषायवीतरागग्रहणं क्षीणकषायस्य निरासाय, उपशान्तकषायवीतरागग्रहणे छद्मस्थग्रहणं स्वरूपाविष्करणार्थम् ; नह्य-

छद्मस्थ उपशान्तकषायवीतरागः सम्भवति, यः छद्मस्थग्रहणेन व्यवच्छिद्येत। अयमुपशान्तकषायवीतरागच्छद्मस्थो जघन्यतः समयमुत्कर्षतोऽन्तर्मुहूर्त्तं भवति। तत ऊर्ध्वं नियमेनाद्धाक्षयेण भवक्षयेण वा प्रतिपतति। तत्र भवक्षयो म्रियमाणस्य,अद्धाक्षय उपशान्ताद्धायां पूर्णायाम्। अद्धाक्षयेण प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति। अयं च वारचतुष्टयमुपशमश्रेणिं नानाभवेषु प्रतिपद्यते। 'च उ उवसमित्त् मोहं' इति वचनात्। एकस्मिंस्तु वारद्वयमुत्कर्षत 'एगभवे दुक्खुत्तो चरित्तमोहं उवसमेइ' इति वचनात्। यश्च वारद्वयमेतां प्रतिपद्यते तस्य तत्र भवे नियमात् क्षपकश्रेणेरभावः। यः पुनरेकवारं प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपीति कर्मग्रन्थमतम्। सिद्धान्तमतं त्वेकभवे एकामेव श्रेणीं प्रतिपद्यते। यस्कल्पः—'अन्नयरसेढिवज्जं एगभवेण च सव्वा' इति। अत्र संख्याता वर्त्तन्ते ॥११॥ क्षीणाः=क्षयमापन्नाः कषाया यस्य स तथा, स चासौ वीतरागच्छद्मस्थश्च क्षीणकषायवीतरागछद्मस्थस्तस्य गुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम्। अस्मिन् द्वादशे गुणस्थाने परमार्थेन दर्शितायाः क्षपकश्रेणेरेकादशे चोपशमश्रेणेः परिसमाप्तिर्भवति। श्रेणिद्वयस्यास्य परिसमाप्तिकालोऽप्यन्तर्मुहूर्त्तमेव, असंख्येयत्वादन्तर्मुहूर्त्तानाम्। तत्राविरताद्यप्रमत्तान्तेष्वाद्यान् कषायान्दर्शनत्रयं च, शेषांस्तु संज्वलनलोभविकलाननिवृत्तौ, संज्वलनं लोभं च सूक्ष्मसम्पराये क्षपयति। तदेवमेतेष्वपि गुणस्थानेषु क्षीणकषायव्यपदेशः प्रसज्यते, क्वापि कियतां कषायाणां क्षयसद्भावात्, अतस्तद्व्यवच्छेदार्थं वीतरागग्रहणम्, क्षीणकषायवीतरागत्वे सति च्छद्मस्थग्रहणं केवलीव्युदासाय, छद्मस्थग्रहणे सति सरागपराकरणार्थं वीतरागग्रहणम्, क्षीणकषायग्रहणं चोपशान्तकषायव्यवच्छित्तये। अत्र संख्याता भवन्ति।॥१२॥ सह योगेन=वीर्येण वर्त्तन्ते=सयोगा मनोवाक्कायास्ते विद्यन्ते यस्य सयोगी। यद्वा अनुत्तरविमानवासिमनःपर्यायज्ञानादिभिः किंचिन्मनसा पृष्टस्य केवलिनो मनसैवावेदने मनोयोगस्याद्यान्त्यभेदभाजः, देशनादौ वाग्योगस्यादिमान्तिमभेदान्वितस्य, चंक्रमणाद्यावौदारिककाययोगस्य च सद्भावात्, सहयोगैर्मनोवाक्कायैर्वर्त्तत इति सयोगः, सयोगी वा, सर्वधनादेराकृतिगणत्वेन मत्वर्थीयेन्विधानात्, केवलमस्तीति केवली, सयोगश्चासौ सयोगी वा चासौ केवली च तस्य गुणस्थानं सयोगकेवलिगुणस्थानं सयोगिकेवलिगुणस्थानमिति वा। अत्र कोटिपृथक्त्वमापद्यते ॥१३॥ न सन्ति प्राचीना[म]योगा यस्या-ऽसावयोगोऽयोगी वा पूर्ववत्। अयोगित्वं पुनरेवम्—त्रिविधोऽपि योगः सूक्ष्मबादरत्वाभ्यां द्वेधा, केवली च केवलोत्पादादूर्द्ध्वं जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्तु देशोनां पूर्वकोटीं विहृत्यान्तर्मुहूर्त्तशेषायुः शैलेशीं प्रतिपित्सुरादौ बादरकाययोगेन बादरवाग्मनोयोगौ निरुध्य सूक्ष्मकाययोगावष्टम्भेन बादरकाययोगं निरुणद्धि। सर्वबादरयोगनिरोधानन्तरं च सूक्ष्मकाययोगावष्टम्भेन सूक्ष्मवाग्मनोयोगौ निरुणद्धि। सूक्ष्मकाययोगं तु सूक्ष्मक्रियमनिवर्त्तिशुक्लध्यानं ध्यायन् स्वावष्टम्भेनैव निरुणद्धि। अन्यस्यावष्टम्भनीययोगान्तरस्य तदा-

ऽसत्त्वात् । सन्निरोधानन्तरं च समुच्छिन्नक्रियमप्रतिपातिशुक्लध्यानं ध्यायन् ह्रस्वपञ्चाक्षरोद्गिरणमात्रमात्रकालं शैलेशीकरणं प्रविष्टो भवति । शीलस्य=योगलेश्यामलविकलयथाख्यातचारित्ररूपस्य य ईशः स शीलेशस्तस्येयं शैलेशी, त्रिभागोनस्वदेहावगाहनायामुदरादिरन्ध्रपूरणात्संकोचितस्वप्रदेशस्य शैलेश्या=ऽऽत्मनोऽत्यन्तस्थिरावस्थितिरित्यर्थः । तस्यां करणं=पूर्वरचितशैलेशीसमयसमानगुणश्रेणीकस्य नाम–वेद्य–गोत्राख्यस्याघातिकर्मत्रयस्याऽसंख्येयगुणया श्रेण्या, आयुःशेषस्य तु यथास्वरूपस्थितिकया श्रेण्या निर्जरणं शैलेशीकरणम् । तत्र प्रविष्टोऽयोगीऽयोगी वा स चासौ केवली च स तथा । अयं च शैलेशीकरणचरमसमयानन्तरं सिद्धो भवति । सिद्धोऽपि च सन्नयोगकेवलीति व्यपदिश्यते । योगानामभावात् केवलस्य च भावात् । एतदपेक्षयैव चोत्तरत्रायोगिकेवलिनामानन्त्यं वक्ष्यते । भवस्थापेक्षया तु संख्यात्वमेव स्यात् । तस्य गुणस्थानमयोगकेवलिगुणस्थानमयोगिकेवलिगुणस्थानं वा ॥ १४ ॥ एषामुत्तरोत्तरप्रवर्द्धमानविशुद्धसत्ता । एवं क्रमनिर्देशहेतुः । अत एवाह-'गुणा" इति सूचकत्वात् सूत्रस्य, इतेरुल्लेखार्थस्य च गम्यमानत्वादित्येवंरूपाणि गुणानां स्थानानि=उपचयापचयजाः स्वरूपविशेषा गुणस्थानानि । तथाहि-पूर्वपूर्वगुणापेक्षयोत्तरोत्तरगुणानामुपचय उत्तरोत्तरगुणापेक्षया पूर्वपूर्वगुणानामपचयः । कालप्रमाणं चामीषां यथा–

जीवाणमभव्वाणं मिच्छत्तमणाइअनिहणं नेयं । भवियाणमिणमणाई संत पत्तंमि सम्मत्ते ॥१॥
सासाणं छावलियं तुरियं तेत्तीससागरा अहिया । पंचममह तेरसमं देसूणा पुव्वकोडी उ ॥२॥
चरिमं हुस्सपणक्खरउग्गिरणपमाणयं भवत्थाणं । सिद्धाणमणंतदुगं अन्तमुहुत्तं तु सेसाणि ॥३॥
समओ उ जहण्णेणं पमत्तसासणुवसन्तमोहाणं । सेससजोगिअसंजयमिच्छत्ताणं मुहुत्तंतो ॥४॥

जीवसमासे त्वप्रमत्तादीनां चतुर्णां समयो जघन्यः कालः ।

सांप्रतमेतानि मार्गणास्थानेषु योजयति—

**चत्तारि देवनरएसु पंच तिरिएसु चउदस नरेसु ।**
**इगिविगलेसु दो दो पंचिंदीसु चउदस त्ति ॥२७॥**

(यशो०) देवनरकगत्योराद्यानि चत्वारि, न शेषाणि, विरतेरभावात् । तिर्यग्गतौ देशविरत्यन्तान्याद्यानि पञ्च, नान्यानि, सर्वविरतेरभावात् । मनुष्यगतौ चतुर्दश-सर्वगुणाश्रयत्वात्तस्याः । "इगिविगलेसु" ति एकेन्द्रियविकलेन्द्रियेषु मिथ्यात्वसास्वादनरूपे द्वे । तत्रैतेषु सर्वभेदभिन्नेषु मिथ्यात्वं प्रतीतम् । स्वास्वादनं तु तेजोवायुवर्जप्रत्येकबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियेषु करणापर्याप्तेषु द्रष्टव्यम् । पञ्चेन्द्रियेषु चतुर्दश । तत्रैतेषु सर्वभेदेषु मिथ्यात्वम्, असंज्ञिषु पञ्चेन्द्रियेषु करणापर्याप्तेषु सास्वादनम्, संज्ञिषु करणापर्याप्तेषु सासादना-ऽविरताख्ये, शेषाणि त्वेकादशापि संज्ञिषु पर्याप्तेष्वेव ॥ २७ ॥

भूदगतरूसु दो एगमगणिवाऊसु चउदस तसेसु ।
जोए तेरस वेए तिकसाए नव दस य लोभे ॥२८॥

(यशो०) भूदकतरूषु पृथिव्यब्वनस्पतिषु द्वे द्वे आद्ये । तत्र मिथ्यात्वं सुगमम् । सास्वादनं करणापर्याप्तेषु । एकमाद्यमग्निवायुष्वतिसंक्लिष्टतया सासादनभावान्वितरयेष्वनुत्पत्तेः । त्रसेषु चतुर्दश । द्वीन्द्रियादिपञ्चेन्द्रियान्तसंग्राहित्वेन सर्वगुणानां सम्भवात् । योगे मनोवाक्कायरूपेऽयोगिवर्जानि त्रयोदश । वेदे नपुंसकस्त्रीपुंरूपे त्रयः कषायाः समाहृतास्त्रिकषायं तत्र क्रोधमानमायात्मके नवाद्यानि । तत्राऽनिवृत्तिबादराख्यनवमगुणस्थाने वर्त्तमानो यावदेतत्कषायत्रिकं नाद्यापि क्षपयत्युपशमयति वा तावत् स्वगुणस्थानसंख्येयभागान्यावदेतद्वेदत्रयकषायत्रयत्रानवाप्यते, न परतः । लोभे दशादितः प्रभृति । सूक्ष्मसम्पराये-ऽपि किट्टीकृतालोभसम्भवात् ॥२८॥

मइसुयओहिदुगे नव अजयाइ जयाइ सत्त मणनाणे ।
केवलदुगंमि दो तिन्नि दो व पढमा अनाणतिगे ॥ २९ ॥

(यशो०) मतिज्ञानश्रुतज्ञाना-ऽवधिज्ञाना-ऽवधिदर्शनेषु नव अयतादीनि=अविरतसम्यग्दृष्ट्यादीनि क्षीणमोहान्तानि मनःपर्यायज्ञाने यतादीनि=प्रमत्तसंयतादीनि क्षीणमोहान्तानि । केवलद्विके= केवलज्ञानकेवलदर्शनात्मनि द्वे सयोग्ययोगिरूपे । अज्ञानत्रिके=मत्यज्ञान-श्रुतज्ञान-विभङ्गाख्ये । त्रीण्यादिमानि द्वे वा प्रथमे । तत्र ये त्रीणि मन्यन्ते, तेषामिदमाकूतं यन्मिश्रदृष्टेर्ज्ञानान्यपि अज्ञानान्येव, यथाऽवस्थितवस्तुपरिच्छेदाभावात्, ज्ञानकार्याऽकरणाद्वा । ये तु द्वे एव प्रतिजानते, तेषामयमभिसंधिर्यदुत मिश्रदृष्टेर्ज्ञानानि किञ्चित्समीचीनरूपत्वादीषत्कलुषभावभाञ्ज्यपि सम्यग्ज्ञानान्येव, अतो-ऽज्ञानात्रये मिश्रदृष्टिर्न प्राप्यते । न च सास्वादनस्यापि सम्यग्दृष्टित्वेन तदवबोधस्यापि सम्यग्ज्ञानात्मकत्वादज्ञानत्रितये सास्वादनगुणस्थानासद्भाव इति वाच्यम् । यतस्तज्ज्ञानस्य प्रथमकषायोदयेनातिदूषितत्वादज्ञानत्वमेव ॥२९॥

सामाइयछेएसु चउरो परिहार दो पमत्ताई ।
देससुहुमे सगं पढमचरमचउअजयअहखाए ॥ ३० ॥

(यशो०) सामायिकच्छेदोपस्थापनीययोश्चत्वारि प्रमत्तादीनि अनिवृत्तिबादरान्तानि । परिहारविशुद्धिके द्वे प्रमत्ताऽप्रमत्तरूपे, नोत्तराणि, श्रेण्योरभावात् । देशविरते स्वकं स्वकीयं देशविरत्यभिधम्, सूक्ष्मसंम्पराये स्वकं सूक्ष्मसंपरायात्मकम् । प्रथमचरमयोरयत-यथाख्याताभ्यां सह यथाक्रमं सम्बन्धस्ततः प्रथमानि मिथ्यादृष्ट्यादीनि चत्वार्यसंयते । यतोऽत्रासंयतत्वं विरतेरभावः, स चा-ऽविरतसम्यग्मिथ्यादृशोस्तुल्यः । यथाख्याते तु चरमाणि उपशान्तकषायादीनि चत्वारि ॥३०॥

बारस अचक्खुचक्खुसु पढमा लेसासु तिसु छ दुसु सत्त ।
सुक्काए तेरस गुणा सव्वे भव्वे अभव्वेगं ॥३१॥

(यशो०) "सव्वे भव्वे" इति पदं विहाय प्रथमशब्दस्य सर्वत्राभिसम्बन्धादचक्षुश्चक्षुर्दर्शनयोर्द्वादश प्रथमानि । लेश्यास्वाद्यासु तिसृषु प्रथमानि षट् । तत्र कृष्णादिलेश्यात्रये प्रथमानां चतुर्णां सद्भावः, मंदसंक्लेशे तु तत्र देशविरतप्रमत्तयोः सद्भावः। प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणानि ह्यध्यवसायस्थानानि । लेश्यानां मतभेदेन तु चत्वार्येव । यतः केचिद्देशविरतादित्रयस्य विशुद्धतैजस्यादित्रये सद्भावं मन्यते । न कृष्णादिलेश्यात्रये । देशविरतादित्रयस्य विरतत्वात्, तथाविधसंक्लेशवर्त्तिनः तु तत्र विरतेरभावात । द्वयोस्तैजसीपद्मलेश्ययोः सप्त प्रथमानि । शुक्लायां तु प्रथमानि त्रयोदश । भव्ये सर्वाणि चतुर्दश । अभव्ये प्रथममेकम् । ॥३१॥

वेयग खइग उवसमे चउरो एक्कारसट्ठ तुरियाई ।
सेसतिगे सट्ठाणं सन्निसु चउदस असन्निसु दो ॥३२॥

(यशो०) वेद्यन्ते=विपाकेनानुभूयन्ते सम्यक्त्वपुञ्जपुद्गला यत्र तद्वेदकं=क्षायोपशमिकम् । यदप्यन्यत्र क्षपितप्रायदर्शनसप्तकस्य सम्यक्त्वपुञ्जचरमपुद्गलग्रासरूपं वेदकमुक्तं तदप्येतदेव । तत्र वेदके क्षायिके औपशमिके च यथासंख्येन चत्वारि एकादश अष्टौ तुर्यादीनि=चतुर्थादीनि-अविरतसम्यग्दृष्टिप्रमुखाणि क्रमेणा=ऽप्रमातान्तानि अयोग्यन्तानि उपशान्तमोहान्तानीत्यर्थः । शेषत्रिके सम्यक्त्वत्रयापेक्षया विपक्षभूते मिश्रसास्वादनमिथ्यादृष्टिनाम्नि स्वस्थानं स्वपदं मिश्रे मिश्रं सास्वादने सास्वादनं मिथ्यात्वे मिथ्यात्वमित्यर्थः । संज्ञिषु=मनोविज्ञानसहितेषु चतुर्दश । यतोऽत्र द्रव्यमनोऽपेक्षया सयोगी । प्राचीनद्रव्यमनोऽपेक्षया वा-ऽयोग्यपि [illegible] व्यवहृतः । अन्ये तु केवली "नोसन्नी नोऽसन्नी" इतिवचनाऽवष्टम्भेन संज्ञिषु सयोग्यय[illegible] गुणस्थानं द्वयं न प्रतिपद्यन्ते । असंज्ञिषु द्वे आद्ये ॥३२॥

आहारगेसु पढमा तेरसणाहारगेसु पंच इमे ।
[1]पढमंतदुगअविरया इय गइयाईसु गुणठाणा ॥३३॥

(यशो०) आहारकेषु प्रथमानि त्रयोदश । अनाहारकेषु पञ्चेमा[illegible] [illegible]न्येवाह—
[illegible]ति द्विक-शब्दस्य प्रत्येकमभिसम्बन्धात्प्रथमद्विकान्त्यद्विकाविरतरूपा[illegible] मिथ्यात्व[illegible]
[illegible]दनाविरतसम्यग्दृष्टिरूपाणि विग्रहगतौ । सयोगिगुणस्थानं [illegible]
अयोगिगुणस्थानं तु पञ्चह्रस्वाक्षरोद्गिरणमात्रकालम् । [illegible]
स्थानेषु गुणस्थानानि योजितानीति शेषः ॥३३॥

1. "पढमतिमदुगअविरय गइयाईसु इय गुणट्ठाणा ॥३३॥" इत्यपि [illegible]

अधुना मार्गणास्थानेष्वेव योगान्योजयितुं योगभेदांस्तावदाह—

**सच्चं मोसं मीसं असच्चमोसं मणं तह वई य ।**
**उरलविउव्वाहारा मीसा कम्मइगमिय जोगा ॥३४॥**

(यशो०) योगाः सपूर्वं व्याकृतार्थास्ते त्रिविधा अपि पञ्चदशधा मनोयोगचतुष्टयवाग्योगचतुष्टयकाययोगसप्तकमीलनेन । अत एव गाथान्ते "इय जोगा" इतीयत्ताद्योतकं पदमुक्तम् । तत्र मनोयोगस्तावच्चतुर्द्धा, सत्यासत्यमिश्रासत्यामृषाभेदेन । तत्र सन्ति मुनयः पदार्था वा तेभ्यो मुक्तिप्रापकत्वेन यथाऽवस्थितस्वरूपपर्यालोचनेन वा हितः सत्यः । यथास्ति जीवः सदसद्रूप इत्यादि । यथावस्थितवस्तुचिन्तनपरः सत्यमनोयोगः । सत्यविज्ञानजनकत्वात्तु मनोयोगस्य सत्यत्वव्यपदेशः, कारणे कार्योपचारात् । एवमन्यत्रापि । तद्विपरीतोऽसत्यो=मृषा । यथा नास्ति जीव एकान्तसद्रूपो वेत्यादि विमर्शनपरः । सत्यासत्योभयरूपो मिश्रो यथा धवखदिरमिश्रेषु बहुष्वशोकवनमिति विकल्पननिष्ठः । न विद्यते सत्यं यत्र सोऽसत्यो न विद्यते मृषा यत्रासावमृषा असत्यश्चासावमृषश्च कृताकृतादिवत्कर्मधारयेऽसत्यामृषः । यत्किल विवादे सति वस्तुप्रतिष्ठाशया जिनमतानुसारेण विकल्प्यन्ते तत्सत्यम् । यज्जिनमतानवतारि विकल्पयते तदसत्यम् । यत्तु वस्तु प्रतितिष्ठासां विना स्वरूपमात्रप्रज्ञापनापरं व्यवहारपतितं विमृश्यते तन्न सत्यं नाप्यसत्यं किन्त्व सत्यामृषम् । तदेवं देवदत्त घटमानय भिक्षां देहीत्यादिपरामर्शकोऽसत्यामृषो मनोयोगः । एवं यथा मनोयोगश्चतुर्द्धा तथा तेन प्रकारेणास्ति जीवः सद्रूप इत्यादिसमुच्चारणमात्रभेदेन चतुर्द्धा वाग्योग उदाहार्यः । काययोगभेदास्तु सूचकत्वात् सूत्रस्य औदारिको वैक्रिय आहार इति त्रयः, पुनरेत एव प्रत्येकं मिश्रपदविशेषिता इति षट्, कार्मणेन सह सप्त । तत्रोदारः=प्रधानं स एवौदारिकः प्राधान्यं च तीर्थकरगणधरपुरुषापेक्षया यद्वा सातिरेकयोजनसहस्रमानत्वात् शेषभवधारणीयकायेभ्यो महाप्रमाण उदारः, स एवौदारिकः काययोगः । विशिष्टा विविधा वा क्रिया विक्रिया, तस्या भावो वैक्रियः । चतुर्दशपूर्वविदा संशयच्छेदनवार्थग्रहणार्थं तीर्थकरादिसन्निधिगमन-प्राणिदया-स्वसमृद्धिप्रकटनहेतवे विशिष्टलब्धिवशाद् ह्रियते=निर्माप्यत इत्याहारकः । स च जघन्यत एको द्वौ त्रयो वा उत्कर्षतः सहस्रपृथक्त्वमानो युगपन्नानाजीवानां सम्भवति । एकजीवस्य त्वेकभवे वारद्वयम् । सर्वभवेषु वारचतुष्टयमेव । चतुर्थवेलायां कृते तद्भव एव मुक्तेरिति । औदारिको मिश्रो यत्र सामर्थ्यात् तेन कार्मणेन स औदारिकमिश्रः । उत्पत्तिदेशे हि समनन्तरागतो जन्तुराद्यसमये कार्मणेनैवाहारयति । तत ऊर्द्ध्वमौदारिकस्याऽऽरब्धत्वात्कार्म्मणमिश्रेणौदारिकेण कार्म्मणौदारिकयोर्मिश्रत्वे समाने पि ओदारिकस्यारम्यमाणत्वेन प्राधान्यादौदारिकमिश्र इति व्यपदेशः । वैक्रियो मिश्र उत्तरवैक्रियारम्भत्यागकालयोः पर्याप्तदेवनारकावपेक्ष्य वैक्रियेण । केषांचिन्मतेन

बारस अचक्खुचक्खुसु पढमा लेसासु तिसु छ दुसु सत्त ।
सुक्काए तेरस गुणा सव्वे भव्वे अभव्वेगं ॥३१॥

(यशो०) "सव्वे भव्वे" इति पदं विहाय प्रथमशब्दस्य सर्वत्राभिसम्बन्धाद्चक्षुरचक्षुर्दर्शनयोर्द्वा दश प्रथमानि । लेश्यास्वाद्यासु तिसृषु प्रथमानि षट् । तत्र कृष्णादिलेश्यात्रये प्रथमानां चतुर्णां सद्भावः, मंदसंक्लेशे तु तत्र देशविरतप्रमत्तयोः सद्भावः। प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणानि ह्यध्यवसायस्थानानि । लेश्यानां मतभेदेन तु चत्वार्येव । यतः केचिद्देशविरतादित्रयस्य विशुद्धतैजस्यादित्रये सद्भावं मन्यते । न कृष्णादिलेश्यात्रये । देशविरतादित्रयस्य विरतत्वात्, तथाविधसंक्लेशवर्त्तिनः तु तत्र विरतेरभावात् । द्वयोस्तैजसीपद्मलेश्ययोः सप्त प्रथमानि । शुक्लायां तु प्रथमानि त्रयोदश । भव्ये सर्वाणि चतुर्दश । अभव्ये प्रथममेकम् । ॥३१॥

वेयग खइग उवसमे चउरो एक्कारसट्ठ तुरियाई ।
सेसतिगे सट्ठाणं सन्निसु चउदस असन्निसु दो ॥३२॥

(यशो०) वेद्यन्ते=विपाकेनानुभूयन्ते सम्यक्त्वपुञ्जपुद्गलो यत्र तद्वेदकं=क्षायोपशमिकम् । यदप्यन्यत्र क्षपितप्रायदर्शनसप्तकस्य सम्यक्त्वपुञ्जचरमपुद्गलग्रासरूपं वेदकमुक्तं तदप्येतदेव । तत्र वेदके क्षायिक ओपशमिके च यथासंख्येन चत्वारि एकादश अष्टौ तुर्यादीनि=चतुर्थादीनि-अविरतसम्यग्दृष्टिप्रमुखाणि क्रमेणाऽप्रमातान्तानि अयोग्यन्तानि उपशान्तमोहान्तानीत्यर्थः । शेषत्रिके सम्यक्त्वत्रयापेक्षया विपक्षभूते मिश्रसास्वादनमिथ्यादृष्टिनाम्नि स्वस्थानं स्वपदं मिश्रे मिश्रं सास्वादने सास्वादनं मिथ्यात्वे मिथ्यात्वमित्यर्थः । संज्ञिषु=मनोविज्ञानसहितेषु चतुर्दश । यतोऽत्र द्रव्यमनोऽपेक्षया सयोगी । प्राचीनद्रव्यमनोऽपेक्षया वा-ऽयोग्यपि संज्ञीति व्यवहृतः । अन्ये तु केवली "नोसन्नी नोऽसन्नी" इतिवचनाऽवष्टम्भेन संज्ञिषु सयोग्ययोगिरूपं गुणस्थानं द्वयं न प्रतिपद्यन्ते । असंज्ञिषु द्वे आद्ये ॥३२॥

आहारगेसु पढमा तेरसणाहारगेसु पंच इमे ।
[1]पढमंतदुगअविरया इय गइयाईसु गुणठाणा ॥३३॥

(यशो०) आहारकेषु प्रथमानि त्रयोदश । अनाहारकेषु पञ्चेमानि । तान्येवाह– 'पढमन्ते" ति द्विक-शब्दस्य प्रत्येकमभिसम्बन्धात्प्रथमद्विकान्त्यद्विकाविरतरूपाणि पञ्च । तत्र मिथ्यात्व-सास्वादनाविरतसम्यग्दृष्टिरूपाणि विग्रहगतौ । सयोगिगुणस्थानं समुद्घाते तृतीयचतुर्थपञ्चमसमयेषु । अयोगिगुणस्थाने तु पञ्चह्रस्वाक्षरोद्गिरणमात्रकालम् । इत्यमुनोल्लेखेन गत्यादिषु मार्गणास्थानेषु गुणस्थानानि योजितानीति शेषः ॥३३॥

---

१. "पढमतिमदुगअविरय गइयाइसु इय गुणट्ठाणा ॥३३॥" इत्यपि पाठः ।

अधुना मार्गणास्थानेष्वेव योगान्योजयितुं योगभेदांस्तावदाह—

सच्चं मोसं मीसं असच्चमोसं मणं तह वई य ।
उरलविउव्वाहारा मीसा कम्मइगमिय जोगा ॥२४॥

(यशो०) योगाः सपूर्वे व्याकृतार्थास्ते त्रिविधा अपि पञ्चदशधा मनोयोगचतुष्टयवाग्योगचतुष्टयकाययोगसप्तकमीलनेन । अत एव गाथान्ते "इय जोगा" इतीयत्ताद्योतकं पदमुक्तम् । तत्र मनोयोगस्तावच्चतुर्द्धा, सत्यासत्यमिश्रासत्यामृषाभेदेन । तत्र सन्ति मुनयः पदार्था वा तेभ्यो मुक्तिप्रापकत्वेन यथाऽवस्थितस्वरूपपर्यालोचनेन वा हितः सत्यः । यथास्ति जीवः सदसद्रूप इत्यादि । यथावस्थितवस्तुचिन्तनपरः सत्यमनोयोगः । सत्यविज्ञानजनकत्वात्तु मनोयोगस्य सत्यत्वव्यपदेशः, कारणे कार्योपचारात् । एवमन्यत्रापि । तद्विपरीतोऽसत्यो=मृषा । यथा नास्ति जीव एकान्तसद्रूपो वेत्यादि विमर्शनपरः । सत्यासत्योभयरूपो मिश्रो यथा धवखदिरमिश्रेषु बहुष्वशोकवनमिति विकल्पननिष्ठः । न विद्यते सत्यं यत्र सोऽसत्यो न विद्यते मृषा यत्रासावमृषा असत्यश्चासावमृषश्च कृताकृतादिवत्कर्म्मधारयेऽसत्यामृषः । यत्किल विवादे सति वस्तुप्रतिष्ठाशया जिनमतानुसारेण विकल्प्यन्ते तत्सत्यम् । यज्जिनमतानवतारि विकल्पयते तदसत्यम् । यत्तु वस्तु प्रतिविष्ठासां विना स्वरूपमात्रप्रज्ञापनापरं व्यवहारपतितं विमृश्यते तन्न सत्यं नाप्यसत्यं किन्त्व सत्यामृषम् । तदेवं देवदत्त घटमानय भिक्षां देहीत्यादिपरामर्शकोऽसत्यामृषो मनोयोगः । एवं यथा मनोयोगश्चतुर्द्धा तथा तेन प्रकारेणास्ति जीवः सद्रूप इत्यादिसमुच्चारणमात्रभेदेन चतुर्द्धा वाग्योग उदाहार्यः । काययोगभेदास्तु सूचकत्वात् सूत्रस्य औदारिको वैक्रिय आहार इति त्रयः, पुनरेत एव प्रत्येकं मिश्रपदविशेषिता इति षट्, कार्मणेन सह सप्त । तत्रोदारः=प्रधानं स एवौदारिकः प्राधान्यं च तीर्थंकरगणधरपुरुषापेक्षया यद्वा सातिरेकयोजनसहस्रमानत्वात् शेषभवधारणीयकायेभ्यो महाप्रमाण उदारः, स एवौदारिकः काययोगः । विशिष्टा विविधा वा क्रिया विक्रिया, तस्या भावो वैक्रियः । चतुर्दशपूर्वविदा संशयच्छेदनवार्थग्रहणार्थं तीर्थंकरादिसन्निधिगमन-प्राणिदया-स्वसमृद्धिप्रकटनहेतवे विशिष्टलब्धिवशाद् ह्रियते=निर्माप्यत इत्याहारकः । स च जघन्यत एको द्वौ त्रयो वा उत्कर्षतः सहस्रपृथक्त्वमानो युगपन्नानाजीवानां सम्भवति । एकजीवस्य त्वेकभवे वारद्वयम् । सर्वभवेषु वारचतुष्टयमेव । चतुर्थवेलायां कृते तद्भव एव मुक्तेरिति । औदारिको मिश्रो यत्र सामर्थ्याय तेन कार्मणेन स औदारिकमिश्रः । उत्पत्तिदेशे हि समनन्तरागतो जन्तुराद्यसमये कार्मणेनैवाहारयति । तत ऊर्ध्वमौदारिकस्याऽऽरब्धत्वात्कार्म्मणमिश्रेणौदारिकेण कार्मणौदारिकयोर्मिश्रत्वे समाने पि ओदारिकस्यारम्यमाणत्वेन प्राधान्यादौदारिकमिश्र इति व्यपदेशः । वैक्रियो मिश्र उत्तरवैक्रियारम्भत्यागकालयोः पर्याप्तदेवनारकावपेक्ष्य वैक्रियेण । केषांचिन्मतेन

तु कृतवैक्रयसमुद्घातौ तावपेक्ष्य कार्म्मणेनापि । अपर्याप्तदेवनारकापेक्षया तु कार्मणेन । पर्याप्तबादरवायुकायिकपञ्चेन्द्रियतिर्यग्मनुष्यापेक्षया पुनरौदारिकेण यत्र स वैक्रियमिश्रः । अत्रा-ऽपि प्रारम्भकाले प्रारम्यमाणत्वेन त्यागकाले च बहुव्यापकत्वेन वैक्रियस्य प्राधान्याद्वैक्रियमिश्र इति व्यपदेशः, न तु कार्मणमिश्र इत्यौदारिकमिश्र इति वा । अत्र सैद्धान्तिका वायुकायिकतिर्यग्मनुष्याणां वैक्रियस्यारम्भकाले औदारिकस्य बहुव्यापारत्वेन प्राधान्यादौदारिकमिश्रमभ्युपयन्ति । अन्गे तु वैक्रियत्यागकाले औदारिकस्य प्रारम्यमाणत्वेन प्राधान्यादौदारिकमिश्रमभ्युपयन्ति । आहारको मिश्रो यत्र सामर्थ्यप्राप्तेनौदारिकेण स आहारकमिश्रः । अयं च चतुर्दशपूर्वविद आहारकारम्भत्यागकालयोर्बोद्धव्यः । अन्ये त्वाहारकस्याऽऽरम्भकाले, केचित्तु त्यागकाल औदारिकमिश्रं मन्यन्ते । कारणानि तु पूर्ववत् , कर्मैव कार्मणम् , कर्मविपाको वा कार्मणः, तद्रूपः काययोगः । अयं तु केवल ऋजुगतौ विग्रहगतावुत्पत्तिप्रथमसमये केवलिसमुद्घातस्य च त्रिचतुःपञ्चसमयेषु लभ्यते । तैजसकाययोगस्तु सर्वदैव कार्मणसहभावित्वात् कार्मणेनैव संगृहीत इति पृथग्नोक्तः । मनोवाक्काययोगानां क्रमकारणं प्रागुक्तम् , मनोभेदेषु प्रशस्यत्वादादौ सत्यस्य, ततस्तत्प्रतिपक्षत्वादसत्यस्य, ततस्तदुभयनिष्पन्नत्वान्मिश्रस्य, तदनुभयलब्धात्मलाभत्वादसत्यामृषस्योपादानम् । एष एव वाग्भेदेष्वपि निर्देशक्रमहेतुः । △काययोगभेदेषु पुनरुत्कृष्टतोऽ-नन्तकालभावित्वेनौदारिकस्य, तत उत्कृष्टतः संख्यातसागरोपमकालभावित्वेन वैक्रियस्य, ततोन्तर्मुहूर्तकालभावित्वेना-ऽऽहारकस्य, तत औदारिकादियोगमू(लानां मिश्राणां कार्मणे)रौदारिकादिमिश्राणाम् । तदनन्तरं केवलस्य कतिपयसमयभावित्वेन संसारान्त(र्वर्तिनां संसार)निमित्त(त्वेन च कार्मणस्य निर्देशः ॥ ३४ ॥

अथ तान् मार्गणा) स्थानेषु योजयति ।

**एकारस सुरनारयगईसु आहारउरलदुगरहिया ।**
**जोगा तिरियगईए तेरस आहारगदुगूणा ॥३५॥**

(यशो०) सुरनारकगत्योरेकादश योगाः । द्विकशब्दस्य प्रत्येकमभिसम्बन्धादाहारकद्विकेन रहिता औदारिकद्विकेन रहिताः । आहारका-ऽऽहारकमिश्रौदारिकौदारिकमिश्रैरहिता एकादश योगा इत्यर्थः । आहारकद्विकं यतेरेव औदारिकद्विकं तिर्यग्नराणामेवेति तत्परिहरणम् , तिर्यग्गतौ त्रयोदश, के ? आहारकद्विकेनोना = ऽऽहारकद्विकशेषा । भावना पूर्ववत् ॥३५॥

---

△ अयं च बाहुल्यापेक्षया विवक्षाभेदः । अन्यथौदारिककायस्योत्कृष्टकालो देशोनद्वाविंशतिवर्षसहस्राणि, वैक्रियस्य चान्तर्मुहूर्तमात्र एव इति ज्ञेयम् ।

नरगइपणिंदितसतणुनरअपुमकसायमइसुओहिदुगे ।
अच्चक्खुछलेसाभव्वसम्मदुगसन्निसु य सव्वे ॥ ३६ ॥

(यशो०) अत्राऽऽद्यार्धे समाहारद्वन्द्वोऽपरार्द्धे तु "सन्निसु ये"तिपर्यन्त इतरेतरयोगः "अपुमे"ति नपुंसकः अवधिद्विक=मवधिज्ञानावधिदर्शने, सम्यक्त्वद्विकं=क्षायोपशमिक-क्षायिके, ततो नरगत्यादिषु पञ्चविंशतिसंख्येषु स्थानेषु सर्वयोगाः । भावना तु प्रतीता ॥३६॥

एगिंदिएसु पंच उ कम्मइगविउव्विउरलजुअलाणि ।
कम्मुरलदुगं अन्तिमभासा विगलेसु चउरोत्ति ॥३७॥

(यशो०) तुरेवार्थे, पञ्चैव, एकेन्द्रियेषु के ? कार्म्मणं युगलशब्दस्य वैक्रि[या-ऽऽहार]यौदा-रि)काभ्यामभिसम्बन्धाद्वैक्रिययुगलमौदारिकयुगलं च । तत्र कार्मणं विग्रहगता ऋजुगतावुत्पत्तिप्र-थमसमये च औदारिकद्विकं पर्याप्तापर्याप्तदशायाम् । वैक्रियद्विकं तु पर्याप्तबादरवायुकायि-कापेक्षम् । विकलेषु=विकलेन्द्रियेषु=द्वित्रिचतुरिन्द्रियेषु कार्म्मणमौदारिकद्विकमन्तिमभाषा चास-त्यामृषारूपेति चत्वारः । भावना सुगमा ॥३७॥

कम्मुरलदुगं थावरकाए वाए विउव्विजुयलजुयं ।
पढमंतिममणवइदुगकम्मुरलदुकेवलदुगंमि ॥३८॥

(यशो०) स्थावरकाये पृथिव्यादौ वनस्पत्यन्तेऽर्थाद्वायुवर्जे, कार्मणं च औदारिकद्विकं चेति द्वन्द्वे कार्म्मणौदारिकद्विकमिति योगत्रयम् । एतदेव वायुकाये वैक्रियद्विकेन युतं=युक्तमिति योगप-ञ्चकम् । भावना त्वेकेन्द्रियवत् । प्रथमं सत्यमन्तिममसत्यामृषं मनस्तद्रूपं द्विकं प्रथमा सत्यान्तिमा-ऽसत्यामृषा वाक् तद्रूपं द्विकं कार्मणमौदारिकद्विकं चेति योगसप्तकं केवलज्ञानकेवलदर्शनयोः । अत्र द्रव्यमनः प्रतीत्य मनोभेदद्वयमुक्तम्, वागूद्वयमौदारिकं च प्रतीतम् । कार्मणौदारिकमिश्रयोगौ तु समुद्घाते । उक्तञ्च-"औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः । मिश्रौदारिकयोक्ता सप्तमषष्ठ द्वितीयेषु ॥ कार्म्मणशरीरयोगी चतुर्थके पंचमे तृतीये च"ति ॥३८॥

[1]थीवेयअनाणोवसमअजयसासणअभव्वमिच्छेसु ।
तेरस मणवइमणनाणछेयसामइयचक्खुसु य ॥३९॥

(यशो०) अत्र पूर्वार्द्धप्रतिपादिते स्थाननवके आहारकद्विकवर्जास्त्रयोदश । द्वितीयार्द्धगते तु स्थानपट्केऽपर्याप्तत्वाभावादौदारिकमिश्रकार्म्मणवर्जास्त्रयोदश विवक्षितवर्जनीयं योगद्विकं च सूत्र-कृता सुज्ञानत्वान्नोक्तमिति ॥३९॥

१. "थीवेअन्नाणो"० इत्यपि पाठः ।

परिहारे सुहुमे नव उरलवइमणा सकम्मुरलमिस्सा ।
अहखाए सविउव्वा मीसे देसे सविउवदुगा ॥ ४० ॥

(यशो०) परिहारविशुद्धिके सूक्ष्मसम्पराये च औदारिको वाक्चतुष्टयं मनश्चतुष्टयं चेति नव । ते पूर्वोक्ता नव कार्मणौदारिकमिश्रौ केवलिसमुद्घातापेक्षौ [। उपशां](चेत्येकादश योगा यथाख्यातसं)यमेऽन्त्यगुणस्थानचतुष्कवर्त्तिनि भवन्ति । तत्र कार्म्मणौदारिकमिश्रौ केवलिसमुद्घातापेक्षौ । उपशान्तक्षीणमोहयोस्तु नव नव योगाः । अयोगिनि सर्वयोगाभाव एव । मिश्रगुणस्थानके तच्छब्दानुवृत्त्या ते पूर्वोक्ताः परिहारविशुद्धिकसूक्ष्मसम्परायसम्बन्धिनो नव, वैक्रियसहिता दश । अत्र "न सम्ममिच्छो कुणइ काल" मिति वचनान्मिश्रस्य मरणाभावेन विग्रहगतिभावि कार्मणमपर्याप्तावस्थाभाविनावौदारिकमिश्रदेवनारकसम्बन्धिवैक्रियमिश्रौ च न भवन्ति । नरतिरश्चोस्तु सम्यग्मिथ्यादृशोर्वैक्रियमिश्राभावो वैक्रियस्यैवाकरणादन्यतो वा कारणादिति तत्त्वविदो विदन्ति । आहारकद्विकाभावः प्रतीतः । देशे=देशविरतेऽत्रापि तच्छब्दानुवृत्त्या ते पूर्वोक्ता नव वैक्रियद्विकेन तु सहिता एकादश । वैक्रियद्विकं देशविरतस्याम्बडपरिव्राजक_स्यैक](स्येव) वैक्रियलब्धौ सत्यां द्रष्टव्यम् ॥४०॥

कम्मुरलविउव्वदुगाणि चरमभासा य छ उ असन्निंमि ।
जोगा अकम्मगाहारगेसु कम्मणमणाहारे ॥ ४१ ॥

(यशो०)द्विकशब्दस्यौदारिकवैक्रियाभ्यामभिसम्बन्धात्कार्म्मणौदारिकद्विकवैक्रियद्विकान्यऽसत्यामृषा भाषा चेति षड् योगाः । असंज्ञिनि=मनोविज्ञानशून्य एकेन्द्रियादौ । तत्र कार्म्मणं विग्रहगतौ, औदारिकमिश्रोऽपर्याप्तावस्थायाम्, औदारिकं पर्याप्तावस्थायाम्, वैक्रियद्विकं च बादरपर्याप्तवायोः, असत्यामृषा भाषा च पर्याप्तद्वीन्द्रियादीनाम् । आहारकेषु योगा अकर्म्मकाः कार्मणरहिताश्चतुर्दशेत्यर्थः । यत्तु ऋजुगतौ विग्रहगतौ "जोएण कम्मएणं आहारेई अणंतरं जीवो ।" इति वचनादुत्पत्तिपञ्चमसमये कार्म्मणवतोऽप्या-ऽऽहारकत्वम्, तदल्पकालभावित्वान्न विवक्षितमि[ति यु](त्यु) च्यते । कार्मणमेकमेवानाहारके । अनाहारको हि मिथ्यादृष्टि-सासादना-ऽविरतगुणस्थानत्रये विग्रहगतौ सयोगिगुणस्थाने च केवलिसमुद्घाततृतीयचतुर्थपञ्चमसमयेषु प्राप्यते । स च तदा कार्मणेनैव योगेन युतः । अयोगिनस्तु अनाहारकस्य न कार्मणयोगोऽपि, निरुद्धसमग्रयोगत्वादेव ॥४१॥

अधुना मार्गणास्थानेषु योजयितुमुपयोगान् भेदतः स्वरूपतश्च तावदाह—

नाणं पंचविहं तह अन्नाणतिगं ति अट्ठ सागारा ।
चउदंसणमणगारा बारस जियलक्खणुवओगा ॥४२॥

(यशो०)उपयुज्यते=ऽर्थपरिच्छित्तिं प्रति व्यापार्यत इति उपयुज्यतेऽर्थे परिच्छेदं प्रतिव्यापा-

र्यते जीव एभिरिति वा उपयोगा=जीवस्वतत्त्वभूतबोधात्मनः। ते च परिच्छेद्यभेदाद् द्वेधा। साकारा अनाकाराश्च। तत्र सामान्यविशेषात्मके वस्तुनि विशेषांशग्राहिणः साकाराः। सह विशिष्टाकारेण विशेषग्राहित्वात्मकेन वर्त्तन्ते इति कृत्वा। सामान्यांशग्राहिणोऽनाकाराः। विशिष्टाकारस्याऽभावात्। तत्र ज्ञानपञ्चकं मतिज्ञानादि पूर्वोपवर्णितं मत्यज्ञानाद्यज्ञानत्रिकं चेत्यष्टौ साकाराः। चतुर्णां दर्शनानामचक्षुर्दर्शनादीनां प्राग्व्याकृतार्थानां समाहारश्चतुर्दर्शनमितिशब्दानुवृत्तेरिति दर्शनचतुष्टयरूपा अनाकाराः। एते न भेदानुगतं स्वरूपमुक्तम्। 'जीवलक्खणं''ति जीवानां लक्षणानि=स्वरूपाणि 'उपयोगलक्षणो जीव'' इति वचनादिदं च सामान्यानुयायि स्वरूपम्। द्वादशेति संख्यायाः सामर्थ्यगम्याया अपि साक्षादुपादानमेतवान्त एव न न्यूनाधिका इति नियमार्थम्। अत्र ''सव्वाउ लद्धीओ सागरोवउत्तस्स भवन्ती'' ति वचनाल्लब्धिहेतुत्वेन प्राधान्यात्। छद्मस्थगतसाकाराणामन्तर्मुहूर्त्तकालत्वेनान्ये-ऽपि साकाराणां पर्यायपरिच्छेदकतयाचिरस्थायित्वेनाऽनाकारेभ्यः संख्यातगुणकालत्वादादौ साकारा उक्ताः, ततोऽनाकाराः। यत्तु विभङ्गज्ञानान्निवर्त्तमानस्य साकारानाकारोपयोगद्वयेऽपि वर्त्तमानस्य सम्यक्त्वावधिज्ञानप्रतिपत्तिरस्तीत्युक्तं पञ्चमाङ्गे तदवस्थितपरिणामापेक्षया ''सव्वाओ लद्धीओ'' इत्यादि तु वचनं प्रवर्त्तमानपरिणामापेक्षयेति न विरोधः। ज्ञानपञ्चकस्या-ऽज्ञानत्रिकस्य दर्शनचतुष्कस्य च निर्देशक्रमहेतवः प्रागुक्ताः ॥४२॥

अथैतान् मार्गणास्थानेषु योजयति–

मणुयगईए बारस मणकेवलदुगविहिया नवन्नासु।
थावरइगबितिइंदिसु अचक्खुदंसणमनाणदुगं ॥ ४३ ॥

(यशो०) मनुष्यगतौ द्वादश, तत्र सर्वेषामपि सम्भवात्। मनःपर्यव-केवलद्विकवर्जिता नवाऽन्यासु देव-तिर्यग्नरकगतिषु। मनःपर्यवकेवलद्विकाभावस्तु संयमपरिणामाभावात्। स्थावरेषु पृथिव्यादिषु पञ्चसु एक-द्वि-त्रीन्द्रियेषु चाष्टासु पदेषु अचक्षुर्दर्शनमत्यज्ञानश्रुताज्ञानरूपमुपयोगत्रयम् ॥४३॥

चक्खुजुयं चउरिंदिसु तं च्चिय बारस पणिंदितसकाए।
जोए वेए सुक्काए भव्वसन्नीसु आहारे ॥ ४४ ॥

(यशो०) चक्षुर्दर्शनयुक्तं तदेव प्राचीनमुपयोगत्रयं चतुरिन्द्रियेषु पञ्चेन्द्रियादिषु द्वादशसु पदेषु द्वादशोपयोगाः प्रतीताः। परं यत्संज्ञिनि केवलद्विकं निगदितं तत्केवलिनः संज्ञ्य-ऽसंज्ञिव्यपदेशशून्यस्यापि द्रव्यमनोऽपेक्षया 'संज्ञि' इति विवक्षणान्मन्तव्यम्। यस्त्वनिवृत्तिबादर एव व्य-

वच्छिन्नेऽपि वेदत्रिके केवलिद्विकमुक्तम्, तदाकारमात्राश्रयणेन केवलिनो पि पुरुषादिव्यपदेशभाजनत्वाद् द्रष्टव्यम् ॥४४॥

केवलदुगहीणा दस कसायपणलेसऽचक्खुचक्खुसु य ।
केवलदुगे नियदुगं खइगे नव नो अनाणतिगं ॥४५॥

(यशो०) कषायचतुष्के लेश्यापञ्चके चक्षुरचक्षुर्दर्शनयोः केवलद्विकेन न्यूना दश; एतेषामभाव एव केवलद्विकसद्भावात् । केवलद्विके निजद्विकं केवलज्ञानकेवलदर्शनात्मकम् । क्षायिके नव, कथं नोऽज्ञानत्रिकं भवति, तदन्ये भवन्तीति तात्पर्यार्थः ॥४५॥

पढमचउनाणसंजमवेयगउवसमियओहिदंसेसु ।
नाणचउदंसणतिग केवलदुजुयं अहक्खाए ॥४६॥

(यशो.)प्रथमचतुःशब्दयोर्ज्ञानसंयमाभ्यां प्रत्येकमभिसम्बन्धात्प्रथमेषु चतुर्षु ज्ञानेषु मत्यादिषु प्रथमेषु चतुर्षु संयमेषु सामायिकादिषु वेदके=क्षायौपशमिकसम्यक्त्वे औपशमिकसम्यक्त्वाऽवधिदर्शनयोश्च ज्ञानचतुष्कं दर्शनत्रिकं चेत्युपयोगसप्तकम् । एतदेव केवलद्विकेन सहितं यथाख्यातसंयमेऽन्त्युगुणस्थानचतुष्कवर्त्तिनि । तत्रोपयोगसप्तकमेतदेव क्षीणमोहयोः, केवलद्विकं च सयोग्ययोगिगुणस्थानयोः ॥४६॥

नाणतिगदंसणतिगं देसे मीसे अनाणमीसं तं ।
केवलदुगमणपज्जववज्जा अस्संजयंमि नव ॥४७॥

(यशो०) ज्ञानत्रिकमाद्यं दर्शनत्रिकं चाद्यमिति षडुपयोगा देशविरते । मिश्रे=मिश्रगुणस्थाने तदेव ज्ञानत्रिकं दर्शनत्रिकं चेति षट् । केवलं ज्ञानत्रिकमज्ञानमिश्रं द्रष्टव्यम् । इदमत्र तात्पर्यम्—मिश्रः=सम्यगमिथ्यादृष्टिरूच्यते । ततश्च यावतांऽशेनाऽत्र सम्यग्शब्दप्रवृत्तिस्तावता ऽस्य ज्ञानं कथ्यते, यावता च मिथ्याशब्दप्रवृत्तिस्तावता तदेवा-ऽज्ञानमिश्रीभूतं द्रष्टव्यम् । अत एवावधिज्ञानांशं कंचिदाश्रित्यावधिदर्शनमप्यत्रोक्तम्, अन्यथा शुद्धे विभङ्गज्ञाने मिथ्यादृष्टेरिव न तदुक्तं स्यात् । केवलद्विकेन मनःपर्यवेन च रहिता नवाऽसंयते=संयमशून्ये मिथ्यादृष्टि-सास्वादन-मिश्रा-ऽविरतभेदे न च स्वरूपे । तत्र मिश्रे षडुक्ता एवोपयोगा । मिथ्यादृष्टेः सास्वादनस्य चाज्ञानत्रयम् । सम्यग्दृष्टेर्ज्ञानत्रयमवधिदर्शनं च । सर्वेषामप्येषां चक्षुर्दर्शनमचक्षुर्दर्शनं चेति नवोपयोगभावना ॥४७॥

अन्नाणतिगअभव्वे सासणमिच्छे य पंच उवओगा ।
दोदंसणतिअनाणा ते अविभंगा असन्निमि ॥ ४८ ॥

(यशो०) अज्ञानत्रिकादिषु षट्स्थानेषु चक्षुरचक्षुर्दर्शनरूपं द्विकमज्ञानत्रिकं चेति पञ्च । इह विभङ्गेऽवधिदर्शनाभाव उक्तः कर्मप्रकृत्यनुवृत्त्या । तत्र हि मिथ्यारूपतया सम्यक् विषयाऽनिश्चायकत्वादवधिदर्शनं न विभङ्गात्पृथग्विवक्षितम् । प्रज्ञापनायां तु विभङ्गस्याववधिदर्शनमनुमतम् । यतस्तत्रोक्तम्–"दसणं विभंगोहीण जउनु ल‍ (छ)मेवं' ति यथासम्यग्दृशो विशेषविषयमवधिज्ञानमवधिदर्शनं सामान्यविषयमेवं मिथ्यादृशो विशेषविषयो विभङ्गः सामान्यविषयमवधिदर्शनमिति । ते च प्रागुक्ताः पञ्च विभङ्गरहिताश्चत्वारोऽसंज्ञिनि=मनोविज्ञानविकले ॥४८॥

अथोपयोगोपसंहरणाय मतान्तरप्रस्तावनायचाह—

मणनाणचक्खुरहिया दस उ अणाहारगेसु उवओगा ।
इय गइयाइसु नयमयनाणत्तमिणं तु जोगेसु ॥ ४९ ॥

(यशो०) तुरेवार्थे, दशैवोपयोगा अनाहारके । अनाहारको हि विग्रहगतिकेवलिसमुद्घातभवस्थायोगिसिद्धदशास्वेव प्राप्यते । तत्र विग्रहगतौ सम्यग्दृष्टेर्ज्ञानत्रिकमवधिदर्शनं च । मिथ्यादृष्टेः सास्वादनस्य च मत्यज्ञानश्रुताज्ञाने विभङ्गज्ञानमपि तयोः,

"सन्नी नेरइएसुं उरलपरिच्चायणंतरे समए । विब्भंगं ओहिं वा अविग्गहे विग्गहे लभइ ॥"

इति वचनात्संज्ञिभ्यो नारकेषूत्पद्यमानयोरपर्याप्तदशायां मन्तव्यम्, असंज्ञिभ्यः पुनर्नरकेषूत्पन्नस्य मिथ्यादृशः पर्याप्तदशायामेव विभङ्गाज्ञानम्, यत उक्तम्—

'अस्सन्नी नरएसुं पज्जत्तो जेण लहइ विब्भंगं । नाणा तिन्नेव तओ अन्नाणा दुन्नि तिन्नेव" त्ति,

एतच्च भवनपतिव्यन्तरे-ष्वप्युत्पद्यमानयोर्वाच्यम् । ज्योतिष्कवैमानिकेषु पुनरसंज्ञिन्य उत्पाद एव नास्तीत्येव विवादो विभङ्गः । त्रयाणामप्यचक्षुर्दर्शनमेवमेतेऽष्टौ । केवलिसमुद्घाते भवस्थायोगिगुणस्थानके सिद्धेषु च केवलद्विकमिति विवेकः । इति गत्यादिषु उपयोगा योजिता इति शेषः । अत्र नयमतेन=निश्चयनयाश्रयेण नानात्वं=विशेषो नयमतनानात्वं योगेषु इदं वक्ष्यमाणम्, तुशब्दः प्राग्व्याख्यानात्करिष्यमाणव्याख्यानव्यतिरेकसूचकः ॥४९॥

तदेव नानात्वमाह—

तणुवइमणेसु कमसो दुचउतिपंचा दुअट्ठचउचउरो ।
तेरसदुबारतेरस गुणजीवुवओगजोगत्ति ॥ ५० ॥

(यशो०) तनौ=काययोगे क्रमेण द्वौ चत्वारः त्रयः पञ्च गुणस्थान-जीवस्थानो-पयोग-योगाः । वाचि=वाग्योगे क्रमेण द्वावष्टौ चत्वारः चत्वारो गुणस्थान-जीवस्थानो-पयोग-योगाः । मनसि=मनोयोगे क्रमेण त्रयोदश द्वौ द्वादश त्रयोदश गुणस्थान-जीवस्थानो-पयोग-योगा भवन्तीत्यक्षरघटना । भावार्थस्तु काययोगे मनोवाग्रहिते आद्यगुणस्थानद्वयम्, आदिमं जीवस्थानकचतुष्कम्,

वच्छिन्नेऽपि वेदत्रिके केवलिद्विकमुक्तम्, तदाकारमात्राश्रयणेन केवलिनोऽपि पुरुषादिव्यपदेशभाजनत्वाद् द्रष्टव्यम् ॥४४॥

केवलदुगहीणा दस कसायपणलेसऽचक्खुचक्खुसु य ।
केवलदुगे नियदुगं खइगे नव नो अनाणतिगं ॥४५॥

(यशो०) कषायचतुष्के लेश्यापञ्चके चक्षुरचक्षुर्दर्शनयोः केवलद्विकेन न्यूना दश; एतेषाममाव एव केवलद्विकसद्भावात् । केवलद्विके निजद्विकं केवलज्ञानकेवलदर्शनात्मकम् । क्षायिके नव, कथं नोऽज्ञानत्रिकं भवति, तदन्ये भवन्तीति तात्पर्यार्थः ॥४५॥

पढमचउनाणसंजमवेयगउवसमियओहिदंसेसु ।
नाणचउदंसणतिग केवलदुजुयं अहक्खाए ॥४६॥

(यशो.)प्रथमचतुःशब्दयोर्ज्ञानसंयमाभ्यां प्रत्येकमभिसम्बन्धात्प्रथमेषु चतुर्षु ज्ञानेषु मत्यादिषु प्रथमेषु चतुर्षु संयमेषु सामायिकादिषु वेदके=क्षायौपशमिकसम्यक्त्वे औपशमिकसम्यक्त्वाऽवधिदर्शनयोश्च ज्ञानचतुष्कं दर्शनत्रिकं चेत्युपयोगसप्तकम् । एतदेव केवलद्विकेन सहितं यथाख्यातसंयमेऽन्त्युगुणस्थानचतुष्कवर्तिनि । तत्रोपयोगसप्तकमेतदेव क्षीणमोहयोः, केवलद्विकं च सयोग्ययोगिगुणस्थानयोः ॥४६॥

नाणतिगदंसणतिगं देसे मीसे अनाणमीसं तं ।
केवलदुगमणपज्जववज्जा अस्संजयंमि नव ॥४७॥

(यशो०) ज्ञानत्रिकमाद्यं दर्शनत्रिकं चाद्यमिति षडुपयोगा देशविरते । मिश्रे=मिश्रगुणस्थाने तदेव ज्ञानत्रिकं दर्शनत्रिकं चेति षट् । केवलं ज्ञानत्रिकमज्ञानमिश्रं द्रष्टव्यम् । इदमत्र तात्पर्यम्—मिश्रः=सम्यगमिथ्यादृष्टिरुच्यते । ततश्च यावताऽंशेनाऽत्र सम्यग्शब्दप्रवृत्तिस्तावताऽस्य ज्ञानं कथ्यते, यावता च मिथ्याशब्दप्रवृत्तिस्तावता तदेवाऽज्ञानमिश्रीभूतं द्रष्टव्यम् । अत एवावधिज्ञानांशं कंचिदाश्रित्यावधिदर्शनमप्यत्रोक्तम्, अन्यथा शुद्धे विभङ्गज्ञाने मिथ्यादृष्टेरिव न तदुक्तं स्यात् । केवलद्विकेन मनःपर्यवेन च रहिता नवाऽसंयते=संयमशून्ये मिथ्यादृष्टि-सास्वादन-मिश्रा-ऽविरतभेदे न च स्वरूपे । तत्र मिश्रे षडुक्ता एवोपयोगा । मिथ्यादृष्टेः सास्वादनस्य चाज्ञानत्रयम् । सम्यग्दृष्टेर्ज्ञानत्रयमवधिदर्शनं च । सर्वेषामप्येषां चक्षुर्दर्शनमचक्षुर्दर्शनं चेति नवोपयोगभावना ॥४७॥

अन्नाणतिगअभव्वे सासणमिच्छे य पंच उवओगा ।
दोदंसणतिअनाणा ते अविभंगा असन्निमि ॥ ४८ ॥

(यशो०) अज्ञानत्रिकादिषु षट्स्थानेषु चक्षुरचक्षुर्दर्शनरूपं द्विकमज्ञानत्रिकं चेति पञ्च । इह विभङ्गेऽवधिदर्शनाभाव उक्तः कर्मप्रकृत्यनुवृत्त्या । तत्र हि मिथ्यारूपतया सम्यक् विषयाऽनिश्चायकत्वादवधिदर्शनं न विभङ्गात्पृथग्विवक्षितम् । प्रज्ञापनायां तु विभङ्गस्याप्यवधिदर्शनमनुमतम् । यतस्तत्रोक्तम्—"दसणं विभंगोहीण जउनु ल१.(क्ष)मेवे' ति यथासम्यग्दृशो विशेषविषयमवधिज्ञानमवधिदर्शनं सामान्यविषयमेवं मिथ्यादृशो विशेषविषयो विभङ्गः सामान्यविषयमवधिदर्शनमिति । ते च प्रागुक्ताः पञ्च विभङ्गरहिताश्चत्वारोऽसंज्ञिनि=मनोविज्ञानविकले ॥४८॥

अथोपयोगोपसंहरणाय मतान्तरप्रस्तावनायचाह—

**मणनाणचक्खुरहिया दस उ अणाहारगेसु उवओगा ।**
**इय गइयाइसु नयमयनाणत्तमिणं तु जोगेसु ॥ ४९ ॥**

(यशो०) तुरेवार्थे, दशैवोपयोगा अनाहारके । अनाहारको हि विग्रहगतिकेवलिसमुद्घातभवस्थायोगिसिद्धदशास्वेव प्राप्यते । तत्र विग्रहगतौ सम्यग्दृष्टेर्ज्ञानत्रिकमवधिदर्शनं च । मिथ्यादृष्टेः सास्वादनस्य च मत्यज्ञानश्रुताज्ञाने: विभङ्गज्ञानमपि तयोः,

"सन्नी नेरइएसुं उरलपरिच्चायणंतरे समए । विब्भंगं ओहिं वा अविग्गहे विग्गहे लमइ ॥"

इति वचनात्संज्ञिभ्यो नारकेषूत्पद्यमानयोरपर्याप्तदशायां मन्तव्यम्, असंज्ञिभ्यः पुनर्नरकेषूत्पन्नस्य मिथ्यादृशः पर्याप्तदशायामेव विभङ्गज्ञानम्, यत उक्तम्—

'अस्सन्नी नरएसुं पज्जत्तो जेण लहइ विब्भंगं । नाणा तिन्नेव तओ अन्नाणा दुन्नि तिन्नेवे" ति,

एतच्च भवनपतिव्यन्तरे-ष्वप्युत्पद्यमानयोर्वाच्यम् । ज्योतिष्कवैमानिकेषु पुनरसंज्ञिभ्य उत्पाद एव नास्तीत्येव विवादो विभङ्गः । त्रयाणामप्यचक्षुर्दर्शनमेवमेतेष्वष्टौ । केवलिसमुद्घाते भवस्थायोगिगुणस्थानके सिद्धेषु च केवलद्विकमिति विवेकः । इति गत्यादिषु उपयोगा योजिता इति शेषः । अत्र नयमतेन=निश्चयनयाश्रयेण नानात्वं=विशेषो नयमतनानात्वं योगेषु इदं वक्ष्यमाणम्, तुशब्दः प्राग्व्याख्यानात्करिष्यमाणव्याख्यानव्यतिरेकसूचकः ॥४९॥

तदेव नानात्वमाह—

**तणुवइमणेसु कमसो दुचउतिपंचा दुअट्ठचउचउरो ।**
**तेरसदुबारतेरस गुणजीवुवओगजोगत्ति ॥ ५० ॥**

(यशो०) तनौ=काययोगे क्रमेण द्वौ चत्वारः त्रयः पञ्च गुणस्थान-जीवस्थानो-पयोग-योगाः । वाचि=वाग्योगे क्रमेण द्वावष्टौ चत्वारः चत्वारो गुणस्थान-जीवस्थानो-पयोग-योगाः । मनसि=मनोयोगे क्रमेण त्रयोदश द्वौ द्वादश त्रयोदश गुणस्थान-जीवस्थानो-पयोग-योगा भवन्तीत्यक्षरघटना । भावार्थस्तु काययोगे मनोवाग्रहिते आद्यगुणस्थानद्वयम्, आदिमं जीवस्थानकचतुष्कम्,

वच्छिन्नेऽपि वेदत्रिके केवलिद्विकमुक्तम्, तदाकारमात्राश्रयणेन केवलिनोऽपि पुरुषादिव्यपदेशभाजनत्वाद् द्रष्टव्यम् ॥४४॥

केवलदुगहीणा दस कसायपणलेसऽचक्खुचक्खुसु य।
केवलदुगे नियदुगं खइगे नव नो अनाणतिगं ॥४५॥

(यशो०) कषायचतुष्के लेश्यापञ्चके चक्षुरचक्षुर्दर्शनयोः केवलद्विकेन न्यूना दश। एतेषामभाव एव केवलद्विकसद्भावात्। केवलद्विके निजद्विकं केवलज्ञानकेवलदर्शनात्मकम्। क्षायिके नव, कथं नोऽज्ञानत्रिकं भवति, तदन्ये भवन्तीति तात्पर्यार्थः ॥४५॥

पढमचउनाणसंजमवेयगउवसमियओहिदंसेसु ।
नाणचउदंसणतिग केवलदुजुयं अहक्खाए ॥४६॥

(यशो.)प्रथमचतुःशब्दयोर्ज्ञानसंयमाभ्यां प्रत्येकमभिसम्बन्धात्प्रथमेषु चतुर्षु ज्ञानेषु मत्यादिषु प्रथमेषु चतुर्षु संयमेषु सामायिकादिषु वेदके=क्षायोपशमिकसम्यक्त्वे औपशमिकसम्यक्त्वाऽवधिदर्शनयोश्च ज्ञानचतुष्कं दर्शनत्रिकं चेत्युपयोगसप्तकम्। एतदेव केवलद्विकेन सहितं यथाख्यातसंयमेऽन्त्यगुणस्थानचतुष्कवर्तिनि। तत्रोपयोगसप्तकमेतदेव क्षीणमोहयोः, केवलद्विकं च सयोग्ययोगिगुणस्थानयोः ॥४६॥

नाणतिगदंसणतिगं देसे मीसे अनाणमीसं तं।
केवलदुगमणपज्जववज्जा अस्संजयंमि नव ॥४७॥

(यशो०) ज्ञानत्रिकमाद्यं दर्शनत्रिकं चाद्यमिति षडुपयोगा देशविरते। मिश्रे=मिश्रगुणस्थाने तदेव ज्ञानत्रिकं दर्शनत्रिकं चेति षट्। केवलं ज्ञानत्रिकमज्ञानमिश्रं द्रष्टव्यम्। इदमत्र तात्पर्यम्—मिश्रः=सम्यगमिथ्यादृष्टिरुच्यते। ततश्च यावताऽंशेनाऽत्र सम्यग्शब्दप्रवृत्तिस्तावताऽस्य ज्ञानं कथ्यते, यावता च मिथ्याशब्दप्रवृत्तिस्तावता तदेवाऽज्ञानमिश्रीभूतं द्रष्टव्यम्. अत एवावधिज्ञानांशं कंचिदाश्रित्यावधिदर्शनमप्यत्रोक्तम्, अन्यथा शुद्धे विभङ्गज्ञाने मिथ्यादृष्टेरिव न तदुक्तं स्यात्। केवलद्विकेन मनःपर्यवेन च रहिता नवाऽसंयते=संयमशून्ये मिथ्यादृष्टि-सास्वादनमिश्रा-ऽविरतभेदे न च स्वरूपे। तत्र मिश्रे षडुक्ता एवोपयोगा। मिथ्यादृष्टेः सास्वादनस्य चाज्ञानत्रयम्। सम्यग्दृष्टेर्ज्ञानत्रयमवधिदर्शनं च। सर्वेषामप्येषां चक्षुर्दर्शनमचक्षुर्दर्शनं चेति नवोपयोगभावना ॥४७॥

अन्नाणतिगअभव्वे सासणमिच्छे य पंच उवओगा।
दोदंसणतिअनाणा ते अविभंगा असन्निमि ॥ ४८ ॥

(यशो०) अज्ञानत्रिकादिषु षट्स्थानेषु चक्षुरचक्षुर्दर्शनरूपं द्विकमज्ञानत्रिकं चेति पञ्च । इह विभङ्गेऽवधिदर्शनाभाव उक्तः कर्मप्रकृत्यनुवृत्त्या । तत्र हि मिथ्यारूपतया सम्यक् विषयाऽनिश्चायकत्वादवधिदर्शनं न विभङ्गात्पृथग्विवक्षितम् । प्रज्ञापनायां तु विभङ्गस्यावधिदर्शनमनुमतम् । यतस्तत्रोक्तम्—"दसणं विभंगोहीण जउ तु ल्ल (ल्ल)मेव" ति यथाऽसम्यग्दृशो विशेषविषयमवधिज्ञानमवधिदर्शनं सामान्यविषयमेवं मिथ्यादृशो विशेषविषयो विभङ्गः सामान्यविषयमवधिदर्शनमिति । ते च प्रागुक्ताः पञ्च विभङ्गरहिताश्चत्वारोऽसंज्ञिनि=मनोविज्ञानविकले ॥४८॥

अथोपयोगोपसंहरणाय मतान्तरप्रस्तावनायचाह—

मणनाणचक्खुरहिया दस उ अणाहारगेसु उवओगा ।
इय गइयाइसु नयमयनाणत्तमिणं तु जोगेसु ॥ ४९ ॥

(यशो०) तुरेवार्थे, दशैवोपयोगा अनाहारके । अनाहारको हि विग्रहगतिकेवलिसमुद्घातभवस्थायोगिसिद्धदशास्वेव प्राप्यते । तत्र विग्रहगतौ सम्यग्दृष्टेर्ज्ञानत्रिकमवधिदर्शनं च । मिथ्यादृष्टेः सास्वादनस्य च मत्यज्ञानश्रुताज्ञाने; विभङ्गज्ञानमपि तयोः,

"सन्नी नेरइएसु' उरलपरिच्चायणंतरे समए । विब्भंगं ओहिं वा अविग्गहे विग्गहे लभइ ॥"

इति वचनात्संज्ञिभ्यो नारकेषूत्पद्यमानयोरपर्याप्तदशायां मन्तव्यम्, असंज्ञिभ्यः पुनर्नरकेषूत्पन्नस्य मिथ्यादृशः पर्याप्तदशायामेव विभङ्गाज्ञानम्, यत उक्तम्—

'असन्नी नरएसु' पज्जत्तो जेण लहइ विब्भंगं । नाणा तिन्नेव तओ अन्नाणा दुन्नि तिन्नेवे" ति,

एतच्च भवनपतिव्यन्तरे-ष्वप्युत्पद्यमानयोर्वाच्यम् । ज्योतिष्कवैमानिकेषु पुनरसंज्ञिभ्य उत्पाद एव नास्तीत्येव विवादो विभङ्गः । त्रयाणामप्यचक्षुर्दर्शनमेवमेतेऽष्टौ । केवलिसमुद्घाते भवस्थायोगिगुणस्थानके सिद्धेषु च केवलद्विकमिति विवेकः । इति गत्यादिषु उपयोगा योजिता इति शेषः । अत्र नयमतेन=निश्चयनयाश्रयेण नानात्वं=विशेषो नयमतनानात्वं योगेषु इदं वक्ष्यमाणम्, तुशब्दः प्राग्व्याख्यानात्करिष्यमाणव्याख्यानव्यतिरेकसूचकः ॥४९॥

तदेव नानात्वमाह—

तणुवइमणेसु कमसो दुचउतिपंचा दुअट्ठचउचउरो ।
तेरसदुबारतेरस गुणजीवुवओगजोगत्ति ॥ ५० ॥

(यशो०) तनौ=काययोगे क्रमेण द्वौ चत्वारः त्रयः पञ्च गुणस्थान-जीवस्थानो-पयोग-योगाः । वाचि=वाग्योगे क्रमेण द्वावष्टौ चत्वारः चत्वारो गुणस्थान-जीवस्थानो-पयोग-योगाः । मनसि=मनोयोगे क्रमेण त्रयोदश द्वौ द्वादश त्रयोदश गुणस्थान-जीवस्थानो-पयोग-योगा भवन्तीत्यक्षरघटना । भावार्थस्तु काययोगे मनोवाग्रहिते आद्यगुणस्थानद्वयम्, आदिमं जीवस्थानकचतुष्कम्,

वच्छिन्नेऽपि वेदत्रिके केवलिद्विकमुक्तम्, तदाकारमात्राश्रयणेन केवलिनो पि पुरुषादिव्यपदेशभाजनत्वाद् द्रष्टव्यम् ॥४४॥

केवलदुगहीणा दस कसायपणलेसऽचक्खुचक्खुसु य।
केवलदुगे नियदुगं खइगे नव नो अनाणतिगं ॥४५॥

(यशो०) कषायचतुष्के लेश्यापञ्चके चक्षुरचक्षुर्दर्शनयोः केवलद्विकेन न्यूना दश: एतेषामभाव एव केवलद्विकसद्भावात् । केवलद्विके निजद्विकं केवलज्ञानकेवलदर्शनात्मकम् । क्षायिके नव, कथं नोऽज्ञानत्रिकं भवति, तदन्ये भवन्तीति तात्पर्यार्थः ॥४५॥

पढमचउनाणसंजमवेयगउवसमियओहिदंससु ।
नाणचउदंसणतिग केवलदुजुयं अहक्खाए ॥४६॥

(यशो.)प्रथमचतुःशब्दयोर्ज्ञानसंयमाभ्यां प्रत्येकमभिसम्बन्धात्प्रथमेषु चतुर्षु ज्ञानेषु मत्यादिषु प्रथमेषु चतुर्षु संयमेषु सामायिकादिषु वेदके=क्षायोपशमिकसम्यक्त्वे औपशमिकसम्यक्त्वाऽवधिदर्शनयोश्च ज्ञानचतुष्कं दर्शनत्रिकं चेत्युपयोगसप्तकम् । एतदेव केवलद्विकेन सहितं यथाख्यातसंयमेऽन्त्युगुणस्थानचतुष्कवर्तिनि । तत्रोपयोगसप्तकमेतदेव क्षीणमोहयोः, केवलद्विकं च सयोग्ययोगिगुणस्थानयोः ॥४६॥

नाणतिगदंसणतिगं देसे मीसे अनाणमीसं तं ।
केवलदुगमणपज्जववज्जा अस्संजयंमि नव ॥४७॥

(यशो०) ज्ञानत्रिकमाद्यं दर्शनत्रिकं चाद्यमिति षडुपयोगा देशविरते। मिश्रे=मिश्रगुणस्थाने तदेव ज्ञानत्रिकं दर्शनत्रिकं चेति षट् । केवलं ज्ञानत्रिकमज्ञानमिश्रं द्रष्टव्यम् । इदमत्र तात्पर्यम्—मिश्रः=सम्यगमिथ्यादृष्टिरूच्यते । ततश्च यावतांऽशेनाऽत्र सम्यग्शब्दप्रवृत्तिस्तावता ऽस्य ज्ञानं कथ्यते, यावता च मिथ्याशब्दप्रवृत्तिस्तावता तदेवा-ऽज्ञानमिश्रीभूतं द्रष्टव्यम् . अत एवावधिज्ञानांशं कंचिदाश्रित्यावधिदर्शनमप्यत्रोक्तम्, अन्यथा शुद्धे विमङ्गज्ञाने मिथ्यादृष्टेरिव न तदुक्तं स्यात् । केवलद्विकेन मनःपर्यवेन च रहिता नवाऽसंयते=संयमशून्ये मिथ्यादृष्टि-सास्वादन-मिश्रा-ऽविरतभेदे न च स्वरूपे । तत्र मिश्रे षडुक्ता एवोपयोगा । मिथ्यादृष्टेः सास्वादनस्य चाज्ञानत्रयम् । सम्यग्दृष्टेर्ज्ञानत्रयमवधिदर्शनं च । सर्वेषामप्येषां चक्षुर्दर्शनमचक्षुर्दर्शनं चेति नवोपयोगभावना ॥४७॥

अन्नाणतिगअभव्वे सासणमिच्छे य पंच उवओगा ।
दोदंसणतिअनाणा ते अविभंगा असन्निमि ॥ ४८ ॥

(यशो०) अज्ञानत्रिकादिषु षट्स्थानेषु चक्षुरचक्षुर्दर्शनरूपं द्विकमज्ञानत्रिकं चेति पञ्च । इह विभङ्गेऽवधिदर्शनाभाव उक्तः कर्मप्रकृत्यनुवृत्त्या । तत्र हि मिथ्यारूपतया सम्यक् विषयाऽनिश्चायकत्वादवधिदर्शनं न विभङ्गात्पृथग्विवक्षितम् । प्रज्ञापनायां तु विभङ्गस्यावधिदर्शनमनुमतम् । यतस्तत्रोक्तम्—"दसणं विभंगोहीण जउनु ज्ञ (ज्ञ)मेवं' ति यथासम्यग्दशो विशेषविषयमवधिज्ञानमवधिदर्शनं सामान्यविषयमेवं मिथ्यादृशो विशेषविषयो विभङ्गः सामान्यविषयमवधिदर्शनमिति । ते च प्रागुक्ताः पञ्च विभङ्गरहिताश्चत्वारोऽसंज्ञिनि=मनोविज्ञानविकले ॥४८॥

अथोपयोगोपसंहरणाय मतान्तरप्रस्तावनायचाह—

मणनाणचक्खुरहिया दस उ अणाहारगेसु उवओगा ।
इय गइयाइसु नयमयनाणत्तमिणं तु जोगेसु ॥ ४९ ॥

(यशो०) तुरेवार्थे, दशैवोपयोगा अनाहारके । अनाहारको हि विग्रहगतिकेवलिसमुद्घातभवस्थायोगिसिद्धदशास्वेव प्राप्यते । तत्र विग्रहगतौ सम्यग्दृष्टेर्ज्ञानत्रिकमवधिदर्शनं च । मिथ्यादृष्टेः सास्वादनस्य च मत्यज्ञानश्रुताज्ञाने विभङ्गज्ञानमपि तयोः,

"सन्नी नेरइएसुं उरलपरिच्चायणंतरे समए । विब्भंगं ओहिं वा अविग्गहे विग्गहे लभइ ॥"

इति वचनात्संज्ञिभ्यो नारकेषूत्पद्यमानयोरपर्याप्तदशायां मन्तव्यम्, असंज्ञिभ्यः पुनर्नरकेषूत्पन्नस्य मिथ्यादृशः पर्याप्तदशायामेव विभङ्गज्ञानम्, यत उक्तम्—

'अस्सन्नी नरएसुं पज्जत्तो जेण लहइ विब्भंगं । नाणा तिन्नेव तओ अन्नाणा दुन्नि तिन्नेवे" ति,

एतच्च भवनपतिव्यन्तरे-ष्वप्युत्पद्यमानयोर्वाच्यम् । ज्योतिष्कवैमानिकेषु पुनरसंज्ञिन्य उत्पाद एव नास्तीत्येव विवादो विभङ्गः । त्रयाणामप्यचक्षुर्दर्शनमेवमेतेऽष्टौ । केवलिसमुद्घाते भवस्थायोगिगुणस्थानके सिद्धेषु च केवलद्विकमिति विवेकः । इति गत्यादिषु उपयोगा योजिता इति शेषः । अत्र नयमतेन=निश्चयनयाश्रयेण नानात्वं=विशेषो नयमतनानात्वं योगेषु इदं वक्ष्यमाणम्, तुशब्दः प्राग्व्याख्यानात्करिष्यमाणव्याख्यानव्यतिरेकसूचकः ॥४९॥

तदेव नानात्वमाह—

तणुवइमणेसु कमसो दुअउतिपंचा दुअट्ठचउचउरो ।
तेरसदुबारतेरस गुणजीवुवओगजोगत्ति ॥ ५० ॥

(यशो०) तनौ=काययोगे क्रमेण द्वौ चत्वारः त्रयः पञ्च गुणस्थान-जीवस्थानो-पयोग-योगाः । वाचि=वाग्योगे क्रमेण द्वावष्टौ चत्वारः चत्वारो गुणस्थान-जीवस्थानो-पयोग-योगाः । मनसि=मनोयोगे क्रमेण त्रयोदश द्वौ द्वादश त्रयोदश गुणस्थान-जीवस्थानो-पयोग-योगा भवन्तीत्यक्षरघटना । भावार्थस्तु काययोगे मनोवाग्रहिते आद्यगुणस्थानद्वयम्, आदिमं जीवस्थानकचतुष्कम्,

वच्छिन्नेऽपि वेदत्रिके केवलिद्विकमुक्तम्, तदाकारमात्राश्रयणेन केवलिनो पि पुरुषादिव्यपदेशभाजनत्वाद् द्रष्टव्यम् ॥४४॥

केवलदुगहीणा दस कसायपणलेसऽचक्खुचक्खुसु य ।
केवलदुगे नियदुगं खइगे नव नो अनाणतिगं ॥४५॥

(यशो०) कषायचतुष्के लेश्यापञ्चके चक्षुरचक्षुर्दर्शनयोः केवलद्विकेन न्यूना दश; एतेषामभाव एव केवलद्विकसद्भावात्। केवलद्विके निजद्विकं केवलज्ञानकेवलदर्शनात्मकम्। क्षायिके नव, कथं नोऽज्ञानत्रिकं भवति, तदन्ये भवन्तीति तात्पर्यार्थः ॥४५॥

पढमचउनाणसंजमवेयगउवसमियओहिदंसेसु ।
नाणचउदंसणतिग केवलदुजुयं अहक्खाए ॥४६॥

(यशो.)प्रथमचतुःशब्दयोर्ज्ञानसंयमाभ्यां प्रत्येकमभिसम्बन्धात्प्रथमेषु चतुर्षु ज्ञानेषु मत्यादिषु प्रथमेषु चतुर्षु संयमेषु सामायिकादिषु वेदके=क्षायोपशमिकसम्यक्त्वे औपशमिकसम्यक्त्वाऽवधिदर्शनयोश्च ज्ञानचतुष्कं दर्शनत्रिकं चेत्युपयोगसप्तकम्। एतदेव केवलद्विकेन सहितं यथाख्यातसंयमेऽन्त्यगुणस्थानचतुष्कवर्त्तिनि। तत्रोपयोगसप्तकमेतदेव क्षीणमोहयोः, केवलद्विकं च सयोग्ययोगिगुणस्थानयोः ॥४६॥

नाणतिगदंसणतिगं देसे मीसे अनाणमीसं तं ।
केवलदुगमणपज्जववज्जा अस्संजयंमि नव ॥४७॥

(यशो०) ज्ञानत्रिकमाद्यं दर्शनत्रिकं चाद्यमिति षडुपयोगा देशविरते। मिश्रे=मिश्रगुणस्थाने तदेव ज्ञानत्रिकं दर्शनत्रिकं चेति षट्। केवलं ज्ञानत्रिकमज्ञानमिश्रं द्रष्टव्यम्। इदमत्र तात्पर्यम्—मिश्रः=सम्यगमिथ्यादृष्टिरूच्यते। ततश्च यावताऽंशेनाऽत्र सम्यग्शब्दप्रवृत्तिस्तावताऽस्य ज्ञानं कथ्यते, यावता च मिथ्याशब्दप्रवृत्तिस्तावता तदेवाऽज्ञानमिश्रीभूतं द्रष्टव्यम्. अत एवावधिज्ञानांशं कंचिदाश्रित्यावधिदर्शनमप्यत्रोक्तम्, अन्यथा शुद्धे विभङ्गज्ञाने मिथ्यादृष्टेरिव न तदुक्तं स्यात्। केवलद्विकेन मनःपर्यवेन च रहिता नवाऽसंयते=संयमशून्ये मिथ्यादृष्टि-सास्वादनमिश्रा-ऽविरतभेदे न च स्वरूपे। तत्र मिश्रे षडुक्ता एवोपयोगा। मिथ्यादृष्टेः सास्वादनस्य चाज्ञानत्रयम्। सम्यग्दृष्टेर्ज्ञानत्रयमवधिदर्शनं च। सर्वेषामप्येषां चक्षुर्दर्शनमचक्षुर्दर्शनं चेति नवोपयोगभावना ॥४७॥

अन्नाणतिगअभव्वे सासणमिच्छे य पंच उवओगा ।
दोदंसणतिअनाणा ते अविभंगा असन्निमि ॥ ४८ ॥

(यशो०) अज्ञानत्रिकादिषु षट्स्थानेषु चक्षुरचक्षुर्दर्शनरूपं द्विकमज्ञानत्रिकं चेति पञ्च। इह विभङ्गेऽवधिदर्शनाभाव उक्तः कर्मप्रकृत्यनुवृत्त्या। तत्र हि मिथ्यारूपतया सम्यक् विषयाऽनिश्चायकत्वादवधिदर्शनं न विभङ्गात्पृथग्विवक्षितम्। प्रज्ञापनायां तु विभङ्गस्यावधिदर्शनमनुमतम्। यतस्तत्रोक्तम्—"दसणं विभंगोहीण जडत्तु ξ१ (ज्ञ)मेवं"ति यथा सम्यग्दृशो विशेषविषयमवधिज्ञानमवधिदर्शनं सामान्यविषयमेवं मिथ्यादृशो विशेषविषयो विभङ्गः सामान्यविषयमवधिदर्शनमिति। ते च प्रागुक्ताः पञ्च विभङ्गारहिताश्चत्वारोऽसंज्ञिनि=मनोविज्ञानविकले ॥४८॥

अथोपयोगोपसंहरणाय मतान्तरप्रस्तावनायचाह—

**मणनाणचक्खुरहिया दस उ अणाहारगेसु उवओगा।**
**इय गइयाइसु नयमयनाणत्तमिणं तु जोगेसु ॥ ४९ ॥**

(यशो०) तुरेवार्थे, दशैवोपयोगा अनाहारके। अनाहारको हि विग्रहगतिकेवलिसमुद्घातमवस्थायोगिसिद्धदशास्वेव प्राप्यते। तत्र विग्रहगतौ सम्यग्दृष्टेर्ज्ञानत्रिकमवधिदर्शनं च। मिथ्यादृष्टेः सास्वादनस्य च मत्यज्ञानश्रुताज्ञाने विभङ्गज्ञानमपि तयोः,

"सन्नी नेरइएसुं उरलपरिच्चायणंतरे समए। विब्भंगं ओहिं वा अविग्गहे विग्गहे लभइ ॥"

इति वचनात्संज्ञिभ्यो नारकेषूत्पद्यमानयोरपर्याप्तदशायां मन्तव्यम्, असंज्ञिभ्यः पुनर्नरकेषूत्पन्नस्य मिथ्यादृशः पर्याप्तदशायामेव विभङ्गज्ञानम्, यत उक्तम्—

'अस्सन्नी नरएसुं पज्जत्तो जेण लहइ विब्भंगं। नाणा तिन्नेव तओ अन्नाणा दुन्नि तिन्नेव" ति,

एतच्च भवनपतिव्यन्तरेष्वप्युत्पद्यमानयोर्वाच्यम्। ज्योतिष्कवैमानिकेषु पुनरसंज्ञिन्य उत्पाद एव नास्तीत्येव विवादो विभङ्गः। त्रयाणामप्यचक्षुर्दर्शनमेवमेतेष्वष्टौ। केवलिसमुद्घाते भवस्थायोगिगुणस्थानके सिद्धेषु च केवलद्विकमिति विवेकः। इति गत्यादिषु उपयोगा योजिता इति शेषः। अत्र नयमतेन=निश्चयनयाश्रयेण नानात्वं=विशेषो नयमतनानात्वं योगेषु इदं वक्ष्यमाणम्, तुशब्दः प्राग्व्याख्यानात्करिष्यमाणव्याख्यानव्यतिरेकसूचकः ॥४९॥

तदेव नानात्वमाह—

**तणुवइमणेसु कमसो दुवउतिपंचा दुअट्ठचउचउरो।**
**तेरसदुबारतेरस गुणजीवुवओगजोगत्ति ॥ ५० ॥**

(यशो०) तनौ=काययोगे क्रमेण द्वौ चत्वारः त्रयः पञ्च गुणस्थान-जीवस्थानो-पयोग-योगाः। वाचि=वाग्योगे क्रमेण द्वावष्टौ चत्वारः चत्वारो गुणस्थान-जीवस्थानो-पयोग-योगाः। मनसि=मनोयोगे क्रमेण त्रयोदश द्वौ द्वादश त्रयोदश गुणस्थान-जीवस्थानो-पयोग-योगा भवन्तीत्यक्षरघटना। भावार्थस्तु काययोगे मनोवाग्रहिते आद्यगुणस्थानद्वयम्, आदिमं जीवस्थानकचतुष्कम्,

प्रथमाज्ञानद्विकमचक्षुर्दर्शनं चेत्युपयोगत्रिकम् , वैक्रियद्विकमौदारिकद्विकं कार्मणं चेति योगपञ्चकम् , मनोवर्जिते न तु कायविरहिते वाचः कायाव्यभिचारित्वाद्वाग्योगे प्रथमगुणस्थानद्वयम् , पर्याप्तापर्याप्तद्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियरूपाण्यष्टौ जीवस्थानानि, इह करणेनाऽपर्याप्तस्य वाग्योगो 'भाविनि भूतवदुपचार" इतिन्यायात् , चक्षुरचक्षुर्दर्शनमत्यज्ञानश्रुताज्ञानरूपा उपयोगाश्चत्वारः, औदारिकद्विकमसत्यमृषाभाषा कार्मणमिति योगाश्चत्वारः । मनोयोगे त्रयोदश गुणस्थानानि अयोगगुणस्थानरहितानि, संज्ञिपर्याप्ताऽपर्याप्तरूपे द्वे जीवस्थाने, करणाऽपर्याप्तस्य मनोयोगो भाविनि भूतवदुपचारात् , उपयोगा द्वादशापि, योगाः कार्म्मणौदारिकमिश्रवर्जास्त्रयोदश । मनोयोगः कायवाग्भ्यां विना न सम्भवतीति तत्सहचरितो गृहीतः । मनोयोगे च नानात्वं जीवस्थानेष्वेव शेषपदत्रयप्रतिपादनं प्रसङ्गात्कृतम् ॥५०॥

अथ लेश्यानामवसरस्ताश्चोत्तरोत्तरविशुद्धिमत्त्वात्क्रमेण स्वरूपतः प्रागेव प्रदर्शिताः, केवलं मार्ग्गणास्थानेषु योज्यन्ते—

लेसा उ तिन्नि पढमा नारगविगलग्गिवाउकाएसु ।
एगिंदिभूतरूदगअमन्निसुं पढमिया चउरो ॥५१॥

(यशो०) नारकद्वित्रिचतुरिन्द्रियाग्निकायवायुकायेषु तिस्र एव, अन्यासामसम्भवात् । एकेन्द्रियादिके पदपञ्चके प्रथमा एव प्रथमिकाश्चतस्रः । तत्र तिस्रः प्रतीताः, तेजसी पुनरीशानान्तजघन्यायुर्देवेभ्य उत्पन्नानां सूक्ष्मपृथिवीवनस्पत्यप्कायानां करणापर्याप्ततानामवगन्तव्या । एतदपेक्षयैव च करणाऽपर्याप्तकैकेन्द्रियासंज्ञिनोस्तेजसी प्रतिपादिता । शेषैकेन्द्रियशेषासंज्ञिनोस्तु मध्ये देवानामुत्पाद एव नास्ति ॥५१॥

केवलजुयलअहक्खायसुहुमरागेसु सुक्कलेसेव ।
लेसासु छसु सठाणं गइयाइसु छावि सेसेसुं ॥५२॥

(यशो०) केवलज्ञान–केवलदर्शनयोर्यथाख्याते सूक्ष्मरागे=सूक्ष्मसम्पराये च शुक्ललेश्यैव, अन्यासां व्यवच्छिन्नत्वात् । लेश्यासु षट्सु स्वस्थानं स्वकीयं स्थानं कृष्णायां कृष्णा नीलायां नीलेत्यादि । शेषेषूक्तोद्धरितेषु गत्यादिष्वेकचत्वारिंशति पदेषु षडपि । इह चैकैकस्या अपि लेश्यायाः परिणामतारतम्येनाऽसंख्येया भेदा इति विशुद्धिमधिरूढेषु मनःपर्यव-सामायिकच्छेदोपस्थापनीय-परिहारविशुद्धिकादिषु प्रतिपत्तिकालं विहाय परिणामविशेषापेक्षया प्रथमलेश्यात्रयस्यापि सद्भावात्सामान्येन लेश्या षट्कोक्तिर्न विरुध्यते । उक्तं च-

"सम्मत्तसुयं सव्वासु लहइ सुद्धासु तिसु य चारित्तं । पुव्वपडिवन्नओ पुण अन्नयरीए उ लेसाए॥" इति ॥५२॥

अथ प्रस्तावनापुरस्सरं मार्ग्गणास्थानानामल्पबहुत्वं चिन्तयति ।

**गइयाइसु अप्पबहुं भणामि सामन्नओ सठाणे वि ।**
**नरनिरयदेवतिरिया थोवा दुअसंख्ऽणंतगुणा ॥५३॥**

(यशो०) गत्यादिषु विभागेन चतुर्दशसु विभागेन द्वाषष्टिसंख्येषु मार्गणास्थानेष्वल्पबहुत्वमेतेऽल्पे एतेभ्य एते बहव इत्येवं रूपं "सठाणे वि" त्ति अपिरेवार्थे स्वस्थान एव स्वयमेव स्थानं भेदमपेक्ष्य सामान्यतोऽनपेक्षतया भवनपत्यादिगत्याद्यपेक्षं यथा भवति तथा वच्मि । तत्र नराः स्तोकाः, सर्वस्य संमूर्च्छजपर्याप्तापर्याप्तगर्भजभेदभाजो मनुष्यराशेरसंख्यातत्वेऽपि मनुजक्षेत्र एवोत्पत्तेः। नारकाद्यपेक्षया यदा तु गर्भजा एव नरा गृह्यन्ते तदा संख्याता एवेति स्तोकाः । एतेभ्यो नारकदेवौ द्वावसंख्यातौ, नारका असंख्याता देवाश्चा-ऽसंख्याता इत्यर्थः । अत्र नारकशब्दात्परेण देवशब्दोपपादान्नारकेभ्यो देवा भवनपतिव्यन्तरज्योतिष्क-वैमानिकरूपा असंख्याता इति दृश्यम् । एवमन्यत्रापि यथास्वं वाच्यम् । एतच्च "मइसुयअन्नाणिणो तुल्ले" त्यादिवक्ष्यमाणोक्तौ तुल्यादिग्रहणाद् गम्यते । एतेभ्यस्तिर्यञ्चोऽनन्तगुणाः । आनन्त्यमत्रानन्तकायिकवनस्पत्यपेक्षया ॥५३॥

**पणचउतिदुएगिन्दी थोवा तिन्नि अहिया अणन्तगुणा ।**
**तसतेउपुढविजलवाउहरियकाया पुण कमेणं ॥५४॥**
**थोवा असंखगुणिया तिन्नि विसेसाहिया अणन्तगुणा ।**

(यशो०) सूचकत्वात्सूत्रस्य 'इंदी' त्यनेन सूचितस्येन्द्रियस्य प्रत्येकमभिसम्बन्धात्पञ्चेन्द्रियाश्चतुरिन्द्रिया इत्यादि दृश्यम्, ततः पञ्चेन्द्रिया असंख्याता अपि उत्तरापेक्षया स्तोकाः । एवमुत्तरत्रापि यथास्वं संख्याताऽसंख्यातानन्तोत्तरपदापेक्षया स्तोकत्वमुद्भाव्यम् । एभ्यश्चतुरिन्द्रियत्रीन्द्रियद्वीन्द्रियास्त्रयेऽधिका विशेषाधिकाः । अत्रापि चतुरिन्द्रियेभ्यस्त्रीन्द्रिया विशेषाधिका इति निर्देशक्रमानुसारेण गम्यम् । एवमन्यत्रापि विशेषाधिकत्वादि यथासम्भवं वाच्यम् । एकेन्द्रिया अनन्तगुणास्तेष्वनन्तवनस्पतिसद्भावात् । तथा त्रसा द्वीन्द्रियाद्यास्त्रसनाडीमात्रान्तर्गतत्वेन स्तोकाः, ततस्तेजस्कायिका मनुष्यक्षेत्रभाविनो बादराः, सर्वलोकभाविनः सूक्ष्मा इत्यसंख्याताः । ततः पृथिवीकायिकास्ततोऽप्कायिकास्ततोऽपि वायुकायिका इति त्रयोऽप्यधिका = विशेषाधिकाः । यतो बादरपर्याप्ताग्निभ्यो बादरपर्याप्तपृथिव्यब्वायवः क्रमेणाऽसंख्याताः, ततोऽग्निपृथिवीजलवायव एव बादराऽपर्याप्ता असंख्याताः, ततः सूक्ष्माऽपर्याप्तास्तेजःकायिका असंख्याताः, ततः सूक्ष्मापर्याप्ताः पृथिवीजलवायवो विशेषाधिकाः, तेभ्यः सूक्ष्मपर्याप्ताग्नयोऽसंख्याताः, तेभ्यः सूक्ष्मपर्याप्तभूजलवायवो विशेषाधिका इति

प्रज्ञापनातृतीयपदार्थलेशः । वनस्पतयोऽनन्ता । आनन्त्यमनन्तकायिकापेक्षम् । दिग्वि-भागापेक्षं तु प्रज्ञापनातृतीयपदोपदर्शितम् । तं गत्यादिद्वारत्रयगोचरमल्पबहुत्वमेवम्—दक्षिणो-दीचीदिशोर्भरतैरावतादिलघुक्षेत्रवर्तितया नराः स्तोकाः । दक्षिणस्यामसंख्यातगुणाः । तस्यां हि प्रभूतपापाः कृष्णपक्षिकास्तिर्यञ्चः प्रचुरा उत्पद्यन्त इति सप्तम्याम् । एवं षष्ठयादिषु रत्नप्र-भान्तासु नारका वाच्याः । पूर्वप्रतीच्योर्भवनानां स्तोकत्वात्तन्निवासिनोपि देवाः स्तोकाः । उदीच्यामसंख्यातगुणाः । याम्यायां भवनबहुत्वादसंख्यातगुणाः । यतो निकाये निकाये चत्वारि चत्वारि शतसहस्राण्यतिरिच्यन्ते । पूर्वस्यां व्यन्तराः स्तोकाः । यतो यत्र शुषिरं तत्र व्यन्तराः प्रच-रन्ति, यत्र पुनर्घनं तत्र न प्रचरंतीति घनत्वात्पूर्वस्याममीषाम्रुपप[त्तिमती](चेरतीव)स्तोकता । अधोलौकिकग्रामसद्भावादपरस्यां विशेषाधिकाः । तत एव च याम्यायां विशेषाधिकाः । प्राचिप्रतीच्योः स्तोका ज्योतिष्काः, यतश्चन्द्रसूर्यद्वीपेषूद्यानकल्पेषु तेषामल्पा राजधान्यः । विमा-नबहुत्वात्कृष्णपाक्षिकदक्षिणदिग्गामित्वाच्च दक्षिणस्यां विशेषाधिकाः । उदीच्यां विशेषाधिकाः । यस्मात्संख्येयासंख्येययोजनेभ्यो बहिर्द्वीपवर्तिनि विस्तरदीर्घत्वाभ्यां संख्यातयोजनकोटीकोटीके मानसाभिधाने सरसि बहून् ज्योतिष्कांस्तान् क्रीडनव्यापृताननवरतमवलोक्य मत्स्यादयो जलचराः संजातजातिस्मरा आसन्नविमानदर्शनकृतनिदानाः किंचद्व्रतं प्रतिपद्य कृतानशना ज्योतिष्केषूत्पद्यन्ते । वैमानिका आद्यकल्पचतुष्टयवासिनः पूर्वस्यामपरस्यां च स्तोकाः । यत आवलिकाप्रविष्टानि विमानानि चतसृष्वपि दिक्षु तुल्यानि पुष्पावकीर्णानि तु दक्षिणस्यामुत्तरस्यां च बहून्यसंख्यातविस्तृतानि च ततः पूर्वापरयोः पुष्पावकीर्णविमानद्वारेणोदितदेवाः स्तोकाः । उत्तरस्यां पुष्पावकीर्णविमानबहुत्वेनासंख्येययोजनविस्तृतत्वेन च सौधर्मवासिनोऽसंख्यातगुणाः । दक्षिणस्यां विशेषाधिकाः, दक्षिणदिग्गामित्वाद् बहूनां कृष्णपाक्षिकजीवानाम् । ईशानवासिन उत्तरस्यामसंख्यातगुणाः । याम्यायां विशेषाधिकाः । सनत्कुमारवासिनोऽसंख्यातगुणा उत्तरस्या-म् । विशेषाधिका याम्यायाम् । एतद्दिग्गामिनो हि बहवः कृष्णपाक्षिकाः, स्वल्पाः शुक्लपाक्षिकाः । एवं महेन्द्रवासिनोऽपि । ब्रह्मलोकवासिनः पूर्वापरोत्तरासु स्तोकाः । शुक्लपाक्षिका हि अल्पा एता सूत्पद्यन्ते । उदीच्यामसंख्यातगुणाः । याम्यां त एव विशेषाधिकाः । प्रचुरकृष्णपाक्षिकतिरश्चां तत्रोत्पत्तेः । एवं सहस्रारं यावत् । आनतादिवासिनो बहुसमा मनुष्याणामेव हि तेषूत्पत्तिः । तिर्यञ्च—एकेन्द्रिय-विकलेन्द्रिय-पञ्चेन्द्रियविशेषरूपाः । अत एवैषामल्पबहुत्वमिन्द्रियकायद्वार-योर्वच्मः । तत्रेन्द्रियद्वारे पृथिव्यादयः सूक्ष्माः प्रायः सर्वत्र समा एवेति तानुपेक्ष्य बादरानाश्रि-त्याल्पबहुत्वमित्थम्—पृथिवीकायिका दक्षिणस्यां स्तोकाः । यतो यत्र घनं तत्र पृथिवी बहुर्यत्र शुषिरं तत्र स्तोका । ततोऽस्यां बहुतरा भवनावासाश्च शुषिरा इति स्तोकता तेषाम् । उदीच्यां विशेषाधिकाः, भवनावासनरकावासस्तोकतया । प्राच्यां चन्द्रसूर्यद्वीपावधिकृत्य विशेषाधिकाः ।

अपरस्यां विशेषाधिकाः । षड्सप्ततिसमधिकयोजनसहस्रोच्चत्वेन द्वादशयोजनविष्कम्भेण लवणोदधिमध्यवर्त्तिना गोतमाभिधानद्वीपेन नवयोजनशतावगाहाधोलौकिकग्रामैश्च सहितावेता-वधिकृत्य अपरस्यामापः स्तोकाश्चन्द्रसूर्यगोतमद्वीपानपेक्ष्य । पूर्वस्यां विशेषाधिकाः, यतश्चन्द्र-सूर्यद्वीपयोरेव तत्र भावो न तु गोतमद्वीपस्य । याम्यायां चन्द्रसूर्यद्वीपाभावाद्विशेषाधिकाः । उदीच्यां तु पूर्वोपवर्णितमानससरःसद्भावेन तासां विशेषाधिकत्वम् । एवमुदीच्यां मानसा-पेक्षया वनस्पति-द्वि-त्रि-चतुरिन्द्रिय-पञ्चेन्द्रियतिरश्चां पूर्वादिदिक्त्रयापेक्षया विशेषाधिकत्व-कारणमन्वेषणीयम् । दक्षिणोत्तरयोस्तेजस्कायिकाः स्तोकाः । यतोऽत्र मनुजास्तत्र पाकार-म्भेण बादरतेजस्कायानां सम्भव इति भरतैरावतेषु मनुष्याणामल्पत्वात् सुषमादिष्वभावाच्च स्तोकास्ते । पुरस्ताद्विदेहवर्त्तिमनुजजनितपाकारम्भद्वारा संख्यातगुणाः । पश्चिमायामधोलौकिक-ग्रामान्तरीकृत्य विशेषाधिकाः । पूर्वस्यां वायवः स्तोकाः । यस्माद्यत्र शुषिरं तत्र वायुर्यत्र घनं तत्र नासावस्ति । अधोलौकिकग्रामापेक्षयाऽपरस्यां विशेषाधिकाः । उत्तरस्यां भवनछिद्रबहुत्वात् विशेषाधिकाः । दक्षिणस्यां भवनबहुत्वात् शुषिरबहुत्वमिति विशेषाधिकाः । बहुतरभवनछिद्र-बहुत्वादेव । पूर्वस्यां स्तोका वनस्पतयः । **इयमत्र भावना**—इह सर्वबहवो वनस्पतय इति ते यत्र सन्ति तत्र तेषां बहुत्वम् । तेषां च तत्र बहुत्वं यत्राऽप्कायः, यत्राऽयं तत्र नियमेन वनस्पतिः पनकशैवलहढादिर्बादरः । ततश्च द्वीपद्विगुणविष्कम्भेषु समुद्रेषु सलिलं बहु । प्राचीप्रतीच्योश्च चन्द्रसूर्यद्वीपाः सन्ति । यत्र च तेऽवगाढास्तत्रोदकाभावः, तदभावाच्च वनस्पत्यभाव इति प्राच्यां स्तोका वनस्पतयः । प्रतीच्यां तु लवणसमुद्रे गौतमद्वीपोऽभ्यधिकस्तत्र च जलाभा-वादल्पतरा वनस्पतयः । याम्यायां तु चन्द्रसूर्यद्विपाभावात्पूर्वतो विशेषाधिकाः । याम्या-तोऽप्युदीच्यां मानससरोऽपेक्षया विशेषाधिकाः । मानसजलनिश्रया वनस्पतिवदुदीच्यां द्वित्रि-चतुरिन्द्रियपञ्चेन्द्रियतिरश्चां दिक्त्रयाऽपेक्षया बहुत्वमुपरत्रोहनीयम् । एवं चैकेन्द्रियाः काय-पञ्चकाव्यभिचारिण इत्येकेन्द्रियाणामल्पबहुत्वभावनयैव कायपञ्चकाल्पबहुत्वमिहापि लाघवार्थं निर्णीतमेवेति कायद्वारे कायपञ्चकस्या-ऽल्पबहुत्वगवेषणा न कार्या । द्वि-त्रि-चतुरि-न्द्रियाः पञ्चेन्द्रियतिर्यञ्चश्च प्रतीच्यां स्तोकाः । पूर्वस्यां विशेषाधिकाः । दक्षिणस्यां विशेषा-धिकाः । उत्तरस्यां विशेषाधिकाः । सुरनरनारकरूपाः पञ्चेन्द्रियाः प्रागेवाल्पबहुत्वेन निर्णीता एव । कायद्वारे पृथिव्यादयो वनस्पत्यन्तास्त्रसाश्चाल्पबहुत्वेन चिन्तिता एवेति गतीन्द्रियकायेति द्वारत्रयमूरीकृत्य दिगपेक्षयाल्पबहुत्वचिन्ता कृतोपयोगित्वात् ॥५४॥

**मणवयणकायजोगी थोवअसंखगुणणन्तगुणा ॥५५॥**

(यशो०) मनोयोगिनो गर्भजतिर्यग्मनुष्या देवा नारकाश्च असंख्याता अपि स्तोकाः । ततो वाग्योगिनो द्वीन्द्रियादयोऽसंख्यातगुणाः । काययोगिनः सर्वे संसारिणोऽनन्तगुणाः । आनन्त्यं

प्रागिव। यद्यपि निगोदजीवानामनन्तानामप्येकमौदारिकं वपुस्तथापि कार्मणापेक्षयानन्त-गुणत्वम् ॥५५॥

पुरिसेहिंतो इत्थी संखेज्जगुणा नपुंसणन्तगुणा ।
माणी कोही मायी लोभी कमसो विसेसहिया ॥५६॥

(यशो०) पुरुषेभ्यो देवगर्भजमनुजतिर्यग्विशेषरूपेभ्योऽसंख्यातेभ्यः स्त्रियो देवीनारीतिरश्च्यः संख्यातगुणाः। स्त्रीभ्यः पुरुषाः स्तोका इति तु सामर्थ्यलभ्यम्। उक्तं च—

"तिगुणा तिरूवअहिया तिरियाणं इत्थिओ मुणेयव्वा। सत्तावीसगुणा पुण मणुयाणं तदहिया चेव ॥ बत्तीसगुणा बत्तीसरूवअहिया य तह य देवाणं। देवीओ पन्नत्ता सुत्ते जीवाभिगमनामे ॥"

नपुंसकाः पूर्वोण्वर्णितस्त्रीपुरुषवर्जाः संसारिणोऽनन्ताः, आनन्त्यं प्राग्वत्। तथा मानिनः स्तोकास्ततः क्रोधिनो विशेषाधिकास्ततो मायिनस्ततोऽपि लोभिनः। यद्यप्यमी चत्वारोप्यनन्तवनस्पतिगतेन सामान्येनाऽनन्तास्तथापि कषायसत्तामात्रस्या-ऽविवक्षया तथाविधोपयोगरूपमिह कषायित्वमङ्गीकृतमितिस्वल्पकालत्वात् मानोपयोगस्य मानिनामल्पमनन्तत्वम्, ततः क्रोधादीनां यथाक्रमं बहुतरबहुतमकालत्वात् क्रोधमायालोभोपयोगानां विशेषाधिकमानन्त्यमवगन्तव्यम् ॥५६॥

मणपज्जविणो थोवा ओहिन्नाणी तओ असंखगुणा ।
मइसुयनाणी तत्तो विसेसअहिया समा दोवि ॥५७॥

(यशो.)मनःपर्यवज्ञानिनःस्तोकाः=परिमिताः,मनःपर्यवज्ञानस्य विशुद्धिमच्चारित्रवतामेव भावात्। ततोऽवधिज्ञानिनोऽसंख्यातगुणाः, असंख्यातानां देवनारकाणां भवप्रत्ययस्य तिर्यग्मनुष्याणां सम्यग्दृशां गुणप्रत्ययस्यावधेः सद्भावात्। ततो मतिज्ञानिनः श्रुतज्ञानिनश्च विशेषाधिकाः, यतस्तेऽवधिज्ञानिनो-ऽपि मनःपर्यायज्ञानिनोप्यवध्यादिरहिता अपि पञ्चेन्द्रिया भवन्ति [परस्परपेक्षया भवन्ति]। परस्परापेक्षया पुनरुभयेऽप्यमी तुल्या एव। अत एवोक्तं "समा दो वि"ति ॥५७॥

विब्भंगिणो असंखा केवलनाणी तओ अणन्तगुणा ।
तत्तोऽणन्तगुणा दो मइसुयअन्नाणिणो तुल्ला ॥५८॥

(यशो०) तत इत्यनुवृत्त्या तेभ्यो=मतिश्रुतज्ञानिभ्यो विभङ्गज्ञानिनोऽसंख्या=असंख्याता मिथ्यादृष्टिसुरादीनां विभङ्गभाजां सम्यग्दृष्ट्यपेक्षयाऽसंख्यातगुणत्वात्। ततोऽनन्तगुणाः केवलिनः, सिद्धकेवलिनामनन्तत्वात्। ततोऽनन्तगुणा मत्यज्ञानिनः श्रुताज्ञानिनश्च, अनन्तकायिकप्रक्षेपात्। सिद्धकेवलिनोऽपि हि एकस्यापि निगोदस्यानन्ततम एव भागे वर्तन्ते, परस्परममी उभयेऽपि तुल्या एव। तत एवोक्तं "तुल्ला" इति ॥५८॥

सुहुमपरिहारअहखायछेयसामइयदेसजयअजया ।
थोवा संखेज्जगुणा चउरो अस्संखणन्तगुणा ॥५९॥

(यशो०) अत्र पदैकदेशे पदसमुदायोपचारात् सूक्ष्माः=सूक्ष्मसम्परायाः स्तोकाः, उत्कृष्टतो-ऽपि शतपृथक्त्वमानत्वात्तेषाम्। पृथक्त्वं च द्विप्रभृतिरानवभ्यः संख्या। ततः "परिहार" त्ति परिहारिकाः संख्येयगुणास्तेषामुत्कृष्टतः सहस्रपृथक्त्वमानत्वात्। ततो यथाख्यातचारित्रिण उपशान्तमोह-क्षीणमोह-सयोगि-भवस्था-ऽयोगिनः संख्यातगुणाः। यत उपशान्तमोहक्षीणमोहानां मिलितानामुत्कृष्टतः शतपृथक्त्वम्। एतच्च तु पञ्चादिशतरूपम्। यच्चाग्रे केवलानां क्षीणमोहानां शतपृथक्त्वं वक्ष्यते, तद् द्व्यादिशतरूपं मन्तव्यम्। सयोगिनां कोटिपृथक्त्वम्। भवस्था-ऽयोगिनां "अट्ठसयमेगसमयओ सिज्झे" इतिवचनाद् अष्टोत्तरं शतं प्राप्यते। एतेभ्यश्छेदोपस्थापनीयचारित्रिणः संख्यातगुणाः, तेषामुत्कृष्टतः कोटीशतपृथक्त्वमानत्वात्। ततः सामायिकचारित्रिणः संख्यातगुणाः, तेषामुत्कृष्टतः कोटीसहस्रपृथक्त्वमानत्वात्। ततो देशयता=देशविरता असंख्यातगुणाः, असंख्यातत्वाद्देशविरततिरश्चाम्। ततोऽयता आद्यगुणस्थानचतुष्कवर्तिनोऽनन्ताः, अनन्तकायिकप्रक्षेपात् ॥५९॥

इय ओहिचक्खुकेवलअचक्खुदंसी कमेण विन्नेया।
थोवा अस्संखगुणा अणन्तगुणिया अणन्तगुणा ॥६०॥

(यशो०) इत्यमुनोल्लेखेन विज्ञेया इति संटङ्कः। अवधिना चक्षुषा केवलेनाऽचक्षुषा च पश्यन्तीत्येवं शीला अवध्यादिदर्शिनोऽवधिदर्शनवदादयः। तत्रावधिदर्शिनः स्तोकाः, अवधिदर्शनस्य करणपर्याप्तपर्याप्तानां संज्ञिपञ्चेन्द्रियाणां केषांचिदेव भावात्। तेभ्यश्चक्षुर्दर्शनवन्तोऽसंख्यातगुणाः, केवलिवर्जसर्वपर्याप्तचतुरिन्द्रियपञ्चेन्द्रियव्यापकत्वाच्चक्षुर्दर्शनस्य। ततोऽनन्तगुणिताः केवलदर्शिनः, अनन्त-सिद्धकेवलिप्रक्षेपात्। ततोऽनन्तगुणा अचक्षुर्दर्शनिनः, सर्वे केवलिवर्जा एकेन्द्रियादयः, अनन्तगुणत्वमनन्तवनस्पतिप्रक्षेपात् ॥६०॥

सुक्का पम्हा तेऊ काऊ नीला य किण्हलेसा य।
थोवा दो संखगुणाऽणन्तगुणा दो विसेसहिया ॥६१॥

(यशो०) इह गुणगुणिनोरभेदात् शुक्लादिलेश्याशब्देन शुक्लादिलेश्यावन्तो ग्राह्याः। तत्र शुक्ललेश्यावन्तः स्तोकाः, असंख्याता अप्युत्तरापेक्षया कतिपयमहर्द्धिकब्रह्मलोकदेवसंख्यातायुर्गर्भजनरतिरश्चां तथा लान्तकाद्यनुत्तरान्तविमानवासिनामेव शुक्लायाः सद्भावात्। ततः पद्मलेश्यावन्तः संख्यातगुणाः, कतिपयसनत्कुमारदेवसंख्यातायुर्गर्भजनरतिरश्चां माहेन्द्रदेवानां भूयसां

च ब्रह्मलोकदेवानां पद्माया भावात् । अधस्तना हि यथाक्रमं वैमानिका बहवः । ततस्तेजोलेश्यावन्तः संख्यातगुणाः, ज्योतिष्क-सौधर्मेशानवासिदेवानां कतिपयसनत्कुमारवासिदेवभवनपतिव्यन्तरसंख्याता-ऽसंख्यातायुर्गर्भजनरतिर्यगपर्याप्तबादरपृथिव्यप्प्रत्येकवनस्पतिकायानां तैजस्याः सम्भवात् । ततः कापोतलेश्यावन्तोऽनन्तगुणाः, कतिपयतृतीयनरकनारकभवनपतिव्यन्तरसम्मूर्च्छजसंख्यातासंख्यातायुर्नरतिर्यगपर्याप्तपर्याप्तपृथिव्युदकतेजोवायुप्रत्येकाऽनन्तवनस्पतिविकलेन्द्रिया-ऽसंज्ञिपञ्चेन्द्रियाणामाद्यद्वितीयनरकनारकाणां च सर्वेषां कापोत्याः सम्भवात् । ततो नीललेश्यावन्तो विशेषाधिकाः । ततोऽपि कृष्णलेश्यावन्तः । कथमेतद्यावता-ऽनन्तराभिहितनरकनारकवर्जेष्वेव कापोतलेश्यावत्सु नीलकृष्णलेश्ये प्राप्येते, यस्तु कतिपयतृतीयपञ्चमनरकनारकेषु चतुर्थनरकनारकेषु च नीललेश्या कतिपयपञ्चमनरकनारकेषु षष्ठसप्तमनरकनारकेषु च कृष्णलेश्येति विशेषः, स प्रत्युताधिकत्वप्रतिकूलः,अधस्तनाधस्तननरकवासिनो हि नारकाः स्तोकाः, सत्यम् , किन्तु येषु प्रथमं लेश्यात्रयं प्राप्यते तेषु कापोतलेश्यावद्भ्यः संक्लिष्टत्वेन नीललेश्यावन्तः किंचदधिकास्तेभ्योप्यतिसंक्लिष्टत्वेन कृष्णलेश्यावन्तः । यदुक्तम्—एकेन्द्रियानाश्रित्य **भगवतीसप्तदशशतकद्वादशोद्देशके**—"गोयमा सव्वत्थोवा एगिन्दिया तेउलेसा काउलेसा अणन्तगुणा नीललेसा विसेसाहिया किण्हलेसा विसेसाहिये"ति ।। ।।६१।।

थोवा जहन्नजुत्ताणंतयतुल्लत्ति इह अभव्वजिया ।
तेहिंतोऽणन्तगुणा भव्वा निव्वाणगमणऽरिहा ।।६२।।

(यशो०) स्तोका इह संसारे-ऽभव्यजीवाः । किंप्रमाणाः ? जघन्यं च तद्युक्तानन्तकं च तेन तुल्याः। परित्तयुक्तनिजपदोपाधिवशाद्धि त्रिविधमप्यऽनन्तकं जघन्यमध्यमोत्कृष्टभेदान्नवविधम् । तच्च जीवसमास-सार्द्धशतकादिभ्योऽभ्यूह्यम् । इह तु विस्तारभिया नाविर्भाव्यते । तेभ्यो=ऽभव्येभ्योऽनन्तगुणा भव्याः । अभव्याः सिद्धानामनन्तभागे, भव्यास्तु सिद्धेभ्योऽप्यनन्तगुणा इति ह्यागममुद्रा । ते पुनः कीदृशाः, निर्वाणगमनमवश्यप्राप्यत्वेनार्हन्ति ये, त इह भव्याः,न पुनः सामग्गिअभावाओ ववहारगरासिअप्पवेसाओ । भव्वावि ते अणन्ता जे सिद्धिसुहं न पावेंति ॥ गाथोक्तस्वरूपा अपि ।।६२।।

सासाणउवसमियमिस्सवेयगखइगमिच्छदिट्ठीओ ।
थोवा दो संखगुणा असंखगुणिया अणन्ता दो ।।६३।।

(यशो०) सास्वादना उत्कृष्टतः क्षेत्रपल्योपमासंख्येयभागवर्त्या-ऽऽकाशप्रदेशप्रमाणत्वेना-ऽसंख्याता अपि औपशमिकाऽपेक्षया स्तोकाः । सास्वादनत्वं हि औपशमिकं त्यजतां मिथ्यात्वं चाऽप्राप्नुवतां प्राप्यते । तत्र यावन्त औपशमिकं प्राप्नुवन्ति न तावन्तः सर्वेऽपि सास्वादनत्व-

स्पृशः, किन्तु केचिदेवा-ऽनन्तानुबन्ध्युदयादिति सास्वादनाः स्तोकाः। अत एवा-ऽमीभ्य औपशमिकसम्यक्त्वभाज उपशमाः संख्यातगुणा उक्ताः। ते हि

"असंखाउयतिरिया विमाणिणो पढमपुढविनेरइया। मणुया य तिसंमत्ता वेयगउवसामगा सेसा॥"

इत्युक्तेर्बहवः तृतीयनरके ऽपि कृष्णवसुदेवादीनां क्षायिकसम्यक्त्ववतां सद्भावेन 'पढमपुढविनेरइया' ति न व्यभिचारित्वम्, तेषां तद्वतां कादाचित्कत्वेनाल्पत्वादविवक्षितया जीवसमासवृत्त्युक्तयेति।
औपशमिकेभ्यो मिश्राः=सम्यग्मिथ्यादृशः संख्यातगुणाः। ते ह्यौपशमिकसम्यक्त्वभाग्भ्यो बहवो भवन्ति, यदा स्युः, मिश्रपरिणामस्य ह्येकस्मिन्नपि भवे एकस्यापि जीवस्य सर्वगतिष्वपि पुनः पुनः सम्भवः। औपशमिकं त्वनादिमिथ्यादृष्टीनां ग्रन्थिभेदे भवत्युपशमश्रेण्यां चाधिरोहतां कतिपयानामित्युपपन्नमौपशमिकसम्यक्त्ववद्भ्यो मिश्राणां संख्यातगुणत्वम्। कादाचित्कत्वं सास्वादनौपशमिकसम्यग्दृशोरपि समानम्। यदवोचाम–

"अपज्जत्तमणुस्सा वेउव्वियमिस्समीसदिट्ठी य। तह सुहुमसम्पराया परिहारियछेयचारित्ता॥
अपुव्वकरणअणियट्टिवायरा तहुवसन्तमोहा य। आहारगमिस्सोवि य सासणदिट्ठी य भयणिज्जा॥"

इत्येते एकादशापि "भयणिज्जे" ति कदाचिद्भवन्ति, कदाचिन्नेत्यर्थः। तथाहि– पर्याप्ता अपर्याप्ताश्च गर्भजमनुजाः सदाभाविन इति लब्धितः करणतश्चा-ऽपर्याप्ताः सम्मूर्च्छजा मनुजा अपर्याप्तमनुष्या मिश्राः सास्वादनाश्चैते त्रयः सर्वस्मिँल्लोके कदाचित्पल्योपमाऽसंख्येयभागं यावन्न भवन्ति। नरकदेवगतौ द्वादश मुहूर्त्ता उत्पादविरहकाल उक्त इति नारकदेवानामुत्पत्तिसमयभाविनो वैक्रियशरीरानिष्पत्तौ वैक्रियमिश्रयोगाः कादाचित्काः। एतच्छेषयोगास्तु सदाभाविनः। लब्धिप्रत्ययतिर्यग्मनुष्यवैक्रियमिश्रयोगाः पुनरिह न विवक्षिताः। सूक्ष्मसम्परायाः उत्कृष्टतः षण्मासान्यावन्न भवतीति कादाचित्काः। यतः क्षपकश्रेणिं षण्मासान्यावन्न कोऽपि कश्चित्प्रतिपद्यते। एवमपूर्वकरणा-ऽनिवृत्तिबादराणामिहोक्तानामनुक्तानां च क्षपकश्रेण्यारम्भक्षीणमोहायोगिनामप्युत्कृष्टमन्तरं वाच्यम्। मिथ्यादृष्ट्य-ऽविरतदेशविरतप्रमत्ताऽप्रमत्तसयोगिनां सदैव लोके सद्भावेन च विरहकालासम्भवः। पारिहारिका अवसर्प्पिण्यामादित एव एकविंशतिवर्षसहस्रप्रमाणं पञ्चमं षष्टं चारकं उत्सर्प्पिण्यां तावत्प्रमाणं प्रथमं द्वितीयं चारकं यावद्भरतैरावतेषु जघन्यतो न भवन्ति। छेदोपस्थानीयचारित्रिणोऽवसर्प्पिण्या उक्तप्रमाणं षष्ठमरकमुत्सर्प्पिण्या उक्तप्रमाणं प्रथमं द्वितीयं चारकं यावद् भरतैरावतेषु जघन्यतो न भवन्ति। उभयेपि पारिहारिकाः च्छेदोपस्थापनीयचारित्रिणश्चाष्टादशसागरोपमकोटीकोटीर्यावन्न प्राप्यन्ते। उत्सर्प्पिण्या आदित एव सागरोपमकोटीकोटिद्वयप्रमाणं चतुर्थं सागरोपमकोटीकोटित्रयमानं पञ्चमं सागरोपमकोटीकोटिचतुष्टयप्रमितं षष्ठं चारकं यावन्न भवन्ति, अवसर्प्पिण्यामपि सागरोपमकोटीकोटिचतुष्कप्रमाणं प्रथमं सागरोपमकोटीकोटित्रय-

परिच्छिन्नं द्वितीयं सागरोपमकोटीकोटिद्वयावच्छिन्नं तृतीयं चारकं यावन्न भवन्ति। यः पुनरुत्स-र्पिण्याश्चतुर्थारकस्यादाववसर्पिण्यास्तृतीयारकस्य पर्यन्ते कियन्तमपि कालं उभयेषामपि सद्भावः सोऽल्पकालत्वेन न विवक्षित इति न तेन न्यूनता उत्कृष्टविरहकालस्य। उपशान्तमोहा उपश-मश्रेणिवर्त्तिनश्चोत्कृष्टतो वर्षपृथक्त्वं यावन्न भवन्ति। एवमाहारकमिश्रयोगोऽपि। प्रयोजना-भावेनाहारकशरीरस्या-ऽऽरम्भाभावेनाहारकमिश्राभावात्। "आहाराइं लोए छम्मासं जा न हुन्ति उ कयाइं"ति प्रज्ञापनावचनं तु मतान्तरेण। एतेषां च मिश्रादीनां यथावसरमुत्तरत्रापि कादाचित्क-त्वं भावनीयम्। मिश्रेभ्यः क्षायोपशमिकभाजोऽसंख्यातगुणाः। एते हि सर्वदैवा-ऽसंख्यातगुणाः प्राप्यन्ते। मिश्रास्तु कदाचिदेव, कादाचित्कत्वं त्वनन्तरमेव प्रत्यपादि। वेद्यन्ते=ऽनुभूयन्ते शुद्धसम्यक्त्वपुञ्जपुद्गला अस्मिन्निति वेदकं=क्षायोपशमिकमुपचारात्तु तद्वन्त उक्ताः। एवं क्षायिकशब्देन क्षायिकवन्तो मन्तव्यास्ततः क्षायोपशमिकवद्भ्यः क्षायिका अनन्तगुणाः। सिद्धानामपि क्षेपात्। क्षायिकवद्भ्यो मिथ्यादृष्टयोऽनन्तगुणाः। एते ह्यनन्तास्तूत्सर्पिण्यवस-र्पिणीषु यावन्तः समयास्तावत्प्रमाणाः। क्षायिकवन्तस्तु एकनिगोदजीवानामप्यनन्तभाग एव वर्तन्ते ॥६३॥

सन्नी थोवा तत्तो अणन्तगुणिया असन्निणो हुन्ति[1]।
थोवाणाहारजिया तदसंखगुणा सआहारा ॥६४॥

(यशो०) संज्ञिनो मनोविज्ञानान्वितास्ते च पर्याप्तपञ्चेन्द्रिया एवेत्यऽसंख्यातमात्रत्वेना-ऽसंज्ञिभ्यः स्तोकाः। ततः संज्ञिभ्योऽसंज्ञिनोऽनन्तगुणिताः, पृथिव्याद्यसंज्ञिपञ्चेन्द्रियान्तजन्तु-व्यापित्वादसंज्ञित्वस्य। स्तोका आहारका-ऽपेक्षयाऽनाहारकजीवास्तेषां विग्रहगतिमापन्नानामन-न्तानां सिद्धानां चाऽनन्तानां सद्भावादानन्त्येऽपि तेभ्योऽसंख्यातगुणास्तदसंख्यातगुणाः, के? सहाहारेण वर्त्तन्ते इति साहारा=आहारका इत्यर्थः। अनाहारका हि एकस्यापि निगोद-स्यासंख्येयभागवर्त्तिनोऽभिहिताः, अतोऽनाहारकेभ्योऽसंख्यातगुणा आहारकाः ॥६४॥

उक्तं मार्गणास्थानगताभिधेयपदषट्कमिदानीं गुणस्थानेषु जीवस्थानाद्यभिधेयपददशकं प्ररूपयितुकामो जीवस्थानानि तावदाह—

मिच्छे सव्वे छ अपज्ज सन्निपज्जत्तगो य सासाणे।
सम्मे दुविहो सन्नी सेसेसु सन्निपज्जत्तो ॥६५॥

(यशो०)मिथ्यात्वे सर्व्वाणि जीवस्थानानि। सर्वत्रैकेन्द्रियादौ मिथ्यात्वस्य सम्भवात्। सूक्ष्मै-

---

१. "होंति" इत्यपि पाठः।

केन्द्रियवर्ज्याण्यपर्याप्तरूपाणि षट्, संज्ञिपर्याप्तश्चेति सास्वादने सप्त सास्वादनस्य हि संज्ञिपर्याप्तत्वं निर्विवादसिद्धम्। संज्ञिपर्याप्तस्य च बादरैकेन्द्रियादिषु पूर्वं बद्धायुषः पर्यन्तसमये औपशमिकं प्राप्य तदेव वमतो मिथ्यात्वं चाप्राप्नुवतस्तेष्वेवोत्पद्यमानस्योत्कृष्टतोऽपि षडावलिकामानेनाऽपर्याप्तदशायामेव सास्वादनत्वं भवतीति सास्वादनस्याऽपर्याप्तरूपमेव बादरैकेन्द्रियादिजीवस्थानषट्कम्, न तु पर्याप्तरूपम्। सूक्ष्मैकेन्द्रियेषु बद्धायुष औपशमिकं न लभत इति तत्र सास्वादनस्याभावः। सम्यक्त्वे=उपचारादविरतसम्यग्दृष्टौ द्विविधः करणपर्याप्तापर्याप्तरूपः संज्ञी, न शेषाणि। शेषेषु सम्यक्त्वाभाव एवोत्पत्तेः। शेषेपूक्तोद्धरितेषु मिश्रदेशविरतादिषु संज्ञिपर्याप्तः, एकादशसु शेषाभावस्तु सुज्ञानः ॥६५॥

इय जियठाणा गुणठाणगेसु जोगा य वोच्छमेत्ताहे।
जोगाहारदुगूणा मिच्छे सासणअविरए य ॥६६॥

(यशो०) इत्यमुनोल्लेखेन जीवस्थानानि गुणस्थानकेषूक्तानीति शेषः। योगांश्चेतः परं वक्ष्ये तानेवाह—योगा मिथ्यात्वे सास्वादनेऽविरते च संयमाभावादाहारकद्विकस्य च संयमप्रत्ययकत्वादाहारकद्विकेनोनास्तदन्ये त्रयोदशेत्यर्थः ॥६६॥

उरलविउव्विवइमणा दस मीसे ते विउव्विमीसजुया।
देसजए एक्कारस साहारदुगा पमत्तंमि ॥६७॥

(यशो०) मिश्रे=मिश्रगुणस्थानके औदारिक-वैक्रियौ काययोगौ वाग्मनसे च विशेषानिर्देशात् प्रत्येकं चतुर्द्धाऽपीति दश। मिश्रे हि संयमाभावादाहारकद्विकाभावः। कार्मणौदारिकमिश्र-वैक्रियमिश्राणामभावे कारणं "सव्विउव्वा मीसे" त्यत्रोक्तम्। ते पूर्वोक्ता दश वैक्रियमिश्रयुक्ता एकादश देशयते=देशविरते। तत्र वैक्रियद्विकं वैक्रियलब्धौ सत्याम्। अपर्याप्तत्वे भवान्तराले च देशविरतेरभावादौदारिकमिश्रकार्मणकाययोगौ नास्याऽपि स्तः। सर्वविरतेरभावाच्चाऽऽहारकद्विकाभावः। ते पूर्वोक्ता एकादश सहाहारकद्विकेन वर्त्तन्ते साहारकास्त्रयोदशेत्यर्थः, प्रमत्ते=प्रमत्तसंयते। इह हि "संयमेणाहार" इति वचनादाहारककाययोगः, आहारकाश्रयत्वाच्चाहारकमिश्रयोगः। कार्मणौदारिकमिश्राभावस्तु भवान्तरालेऽपर्याप्तदशायां च सर्वविरतेरभावात्। यत्तु केचिद्देशविरत-प्रमत्तसंयतयोर्वैक्रियद्विकं न प्रतिपद्यन्ते, तदम्बडश्रावक-विष्णुकुमार-स्थूलभद्रादिभिर्व्यभिचरतीत्युपेक्षितमाचार्येण ॥६७॥

[1]एक्कारसऽप्पमत्ते, मणवइआहारगुरलवेउव्वा।
अप्पुव्वाइसु पंचसु नव ओरालो मणवई य ॥६८॥

---

१. "एक्कारस अपमत्ते" इत्यपि पाठः।

(यशो०) अप्रमत्ते=ऽप्रमतसंयते मनश्चतुष्कं वाक्चतुष्कमाहारकौदारिकवैक्रियाश्चे त्येकादश। इह कार्मणौदारिकमिश्राभावः पूर्ववत्। वैक्रियमिश्रा ऽऽहारकमिश्रयोस्त्वऽभावोऽप्रमत्तत्वादेव। तथा ह्येतौ वैक्रियाहारकयोरारम्यमाणयोस्त्यज्यमानयोर्वा प्राप्येते। तत्रारम्भकाले लब्धेरुपजीवनौत्सुक्यात्त्यागकाले च त्यागौत्सुक्यान्नाप्रमत्तत्वम्। आरम्भत्यागकालान्तराले चौत्सुक्याभावादऽप्रमत्तताऽपीत्यप्रमत्तस्याऽपि वैक्रियाहारकावुक्तौ। केश्चित्तु सर्वथा नोक्तौ, अप्रमत्तस्य लब्धेरनुपजीवनात्। अपूर्वादिषु=निवृत्त्यादिषु पञ्चसु क्षीणमोहान्तेष्वित्यर्थः, नवौदारिककायमनश्चतुष्टयवाक्चतुष्टयलक्षणाः। इहौदारिकमिश्रकार्मणाभावः प्रागिव। अतिविशुद्धत्वादेव वैक्रियाहारककरणासम्भवाद्वैक्रियस्याहारकद्विकस्य चाभावः ॥६८॥

संप्रति योगसमर्थनापुरस्सरमुपयोगप्रस्तावनामाह—

**चरमाइममणवइदुगकम्मुरलदुगन्ति जोगिणो सत्त।**
**गयजोगो य अजोगी वोच्छमओ बारसुवओगे ॥६९॥**

(यशो०) चरममसत्यामृषमादिमं च सत्यं मन इति द्विकमेवं चरमादिमा च वागिति द्विकं कार्मणमौदारिकद्विकं चेति सप्त योगिनः=सयोगिकेवलिनः। तत्र मनोद्विकं दवीयोदेशव्यवस्थितमनःपर्ययज्ञानिप्रभृतिषु द्रव्यमनोव्यापारणाद्, वाग्द्विकं देशनादौ, कार्मणौदारिकमिश्रयोगौ यथाक्रमं तृतीय-चतुर्थ-पञ्चमसमयेषु द्वितीय-षष्ट-सप्तमसमयेषु च समुद्घाते ज्ञाव्यौ, औदारिकः प्रतीतः। अयोगी च गतयोगो=ऽपगतयोगः। अतो=योगचिन्तानन्तरमुपयोगान्वक्ष्ये, 'गुणस्थानेष्वि'ति प्रकृतम् 'द्वादशे' ति स्वरूपपरम् ॥६९॥

तानेवाह—

**अच्चक्खुचक्खुदंसणमन्नाणतिगं च मिच्छसासाणे।**
**अविरयसम्मे देसे तिनाणदंसणतिगं ति छ उ ॥७०॥**

(यशो०) कर्मप्रकृतिमतेनाऽवधिदर्शनाऽनङ्गीकारादचक्षुर्दर्शनं चक्षुर्दर्शनमज्ञानत्रिकं चेति पञ्च वचनव्यत्ययान्मिथ्यात्वसास्वादनयोः। शेषास्तु सम्यक्त्वाविनाभाविन इत्यनयोर्न भवन्ति। अविरतसम्यग्दृष्टौ चशब्दलोपादेकदेशे समुपायोपचाराच्च देशविरते च त्रीण्याद्यानि ज्ञानानि दर्शनानि चेति षट्। अज्ञानत्रिकं मिथ्यात्वाविनाभावि मनःपर्यवज्ञानकेवलद्विकं च चारित्राव्यभिचारीत्यनयोर्न भवन्ति ॥७०॥

**मीसे तिन्चिय मीसा सत्त पमत्ताइसुं समणनाणा।**
**केवलियनाणदंसणउवओगा जोगजोगीसु ॥७१॥**

(यशो०) मिश्रे=मिश्रदृष्टौ त एव प्राचिनाः षट् मिश्रा अज्ञानेनेति शेषः । अत्र भावार्थो "मीसे अनाणमीसं तं"इत्यत्र योऽभिहितः स एवानुसर्त्तव्यः । शेषोपयोगाभावः पूर्ववत् । प्रमत्तादिषु सयोग्यऽयोगिनोः पार्थक्येन चिन्तनात् क्षीणमोहान्तेषु इत्यनुवृत्तेर्मतिज्ञानादयः षट् मह मनोज्ञानेन=मनःपर्यवज्ञानेनेति सप्त । शेषाभावः प्रतीतः । केवलज्ञानदर्शनोपयोगौ सयोग्ययोगिनोः, अत्र केवलद्विकस्य शेषोपयोगाऽपायेनैव भावाच्छेषाभावः ॥७१॥

साम्प्रतमागममाम्नातानामपि केषांचिदर्थानामत्रानधिकृतत्वमाह—

**सासणभावे नाणं विउव्विगाऽऽहारगे उरलमिस्सं ।**
**नेगिंदिसु [1]सासाणोत्ति नेहहिगयं सुयमयंपि ॥७२॥**

(यशो०) सास्वादनत्वे सति ज्ञानं=मत्यादि श्रुतमतमपि सास्वादनो हि किल सम्यग्दृष्टिः सम्यग्दृष्टेश्च ज्ञानमेवेति सैद्धान्तिकैः=प्रज्ञापनादिभिः आश्रितमपि नात्र प्रकरणेऽधिकृत=मभ्युपगतमपि त्वज्ञानमेवेति योगः । कार्मग्रन्थिका-(ऽङ्गी)कृतस्यैवेहाश्रितत्वादिति भावः । कार्मग्रन्थिकैर्हि कर्मप्रकृत्यनुसारिभिः सास्वादनभावेऽनन्तानुबन्ध्युदयाद्वाऽल्पकालभावित्वाद्वा ज्ञानं न विवक्षितम् । वचनव्यत्ययाद्वैक्रियाहारकयोस्त्यज्यमानयोरौदारिकमिश्रं शरीरं श्रुतमतमपि नाधिकृतमित्यत्रापि योगः । सिद्धान्ते हि प्रज्ञापनादौ (वैक्रि)यलब्धिमतां बादरवायुतिर्यग्मनुष्याणां वैक्रियस्याऽऽरम्भकाले वैक्रियमिश्रकाययोगस्त्यागकाले पुनरसा औदारिकमिश्र उक्तः । आहारकस्याप्याऽऽरम्भकाल आहारकमिश्रः त्यागकाले पुनरौदारिकमिश्रोऽभिहितः । इह तु कार्मग्रन्थिकाशयाश्रयणाद्वैक्रियाहारकयोरारम्भकाल इव त्यागकालेऽपि वैक्रियमिश्राहारकमिश्रावुक्तावित्यर्थः । तथैकेन्द्रियेषु न सास्वादन इति यत् श्रुतमतं तदप्यत्र नाधिकृतमित्यत्रापि योगः । अयं चार्थः 'पढमगुणा दो बायर" इत्यत्र निर्णीतः ॥७२॥

अथ गुणस्थानेष्वेव लेश्याः प्रतिपादयति—

**लेसा तिन्नि पमत्तं तेऊ पम्हा य अप्पमत्तंता ।**
**सुक्का जाव सजोगी निरूद्धलेसो अजोगित्ति ॥७३॥**

(यशो०) आद्यास्तिस्रो लेश्याः प्रमत्ते=प्रमत्तगुणस्थानेऽन्तस्तत्र सद्भाव उत्तरत्राभावरूपो व्यवच्छेद आसामिति। प्रमत्तान्ताः प्रमत्तं यावत्षडपि, तदूर्ध्वं तूत्तरास्तिस्र इत्यर्थः । यथा च प्रमत्तयतेर्विशुद्धस्या-ऽप्यविशुद्धमाद्यलेश्यात्रयं भवति । तथा 'गइयाइसु छावि सेसेसि" त्यत्रोक्तम् । एवं तैजसीपद्मे अप्रमत्तान्ते । अप्रमते-ऽन्त्यास्तिस्र इत्यर्थः । निवृत्तिगुणस्थानमादितः कृत्वा सयोगिकेवलिनं यावच्छुक्ला, अयोगी तु व्यवच्छिन्नलेश्यः, लेश्योच्छेद एवा-ऽयोगित्वप्राप्तेः ।

१ "सासाणो नेहाहिगयं" इत्यपि पाठः ।

(यशो०) अप्रमत्ते=ऽप्रमतसंयते मनश्चतुष्कं वाक्चतुष्कमाहारकौदारिकवैक्रियाश्चे त्येकादश । इह कार्मणौदारिकमिश्राभावः पूर्ववत् । वैक्रियमिश्रा ऽऽहारकमिश्रयोस्त्वभावोऽप्रमत्तत्वादेव । तथा ह्येतौ वैक्रियाहारकयोरारम्यमाणयोस्त्यज्यमानयोर्वा प्राप्येते । तत्रारम्भकाले लब्धेरुपजीव-नौत्सुक्यात्त्यागकाले च त्यागौत्सुक्यान्नाप्रमत्तत्वम् । आरम्भत्यागकालान्तराले चौत्सुक्याभावा-दऽप्रमत्तताऽपीत्यप्रमत्तस्याऽपि वैक्रियाहारकावुक्तौ । कैश्चित्तु सर्वथा नोक्तौ, अप्रमत्तस्य लब्धे-रनुपजीवनात् । अपूर्वादिषु=निवृत्त्यादिषु पञ्चसु क्षीणमोहान्तेष्वित्यर्थः, नवौदारिककायम-नश्चतुष्टयवाक्चतुष्टयलक्षणाः । इहौदारिकमिश्रकार्मणाभावः प्रागिव । अतिविशुद्धत्वादेव वैक्रियाहारककरणासम्भवाद्वैक्रियस्याहारकद्विकस्य चाभावः ॥६८॥

संप्रति योगसमर्थनापुरस्सरमुपयोगप्रस्तावनामाह—

**चरमाइममणवइदुगकम्मुरलदुगन्ति जोगिणो सत्त ।**
**गयजोगो य अजोगी वोच्छमओ बारसुवओगे ॥६९॥**

(यशो०) चरममसत्यामृषमादिमं च सत्यं मन इति द्विकमेवं चरमादिमा च वागिति द्विकं कार्मणमौदारिकद्विकं चेति सप्त योगिनः=सयोगिकेवलिनः । तत्र मनोद्विकं दवीयोदेशव्यवस्थित-मनःपर्ययज्ञानिप्रभृतिषु द्रव्यमनोव्यापारणाद् , वाग्द्विकं देशनादौ, कार्मणौदारिकमिश्रयोगौ यथाक्रमं तृतीय-चतुर्थ-पञ्चमसमयेषु द्वितीय-षष्ट-सप्तमसमयेषु च समुद्घाते ज्ञाप्यौ, औदारिकः प्रतीतः । अयोगी च गतयोगो=ऽपगतयोगः । अतो=योगचिन्तानन्तरमुपयोगान्वक्ष्ये, 'गुणस्थानेष्वि'ति प्रकृतम् 'द्वादशे' ति स्वरूपपरम् ॥६९॥

तानेवाह—

**अच्चक्खुचक्खुदंसणमन्नाणतिगं च मिच्छसासाणे ।**
**अविरयसम्मे देसे तिनाणदंसणतिगं ति छ उ ॥७०॥**

(यशो०) कर्मप्रकृतिमतेनाऽवधिदर्शनाऽनङ्गीकारादचक्षुर्दर्शनं चक्षुर्दर्शनमज्ञानत्रिकं चेति पञ्च वचनव्यत्ययान्मिथ्यात्वसास्वादनयोः । शेषास्तु सम्यक्त्वाविनाभाविन इत्यनयोर्न भवन्ति । अविरतसम्यग्दृष्टौ चशब्दलोपादेकदेशो समुदायोपचाराच्च देशविरते च त्रीण्याद्यानि ज्ञानानि दर्शनानि चेति षट् । अज्ञानत्रिकं मिथ्यात्वाविनाभावि मनःपर्यवज्ञानकेवलद्विकं च चारित्राव्य-भिचारीत्यनयोर्न भवन्ति ॥७०॥

**मीसे तिच्चिय मीसा सत्त पमत्ताइसुं समणनाणा ।**
**केवलियनाणदंसणउवओगा जोगजोगीसु ॥७१॥**

तस्य क्रिया सम्भवतीति वक्तुं शीलानामक्रियावादिनां चतुरशीतेः, अज्ञानेन चरतामज्ञानप्रयोजनानां वाऽज्ञानिकानां सप्तषष्टेः, विनयेन चरतां विनयप्रयोजनानां वा वैनयिकानां द्वात्रिंशतश्च, मीलनेन त्रिषष्ट्यधिकं शतत्रयविधम्। तत्र जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षाभिधाना नवपदार्थाः, स्वपरभेदाभ्यां क्रमेण काले-श्वरा-ऽऽत्म-नियति-स्वभावभेदान्विताभ्यामस्तित्वेन चिन्त्यमाना अशीत्युत्तरं शतं विकल्पानाविर्भावयन्ति। अस्ति जीवः स्वतो नित्यः कालतः १, तथास्ति जीवः स्वतोऽनित्यः कालतः २, इति स्वतो भङ्गद्वयम्। एवं परतोऽपि भङ्गद्वयम्। सर्वेऽपि चत्वारः कालेन लब्धाः। एवमीश्वरादिभिश्चतुर्भिरपि प्रत्येकं चत्वारो लभ्यन्ते। ततः पञ्चभिश्चतुष्कैर्विंशतिर्जाता। सा च जीवपदेन लब्धा। एवम-ऽजीवादिभिरष्टाभिः पृथग्विंशतिर्लभ्यत इति नव विंशतयो मीलिताः क्रियावादिनामशीत्युत्तरं शतं भवति। तथा जीवाजीवाश्रवसंवरनिर्जराबन्धमोक्षाभिधानाः सप्त पदार्थाः स्वपरभेदाभ्यां प्रत्येकं कालेश्वरात्मनियतिस्वभावयदृच्छासम्बन्धिताभ्यां नास्तित्वेन चिन्त्यमानाश्चतुरशीतिविकल्पान्जनयन्ति। यथा नास्ति जीवः स्वतः कालतः, १, नास्ति जीवः परतः कालत इति द्वौ। एवमीश्वरादिभिः पञ्चभिः प्रत्येकं द्वौ द्वौ लभ्येते। सर्वेऽपि द्वादश। एते च जीवादिसप्तकेन गुणिताश्चतुरशीतिरक्रियावादिनाम्। तथा जीवादयो नव पदार्थाः सन् १, असन् २, सदसन् ३, अवक्तव्यः ४, सदवक्तव्यः ५, असदवक्तव्यः ६, सदसदवक्तव्यः ७, इत्येतैः सप्तभिः प्रकारैर्न ते ज्ञातुं शक्यन्ते। ज्ञातैर्वा किमेभिः प्रयोजनमिति बुद्ध्या व्यासितैस्त्रिषष्टिमाज्ञानिकानां भेदान्प्रसुवते। यथा सन् जीव इति को वेत्ति किं वा तेन ज्ञातेन प्रयोजनम्। असन् जीव इति को वेत्ति किं वा तेन ज्ञातेन प्रयोजनमित्यादयः सप्त जीवेन लब्धाः। एवमजीवादिभिरपि सप्तभिः पदैः प्रत्येकं सप्त लभ्यन्त इति नव सप्तकास्त्रिषष्टिः। एतन्मध्ये चामी चत्वारः क्षिप्यन्ते। यथा सती भावोत्पत्तिरिति को वेत्ति किं वा तया ज्ञातया। एवमसती सदसती अवक्तव्या भावोत्पत्तिरिति को वेत्ति किं वा ज्ञातयेति सर्वत्र योज्यते। सदवक्तव्यादिकं तु विकल्पत्रयमुत्तरं कालं भावावयवाऽपेक्षम्, अतोऽत्र न सम्भवतीति नोक्तम्। इत्थं च सप्तभङ्गी सूत्रकृदादिवृत्त्यनुवृत्त्या दर्शिता। विशेषावश्यकादौ त्ववक्तव्य इति तृतीयेन सदसन्निति चतुर्थेन भङ्गेन सेति। तदेवं सप्तषष्टिराज्ञानिकानां भवति। सुरनृपतियतिज्ञातिस्थविराधममातृपितृणामष्टानां स्थानानां प्रत्येकं कायेन वचसा मनसा दानेन च विनय इत्यष्टभिश्चतुष्कैर्द्वात्रिंशद्वैनयिकभेदाः सर्वेषां च मीलनेन त्रिषष्ट्यधिकशतत्रयविधं मिथ्यात्वम्।

'जावइया नयवाया तावइया चेव हुन्ति परसमया। जावइया परसमया तावइया चेव मिच्छत्तं" ॥ न्यायादपरिमितभेदं वेति ॥७५॥

बारसविहा अविरई मणइंदियअनियमो छकायवहो।
सोलस नव य कसाया पणुवीसं पन्नरस जोगा ॥७६॥

इतिशब्दो लेश्याद्वारसमाप्त्यर्थः ॥७३॥

इदानीं गुणस्थानेषु ज्ञानावरणादिकर्मणां बन्धहेतून् दर्शयितुकामः प्रथमं तानेव भेदत आह–

**बन्धस्स मिच्छअविरइकसायजोगत्ति हेयवो चउरो ।**
**पंच [1]दुवाल पणुवीस पन्नरस कमेण भेया सिं ॥७४॥**

(यशो०) ज्ञानावरणादिकर्मणां बन्धस्य हेतवः=कारणानि=मिथ्यात्वाविरतिकषाययोग इत्येवंरूपाश्चत्वारः, एतांश्च मूलभेदानाहुः, न तु प्रमादरूपं पञ्चममिति । तद्भेदानां मद्यादीनां मिथ्यात्वशेषेष्वेतेष्वेव यथायोगमन्तर्भावात् । तत्र मिथ्यात्वमेकस्मिन्नेव गुणस्थान इत्यादौ निर्दिष्टम् । ततो यथोत्तरं बहुगुणस्थानाश्रयत्वेना-ऽविरत्यादयः । तथाहि–मिथ्यात्वं मिथ्या(दृष्टा)वेव, अविरतिराद्यपञ्चगुणस्थानव्यापिनी, कषाया आद्यगुणस्थानदशकव्यापिनः, योगास्तु अयोगिवर्जगुणस्थानव्यापिनः । एषामेव क्रमेण पञ्च द्वादश पञ्चविंशति पञ्चदशेति संख्या-ऽवच्छिन्ना भेदाः, सर्वे वा मीलिताः सप्तपञ्चाशत् । एतांश्चोत्तरभेदानाचक्षते ॥७४॥

अथैतानेव क्रमेण विवृणोति ॥

**आभिग्गहियं [2]अणभिग्गहियं च तह अभिनिवेसियं चेव ।**
**संसइयमणाभोगं मिच्छत्तं पञ्चहा एवं ॥७५॥**

(यशो०)अभिग्रहः परोपदेशादिप्रभवः कदाग्रहस्तस्माद् यातमाभिग्रहिकम् येन बोटिकादिदर्शनानामन्यतमदभिगृह्णाति । तद्विपरीतमनाभिग्रहिकमज्ञानां गवादीनामिव । यद्वेषन्माध्यस्थ्यात्सर्वदर्शनानि शोभनानीत्येवंरूपा यतः प्रतिपत्तिः तदाभिग्रहिकम् । यद्यपि चाभिग्रहिकविपर्यस्तरूपतया-ऽभिनिवेशिकाद्यप्य-ऽनाभिग्राहिके-ऽन्तर्भवति । तथा-ऽप्य-ऽपवादविषयं परिहृत्योत्सर्गाः प्रवर्त्तन्त इति न्यायादाभिनिवेशिकादिभ्यो भिन्नविषयमनाभिग्रहिकं बोद्धव्यम् । अभिनिवेशो=ऽवलेपः, यद्वशीभूत एकेन वस्तुतत्त्वे प्ररूपिते मात्सर्यादिना वस्तुतत्त्वमन्यथा कथयति । उत्सूत्रप्ररूपणं वा स्वयं कृतमात्मलाघवभिया समर्थयते । वस्तुतत्त्वमजानानो वाऽन्येन पृष्टो मा मामज्ञं ज्ञासीदयमिति यथाकथञ्चिदुत्तरयति । तस्माद् यातमाभिनिवेशिकम् । यथा गोष्ठामाहिलादीनाम् । यदर्हता जीवादितत्त्वमभिहितं तन्न जाने किं तथैव भवेदुता-ऽन्यथेत्येवंभूतात्संशयाद् यातं सांशयिकम् । आभोगो=विशिष्टज्ञानम् , स न विद्यते यत्र तदनाभोगं पृथिव्यादीनाम् । एवमिति काक्वापाठस्तत एव=ममुना प्रकारेण पञ्चधा मिथ्यात्वम् । अन्यथा तु विपर्यस्तबोधरूपत्वेनैकविधम् । आभोगा-ऽनाभोगप्रभवतया द्विविधम् । संशयाऽऽभोगाऽनाभोगोद्भवतया त्रिविधम् । सावधारणजीवाद्यस्तित्वप्रतिपत्तिलक्षणानां क्रियावादिनामशीत्यधिकशतस्य । न कस्यचित्क्षणिकत्वादनवस्थि-

---

१ "दुवालसपणुवीसपनरस" इत्यपि पाठः । २ "अणभिग्गहं" इत्यपि ।

तस्य क्रिया सम्भवतीति वक्तुं शीलानामक्रियावादिनां चतुरशीतेः, अज्ञानेन चरतामज्ञानप्रयोजनानां वाऽज्ञानिकानां सप्तषष्टेः, विनयेन चरतां विनयप्रयोजनानां वा वैनयिकानां द्वात्रिंशतश्च, मीलनेन त्रिषष्ट्यधिकं शतत्रयविधम्। तत्र जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षाभिधाना नवपदार्थाः, स्वपरभेदाभ्यां क्रमेण काले-श्वरा-ऽऽत्म-नियति-स्वभावभेदान्निना-भ्यामस्तित्वेन चिन्त्यमाना अशीत्युत्तरं शतं विकल्पानाविर्भावयन्ति। अस्ति जीवः स्वतो नित्यः कालतः १, तथास्ति जीवः स्वतोऽनित्यः कालतः २, इति स्वतो भङ्गद्वयम्। एवं परतोऽपि भङ्गद्वयम्। सर्वेऽपि चत्वारः कालेन लब्धाः। एवमीश्वरादिभिश्चतुर्भिरपि प्रत्येकं चत्वारो लभ्यन्ते। ततः पञ्चभिश्चतुष्कैर्विंशतिर्जाता। सा च जीवपदेन लब्धा। एवम-ऽजीवादिभिरष्टाभिः पृथग्विंशतिर्लभ्यत इति नव विंशतयो मीलिताः क्रियावादिनामशीत्युत्तरं शतं भवति। तथा जीवाजीवाश्रवसंवरनिर्जराबन्धमोक्षाभिधानाः सप्त पदार्थाः स्वपरभेदाभ्यां प्रत्येकं कालेश्वरात्मनियतिस्वभावयदृच्छासम्बन्धिताभ्यां नास्तित्वेन चिन्त्यमानाश्चतुरशीतिविकल्पान्जनयन्ति। यथा नास्ति जीवः स्वतः कालतः, १, नास्ति जीवः परतः कालत इति द्वौ। एवमीश्वरादिभिः पञ्चभिः प्रत्येकं द्वौ द्वौ लभ्येते। सर्वेऽपि द्वादश। एते च जीवादिसप्तकेन गुणिताश्चतुरशीतिरक्रियावादिनाम्। तथा जीवादयो नव पदार्थाः सन् १, असन् २, सदसन् ३, अवक्तव्यः ४, सदवक्तव्यः ५, असदवक्तव्यः ६, सदसदवक्तव्यः ७, इत्येतैः सप्तभिः प्रकारैर्नैते ज्ञातुं शक्यन्ते। ज्ञातैर्वा किमेभिः प्रयोजनमिति बुद्ध्या व्यासितैस्त्रिषष्टिमाज्ञानिकानां भेदान्प्रस्तुवते। यथा सन् जीव इति को वेत्ति किं वा तेन ज्ञातेन प्रयोजनम्। असन् जीव इति को वेत्ति किं वा तेन ज्ञातेन प्रयोजनमित्यादयः सप्त जीवेन लब्धाः। एवमजीवादिभिरपि सप्तभिः पदैः प्रत्येकं सप्त लभ्यन्त इति नव सप्तकास्त्रिषष्टिः। एतन्मध्ये चामी चत्वारः क्षिप्यन्ते। यथा सती भावोत्पत्तिरिति को वेत्ति किं वा तया ज्ञातया। एवमसती सदसती अवक्तव्या भावोत्पत्तिरिति को वेत्ति किं वा ज्ञातयेति सर्वत्र योज्यते। सदवक्तव्यादिकं तु विकल्पत्रयमुत्तरं कालं भावावयवाऽपेक्षम्, अतोऽत्र न सम्भवतीति नोक्तम्। इत्थं च सप्तभङ्गी सूत्रकृदादिवृत्त्यनुवृत्त्या दर्शिता। विशेषावश्यकादौ त्ववक्तव्य इति तृतीयेन सदसन्निति चतुर्थेन भङ्गेन सेति। तदेवं सप्तषष्टिराज्ञानिकानां भवति। सुरनृपतियतिज्ञातिस्थविरावममातृपितृणामष्टानां स्थानानां प्रत्येकं कायेन वचसा मनसा दानेन च विनय इत्यष्टभिश्चतुष्कैर्द्वात्रिंशद्वैनयिकभेदाः सर्वेषां च मीलनेन त्रिषष्ट्यधिकशतत्रयविधं मिथ्यात्वम्।

'जावइया नयवाया तावइया चेव हुन्ति परसमया। जावइया परसमया तावइया चेव मिच्छत्तं'' ॥ न्यायादपरिमितभेदं वेति ॥७५॥

**बारसविहा अविरई मणइंदियअनियमो छकायवहो।**
**सोलस नव य कसाया पणुवीसं पन्नरस जोगा ॥७६॥**

(यशो०) अविरतिर्द्वादशविधा कथमित्याह–मनस इन्द्रियाणां च पञ्चानामनियमो=ऽनियन्त्रणं शब्दादिषु विषयेषु मनोज्ञा–ऽमनोज्ञेषु रागद्वेषप्रवृत्तेरनिवारणमिति षोढा तथा षण्णां कायानां पृथिव्यादीनां वधो = हिंसेति च षोढेति द्वादशविधेति मध्यमां वृत्तिमवलम्ब्योक्तमन्यथा सामान्येन सावद्ययोगा-ऽनिवृत्तिरूपत्वेनैकविधैव। व्यक्त्याश्रयणेन यावन्ति हिंसादीनां पापस्थानानि तदनुवृत्तिरूपत्वेनापरिमितविधा। षोडश नव चेति कषायाः पञ्चविंशतिः। षोडश नव च कषाया इति सामान्योक्तावपि षोडश कषाया नव नोकषाया इति दृश्यम्। तत्र कषायाः प्राग्निर्णीतार्थाः क्रोधादयश्चत्वारोऽनन्तानुबन्ध्यऽप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनात्मकभेदचतुष्टयेन प्रत्येकं भिद्यमानाः षोडश भवन्ति। तत्रानन्तं=संसारमनुबध्नन्ति=प्राणिभिः संबद्धं कुर्वन्तीत्येवंशीला अनन्तानुबन्धिनः। यद्यप्यमीषां शेषकषायोदयशून्यानामुदयो नास्ति। तथाऽप्यनन्तभवमूलकारणस्य मिथ्यात्वोदयस्या-ऽऽक्षेपकत्वादेतेषामेवानन्तानुबन्धित्वव्यपदेशः। शेषास्तु कषाया न नियमेन मिथ्यात्वोदयमाक्षिपन्ति। ते चाऽनन्तानुबन्धिनः क्रोध-मान-माया-लोभा यथाक्रमं शैलरेखाशैलस्तम्भवंशीशूलकृमिरागसंनिभा जीवपरिणतिविशेषा अवगन्तव्याः। नञोऽल्पार्थत्वादल्पमपि प्रत्याख्यानं देशविरतिरूपमावृण्वन्तीत्यप्रत्याख्यानावरणा एवंरूपाश्च क्रोधादयः क्रमेण पृथिवीरेखा-ऽस्थिमेषशृङ्गकर्दमरागसदृशा मन्तव्याः। प्रत्याख्यानं सर्वविरतिरूपमावृण्वन्तीति प्रत्याख्यानावरणा एवमात्मनश्च क्रोधादयो यथासंख्यं रेणुरेखाकाष्ठगोमूत्रिकाखञ्जनरागसमाना ज्ञेयाः। सम्शब्दस्येषदर्थत्वात्परीषहादिपरिचये चारित्रिणमपीषज्ज्वलयन्तीति संज्वलना एवंरूपाश्च क्रोधादयः क्रमेण जलरेखातिणिशलतावंशावलेखाहरिद्रारागसमा बोद्धव्या इति। तथा नोशब्दस्य साहचर्यवाचित्वात्कषायैः सहचरा नोकषायाः, तेषां हि केवलानां प्राधान्यम्, किन्तु तेषां यैः सहोदयमायान्ति कषायविपाकसममेव च विपाकमुपदर्शयन्ति। ते च स्त्रीपुंनपुंसकात्मकवेदत्रयहास्यरत्य-ऽरतिशोकभयजुगुप्सालक्षणहास्यादिषट्करूपत्वेन नवधा। तत्र वेदत्रयं प्रागुक्तस्वरूपम्। यदुदये सहेतुकमहेतुकं वा हसति स हासः। यदुदये रमणीये वस्तुनि रमते=प्रमोदते सा रतिः। तद्विपरीताऽरतिः। येन प्रियविप्रयोगाद्याकुलः शोचना-ऽऽक्रन्दनादि विधत्ते स शोकः। येन स बीजमबीजं वा बिभेति तद् भयम्। येन सकृदादिविरूपपदार्थात् जुगुप्सन्ते, सा जुगुप्सेति कषायाः पञ्चविंशतिः। योगाः पञ्चदशेति मनश्चतुष्टय-वाक्चतुष्टय-कायसप्तकरूपाः प्रागुक्तार्थाः। एते च मिथ्यात्वादयः सस्वभेदा मीलिताः सप्तपञ्चाशत्कर्मणां बन्धहेतव उक्ताः ॥७६॥

अथैतान् क्रमेण गुणस्थानेषु योजयति—

**पणपन्नपन्नतियछहियचत्तगुणचत्तछचउदुगवीसा।**
**सोलस दस नव नव सत्त हेउणो न व अजोगित्ति ॥७७॥**

(यशो०) न त्वयोगिनीति वचनात्पञ्चपञ्चाशदादिसंख्याऽवच्छिन्नाः क्रमेण मिथ्यादृष्ट्यादिषु बन्धहेतवो भवन्तीति शेषः । "तिगछहिगचत्त" ति त्रिचत्वारिंशत्षट्चत्वारिंशदित्यर्थः । "छच-उदुगवीसे" ति षड्विंशतिश्चतुर्विंशतिर्द्वाविंशतिरित्यर्थः । तत्र मिथ्यादृष्टेः संयमाभावेना-ऽऽहारकद्वयाऽभावाच्छेषा पञ्चपञ्चाशत् । पञ्चपञ्चाशतश्च मध्यान्मिथ्यात्वपञ्चकोत्सारणेन सास्वादनस्य पञ्चाशत् । पञ्चाशतश्च मध्यान्मिश्रत्वे कालकरणाभावेन कार्मणौदारिकमिश्र-वैक्रियमिश्ररूपयोग-त्रया-ऽपगमेऽनन्तानुबन्धिनां च निषिद्धत्वेनाऽनन्तानुबन्धिचतुष्टयोत्सारणेषु मिश्रदृष्टेस्त्र्यधिका चत्वारिंशत् । त्रिचत्वारिंशतः कालकरणसम्भवेन कार्मणौदारिकमिश्रवैक्रियमिश्रात्मकयोगत्रिके प्रक्षिप्तेऽविरतसम्यग्दृष्टेः षड्भिरधिका चत्वारिंशत् । षट्चत्वारिंशतश्चा-ऽप्रत्याख्यानावरणोदये विग्रहगतावपर्याप्तदशायां च देशविरतेरभावादप्रत्याख्यानावरणचतुष्कस्य कार्मणौदारिकमिश्रयोग-द्वयस्य चोत्सारण आरम्भजत्रसाऽविरत्यविवक्षया संकल्पजत्रसा-ऽविरतेर्निवृत्त्या त्रसा-ऽविरतौ चाप-नीतायां देशविरतस्यैकोनचत्वारिंशत् । एकोनचत्वारिंशतश्च मध्यात् प्रत्याख्यानावरणोदयस्या-ऽविरतेश्च सर्वविरतेः प्रतिपन्थित्वादेकादशभेदा-ऽविरति-प्रत्याख्यानावरणचतुष्का-ऽपनयने संयमप्रत्ययकत्वा-दाहारकलब्धेराहारकद्विकप्रक्षेपे च प्रमत्तसंयतस्य षड्विंशतिः । तस्याश्च मध्यात्पूर्वोक्तयुक्त्या वैक्रि-यमिश्रा-ऽऽहारकमिश्रद्वये-ऽपनीतेऽप्रमत्तसंयतस्य चतुर्विंशतिः । चतुर्विंशतेर्मध्यादपूर्वकरणस्या-तिविशुद्धत्वादा-ऽऽहारकवैक्रियापसारणे द्वाविंशतिः । द्वाविंशतेर्मध्यादपूर्वकरण एव व्यवच्छिन्नस्य हास्यादिषट्कस्यापगमेऽनिवृत्तिबादरस्य षोडश । एतच्च यावदद्या-ऽप्यऽसौ वेदत्रयं क्रोधमानमाया-रूपं संज्वलनत्रयं च न क्षपयति तावद् द्रष्टव्यम् । तत्क्षये तु यथासम्भवं वाच्यम् । षोडशानां च मध्यादनिवृत्तिबादर एव व्यवच्छिन्नयोर्वेदत्रिकसंज्वलनक्रोधादित्रिकयोरपसारणे सूक्ष्मसम्परायस्य दश । दशभ्यो लोभस्योपशान्तत्वेनोत्सारण उपशान्तमोहस्य नव । क्षीणत्वेन लोभस्यापनयने क्षीणमोहस्य नव । नवभ्यो मृषामिश्रात्मकयोर्मनोद्वय-वाग्द्वययोरपनयने कार्मणौदारिकमिश्रयोः प्रक्षेपे च सयोगिनः सप्त हेतवः कर्मबन्धस्येति गम्यम् । एषामपि सप्तानामभावान्न तु = नैवा-ऽयोगिनो बन्धहेतवः ।

कलिकालानुचितसमाचाराधारपरमाराध्यास्मद्गुरुश्रीशीलभद्रसूरिविरचिताः "पणपन्न" तिगाथाव्याख्यारूपास्त्विमा गाथाः ।

पणपन्नबन्धहेऊ मिच्छद्दिट्ठिस्स उदयओ होन्ति । आहारगदुगरहिया जेणं तं संजयस्स भवे ॥१॥
पन्नासा (सा)सायणि पंचगमिच्छत्तविरहिया होइ । मिस्से पुण तेयाला अणकम्मणमिस्सदुगरहिया ॥२॥
तुरियंमि उ छायाला कम्मणमिस्सदुगसंजुया जाण । एगूणचत्ता देसे बीयकसायाण भावाओ ॥३॥
अविरयउरलगमिस्सं कंमइगं जेण तस्स नो सन्ति । छव्वीसा य पमत्ते संजलणा नोकसाया य ॥४॥
कंमयउरालमिस्सं वज्जिता सव्वजोगसब्भावा । चउवीसं अपमत्ते वेउव्वाहारमिस्सविणा ॥५॥

